न्यासजातक्रम: ३३३
नित्यपूजाध्यानम् ३३३
आवरणपञ्चकशक्तिनामानि ३३४
पुरश्चरण विधानम् ३३६
मातृकाक्षरशक्तिनामानि ३३७
मूलविद्यास्वरूपवाहुल्योपदेशादि ३३९
चतुश्चत्वारिंशदधिकशतयन्त्राणि ३४०
प्रोक्तयन्त्राण्यक्षरन्यासभेदेनान्य-
नित्यापञ्चदशकस्यापि भवन्ति ३४१
प्रोक्तयन्त्राणां विनियोग प्रकारा: ३४३
लघुमन्त्रपूजाविधानम् ३४६
द्वादशास्त्रचक्रनिर्म्माणम् ३४६
तच्चक्रे लघुपूजा ३४७
षोड़शनित्यानां नामरूपविद्या: ३४८
प्रोक्तचक्रे ललिताराधनम् ३४९
षोड़शनित्यानामविद्याभेदादिभि:
कोष्ठवज्रयन्त्रनिर्म्माणम् ३५०
यन्त्रप्रयोगफलानि ३५१
सर्व्वमङ्गलाविद्याजपफलम् ३५३
विद्याजपादिना पापनाशादि ३५४


---

## विंशपटले ।


ज्वालामालिनीनित्याविधानम्
पटलार्थाः ३५५
कराङ्गन्यासौ ३५५
नित्यसपर्य्याध्यानम् ३५५
नित्यसपर्य्याचक्रम् ३५६
पञ्चावरणशक्तिपूजा ३५६
पुरश्चरणक्रम: ३५७
दशयन्त्रविरचनक्रम: ३५९
दशयन्त्रप्रयोगविशेषा: ३६०
स्वस्थावेशप्रकारादिकम् ३६१
रोगावेशार्थं यन्त्रनिर्माणम् ३६२
आकर्षणवशीकरणादिकम् ३६३
यामलवेध: ३६३
त्रिविधवेधे त्रिविधरूपादिकम् ३६४
वश्यादिप्रयोगा: ३६६
द्वितीययन्त्रसाध्यानि ३६७
वैरिनिग्रह: ३६७
द्यूतादिषु जय: ३६८
मर्त्त्यादिवश्यम् ३६८
शत्रुस्तम्भनम् ३६८
लक्ष्मीप्राप्ति: ३६८
वासोभूषणावाप्ति: ३६९
लोकस्त्रीवश्यसिद्धि: ३६९
दशमयन्त्रेण प्रोक्तनवमयन्त्रवाच्य-
फलप्राप्ति प्रयोगादिकम् ३६९
दशयन्त्रेष्वभिषेकात् ग्रहदोष-
शान्ति: ३७०
नवग्रहशान्ति: ३७०
जठराग्निवृद्ध्युपाय: ३७१
प्रोक्तयन्त्रेषु भास्करायर्च्चनफलानि ३७१
सर्वग्रहपूजाफलम् ३७२
शत्रुमर्द्दनम् ३७२
सर्वविद्याक्षरौषधभस्मसाधनम् ३७२
आग्नेयाक्षरमेलितयन्त्राणि ३७३
तैर्जठराग्निवृद्धिप्रयोग: ३७३


---

## एकविंशपटले ।

चित्रानित्याविधानम्
पटलार्थाः ३७६
षड़ङ्गन्यासः ३७६
नित्यसपर्य्याध्यानम् ३७७
षड़ावरणम् ३७७
पुरश्चरणम् ३७८
काम्यहोमविधानम् ३७९
निगूढ़होमविधानम् ३८१
अभिचारकर्त्तुःस्वरक्षाविधानम् ३८२
अभिचारे गुणविधानम् ३८२
तर्पणानि ३८२
षड़्विंशतियन्त्राणि ३८२
कोष्ठवज्रयन्त्रनिर्माणं तदनुभावश्च ३८४
तिथिवारनक्षत्रेषु समर्च्चनादिक्रमः ३८६
तिथिवृक्षदेवतानक्षत्रयोनयः ३८८
ज्वरादिरोगशान्तिसमयज्ञानम् ३८९
मूलाधारादिषट्स्वाधारेषु सप्त-
विंशतियन्त्रभावनफलानि ३९०
प्रोक्तभावनाशक्तानां कर्त्तव्यानि ३९०
देव्याः पञ्चाशन्मिथुनानाञ्च वलिदान
प्रकारादि ३९१
नित्यदेयमिथुनवलिदान द्रव्याणि ३९२

---

## द्वाविंशपटले ।

कुरुकुल्लाविधानम्
कुरुकुल्लायाः ललिताङ्गत्वम् ३९४
रक्तपीतवलिचक्रार्च्चनम् ३९५
कुरुकुल्लानित्यसपर्य्याचक्रम् ३९५
षड़ङ्गन्यासः ३९५
नित्यसपर्य्याध्यानम् ३९६
सपर्य्याक्रमः ३९६
इक्ष्वादिसागरार्च्चनम् ३९७
स्वतन्त्रपूजाक्रमः ३९८
स्वतन्त्रनित्यपूजा वलिदानञ्च ३९८
ताराशक्तेर्वलिसमयध्यानम् ३९९
नित्यहोमद्रव्याणि ३९९
मूलविद्यायाः पुरश्चरणम् ४००
कृतपुरश्चरणस्यैव प्रयोगयोग्यता ४००
नानाहोमान्नानाफलाप्तिः ४००
मूलविद्यया यन्त्रनिर्म्माणम् ४०२
तस्य प्रयोगपञ्चकम् ४०३
द्वितीयमूलविद्यया कोष्ठवज्रयन्त्र-
निर्म्माणम् ४०४
प्रथममूलविद्यया यन्त्रनिर्म्माणम् ४०५
स्वरप्रसारितत्रयोदशाक्षरैर्यन्त्राष्ट-
कनिर्माणम् ४०७
एकविंशत्यधिकद्विशत कोष्ठरूप
वज्रयन्त्रनिर्म्माणादिकम् ४०९
मन्त्रदेवताभावनादिकम् ४११

---

## त्रयोविंशपटले ।

वाराहीविधानम्
षड़ङ्गन्यासः ४१२
नित्यपूजाचक्रम् पूजाविधानञ्च ४१२
पुरश्चरणम् ४१४
देव्या ध्यानम् ४१४
प्रयोगभेदे ध्यानभेदकथनम् ४१५

| | |
|---|---|
| स्तम्भनप्रयोगः | ४१६ |
| दुर्गममार्गरक्षाविधानम् | ४१६ |
| समरविजयध्यानम् | ४१६ |
| ज्वरेण रिपुमारणप्रयोगः | ४१७ |
| रिपुमारणप्रयोगविशेषः | ४१८ |
| रिपुमारणप्रयोगध्यानम् | ४१८ |
| क्रोधस्तम्भनध्यानम् | ४१८ |
| रिपुसेनाविद्रावणम् | ४१८ |
| अरातिसेनाविनाशध्यानम् | ४१९ |
| प्रकारान्तरध्यानम् | ४१९ |
| स्तम्भनीयपञ्चाङ्गादिकम् | ४१९ |
| रिपुवश्यपूजाविशेषः | ४२० |
| रिपुमारणप्रयोगः | ४२० |
| विषनाड़ीनिर्णयः | ४२० |
| लक्ष्मीप्राप्तिप्रयोगादिकम् | ४२० |
| होमद्रव्यभेदेन फलभेदः | ४२१ |
| मारणप्रयोगहोमः | ४२१ |
| ऐश्वर्य्यप्राप्तिकरहोमः | ४२२ |
| वश्यादिकरणहोमः | ४२३ |
| शत्रुसेनास्तम्भनयन्त्रम् | ४२३ |
| सर्वस्तम्भनकरयन्त्रम् | ४२५ |
| स्तम्भनयन्त्रान्तरम् | ४२६ |
| रोगशान्तिकरयन्त्रम् | ४२७ |
| स्तम्भनकरकोष्ठयन्त्रम् | ४२८ |
| समस्ताभीष्टदमहावज्रयन्त्रम् | ४२९ |
| वज्रवज्राभिधयन्त्रम् | ४३१ |
| अखिलसिद्धिकरयन्त्रम् | ४३२ |

## चतुर्विंशपटले ।

| | |
|---|---|
| ध्यानपटलम् | |
| सामान्यध्यानम् | ४३४ |
| विद्यादिप्राप्तिकरध्यानम् | ४३४ |
| शक्तीनामसंख्यातत्वम् | ४३५ |
| पञ्चभूतशक्तीनां ध्यानम् | ४३५ |
| गुणभूत भेदेन वक्त्रसंख्याभेदध्यानम् | ४३६ |
| षोड़शनित्यानामङ्गाङ्गित्वक्रमादि | ४३७ |
| सूक्ष्मरूपध्यानम् | ४३८ |
| परध्यानम् | ४३८ |
| प्रयोगादिषु विभागक्रमः | ४३९ |
| आयुधसामान्यपरिभाषादिकम् | ४३९ |
| शुभाशुभकर्म्मसु सामान्यध्यानम् | ४४० |
| वाहनविशेषध्यानादिकम् | ४४१ |
| रक्षादिषु वाहनविशेषध्यानम् | ४४१ |
| उच्चाटने वाहनध्यानम् | ४४१ |
| विद्वेषणे वाहनध्यानम् | ४४२ |
| वश्याकर्षणादिषु वाहनविशेषः | ४४२ |
| मारणे वाहनध्यानादिकम् | ४४२ |
| समरविजयध्यानादिकम् | ४४२ |
| समरविजयप्रयोगादि | ४४५ |
| ध्यानविशेषेण सर्वापत्तारणप्रयोगः | ४४६ |
| विश्ववशीकरणध्यानम् | ४४७ |
| लक्ष्मीप्राप्तिध्यानम् | ४४७ |
| भूमिप्राप्त्यादिप्रयोगध्यानम् | ४४७ |
| निधिप्राप्तिध्यानम् | ४४८ |
| वित्तप्राप्तिप्रयोगादि | ४४८ |
| रत्नप्राप्तिप्रयोगोपदेशः | ४४८ |

कनकप्राप्तिप्रयोगः ४४८
महिलाप्राप्तिध्यानम् ४४८
नृपादिवशीकरणसहित निगड़ादि मोचन ध्यानम् ४४८
समरविजयप्रयोगविशेषः ४४८
सूक्ष्मध्यानम् तत्राधिकारिता च ४५०

---

## पञ्चविंशपटले ।

नित्यानां कालात्मकत्वम्
स्वराणां नित्याभिः, व्यञ्जनानां तत्त्वैः, मातृकावर्गाणां नाथैश्च तादात्म्यम् ४५२
मातृकाया नववर्ग स्वरूपत्वम् ४५३
स्वराणां व्यञ्जनानाञ्च प्रत्येकयोगजाता वर्णसंख्या, तत्संख्याब्दैर्व्याप्तिः तथावान्तरयुगकल्पादिसंज्ञा युगानामब्दसंख्या ४५३
युगविग्रहवर्णानां घटिकावर्णैः लेखनक्रमादिकम् ४५४
घटिकाचक्रविनियोगः ४५५
मातृकावर्णचक्रस्य घटिकात्मकत्वेन ज्योतिश्चक्रेण व्याप्तिक्रमः ४५५
घटिकाचक्रविरचनक्रमः ४५६
पूर्णमण्डलवर्णेष्वक्षरयोगवशेन जातास्त्र्यक्षरास्त्रिपुराविद्या स्तासां अनुभावश्च ४५७
त्रिपुराविद्या विनियोगः ४५८
उक्तविद्यासंख्यादि ४५८
उक्तविद्यानां विनियोगादि ४५८
चतुर्युगेष्वहर्गणनादि ४५८
षट्सप्तत्यधिकपञ्चशताक्षर संख्यातानामब्दानां चक्राणि ४६२
नवचक्रेषु वर्णविन्यासभेदक्रमः ४६४
उक्तचक्राणां विनियोगः ४६८
अभिषेकप्रकारस्तत्फलाप्तिः ४७०
चतुर्विधोपास्तिभेदेन फलाप्तिः ४७१
चन्द्रक्षयवृद्धिकालभेदेन विद्याभजनविशेषः ४७२
ग्रामादिकरणोपायः ४७४
उच्चाटनचक्रवैभवम् ४७४
ग्रामादिरक्षार्थं तच्चक्र स्थापनादि ४७४

---

## षड् विंशपटले ।

षोड़शनित्यामन्त्रव्याप्तिरमृतेश्वरोविद्यादुग्रपदेशः नादोत्पत्तिः ४८७
नादस्य पश्यन्त्यादिचतुरवस्थाः ४८७
अक्षरशब्दनिर्व्वचनं मातृकायाः स्वरव्यञ्जनात्मनावस्थानम् ४८८
शब्दप्रपञ्चस्यानन्तत्वादिकम् ४८८
ललिताचक्रे देवतासंख्या ४८८
षट्सप्ततिकोट्यधिकपञ्चशतकोटिसंख्य विद्योपदेशः ४९०
प्रोक्तविद्यानां देवतानां ध्यानादि ४९२
शिष्यमन्त्रसंस्कारादि ४९३
शिष्यसंशयनिराकरणम् ४९३
सकलाक्षरपदवाक्यादीनां मन्त्रस्वरूपत्वम् ४९६
वैष्णवशैववैदिकमन्त्रैः ललिता-

विद्यया व्याप्तिः ४८७
भक्तिप्रशंसादिकम् ४८८
अमृतेश्वरोविद्या ५००
देव्याःषड्विध रूपभेदादि ५०१
अमृतेश्वरोध्यानपूजादि ५०३
आवरणशक्तिपूजादि ५०४
विद्यासाधनविधानम् ५०५
पद्मयन्त्रविधानम् ५०५
कोष्ठवज्रयन्त्रषट्कम् ५०६
एकषष्टिकोष्ठात्मकवज्रयन्त्रनिर्माणादिकम् ५०८
अभिचारप्रतीकारविधानम् ५१०
पूर्णाभिषेकचक्रे पूज्यदेवतानां षोड़शाक्षरमन्त्रस्वरूपत्वम् ५१०

——

## सप्तविंशपटले ।

नित्यानां मातृकादीनाञ्च प्राणात्मता
श्वासानां उदयादिकम् ५१४
चन्द्रसूर्य्यात्मकत्वम् ५१४
चन्द्रसूर्य्यराहुशून्येषु कर्त्तव्यानि ५१५
शिष्यमन्त्रोपदेशकालः ५१६
श्वासानां कालात्मत्वम् ५१७
प्राणोदयनिरूपणम् ५१७
श्वासानां वामदक्षिणोभय प्रवाहकाले बलाधिक्यम् ५१८
भूतानां राशीनाञ्च श्वासक्रमादन्योन्यव्याप्त्याकारत्वम् ५१८
घटिकाक्षराणां श्वासात्मकत्वं तथा श्वासेषु भूताक्षरोदयक्रमः ५१८
श्वासादीनामवान्तरव्याप्तिः ५१९
नाड़ीचक्रस्वरूपम् ५२१
अष्टत्रिंशन्मर्मस्थानानि ५२३
दशवायुनामानि ५२३
योगनिर्वचनम् ५२५
योगाष्टाङ्गानि ५२५
योगप्रत्यूहाः ५२५
यमनियमस्वरूपम् ५२६
अष्टविधासनस्वरूपाणि ५२६
द्विविधं वीरासनम् ५२७
प्राणायामभेदादि ५२७
योगसिद्धलक्षणम् ५२८
प्रत्याहारः ५२८
धारणा ५२८
धारणासिद्धिफलानि ५२८
आकाशगमनादि सिद्ध्युपायः ५२९
खेच्छोत्क्रान्त्युपायद्वयम् ५२९
परकायप्रवेशनादि ५३०
योगसिद्धलक्षणानि ५३०
आसन्नमृत्युचिह्नानि ५३०

——

## अष्टाविंशपटले ।

षोड़शनित्यानां लोकात्मत्वम्
नित्यायाः कालविग्रहत्वम् ५३३
महानित्याया अपरिच्छिन्नकालात्मकत्वं अन्यासां तदवयवभूतकालात्मकत्वञ्च ५३४
लोकरूपं तन्मानञ्च ५३५
कालचक्रपरिवृत्तिकारणादिकम् ५३६

कालचक्रे सप्तग्रहलोकस्थितिः ५३७
नित्यानां मेरुद्वीपादि षोड़शविध-
देशेषु परिभ्रान्तिक्रमः ५३८
नित्यानां कालचक्रमयत्वादि ५३९
देशकालतिथिप्राप्तनित्यापूजनादि ५४०
सप्तद्वीपनामादि ५४१
कालचक्रे ग्रहाणां स्थितिकारणम् ५४१
नित्यालोकावस्थानपूजाध्यानादिकम् ५४२
नित्यालोकादिमानादिकम् ५४३
नित्याकवचं तत्फलञ्च ५४४
ग्रहाणां मातृकात्मकत्वम् ५४७
ग्रहपूजासुमण्डलविशेषनिर्म्माणादि ५४८
चन्द्रार्कपूजामण्डलनिर्माणादि ५५१
ग्रहमण्डललेखनस्थानं ग्रहाणां
नित्यात्मकत्वञ्च ५५३

## एकोनविंशपटले ।

नित्यहोममण्डलादि
शङ्कुच्छायया दिक्परिज्ञानक्रमः ५५५
मण्डपनिर्माणक्रमादि ५५७
अङ्गुल्यादिमानं कुण्डमानवासनाच ५५९
चतुरस्रकुण्डनिर्माणक्रमादि ५६०
वृत्तकुण्डनिर्माणक्रमादिकम् ५६१
अर्द्धचन्द्राकारकुण्डनिर्माणम् ५६२
त्रिकोणकुण्डनिर्माणम् ५६२
योनिकुण्डनिर्माणम् ५६३
पञ्चास्रकुण्डनिर्माणम् ५६३
षड़स्रकुण्डनिर्माणम् ५६४
सप्तास्रकुण्डनिर्माणम् ५६४
अष्टास्रकुण्डनिर्माणम् ५६५
अष्टास्रयन्त्रकुण्डादिकल्पना ५६६
कोटिहोमकुण्डप्रमाणादि ५६६
कुण्डानां खातमानम् ५६७
सर्व्वकुण्डमेखलामानं योनि-
निर्म्माणञ्च ५६८
महाकुण्डमेखलामानम् ५६८
योनिस्वरूपादि ५६८
सर्व्वकुण्डमध्ये नाभिनिर्म्माणम् ५७०
अग्नेःसौम्यध्यानम् ५७०
अग्नेः क्रूरध्यानम् ५७१
जिह्वाव्यतिरिक्ताङ्गेषुहोमेप्रत्यवायः ५७१
जिह्वासप्तकार्चनम् ५७१
दक्षिणवक्त्रजिह्वाचतुष्टयनामानि ५७१
वामवक्त्रजिह्वात्रयनामानि ५७१
इतरजिह्वाषट्के क्रूरहोमः ५७२
नित्यहोमद्रव्याणि ५७२
क्रूरहोमद्रव्याणि ५७२
एकाहुतिद्रव्यपरिमाणम् ५७३
सर्व्वमङ्गलहोमः ५७३
क्रूरहोमानन्तरं तच्छान्तिहोमः ५७६

## विंशपटले ।

नित्यानां वास्तुदेवतापूजादि
वास्तुदेवतोत्पत्तिस्तत्कारणादि ५७८
वास्तुदेवताचक्रनिर्म्माणम् ५७९
वास्तुदेवतानामानि ५८०
वास्तुचक्रे युगादिवर्णन्यासः ५८२
वास्तुदेवता होमकुण्डादिकं ५८३

वलिविधानादि ५८३
स्वगेहे वासुदेवतार्च्चनकाल: ५८४
वास्तुचक्राधिकरणानि ५८५
सूक्ष्महोमविधानम् ५८६
सूक्ष्महोमस्य प्राणाग्निहोत्रविद्यया व्याप्ति: ५८६
सूक्ष्महोमस्वरूप प्रकारादि ५८७
प्राणाग्निहोत्रमन्त्रादिकम् ५८८
शक्तिशिवयो: तेजस्त्रयात्मकत्वादि ५९०
कुण्डलिनीस्वरूपम् ५९१
जीवन्मुक्तलक्षणम् ५९२
ज्ञानरहितस्यापि भक्तित: सिद्धि: ५९२
नित्याभक्तिवैभवम् ५९३
ब्रह्मादीनां नित्याप्रेरितत्वम् ५९४
सिद्धानामिव परहोमयोग्यता ५९४
नित्याभक्तलक्षणम् ५९५
परहोमस्वरूपं ५९६
स्थूलसूक्ष्महोमयो: परहोमेन-तादात्म्यम् ५९६
मङ्गलादिकर्म्मसु होतुर्दिग्विशेषा-भिमुख्यम् ५९७
कुण्डादिकरणाशक्तानां स्थण्डिले होमविधानम् ५९८


---

## एकत्रिंशपटले ।


नित्याभक्तानां अग्निमर्द्दनादिहोम:
अभिचारकर्म्मकालेज्ञातव्यविषया: ५९९
क्रूरप्रयोगारम्भकाल: ६००
मण्डपगृहादिवस्तूनां द्वादशराश्यात्मकत्वम् ६००
राशीनां उदयकाल: ६०१
घटिकासंख्या ग्रहाणां गतिक्रम: ६०१
प्राणिदेहस्य द्वादशराश्यात्मकत्वम् ६०१
कालविग्रहराशिवशेन शुभाशुभ-करणीयत्वम् ६०२
पुत्तलीप्रयोगेविषामृतस्थानज्ञानम् ६०२
पुरुषस्त्रीविषपरिवृत्तिस्थानानि ६०२
पुत्तलीप्रयोगे तद्वेधकालादि ६०३
अंशकानामधिपतय: ६०४
अंशकानां पुत्तलीप्रस्ताव: ६०४
पुत्तलीमानविशेषा: ६०४
पुत्तलीनिर्माणद्रव्याणि ६०५
पुत्तल्यवयवमानानि ६०५
क्रूरकर्म्मारम्भकालादिकम् ६०६
नीचाख्य:पातालयोग: ६०६
विषयोग: ६०६
नाशयोगा: ६०६
दिनमृत्युयोग: ६०६
क्रकचायोगा: ६०७
चण्डीशचण्डायुधयोग: ६०७
महाशूलम् ६०७
काणार्द्धनक्षत्राणि ६०७
रक्तास्थूणम् ६०७
कण्टकस्थूणम् ६०७
पञ्चार्कदोषा: ६०७
षट्कर्म्मसु पुत्तलीप्रयोगप्रक्रिया ६०८
क्रूरकर्म्मसुक्चरुश्च ६०९

| | |
|---|---|
| अभिचारकर्म्मकुण्डादिकम् | ६०९ |
| उन्मादकरहोम: | ६१० |
| मारणप्रयोग: | ६१० |
| तीव्रज्वरेण मारण प्रयोग: | ६१० |
| कलहान्मारणप्रयोग: | ६११ |
| ज्वरान्मारण होम: | ६११ |
| पुत्तली होमेन शत्रुविनाशनम् | ६११ |
| दाहज्वरप्राप्ति होम: | ६११ |
| द्रुमकुड्यनिर्घातादिव्याजेन रिपु-विनाश होम: | ६१२ |
| विद्वेषणप्रयोग: | ६१२ |
| उच्चाटन प्रयोग: | ६१२ |
| शत्रुवाहदन्तिनां नाशप्रयोग: | ६१२ |
| अभीष्टाङ्गोत्पन्नरोगादिभि र्वैरि-निधनहोम: | ६१३ |
| दाहज्वरेण मारणम् | ६१३ |
| उन्मादज्वरेण मारणम् | ६१४ |
| सन्निपातज्वरेण मारणम् | ६१४ |
| पुत्तलीखननेन मारणम् | ६१४ |
| तापज्वरेण विनाशाय पुत्तलीप्रयोग-विशेष: | ६१५ |
| ज्वरोन्मादप्रयोग: तद्रक्षणादिकञ्च | ६१६ |
| पुत्तल्यीखननेन मारणम् | ६१६ |
| पुत्तल्याज्वराद्यानयनम् | ६१७ |
| पुत्तलीरचनया उच्चाटनम् | ६१७ |
| विद्वेषणम् | ६१७ |
| पुत्तलीखननेन रिपुकुलोत्सादनम् | ६१८ |
| दूरस्थारिनिधनम् | ६१८ |
| दूरस्थवैरिनिधनोपाय: | ६१९ |
| महामान्त्रिकादिरचितशत्रोरभि-चारप्रयोग: | ६२० |


---

## द्वात्रिंशपटले ।


| | |
|---|---|
| षोड़शनित्याविद्यासिद्धानां सौम्य-होमविधानाद्युपदेश: | |
| सामान्यहोमविधानम् | ६२१ |
| ऐश्वर्य्यादिसिद्धिकरहोम: | ६२१ |
| लक्ष्मीप्राप्त्यादिकरहोम: | ६२२ |
| गोभूमिहिरण्यवास: सिद्धि: | ६२४ |
| सम्पत्करहोमद्रव्याणि | ६२४ |
| सम्पत्करत्वादिकम् | ६२५ |
| अश्विन्यादिनवनक्षत्रेषु होमद्रव्य नवकम् | ६२५ |
| मघादिनवनक्षत्रेषु होमद्रव्याणि | ६२६ |
| मूलादिनवनक्षत्रेषु होमद्रव्याणि | ६२६ |
| सिद्धादियोगेषु होमादि | ६२७ |
| ग्रहतुष्टिकरहोमकालादि | ६२७ |
| त्रिजन्मसु होमादिविधानम् | ६२८ |
| सूर्यादिषु स्वक्षेत्र स्वोच्चस्थेषु उपास्तिक्रम: | ६२९ |
| वाग्मित्वप्रदहोम: | ६२९ |
| इष्टाप्तिहोम: | ६२९ |
| लक्ष्मीप्राप्तिहोम: | ६२९ |
| लक्ष्मीसिद्धिकरहोम: | ६३० |
| शस्यशालिभूमिप्राप्तिकरहोम: | ६३० |
| गोशतादिप्राप्तिकरहोम: | ६३० |
| कन्यासिद्धिकरहोमद्रव्याणि | ६३० |
| धनवस्त्रप्राप्तिकरहोम: | ६३१ |

लक्ष्मीप्राप्तिकरहोमे पुष्पपञ्चकम् ६३१
सम्पत्करहोमभेदाः ६३१
सम्पत्करपुष्पहोमविधानम् ६३१
विचित्रवासःसिद्धिकरहोमः ६३२
सितवासो मुक्तादिसिद्धिकरहोमः ६३२
वाञ्छितकरादि होमविधानम् ६३२
अभीष्टवर्णवासःसिद्धिकरहोमः ६३२
वनितापुरुषाद्याकर्षणादिहोमः ६३२
वश्यसिद्धिकरहोमः ६३३
केवलाज्यहोमफलम् ६३३
साधक कर्त्तव्यतादि ६३४
पूर्णाखर्कवारेषु च लक्ष्मीप्राप्तिकर-
होमः ६३५
सम्पत्प्राप्तिकरपुष्पहोमः ६३५
सितोपेतनवनीतहोमफलम् ६३६
किंशुकपुष्पादिहोम फलम् ६३६
निजवाञ्छितसिद्धिकरहोमः ६३६

---

## त्रयस्त्रिंशपटले ।

ललितायाः स्वरूपभेदसमुत्थ-
यन्त्राणामुपदेशः
अभिषेकनित्यपूजादि ६३८
रत्नादिषु श्रीचक्रविनिर्माणे माना-
दिकम् ६३८
श्रीचक्र कर्णिकान्तर्गतत्रिचत्वारिंश-
द्योन्यात्मकं मध्यचक्रद्वयम् ६३८
श्रीचक्रवाह्यस्थस्वस्थात्मक-
पद्मद्वयम् ६४१
ललिताचक्रस्य सद्गुरुप्रसाद-
लभ्यत्वम् ६४२
चक्रपूजन फलम् ४६४
श्रीचक्रनिर्माणे चतुर्द्दशारादिचक्रस्य
मानम् ६४४
सकलशक्त्याद्यधिष्ठित पूजाचक्रम् ६४६
अमृतघटाख्ययन्त्रम् ६४७
श्रीचक्रे समर्चनफलम् ६४७
ऊर्म्मिकादिषु सर्वरक्षाविधानम् ६४८
तड़ागादिषु अमृतघटाख्ययन्त्रस्य
स्थापनादि ६५०
सिद्धवज्रयन्त्रनिर्माणादि ६५०
कोष्ठवज्रयन्त्रनिर्माणादि ६५१
प्रोक्त यन्त्रफलानि ६५३
वज्रलिङ्गाभिधान यन्त्रनिर्माणादि ६५३
मेरुलिङ्गनिर्माणादि ६५७
महालिङ्गयन्त्रनिर्माणादि ६५८
योनिचक्रनिर्माणादि ६६१
वज्रवज्र यन्त्रनिर्माणादि ६६२
महावज्रवज्र यन्त्रनिर्माणादि ६६३
विषमसमादिकोष्ठानामसंख्यत्वम् ६६३

---

## चतुस्त्रिंशपटले ।

यन्त्राणां लोकचमत्कारकर
प्रयोगोपदेशः
सिद्धसारस्वतविद्यास्वरूपम् ६६८
विद्यानामङ्गध्यानयोः परिभाषा ६७०
विद्यासाधन प्रकारः ६७०
मृत्युञ्जयविद्यास्वरूपम् ६७१
मृत्युञ्जयविद्याध्यानस्वरूपम् ६७१
त्रिपुटाविद्यास्वरूपम् ६७२

त्रिपुटाविद्यायाः षडङ्गादिकम् ६७२
गारुड़मन्त्र स्वरूपम् ६७३
गरुड़सिद्धमन्त्रस्य प्रयोगध्यानादि ६७३
सकल भुजङ्गमविषनाशनमौषधम् ६७४
अश्वारूढ़ाविद्या तस्या अङ्गादि च ६७५
अन्नपूर्णाविद्या ६७५
अन्नपूर्णायाः षड़ङ्गानि ध्यानं साधन-
प्रकारश्च ६७६
नवात्मविद्याध्यानम् स्वरूपञ्च ६७६
देवीहृदयविद्यास्वरूपम् ६७७
देवी हृदय ध्यानादि ६७७
गौरीविद्यास्वरूपम् ६७८
गौरीविद्या साधनं ध्यानादि ६७८
लक्षसुवर्णप्रदा विद्या ६७९
तदङ्गानि ध्यानं साधनक्रमश्च ६७९
निष्कत्रयप्रदा विद्या ६७९
तद्विद्यायाः साधनादि ६८०
अभीष्टवादिनी विद्या ६८०
मातङ्गेश्वरी विद्यास्वरूपम् ६८०
तद्विद्याक्षरसंख्या ध्यानादि ६८०
राज्यलक्ष्मीविद्यास्वरूपम् ६८१
महालक्ष्मी विद्या ६८२
तद्ध्यानसाधनादि ६८२
सिद्धलक्ष्मीविद्यास्वरूपादिकम् ६८३
अस्या अङ्गानि ध्यानादिकञ्च ६८३
नित्यार्चनचक्रनिर्माणादिकम् ६८४
ललिताविद्याया गोपाल-
स्वरूपत्वम् ६८५
सिद्धगोपाल मन्त्रः ६८५
षड्विधगोपालमन्त्राः ६८६
तेषां यन्त्राणि ६८६
तेषां ध्यानम् ६८७
सकलदेवतानामपरोक्षोपायौषधयो-
गादिविधानम् ६८७
स्वेच्छोत्क्रान्तिः ६८७

---

## पञ्चविंशपटले ।

षोड़शनित्यादीनां तत्तत्परिवार
शक्त्यादीनाञ्च स्वात्मत्वेन वास-
नादिकम् ६८८
त्रात्त्रानज्ञेयानि ६९०
अङ्कुशादयः ६९२
ललिताविद्याया अक्षरवाच्योऽर्थः ६९५
पिण्डादिमालान्तानां मन्त्राणां
त्रैविध्यम् ६९६
त्र्यक्षरादिनवाक्षरावधिमन्त्रजातस्य
अक्षरसन्दर्भजनितसंख्याक्रमः ६९६
तेषां प्रस्तारक्रमाः ६९७
पञ्चाशत् कोष्ठचक्रम् ७०२
प्रत्येकं दश दश भूतनामानि ७०३
गद्यपद्यादिभाषात्मनां सन्दर्भाणां
ऐकाकारोपायः ७०४
मन्त्राणां निर्माणप्रकारः ७०५
सकलमन्त्राणां क्रूरत्वं सौम्यत्वं
मिश्रत्वञ्च ७०६
सकलमन्त्रविद्यागणस्य स्वरूपम् ७०७
मन्त्रविद्यादीनां त्रयोदशविधा-
सम्यक्त्वकारणम् ७०९

मन्त्रसिद्धानां षोड़श लक्षणानि ७०८
मन्त्रसिद्धेश्चतुर्दशविधत्वम् ७१०
मन्त्रविद्यादीनामन्योन्य वैरम् ७१०
उपासकदोषैर्मन्त्राणां देवतानाञ्च वैरीकरणम् ७११
गुरुमन्त्रदेवतानां सम्यग्भजन-क्रमः ७१२
तन्त्रोक्तमन्त्रविद्यादीनां सम्यक्सिद्धि-करमन्त्रौषधिगुलिकारूपम् ७१२
गुलिकाविनियोगक्रमः ७१२
अकारादिक्षान्तानां वर्णानां दश-दशौषधिविधानानि ७१३

---

## षट्त्रिंशपटले ।

षोड़शनित्याविद्यासिद्धानां तत्तत्-परमार्थस्वरूपादिकोपदेशः
परमार्थस्वरूपादि प्रकाशे देवीप्रश्नाः ७१५
पृष्टार्थकथन पीठिकापुरःसरं तदुपकरत्वम् ७१७
देवोक्तप्रश्नानां उत्तरकथनम् ७१८
परमार्थतः स्वरूपोपदेशः ७१८
परमार्थ स्वरूपप्रकाशोपायः ७१८
प्रपञ्चप्रकाशकारणादिकम् ७१९
प्राणिनां पुण्यपापात्मकत्वम् जन्मकारणञ्च ७१९
मुक्तिशब्दार्थः तद्धेतुश्च ७२०
संसृतिशब्दार्थः ७२०
मुक्तौ हेतुः ७२०
तत्प्रकारश्च ७२०
संसृतेः परमकारणमविवेकः ७२१
ज्ञातृज्ञानज्ञेयानां तत्त्वात्मकत्वम् ७२१
बुद्धेः सप्ताधिकशतगुणभेदाः ७२१
धीचितोः पार्थक्यम् ७२४
प्राणानां जीवस्य च स्वरूप-कथनम् ७२५
कालस्य स्वरूपादि कथनम् ७२५
लवत्रुट्यादिकालभेद कथनम् ७२६
ग्रहाणां स्वरूपादि कथनम् ७७२
देवीकृतद्वादशविध प्रश्नाः ७७२
जननमरण कारणम् ७२८
कालपरमात्मनोः स्थितिकथनम् ७२८
मुक्तानामपुनराविर्भावः ७२९
इतरेषां पूर्वं सम्भावित्वम् ७२९
भूतानां स्थितिप्रकार कथनम् ७२९
जीवानामागति कथनम् ७३०
सिद्धानां मरणं निद्रया समम् ७३०
साध्यसाधकसिद्धशब्दानामर्थ-कथनम् ७३१
मरणे सुगतिलक्षापककालः ७३२
बुद्धेर्वैविध्य कारण प्रश्नः ७३२
तद्द्वैविध्यकारण कथनम् ७३२
गुरुमुखादेवात्म ज्ञानसंप्राप्तिः ७३३
आत्मवतां सप्तचत्वारिंश-ल्लक्षणानि ७३३
आत्मज्ञानवतां समाचार क्रमः ७३४
जीवन्मुक्तानां ललिता पूजाक्रमः ७३७
तन्त्रार्थवेदिनः फलम् ७३९

---

समाप्तमिदं सूचीपत्रम् ।

# शुद्धिपत्रम् ।

एतत् पुस्तकमुद्राङ्कणानन्तरं प्राप्तपुस्तकान्तरे ये ये अधिका न्यूना विभिन्नाकारा वा पाठा लभ्यन्ते तेऽप्यत्र शुद्धिपत्रे सन्निवेशिता इति ।

| अशुद्ध: । | शुद्ध: | पत्रे | पङ्क्तौ |
|---|---|---|---|
| पूज्यं | पूज्ये | ६ | ४ |
| सिद्धे | सिद्ध: | १० | १ |
| नि: फालना | निफालना* | १८ | १ |
| पघृण | पक्ष | ३३ | ८ |
| पयसाचरवगिनीं | पयशाचरवर्गिणीम् | ३८ | १ |
| मात्राष्टकं | मात्रष्टकं | ३८ | १ |
| न्ये नैका | येनैका | ७६ | ८ |
| निष्फालना | निफालना | ८५ | ४ |
| सुर | पुर | ८८ | ८ |
| ओमा | ओम्मा | ८८ | १० |
| मेवच | मे वद | ८८ | ४ |
| मूर्त्तिष्टे न्यस्तविग्रहा: | मुक्तिष्ठेन्न्यस्तविग्रह: | ८८ | ६ |
| योगिनो | योगिनी: | ८२ | १० |
| स्वोख | स्वोषु | १०२ | ८ |
| श्वेचि | श्वेति | १०४ | ६ |
| श्रेष्ठे | ज्येष्ठे | १०८ | ७ |
| पीताश्वेता | पीतश्वेता | ११४ | ७ |
| स्वकीयविवेकै: | स्वकीयाविवेकै: | १२३ | १८ |
| द्वितीय तृतीया | द्वितीया | १२७ | २४ |
| विधोध: | विधो: | १२८ | २३ |
| दुक्रमेण | दुत्क्रमेण | १६४ | १४ |
| सन्देहेत्ये | सन्दहति | १८८ | ११ |

* प्रतिपटलं पटलसमाप्तिकाले "निफालनात्" इति पाठो ज्ञेय: ।

| | | | |
|---|---|---|---|
| न्यासन्नेव समीरितम् | न्यासएव समीरितः | १८३ | ४ |
| दधाना माधुकाभीष्ट | दधानां साधकाभीष्ट | २२२ | ७ |
| साधकम् | साधकः | २३१ | १ |
| मातृकाचराः | मातृकाचरजाः | ३३८ | १५ |
| मतानी | मनान्यग्निदेवतानी | ३३८ | १७ |
| तेषु स्थानेषु | अतः परम् "अस्वौं आ स्वौं इ स्वौं इत्यादि चः स्वौं इत्यन्तं ५७६ अस्वं अस्वां अस्विं अस्वीं अस्वुं अस्वूं अस्वृं अस्वॄं अस्वॢं अस्वॣं अस्वें अस्वैं अस्वों अस्वौं अस्वं अस्वः आस्वां आस्विं इत्यादि चा स्वः ८२१६" इत्यधिकः। | ३४० | १८ |
| एवं पूर्वोक्त | एवं पूर्वपूर्वोक्त | ३४१ | १८ |
| तथा लक्ष्मी | तथा यथा लक्ष्मी | ३४४ | २१ |
| शत्यधिक | शत्याद्यधिक | ३४८ | १न |
| चित्ते | च्चित्ते | ३५४ | ८ |
| अष्टास्त्रः | अष्टास्त्रतः | ३५६ | १८ |
| कोणि | कोणेषु | ३५६ | २४ |
| षड़ष्टास्त्रान्तरालेषु | अतः परम् "षट्कोणान्तरालेषु अष्टकोणान्तरालेषु" इत्यधिकः | ३६० | २२ |
| साध्या | सा साध्या | ३६३ | १८ |
| मतः | मनः | ३६४ | १३ |
| लोहैर्विरचितपट्टे | त्रिलोहविरचिते पट्टे | ३६६ | १८ |
| इदमेव | दरदमेव | ३६७ | १७ |
| मप्युक्तः | मप्युच्चः | ३६८ | १८ |
| कूलाग्र | कूलेग्र | ३७० | १८ |
| वासम् | वासरम् | ३७१ | २५ |
| मूलदेवताया | मूलदेवतया | ३७२ | १४ |
| प्रोक्ते | प्रोत्ये | ३७३ | १३ |
| परितना | परितनोपरितना | ३७५ | १४ |
| योन्येव | योन्यैव | ३७७ | १४ |
| कोण | त्रिकोण | ३८३ | ८ |
| वृतं | वृत्तं | ३८३ | १६ |

| | | | |
|---|---|---|---|
| समरेखं | समत्रिरेखं | ३८३ | १८ |
| प्रतिस | प्रतिम | ३८४ | १३ |
| वज्र | वर्ज | ३८५ | ८ |
| इत्येकस्य | इत्येकैकस्य | ३८८ | २१ |
| भिन्नान्न | मुद्गभिन्नान्न | ३८२ | १७ |
| मिथुनानां | प्रयोगवलिप्रदाने च मिथुनानां | ३८३ | ६ |
| तन्मध्यस्थल | तन्मध्ये वृत्त | ३८५ | २४ |
| मन्वा | अंशा | ३८७ | १६ |
| यद्दा | यष्टा | ३८७ | १८ |
| संख्येषु कोष्ठेष्वित्यर्थः | संख्यानि कोष्ठानि मार्जयेदित्यर्थः | ४०८ | २७ |
| ध्यानं | प्रयोगेषु च ध्यानं | ४१४ | २६ |
| रन्ताभिः | रनन्ताभिः | ४१६ | ४ |
| प्रलापनाम जल्पविशेषः | पलायनाद्यपजय विशेषः | ४१६ | २६ |
| दार्मैः | वार्मैः | ४१७ | १४ |
| चतुर्थजस्य | चतुर्थभुजस्य | ४१७ | २२ |
| सहित | यामसहित | ४२० | १४ |
| पदा३२दष्टादशा१८त् खाग्ने ३०नैखा१०त्ततः | पदात्३२खाग्ने३०नैखा१० दष्टादशा१८त्ततः | ४२० | १८ |
| कह्लोम | करह्लोम | ४२३ | ११ |
| अष्टकोणे | अष्टकोण कोणे | ४२५ | १८ |
| त्मकं | ष्टकं | ४२५ | २२ |
| कृत्वा | अतःपरं 'तदन्तरालेप्राग्वत् समत्रिरेखं त्रिकोणं कृत्वा-पुनस्त्रिकोणवाह्य वृत्ताद्बहिस्तद्वृत्तविष्कम्भार्द्ध-मानेन वृत्तं कृत्वा" इत्यधिकः | ४२६ | ११ |
| स्तम्भय | स्तम्भय स्तम्भय | ४२८ | २४ |
| वोथ्यां | अतःपरं "प्राङ् मध्यकोष्ठात् रेखाग्राणि वाह्यवृत्त-गतैकादशसंख्यानीतिशेषः। साध्यञ्च मध्यतः इत्यत्र चकारेण कर्णिकायां सर्ववाह्यवीथि" इत्यधिकः | ४३३ | १० |
| सर्वाः परि | सर्वाः सपरि | ४३५ | २७ |

| | | | |
|---|---|---|---|
| सुष्ठ्वा | स्वच्छा | ४३६ | ८ |
| स्थयो: प्राग् | स्थयो: वामदक्षक्रमेण चापसायकौ तदध: स्थयो: प्राग् | ४४० | १२ |
| शेष: । | अत:परं "कोदण्डनिवहमित्यनेन प्रतिभुजं कोदण्ड-मित्यर्थ: । अन्यैर्दक्षिणभुजैर्नवभिरिति शेष: । शरभिन्नकलेवरां शरभिन्न शरीरां । प्रोक्तं प्राग्वदरि-सेनाविनाशादिप्रकारेण । अथवा पश्चान्तरे । नवभिर्भुजैरिति शेष: । अन्यैर्दक्षिणभुजैर्नवभिरिति शेष: ।" इत्यधिक: | ४४२ | २६ |
| शक्र | चन्द्र | ५८१ | १३ |
| वर्गं | वर्गेषु | ५८८ | २१ |
| दिगक्ष: | दिग्वक्ष: | ५८७ | २३ |
| लग्न | लग्ने | ६०० | २१ |
| स्थित्य | स्थिति | ६८२ | २० |
| व्यन्यक्तोरव | व्यनक्तोरव | ७३२ | २ |

समाप्तमिदं शुद्धिपत्रम् ।

## ऊनविंशपटलम् ।

अथ षोड़शनित्यासु या प्रोक्ता तु चतुर्द्दशी ।
एकाक्षरा सा कथिता विद्या सा सर्वमङ्गला ॥१॥
न्यासक्रमं ध्यानविधिं शक्तीरावरणस्थिताः ।
पूजाक्रमं साधनञ्च विनियोगादिकान् क्रमात् ॥२॥
मूलविद्याक्षरैर्दीर्घस्वरभिन्नैः षड़ङ्गकम् ।
तानि तत्स्वरभिन्नानि न्यसेत् खेषु मनोऽवधि ॥३॥
सुवर्णवर्णरुचिरां मुक्तामाणिक्यभूषणाम् ।
माणिक्यमुकुटां नेत्रद्वयप्रेङ्खद्दयाभराम् ॥४॥

---

पूर्व्वस्मिन्नष्टादशे पटले त्रयोदश्या विजयानित्याया विधानमुपदिश्यानन्तरं चतुर्द्दश्याः सर्व्वमङ्गलानित्याया विधानमुपदिशति अथ षोड़शेत्यादिना अपि चेत्यन्तेन श्लोकशतरूपेण एकोनविंशेन पटलेन। तत्र अथ षोड़शेत्यादिना क्रमादित्यन्तेन श्लोकद्वयेन पटलार्थानुपदिशति। तत्र कथिता तृतीये पटले। विनियोगादिकान् यन्त्रादीनामिति शेषः ॥ २ ॥

मूलविद्येत्यादिना श्लोकेन न्यासजातक्रममुपदिशति। तत्र मूलविद्याक्षरैर्मूलविद्यायाः सकारवकारविन्दुभिः पिण्डीभूतैरित्यर्थः। अत्र बहुवचनं अवान्तरत्रयापेक्षया दीर्घस्वरभिन्नैः प्राग्वत्। एतदुक्तं भवति खां इत्यादि क्रमेण मूलविद्यया दीर्घस्वरयुजा सजातिकयाक्षरन्यासपूर्व्वकमङ्गन्यासं कुर्य्यादिति। तानि दीर्घस्वरयुक्तषड़्विधविद्यास्वरूपाणि खेषु श्रोत्रादिषु ज्ञानेन्द्रियेषु पञ्चसु। मनोऽवधि मनः षष्ठेष्वित्यर्थः। तत्र श्रोत्रादिषु चतुर्षु द्वन्द्वस्थानेष्वपि प्रतिद्वन्द्वमेकमेकमक्षरं न्यसेदित्यर्थः। तत्र त्वचि न्यासः प्राग्वत्। सर्व्वन्यासजातस्यानन्तरं व्यापकं प्राग्वन्न्यसेदिति सम्प्रदायः ॥ ३ ॥

सुवर्णेत्यादिभिः स्थिता इत्यन्तैः पञ्चभिः श्लोकैर्देव्याः सपरिवाराया नित्यसपर्य्यामण्डलनिर्म्माणगर्भं नित्यपूजाध्यानादिकमुपदिशति। तत्र नेत्रद्वयप्रेङ्खद्दया-

द्विभुजां स्वासनां पद्मे त्वष्टषोड़शतद्द्वयैः ।
पत्रैरुपेते सचतुर्द्वारभूसद्मयुग्मगे ॥५॥
मातुलुङ्गफलं दक्षे दधानां करपङ्कजे ।
वामेन निजभक्तानां प्रयच्छन्तीं धनादिकम् ॥६॥
स्वसमानाभिरभितः शक्तिभिः परिवारिताम् ।
षट्सप्ततिभिरन्याभिरक्षरोत्थाभिरन्विताम् ॥७॥
प्रयोगेष्वन्यदा नित्यसपर्य्यासूक्तशक्तिकाम् ।
ताः शक्तीः शृणु देवेशि या नित्यावरणे स्थिताः ॥८॥
भद्रां भवानीं भव्याञ्च विशालाक्षीं सुविस्मिताम् ।
करुणां कमलां कल्यां पूजयेदष्टपत्रके ॥९॥

---

भरां रक्तारुणकारुण्यभरसूर्य्यामृतांशुनेत्रद्वयां इत्यर्थः । स्वासनां पद्मे वक्ष्यमाणरूपे मण्डले सुखस्थितां इत्यर्थः । अष्टषोड़शतद्द्वयैः पत्रैः तद्द्वयैरिति षोड़शद्वयैरिति यावत् । द्वात्रिंशत्पत्रैरित्यर्थः । एतदुक्तं भवति आन्तरक्रमादष्टपत्रैः षोड़शपत्रैः द्वात्रिंशत्पत्रैरुपेत इति । सचतुर्द्वारभूसद्मयुग्मगे चतुर्दिक्षु चतुर्द्वारयुतचतुरस्र-द्वयमध्यगे इत्यर्थः । तन्नित्यसपर्य्यामण्डलनिर्म्माणक्रमो यथा । यथामानमन्तर्बहि-र्विभागरूपं चतुर्दिग्गतचतुर्द्वारोपेतं समचतुरस्रद्वयं कृत्वा तन्मध्ये द्वात्रिंशद्दलं पद्मं तदन्तः षोड़शदलं पद्मं तदन्तरष्टदलं च पद्मं कृत्वा तत्कर्णिकायां देवीमष्टपत्रादिषु परिवारशक्तीश्चावाह्य पूजयेदित्यर्थः । वामेन करपङ्कजेनेति शेषः । शक्तिभिः नित्यावरणशक्तिभिः । षट्सप्ततिभिः अष्टत्रिंशन्मिथुनरूपाभिः । अन्याभि-रित्यक्षरोत्थशक्तिविशेषणम् । अक्षरोत्थाभिः वक्ष्यमाणाभिरमृताद्याभिः सोम-सूर्य्याग्निरूपाक्षरशक्तिभिः अन्विताम् । प्रयोगेष्विति सम्बन्धः । अन्यदा नित्यसपर्य्या-स्विति सम्बन्धः । उक्तशक्तिकां वक्ष्यमाणभद्रादिशक्तिकां स्मरेदिति प्रकरणशेषः । शक्तीः नित्यपूजावरणशक्तीः । एतदुक्तम् भवति नित्यसपर्य्यायां भद्रादिशक्ति-सहितामेव प्रयोगादिषु ताभिश्च वक्ष्यमाणाभिरमृतादिभिर्मातृकाक्षरोत्थाभिः सोमसूर्य्याग्निकलाख्याभिरष्टत्रिंशन्मिथुनरूपतः षट्सप्ततिभिः शक्तिभिश्चान्वितां प्रोक्तरूपतो ध्यात्वा पूजयेदिति ॥ ८ ॥

भद्रामित्यादिभिः सहस्रकमित्यन्तैर्नवभिः श्लोकैः नित्यसपर्य्यावरणपञ्चकशक्ति-

कलाञ्च पूरिणीं नित्याममृतां जीवितां दयाम् ।
अशोकाममलां पूर्णां पुण्यां भाग्यामथोद्यताम् ॥१०
विवेकां विभवां विश्वां विततांश्चाष्टयुग्मके ।
पूजयेदभितः शक्तीः प्रादक्षिण्यक्रमेण वै ॥११॥
कामिनीं खेचरीं सर्वां पुराणां परमेश्वरीम् ।
गौरीं शिवाममेयाञ्च विमलां विजयां पराम् ॥१२॥
पवित्रां पद्मिनीं दिव्यां विश्वेशीं शिववल्लभाम् ।
अशेषरूपामानन्दामम्बुजाक्षीमनिन्दिताम् ॥१३॥
वरदां वाक्प्रदां वाणीं विविधां वेदविग्रहाम् ।
विद्यां वागीश्वरीं सत्यां संयताञ्च सरस्वतीम् ॥१४॥
निर्म्मलां दानरूपाञ्च पूजयेत् षोड़शद्वये ।
प्राग्वदिन्द्रादिभिः सर्व्वाः क्रमादन्वर्थसंज्ञकाः ॥१५॥

---

नामानि पूजासमापनादिकञ्चोपदिशति । तत्र भद्रामित्यादिना श्लोकेनाष्टपत्रपूज्य-शक्त्यष्टकनामान्युपदिशति । कलामित्यादिना श्लोकेन षोड़शदलपूज्यशक्तिषु द्वादश-शक्तिनामान्युपदिशति ॥ विवेकामित्यादिना श्लोकेनावशिष्टशक्तिचतुष्टयनामानि सर्वाः शक्तीरग्रादिप्रादक्षिण्यात् पूजयेदिति चोपदिशति । तत्राष्टयुग्मके षोड़श-दलेषु । कामिनीमित्यादिना श्लोकेन द्वात्रिंशद्दलपूज्यशक्तिष्वेकादशशक्तिनामान्युप-दिशति । पवित्रामित्यादिना श्लोकेनावशिष्टासु एकविंशतिशक्तिषु नवशक्तिनामा-न्युपदिशति । वरदामित्यादिना श्लोकेनावशिष्टासु द्वादशशक्तिषु दशशक्तिनामा-न्युपदिशति । तत्र वागीश्वरीमिति सप्तविंशतिशक्तिनाम । निर्म्मलामित्यादिना श्लोकेनावशिष्टशक्तिद्वयं तत्पूजादिकञ्चोपदिशति । तत्र षोड़शद्वये द्वात्रिंशद्दले-ष्वित्यर्थः । प्राग्वत् प्रदक्षिणादग्न्यादिलोकपालाख्या इन्द्रादीशान्ता अष्टौ शक्तीः स्त्रीरूपाः द्वारेषु पार्श्वद्वयसहितेषु पश्चिमादिचतस्रः पश्चिमादिचतुर्दिग्गतद्वारेषु चतुर्षु प्रतिद्वारं चतस्रः चतस्रश्च पूजयेदित्यर्थः । चतस्र इति शब्दस्यार्थद्वयवशा-द्विरन्वयो भवति तेनान्यदा चतस्र इत्यनन्तब्रह्मनियतिकालशक्तय उच्यन्ते । प्रोक्तविग्रहाः सम्भूय विंशतिशक्तीश्च पूजयेदित्यर्थः । नित्यानित्यापटलोक्तारम्भ-

ब्राह्म्याद्या लोकपालाख्याः शक्तीर्द्वारेषु पूजयेत् ।
पश्चिमादिचतुर्द्दिक्षु चतस्रः प्रोक्तविग्रहाः ॥१६॥
वलिद्वयञ्च होमञ्च कुर्य्यात् प्राग्वत् समापनम् ।
जपन्तु नित्यशः कुर्य्यादग्रे तस्याः सहस्रकम् ॥१७॥
प्राग्वत्तां साधयेद्विद्यां द्वात्रिंशल्लक्षमानतः ।
होमं दशांशतः कुर्य्यादन्नाज्याभ्यां घृतेन वा ॥१८॥
एवं संसिद्धविद्यस्तु कुर्य्यात् प्रोक्तानशेषतः ।
प्रयोगानन्यथा तस्य नैष्फल्यमयशो मृतिम् ॥१९॥
विदध्यात्तेन तां प्रोक्तक्रमेणाराध्य भक्तितः ।
संसाध्य पश्चात् कुर्व्वीत मङ्गलान्मङ्गलोदितान् ॥२०॥

---

वच्चतुरस्रदिग्गतद्वारपार्श्वस्थानगा इत्यर्थः। एतदुक्तं भवति ब्राह्म्याद्यष्टमातृरिन्द्राद्या ईशान्ता अष्टलोकपालशक्तीः एवं सम्भूय षोड़शशक्तीश्चतुरस्रद्वारचतुष्टये प्रतिद्वारं चतस्र इति क्रमेण पूजने तु ब्राह्म्याद्यष्टौ पश्चिमद्वारदक्षपार्श्वादितद्वामपार्श्वान्तं अष्टसु पार्श्वेषु पूजयित्वा ततश्चतुरस्रपूर्व्वद्वारोत्तरपार्श्वादुत्तरं[1]पूर्व्वपार्श्वावसानम् इन्द्रादिलोकपालशक्तीरष्टौ समभ्यर्च्च्य ततोऽनन्तब्रह्मनियतिकालशक्तीश्चतुरस्राग्नेयादीशान्तेषु कोणेष्वर्चयेत्। एवं त्रिरावर्त्तनात् पूजने कृते प्रतिदिशं पश्चिमादिचतुर्दिग्गतद्वारेषु चतस्रश्चतस्रः कोणादिषु एकैका चैवं विंशतिशक्तयस्तिष्ठन्तीति। वलिद्वयं प्राग्वत् समापनम्। प्राग्वत्तेजस्त्रयभावनादिना। तस्या देव्याः ॥ १७ ॥

प्राग्वदित्यादिभिरुदितानित्यन्तैस्त्रिभिः श्लोकैः पुरश्चरणविधानं कृतपुरश्चरणस्य प्रयोगविधानयोग्यतां अन्यथाकरणे प्रत्यवायादिकमुपदिशति। तत्र प्राग्वत् कृतसन्ध्यात्रयपूजनादिभिः। वा विकल्पे अन्यथा प्रोक्तसाधनादीनामकरणे तस्य साधकस्य नैष्फल्यादिकं विदध्याद्विद्येति शेषः। तेन कारणेन तां मूलविद्याम् आराध्य नित्योपासनादिभिः संसाध्य पुरश्चर्य्य पश्चात् साधनादेः मङ्गलान् प्रयोगानिति शेषः। मङ्गलोदितान् सर्व्वमङ्गलोक्तान्। एतत्सर्व्वमङ्गलापटलोक्तान्मङ्गलान् प्रयोगानित्यर्थः ॥ २० ॥

---

१। इतर इति वा।

प्रयोगार्था वर्णशक्तीर्वच्म्ये देवीः शृणु प्रिये ।
सोमसूर्य्याग्निरूपाश्च तास्त्वष्टत्रिंशदेव ताः ॥२१॥
अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः ।
शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ॥२२॥
पूर्णा पूर्णामृता कामदायिन्यः सस्वराः कलाः ।
एताः षोड़श चन्द्रस्य कलाः कल्पद्रुमोपमाः ॥२३॥
तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः ।
सुषुम्ना भोगदा विश्वा बोधनी धारणी क्षमा ॥ २४ ॥
एताः स्युः शक्तयः प्रोक्ताः क्रमाद्द्वादशभानुगाः ।
भकारादि डकारान्तवर्णोच्चारो विलोमतः ॥२५॥

---

प्रयोगेत्यादिभिर्भवेदित्यन्तैस्त्रयोदशभिः श्लोकैरष्टत्रिंशत्कलारूपमिथुनीभूताः प्राक् प्रस्तुता मातृकाक्षरशक्तीः प्रयोगार्थमुपदिशति। तत्र प्रयोगार्थाः। पूर्व्वप्रयोगेष्वित्यन्तं स्मारयति। वर्णशक्तीः मातृकायाः ताः पूर्वोक्तरूपसंख्या मिथुनरूपतः सोमसूर्य्याग्निरूपाः मातृकाया वक्ष्यमाणक्रमाः अक्षरविभागतः तद्रूपास्ता मिथुनीभूताः शक्तीः॥ अमृतेत्यादिना श्लोकेन षोड़शसु सोमकलासु चतुर्दशशक्तीरुपदिशति। तत्र पूषेति टावन्ता। पुष्टीरतिः पुष्टिः रतिः इति पदच्छेदः॥ पूर्णेत्यादिना श्लोकेन शिष्टकलाद्वयनामनी तासामेकैकस्याः षोड़शस्वराणामेकैकस्य क्रमाद्योजनादिकमुपदिशति। तत्र कामदायिन्यः इष्टप्रदाः। अत्र बहुवचनं षोड़शत्वापेक्षया। सस्वराः स्वराणां षोड़शानामेकैकस्य क्रमेणादौ योजनातः॥ तपिनीत्यादिना श्लोकेन सूर्य्यकलाद्वादशनामान्युपदिशति। क्रमादुद्दिष्टाद्विलोमतः भादिडान्तानि द्वादशाक्षराणि विलोमरूपाणि तासां मूलोक्तक्रमाणां आदौ प्राग्वद्योजयेदित्यर्थः॥ धात्रित्यादिना श्लोकेन द्वादशार्कनामसु दशनामान्युपदिशति। तत्र समनन्तरः नवमस्य दशम इत्यर्थः। त्वष्टेत्यादिना श्लोकेन शिष्टनामद्वयं तदक्षराणि चोपदिशति। तत्र कादिठान्तार्णतनवः अनुलोमतः ककारादिठकारान्ताक्षरद्वादशकं तन्नामादौ योजयेदित्यर्थः। तत्र तन्मन्त्रयोजनाक्रमः पूर्वोक्ततपिन्यादिशक्तितदक्षरसहितः। यथाक्रमं कं भं धातृतपिनीभ्यां नमः इत्यादयः ठं डं विष्णु

धाताऱ्यमा च मित्रश्च वरुणः शोभगस्तथा ।
विवस्वानिन्द्रपूषार्काः पर्जन्यः समनन्तरः ॥२६॥
त्वष्टा विष्णुरिति प्रोक्ता द्वादशार्काः क्रमेण वै ।
कादिठान्तार्णतनवः सर्वगाः सर्व्वसिद्धिदाः ॥२७॥
धूम्रार्चिरुष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी ।
सुश्रीः सुरूपा कपिला हव्यकव्यवहे अपि ॥२८॥
यादिक्षान्ताक्षरमयाः शक्तयो दश कीर्त्तिताः ।
तेषां दशानां नामानि वासनोक्तानि ते शिवे ॥२९॥
कादिक्षान्ताक्षराणान्तु द्वाविंशन्मिथुनानि वै ।
प्रोक्तक्रमेण संपूज्य विधिं युञ्ज्यात्तु सर्वतः ॥३०॥
स्वराणान्तु स्वतन्त्रत्वात् स्वतन्त्राः शक्तयस्तथा ।
तासां नाथास्तत्सदृशनामरूपाः समीरिताः ॥३१॥

---

क्षमाभ्यां नमः इत्यन्ता द्वादशमन्त्रा एवं द्वादशमिथुनरूपेणार्ककलादेवताश्चतुर्विंशतिः ॥ धूम्रेत्यादिना श्लोकेन वह्निकलादशकनामान्युपदिशति । तत्र हव्यकव्यवहे हव्यवहा कव्यवहा च । यादिक्षान्ताक्षरमयाः यकारादिक्षकारान्ताक्षरदशकपूर्वा इत्यर्थः । तेषां दशानां वह्नीनां वासनोक्तानि पञ्चत्रिंशे वासनापटले अग्निर्वह्नि-रित्यादिनोक्तानि । एतदुक्तं भवति यकारादि-क्षकारान्ताक्षरदशकं क्रमेण वह्नि-कलानामेकैकस्या आदावेकमेकं वह्निनामानि च तद्वत् योजयेदिति । तन्मन्त्रा यथा यं अग्निधूम्रार्चिर्भ्यां नमः इत्यादयः क्षं ग्रासकव्यवहाभ्यां नमः इत्यन्ता दशमन्त्राः एवं वह्निकलादेवतामिथुनदशकरूपत्वात् विंशतिः द्वाविंशन्मिथुनानि सौराणि द्वादश आग्नेयानि दश एवं सम्भूय कादिक्षान्ताक्षराणां द्वाविंशन्मिथु-नानीत्यर्थः । प्रोक्तक्रमेण तत्र क्रमोऽस्माभिर्दर्शितः । स्वतन्त्रत्वात् स्वयं राजन्ते इति निर्वचनात् स्वतन्त्राः स्वरमयत्वात् तत्सदृशनामरूपाः शक्तिनामानि पुमन्तानि योजयेदित्यर्थः । एतदुक्तं भवति स्वराणां स्वतन्त्रत्वात्तदधिष्ठात्र्यस्तु शक्तयः सोम-कलाः पूर्वोक्ता अमृताद्याः षोडश स्वतन्त्राः तेन तत्पतयस्तत्सदृशरूपनामानः तस्माच्छक्तिनामानि पुमन्तानि योजयेदित्यर्थः । पतदुक्तं भवति स्वरादिकानि

मिथुनान्येवमुक्तानि त्रिंशदष्टक्रमेण वै।
तानि संपूज्य तत्तेजस्त्रयात्मनि जले शिवे ॥३२॥
प्रोक्तानि देवतारूपाख्यावाह्याभ्यर्च्य तैर्जलैः।
अभिषेकात्तु तत्तेजस्त्रयं देव्यात्मता भवेत् ॥३३॥
वाताद्यैर्ग्रासमायान्तैः षट्सप्ततियुतैः शतैः।
पञ्चभिर्योजयेन्नित्यां विद्यां तां सर्वमङ्गलाम् ॥३४॥
ततस्तस्या वलस्थाने स्वरान् षोड़श योजयेत्।
ततः सहस्रैर्नवभिर्द्विशतेन च षोड़श ॥३५॥

---

तानि स्वरान्तान्येव योजनीयानि। तन्मन्त्रा यथा अं अमृतामृताभ्यां नम इत्यादयः अः पूर्णामृतपूर्णामृताभ्यां नम इत्यन्ताः षोडश। एतानि सोमकलामिथुनानि सर्वमिथुनानामादौ पूज्यानि। अत्र सूर्य्यकलाशक्तिमिथुनानां प्रत्येकं वर्णद्वयात्मकत्वं तन्मिथुनं भेदविवक्षयोपपन्नम्। अन्येषां मिथुनानामेकाक्षरात्मकत्वं मिथुनैक्यविवक्षया चोपपन्नम्। त्रिंशदष्टौ अष्टत्रिंशदित्यर्थः। एतदुक्तं भवति सोमकलाशक्तिमिथुनषोडशकेन सूर्य्यकलामिथुनद्वादशकेन वह्निकलादशकेन चैवमष्टत्रिंशन्मिथुनैः षट्सप्ततिः कला मातृकाक्षराः सन्ति। तान्युक्तक्रमेण विनियुञ्ज्यादिति तत्तेजस्त्रयात्मनि प्रोक्तमिथुनार्च्चनतः। शिवे इति सम्बुद्धिः। प्रोक्तानि सर्व्वतन्त्रेषूक्तानि स्वाभिमतानीत्यर्थः। अभ्यर्च्य तत्क्रमतः तत्तेजस्त्रयं देव्यात्मता सर्व्वदेवतानां सोमसूर्य्याग्निमयमातृकाक्षररूपत्वात् तत्तद्देवतात्मतेत्यर्थः। अभिषेच्यस्येति शेषः ॥ ३३ ॥

वातेत्यादिभिर्वदामि ते इत्यन्तैस्त्रिभिः श्लोकैः मूलविद्यायाः स्वरूपबाहुल्योपदेशं तद्विनियोगप्रस्तावञ्च करोति। तत्र वाताद्यैर्ग्रासमायान्तैरकाराद्यैः क्षकारान्तैः मातृकाविसराक्षरैः प्रोक्तसंख्यैरित्यर्थः। शतैः पञ्चभिः पञ्चशतैरित्यर्थः। एतदुक्तं भवति अकारादीनां षोड़शानां स्वराणां ककारादिक्षकारान्तानां पञ्चत्रिंशताञ्च प्रत्येकं षोडशस्वरयोजनतः षोडशानां षोडशानाञ्चैवं सम्भूय षट्सप्तत्यधिकपञ्चशतसंख्यानां मातृकाविसराक्षराणां मूलविद्याया आदौ क्रमशः प्रत्येकं योजनतः षट्सप्तत्यधिकपञ्चशतसंख्यानि विद्यारूपाणि भवन्ति इति। तस्या वलस्थाने मूलविद्यायाश्चतुर्द्दशस्वरस्थाने स्वरान् षोडश योजयेत्। षोडशस्वरान् क्रमशः

रूपाणि नित्याविद्याया जायन्ते परमेश्वरि ।
तैर्यन्त्राणि प्रयोगांस्तु फलानि च वदामि ते ॥३६॥
वृत्तद्वयं विधायास्य वहिः षट्कोणमालिखेत् ।
तद्बहिश्चाष्टपत्राब्जं तद्बहिस्त्रयं तथा ॥३७॥
कृत्वा तेषु न्यसेद्विद्याकूटान्युक्तक्रमेण तु ।
तेष्वाद्यं मध्यतः साध्यसमेतं विलिखेद्बहिः ॥३८॥
वहिः कोणेषु चत्वारि प्रत्येकं विलिखेत्ततः ।
अष्टच्छदेषु प्रत्येकं पञ्च पञ्च समालिखेत् ॥३९॥
वहिर्वृत्तान्तरयुगे मातृकां माययान्विताम् ।
विलोमामनुलोमाञ्च स्वेन सम्यक् समालिखेत् ॥४०॥

---

प्रत्येकं योजयेत् । नित्याविद्यायाः सर्व्वमङ्गलानित्याविद्यायाः । एतदुक्तं भवति पूर्वोक्तैर्विद्यादियोजितैः षट्सप्तत्यधिकपञ्चशतसंख्यैर्मातृकाविसराक्षरैस्तत्संख्यरूपभेदाया अन्त्ये प्रत्येकं क्रमात् षोडशस्वरयोजनतः सषोडशद्विशताधिकनवसहस्रसंख्याविद्यातत्स्वरूपाणि भवन्तीति । तैः प्रोक्तसंख्यैर्विद्यारूपैः प्रयोगान् यन्त्रैरिति शेषः ॥ ३६ ॥

वृत्तद्वयमित्यादिभिः क्रमादित्यन्तैः षड्भिः श्लोकैः प्रोक्तसंख्याविद्यारूपैरेकैका वृत्तितश्चतुश्चत्वारिंशदधिकशतयन्त्राण्युपदिशति । तत्र अस्य वृत्तद्वयस्य । तद्बहिः षट्कोणाद्बहिः । तद्बहिः अष्टपत्राब्जाद्बहिः । तत्त्रयं वृत्तत्रयं कृत्वेति सर्व्वत्रान्वयः । तेषु स्थानेषु विद्याकूटान् मूलविद्यायाः प्रोक्तसङ्केतरूपानित्यर्थः । उक्तक्रमेण वक्ष्यमाणक्रमेण । तेष्वाद्यं प्रोक्तसंख्येषु कूटेष्वाद्यं मध्यतः सर्वमध्यतः साध्यसमेतं सकारस्याधस्ताद्दकारमालिख्य तयोर्मध्यान्तरालप्रदेशे च साधकादित्रयं लिखेदित्यर्थः । वहिर्मध्यात् चत्वारि चत्वारि प्रतिकोणं तानि च मध्यलिखिताक्षरादीनि सम्भूय षट्कोणलेखनीयाक्षराणि चतुर्विंशतिः । वहिः षट्कोणात् प्रत्येकं पञ्च पञ्च प्रतिदलं पञ्च पञ्चाक्षराणि लिखेदित्यर्थः । सम्भूयाष्टपत्रलेखनीयाक्षराणि चत्वारिंशत् । एवं सम्भूय चास्मिन् यन्त्रे लेखनीयाक्षराणि चतुःषष्टिः । वहिः अष्टपत्रात् । वृत्तान्तरयुगे अष्टपत्रवाह्यगतवृत्तत्रयान्तरालवीथीद्वये । मायया विसर्जनीयेन । स्वेन विन्दुना । अन्तःषड्न्तरालेषु अन्तर्गतषट्कोणषडन्तरालेषु पर्य्यायदिनसम्भवे

अन्तःषड्न्तरालेषु पर्य्यायदिनसम्भवे ।
नित्ये लिखेदग्रतस्तु प्रादक्षिण्येन सर्व्वतः ॥४१॥
एवं यन्त्राणि जायन्ते तैः कूटैरुक्तभेदतः ।
शतञ्च चत्वारिंशच्च चत्वारि च ततः क्रमात् ॥४२॥
एवमन्यानि कूटानि प्रोक्तानि विलिखेत् क्रमात् ।
मध्ये नामसमेतानि तदन्यान्यभितो लिखेत् ॥४३॥

---

नित्ये प्रत्येकमक्षरत्रयात्मकतया षड्क्षररूपे विद्ये। सर्व्वतः यन्त्रस्य सर्व्वस्थानेषु। एवमुक्तयोगत इत्यत्रान्वयः। उक्तयोगत इत्येतदुक्तं भवति पूर्व्वपूर्व्वलिखिताक्षरचतुःषष्टिकादुपरितनमुपरितनं चतुःषष्टिकं वहिर्व्वहिरेवं क्रमेणोक्तसंख्यविद्याक्षरैरेकावृत्तितः प्रोक्तसंख्यानि यन्त्राणि जायन्त इति। यन्त्रविरचनाक्रमो यथा— प्रागुक्तमानतः षट्कोणं वृत्तद्वयगर्भं कृत्वा तद्वहिः अष्टदलं पद्मं कृत्वा तद्वाह्यवृत्तद्वयाद्वहिर्व्वृत्तद्वयं विधाय सर्व्वमध्ये सषोडशद्विशताधिकनवसहस्रसंख्येषु मातृकाविसरस्वरसंयोगादुत्पन्नयोगसञ्जातेषु विद्यारूपेष्वाद्यं प्राग्वत् सनामकमालिख्य तद्वहिः षट्कोणेषु प्रतिकोणं मध्यलिखिताक्षरादीनि चत्वारि चत्वार्य्यक्षराणि सम्भूय चतुर्व्विंशत्यक्षराण्यालिख्य तद्वहिरष्टपत्रेषु प्रतिपत्रं षट्कोणाभिलिखितचतुर्व्विंशतिकादुपरितनानि पञ्चपञ्चाक्षराणि सम्भूय तत्र चत्वारिंशदक्षराण्यालिख्यैवं सम्भूय चतुःषष्टिसङ्ख्यान्यक्षराण्यालिख्य तद्वहिर्व्वृत्तत्रयान्तरालवीथीद्वये मातृकां विलोमां सविसर्जनीयामन्तर्वीथ्यामालिख्य तद्वाह्यवीथ्यामनुलोमां सविन्दुकामालिखेत्। एतत् प्रथमं यन्त्रम्। एवं पूर्व्वोक्तयन्त्रलिखितचतुःषष्टिकादुपरितनमुपरितनं चतुःषष्टिकम् एवं क्रमेणोक्तसङ्ख्यानां विद्याक्षराणामेकावृत्तितो वहिर्व्वहिर्लेखनतश्चतुश्चत्वारिंशदधिक शतसंख्यानि यन्त्राणि जायन्त इति ॥ ४२ ॥

एवमित्यादिभिर्व्वदेदित्यन्तैश्चतुर्भिः श्लोकैः पूर्व्वोक्तानां चतुश्चत्वारिंशदधिकशतसंख्यानां यन्त्राणामेवाक्षरन्यासस्थानभेदेन जातानां यन्त्राणां संख्यामन्यनित्यापञ्चदशकस्याप्येवं क्रमेण यन्त्राणि सम्भवन्तीति चोपदिशति। तत्र एवमुक्तप्रकारेण अन्यानि कूटानि प्रोक्तानि पूर्व्वेषां पूर्व्वोक्तसंख्यानां यन्त्राणां मध्यलिखितकूटाक्षरा-

**त्रयोदशमितैर्लक्षैः सप्तविंशतिसंख्यकैः ।**
**सहस्रैश्च शतेनापि चतुर्भिस्तानि संख्यया ॥४४॥**
**यन्त्राणि देवि जायन्ते तैश्चासौ सर्व्वमङ्गला ।**
**एवमासान्तु नित्यानां यन्त्राणि स्युः पृथक् पृथक् ॥४५॥**

---

दुपरितनमुपरितनं कूटाक्षरमुपरितनानां प्रोक्तसंख्यानां यन्त्राणां मध्ये मध्ये लिखेदित्यर्थः। तदन्यानि तत्तत्प्रथमप्रथमयन्त्रेषु मध्यमध्यलिखिताक्षरादीनि चतुःषष्टिसंख्यानि। सप्तविंशतिसंख्यकैः सहस्रैः सप्तविंशतिसहस्रैरित्यर्थः। तैर्यन्त्रैः। एतदुक्तं भवति यथा पूर्वोक्तानां चतुश्चत्वारिंशदधिकशतानां यन्त्राणां प्रथमस्य यन्त्रस्य मध्ये सषोडशद्विशताधिकनवसहस्रसंख्यानां विद्यारूपकूटाक्षराणां प्रथमं मध्ये विलिख्य तद्वहिः स्थानेषु प्रोक्तेषु लिखितैर्मध्यलिखितप्रथमाक्षरादिकैश्चतुःषष्टिकूटैः प्रथमं यन्त्रम्। द्वितीयं पञ्चषष्टितमकूटादिकैर्वहिर्लिखितैश्चतुःषष्टिकैः एवं क्रमेण सर्वप्रथमकूटे कर्णिकास्थ एवोक्तसंख्यानि यन्त्राणि लिखितानि। तथा द्वितीयं कूटं तत्प्रथमस्य यन्त्रस्य मध्ये विलिख्य वहिस्तदादिकैश्चतुःषष्टिकैश्चतुःषष्टिकैर्लिखितैश्चतुश्चत्वारिंशदधिकशतसंख्यानि यन्त्राणि जायन्ते। एवं तेषां तेषां तथा तथा एकैककूटमध्यस्थ एव लेखनात् प्रोक्तसंख्यानि यन्त्राण्येवमेव। मध्यतः प्रोक्तसंख्यानां सर्वेषां कूटानां क्रमात् यावत्तत्तत्क्रमेण कूटसंख्यावृत्तिलेखनतः। सषोडशद्विशताधिकनवसहस्रसंख्ययन्त्राणां चतुश्चत्वारिंशदधिकशतकं सम्भूय त्रयोदशलक्षं चतुरुत्तरशताधिकसप्तविंशतिसहस्रोत्तरं यन्त्राणि भवन्तीति। तत्र पूर्वपूर्वचतुश्चत्वारिंशदधिकशतयन्त्रप्रथमप्रथमयन्त्रमध्यमध्यलिखितकूटात् पूर्व्वपूर्व्वकूटाक्षराणि तत्तच्चरमचरमयन्त्रस्य चरमचरमाक्षराणि भवन्ति इति॥ एवमासान्तु नित्यानां यन्त्राणि स्युः पृथक् पृथक्। एतदुक्तं भवति षोडशानां नित्यानां प्रत्येकं हृल्लेखावतीनां दशानां तस्यां हृल्लेखायामेवं सर्व्वमङ्गलावदाद्यन्तयोर्मातृकाविसरस्वरषोडशकयोजनतः सर्व्वमङ्गलोक्तसंख्यानि तस्या रूपाणि भवन्ति। तैस्तद्वत् तत्संख्यानि यन्त्राणि च विधेयानि। हृल्लेखाविहीनानां यन्त्राणां पञ्चानां सर्व्वमङ्गलावदाद्यक्षराणामाद्यन्तयोर्मातृकाविसरस्वरयोजनतस्तत्संख्यानि रूपाणि तैस्तत्संख्यानि च यन्त्राणि भवन्ति। ततस्तैस्तैस्तास्ताः सिद्धयश्च भवन्तीति। तत्र भेरुण्डाकुलसुन्दरीनित्ययोराद्या-

तस्मादाभिरसाध्यानि न कदाचिच्च कुत्रचित् ।
विद्यन्ते तेषु यत्किञ्चिद्देश्ये कः शेषतो वदेत् ॥४६॥
नाथात्मकानि येन सुरस्तेन तानि नवक्रमैः ।
भित्त्वा षोड़शधा देवि विदध्याद्विनियोगकम् ॥४७॥
विशालामध्यविन्यासं विधाय नवकोष्ठकम् ।
प्रागादिमध्यसंयुक्तं नाथान् देवीश्च तत्क्रमात् ॥४८॥४९॥
* * * * *
यद्यद्विवाञ्छितं कर्म्म तत्तेषु विनियोजयेत् ।
पीठे वा भूतले वापि पूजयेत् प्रोक्तवासरम् ॥५०॥

---

चरस्य हलमात्राभावात् मातृकाविसरमादिं कृत्वा तस्य विद्याक्षरस्य स्थाने प्रत्येकं षोडशस्वरयोगेन तत्तत्संख्यां सम्पादयेदित्युपदेशः । एवमत्रातिरहस्यमपि नाथाज्ञया सर्वं विविच्य समीचीनमुक्तमस्माभिः । आभिः पञ्चदशनित्याभिः असाध्यानि कार्य्याणि कदाचित् काले कुत्रचित् स्थाने च तेषु कार्य्येषु यत्किञ्चिदेकदेशतः । अतः कः शेषतो वदेत् साकल्येन तत्साध्यानि कार्य्याणि अहमपि वक्तुं न शक्नोमीत्यर्थः ॥ ४६ ॥

नाथात्मकानीत्यादिभिर्जपादिनेत्यन्तैस्त्रयोदशभिः श्लोकैः प्रोक्तयन्त्राणां विनियोगप्रकारानुपदिशति । तत्र नाथात्मकानि येन नवसंख्यया आहरणे यन्त्राणां निःशेषत्वात् तानि यन्त्राणि नवक्रमैर्भित्त्वा नवकं नवकं विभज्येत्यर्थः । षोडशधा भित्त्वेति मिलित्वेति सम्बन्धः । पूर्व्वविभक्तं नवकं षोड़शकं षोड़शकं विभज्य विनियोगं कुर्य्यात् । तेन षोड़शभिः षोड़शभिर्नवकैर्विनियोगं कुर्य्यादित्युक्तं भवति । विशालामध्यविन्यासं प्रतिकोष्ठं यन्त्रविनिर्माणयोग्यमध्यविकाशं विधाय नवकोष्ठकम् । यथा प्राक्प्रत्यगुदक्षिणोदक् च चतुर्भिः सूत्रैः समान्तरालमास्फालितैर्नवकोष्ठानि कुर्य्यादिति । प्रागादिमध्यपर्य्यन्तं प्रादक्षिण्यक्रमात् लिखेत् । नवानि नवसु प्राग्दिग्गतपङ्क्तिस्थकोष्ठत्रयमध्यकोष्ठमारभ्य मध्यमध्यस्थकोष्ठान्तं प्रादक्षिण्येना(सु)युक्तक्रमं नवयन्त्राणि लिखेदित्यर्थः । तेषु नवसु यन्त्रेषु त्र्यक्षराणि प्रथमेषु नवसु क्रमेणाश्विन्यादीनि नव नक्षत्राणि द्वितीयनवके मघादीनि नव नक्षत्राणि तृतीयनवके मूलादीनि नव नक्षत्राणि एवं यावत् फलावाप्त्युपरितनेषु नवकेष्वपि

ततः प्राप्ते वाञ्छितार्थे स्वात्मन्युद्वास्य देवताः ।
चक्रं प्रक्षाल्य तत्तोयं केदारादिषु निक्षिपेत् ॥५१॥
एवमन्यानि यन्त्राणि प्रोक्तानि क्रमतः शिवे ।
विनियुञ्ज्यादभीष्टेषु कार्य्येषु क्रमतः शिवे ॥५२॥
परसंख्यासमेतानि तेषु तेष्वप्ययं विधिः ।
सर्वतः सौम्यकर्म्माणि सिध्यन्त्येवानया ध्रुवम् ॥५३॥
वश्येषु ज्ञानसंप्राप्तौ सर्वप्रत्यूहशान्तिषु ।
लक्ष्मीप्राप्तौ तथारोग्यसिद्धौ रोगार्त्तिशान्तिषु ॥५४॥
विजयाय समस्तापत्तारणायाभिसिद्धये ॥
पुत्राप्तौ सर्वरक्षायै पूजयेत्तेषु तत्क्रमात् ॥५५॥
गजाश्वगोखरोष्ट्राणां महिषाणां विवृद्धये ।
तेषां रोगादिपीड़ासु तच्छान्त्यै च यथाक्रमात् ॥५६॥

---

सर्व्वत्र कार्य्येषु नक्षत्राणि नव क्रमेण पुनःपुनर्लिखेत् । सप्तम्या विभक्त्या सप्तमीविभक्त्यन्तं नक्षत्रलेखनमिति यावत् । नाथानेकस्मिन्नेकमेकं देवीरिति यन्त्रवाहुल्यापेक्षया बहुवचनम् । नाथान्देवीः पूजयेदित्युत्तर श्लोकेनान्वयः । तत्क्रमात् प्रागादिक्रमात् प्रोक्तवासरं मण्डलानि तानि देवताः प्राग्वद्बहुवचनम् । केदारादिषु केदारमिति क्षेत्रमुच्यते । आदिशब्दः उद्याननिष्कुटादिविषयः । एवमित्यादिभिरुक्तार्थः । सौम्यकर्म्माणि वक्ष्यमाणवश्यादीनि । अनया प्रोक्तप्रक्रिययेत्यर्थः । परसंख्येत्यादिना एतदुक्तं भवति । सर्व्वमङ्गलामितामन्तरेणान्यासां पञ्चदशानां नित्यानां प्रोक्तक्रमतो निर्मितानां परसंख्यापूर्वोक्तसंख्यासमेतानां यन्त्राणामप्युक्तक्रमतोऽयमेव विनियोगक्रम इति । तथा लक्ष्मीप्राप्त्यै तेषु यन्त्रेषु तत्क्रमात् प्रागुक्तक्रमतः पोडासु सतीषु तच्छान्त्यै पीड़ाशान्त्यै यथाक्रमं नवनवक्रमतः तेषु तेषु यन्त्रेषु वश्यादिषूक्तेषु अन्येष्वपि चेत्यर्थः । नवप्राकारयुक्तानि षोडशषोड़शनवकानीत्यर्थः । प्रथमादिषु तिथिषु पूजयेदित्युत्तरत्रान्वयः । प्रथमे नवके

निर्म्माय नव यन्त्राणि तत्र तत्राच्चयेच्छिवाम् ।
तेषु तेषूक्तकार्य्येषु तत्तत् सम्प्राप्तिहेतवे ॥५७॥
नवप्राकारयुक्तानि षोडश प्रथमादिषु ।
तिथिषु प्रोक्तरूपाणि तत्र तां सर्वमङ्गलाम् ॥५८॥
पूजयेद्वाञ्छितावाप्तेः प्रथमे सर्वदापयेत् ।
एवमेषा महासिद्धिकरी पूजाजपादिना ॥५९॥

---

एषा सर्व्वमङ्गला षोडशयन्त्रनवकविन्यासार्थं मण्डलं सम्प्रदायप्राप्तं लिख्यते । यथा प्राक्प्रत्यग्दक्षिणोदक्पञ्चपञ्च सूत्राणि स्वेष्टमानात् समान्तरालानि कृत्वा तेषु षोड़शसु कोष्ठेषु प्रत्येकं मध्ये मध्ये तिर्य्यगूर्द्ध्वञ्च समान्तरालरेखाद्वयविन्यासेन नवनव कोष्ठानि कृत्वा तेषु षोड़शस्वीशानादिमध्यान्तं प्रवेशगत्या तदन्तर्गतेषु(नवसु नवसु कोष्ठेषु प्रागादिप्रादक्षिण्यप्रवेशगत्या मध्यान्तञ्चैवं क्रमात्तेषु सर्वत्र यन्त्राणि कल्पयेदिति । सम्भूयैतदुक्तं भवति प्रोक्तसंख्यानां यन्त्राणां नवधाहरणनिःशेषतया नव नव यन्त्राणि पूर्व्वोक्तनवकोष्ठमण्डले प्रागादिप्रादक्षिण्यान्मध्यपर्य्यन्तं विलिख्य तद्यन्त्रमध्ये सप्तमीविभक्त्यन्तान्यश्विन्यादीनि मघादीनि मूलादीनि च नवनव-नक्षत्राणि तत्तत्साध्यसहितान्यालिख्यैवंक्रमेण पुनःपुनर्विलिख्योपरितननवकेष्वपि तत्तन्नक्षत्रे तद्यन्त्रार्च्चनादिकं यावत् फलावाप्ति कुर्य्यात् । किञ्च प्रागुक्तयन्त्रनव नवषोडशकं प्रागुक्तनवकोष्ठगर्भे षोड़शकोष्ठे मण्डले प्रागुक्तक्रमेण विलिख्य प्रति-पदादिपञ्चदश्यन्तं पञ्चदशसु तिथिषु प्रतितिथि एकस्मिन्नेकस्मिन्नवके द्वितीयनवका-दिषु पञ्चदशसु नवकेष्वभ्यर्च्य सर्वासु तिथिषु पूर्व्वमीशदिग्गतप्रथमनवकेष्वर्च्चयेत् । एवं यावत् फलाप्ति तदुपरितनान्यपि नवकषोड़शकान्यालिख्य तिथिषु पूजनात् सर्व्वफलावाप्तिकरी सर्व्वमङ्गलेति । अत्र परसंख्यावान्तरसंख्या चतुश्चत्वारिंश-दधिकशतरूपा नव संख्याभरणतश्च निःशेषा भवति परसंख्यापि तथैव । तेन नाथात्मकत्वं षोड़शनित्यात्मकत्वं चैषामिति सम्प्रदायः ॥ ५९ ॥

लघुमन्त्रक्रियाश्चासां पूजां सर्वार्थसिद्धिदाम् ।
पूर्णामनतिविस्तारं मङ्गलां ब्रूहि मे शिव ॥६०॥
देवर्षिसिद्धगन्धर्वयक्षदेवाङ्गनाश्रयाम् ।
पूजां वक्ष्यामि ते देवि ! गुह्यां शृणु मनोहरे ॥६१॥
विद्यया कुलसुन्दर्य्या कराङ्गन्यासपूर्वकम् ।
अर्चितया विधायाथ पीठे चक्रं विधाय तत् ॥६२॥
चन्दनागुरुकर्पूररोचनादरदादिषु ।
एकेन तत्र ताः सम्यगुक्तरूपमथार्चयेत् ॥६३॥
रत्नादिषूक्तेष्वालिख्य प्रतिष्ठाप्याथ पूजयेत् ।
वृत्तस्यायामविस्तारद्वये त्वेकतुरीयतः ॥६४॥

---

लघुमन्त्रेत्यादिभिः पूजयेदित्तन्तैरध्यर्द्धैश्चतुर्भिः श्लोकैस्तत्प्रश्नोत्तररूपप्रस्तावपूर्वं वक्ष्यमाणायां लघुमन्त्रक्रियायां पूजायां षोड़शनित्यासाधारणायां कराङ्गन्यासमर्घविधानं यन्त्रलेखनद्रव्याधिष्ठानादिकञ्चोपदिशति। तत्र लघुमन्त्रक्रियायां लघुमन्त्रां लघुक्रियाञ्चेत्यर्थः। आसां षोड़शनित्यानां पूर्णां लघुत्वपरिहाराय मङ्गलां मङ्गलकरीं गुह्यां दिव्यत्वात्। तया कुलसुन्दर्य्या चक्रं वक्ष्यमाणद्वादशकोणरूपं। तदिति चक्रविशेषणम्। एकेन द्रव्येण विधायेति पूर्व्वत्रान्वयः। तत्र चक्रे ताः नित्याः उक्तरूपं वक्ष्यमाणरूपं यथा रत्नादिषूक्तेषु प्रधाननित्याकाम्योक्तेषु प्रतिष्ठाप्य चक्रमिति शेषः। अत्र चक्रे ॥ ६३ ॥

वृत्तस्येत्यादिना समास्त्रकामित्यन्तेनार्द्धाद्येन श्लोकद्वयेन द्वादशास्त्रचक्रनिर्माणक्रममुपदिशति। अत्र आयामविस्तारद्वये त्वेकतुरीयतः आयामविस्तारयोरन्यतमस्य चतुर्थांशमानत इत्यर्थः। तेषु चिह्नेषु सूत्राणि द्वादशेति शेषः। त्रयं चिह्नानां द्वादशकोणचक्रमिति शेषः। तेषां मर्मसु सूत्राणां द्वादशानां रेखाद्वयसङ्गतिस्थानेषु मध्ये सर्व्वमध्ये योनिं स्वाभिमुखं त्रिकोणम्। एतदुक्तं भवति अभीष्टमानेन भ्रमेण वृत्तं निष्पाद्य तस्य व्यासार्द्धं चतुर्विंशतिधा विभज्य तेष्वंशेषु

वृत्तं विधाय चिह्नानि तेषु सूत्राणि पातयेत् ।
त्रयमन्तरतो मुक्ता तेन द्वादशकोणकम् ॥६५॥
तेषां मर्मसु मध्ये च विदध्याद्वृत्तयुग्मकम् ।
मध्यवृत्तस्य मध्ये तु योनिं कुर्य्यात् समास्रकाम् ॥६६॥
प्राग्वत्तिस्रोऽर्चयेन्नित्यास्तत्कोणेषु प्रदक्षिणम् ।
अन्या अन्येषु कोणेषु पूजयेद्द्वादश क्रमात् ॥६७॥
अग्रात् प्रदक्षिणं पश्चाद्बलिं दद्याद्यथाविधि ।
सप्ताक्षर्य्या केवलया केवलां ललितां यजेत् ॥६८॥

---

वृत्तात् सप्तमांशादन्तस्तदन्तः । षष्ठांशादन्तश्च वृत्तद्वयं कृत्वासर्ववाह्यवृत्तस्य मध्यव्यासस्यायामविस्तारयोरन्यतमस्य चतुरंशीकृतस्य चतुर्थांशतः सर्ववाह्यवृत्तेऽभितो द्वादशचिह्नानि विधाय तेषु चिह्नेषु त्रिचिह्नान्तरितं चिह्नाचिह्नमित्येवं क्रमेण द्वादशसूत्राण्यास्फाल्य सर्व्वमध्यवृत्तमध्ये प्रागवत् समत्रिरेखां स्वाभिमुखां योनिं कुर्य्यात् । एवं कृते तन्मर्म्मद्वादशकमध्ययोनिवृत्तोपेतं सर्व्वमध्यवृत्तान्तर्गतयोनिकं प्रोक्तरूपं द्वादशास्रं चक्रं भवतीति ॥ ६६ ॥

प्राग्वदित्यादिना यजेदित्यन्तेन श्लोकद्वयेन तच्चक्रे प्रोक्तशेषां लघुपूजामुपदिशति । तत्र प्राग्वन्मध्यस्थाया उपरितनाः तत्कोणेषु सर्व्वमध्यस्थत्रिकोणत्रये प्रदक्षिणम् अग्रादि । अन्याः तिसृभ्यो नित्याभ्यः । अन्येषु वाह्यस्थेषु कोणेषु द्वादशसु द्वादश नित्या इति शेषः । क्रमात् यथाक्रमं अग्रात् प्रदक्षिणमिति पूर्व्वत्र सम्बन्धः । वलिं दद्यात् पूजान्त एव यथाविधि अन्नादिद्रव्यैर्मुद्रया च सप्ताक्षर्य्या केवलया कुरुकुल्लयेति शेषः । अस्य पदस्य वलिं दद्यात् इत्यत्रान्वयः । पूजान्तरा । केवलां ललितां ललितानित्यायाः तृतीयखण्डस्यापि ललितेति नाम तामित्यर्थः । एतत्प्रधाननित्यायामङ्गित्वपूजने अन्यासां पञ्चदशानामङ्गित्वपूजने तत्तद्विद्यां जपेदित्यर्थः । ललिताविद्यायास्तृतीयखण्डात्मकत्वमन्यस्य खण्डद्वयस्य तृतीयपटले स्वयमेवोपदिष्टवान् । एवमुक्तं भवति प्रागुक्ते द्वादशास्रे चक्रे मध्ययोनिमध्ये ललितां विद्यातृतीयखण्डेनाभ्यर्च्य तद्योनिकोणत्रये अग्रादिप्रादक्षिण्यात् तिस्रः

निल्यानां ललितादानां षोडशानाञ्च नामभिः ।
निल्यासप्ताक्षरीभिः स्युर्विद्याः पूजासु सर्वदा ॥६९॥
ताभिः षोडशविद्याभिर्निल्यास्ताः षोडशार्चयेत् ।
तद्विद्याक्षरसंख्यान्तु शृणु वच्मि यथाक्रमम् ॥७०॥
प्रथमायाश्च सप्तम्या विद्या स्यात् षोडशाक्षरी ।
द्वितीयायाश्चतुर्थ्याः स्युश्चतुर्दशभिरक्षरैः ॥७१॥
तृतीयायाश्च षष्ठ्याश्च दशम्या दशपञ्चकम् ।
द्वादश्याश्च चतुर्दश्याः पञ्चदश्याः क्रमेण वै ॥७२॥

---

कामेश्वरीवज्रेश्वरीभगमालिनीः समाराध्य तत्तद्विद्याभिरन्या द्वादशनित्या निल्यक्लिन्नादीः द्वादशकोणेष्वग्रादिप्रादक्षिण्येन तत्तद्विद्याभिरर्चयेत्। कुरुकुल्लासप्ताक्षर्यां वलिमन्ते दत्त्वा केवलतृतीयखण्डं जपेत्। अन्यासां पञ्चदशानां अङ्गाङ्गित्वपूजनेषु तदुपरितनास्तिस्रस्तद्विद्याभिः प्राग्वदभ्यर्च्य तदुपरितना द्वादशनित्या यथाक्रमं द्वादशकोणेषु तत्तद्विद्याभिरर्चयित्वा सर्वासां कुरुकुल्ला सप्ताक्षर्यां वलिं दत्त्वा तत्तद्विद्यां जपेत्। तत्र पूजने अन्तर्द्वादशे अन्तः द्वादशकोणे मध्यस्थां पूजयेदिति ॥ ६८ ॥

निल्यानामित्यादिभिरुदिता इत्यन्तैः पञ्चभिः श्लोकैर्निल्यानां षोड़शानां नामरूपा विद्याः प्रत्येकं तदक्षरसंख्यास्ताभिर्नामरूपविद्याभिश्च तस्मिन् द्वादशारे चक्रे पूजाविधानञ्चोपदिशति। तत्र नामतस्तृतीयपटलप्रोक्तत्रिपुरसुन्दरीत्यादिनामभिः। निल्या सप्ताक्षराणि स्युः। निल्या इत्यक्षरद्वयं प्रागुक्तसप्ताक्षरीति स्युरित्यनयोः पूर्वापरयोरन्वयः। तेन इति प्रोक्तप्रकारविद्याः स्युरित्यर्थः। सर्व्वदा निल्यं ताभिर्नामरूपाभिरित्यर्थः। विद्यात्रयस्यापि दशपञ्चकमित्यत्रान्वयः। पञ्चम्या इत्यादि पदत्रयं विद्यापदविशेषणं प्राग्वत् त्रयोदशाक्षराणि। एकादश्या इत्यादित्रयं प्राग्वत् द्वादशोदिता वर्णा इति शेषः। एतदुक्तं भवति षोड़शानां निल्यानां तृतीयपटले षोड़शविद्योपदेशे यस्याः त्रिपुरसुन्दरीत्यादिरूपं यन्नाम प्रोक्तं तत्तदन्ते निल्यासप्ताक्षरीति सर्वासां नवाक्षरयोजनमादौ सम्प्रदायात् सर्वासाम् प्रत्येकं

पञ्चम्याश्च नवम्याश्च त्रयोदश्यास्त्रयोदशी ।
एकादश्यास्तु साष्टम्याः षोडश्या द्वादशोदिताः ॥७३॥
अस्मिन्नेवार्चयेच्चक्रे चतुर्विंशतिभिस्तथा ।
सविंशतिशता विद्या जपेत्तास्ताश्च सिद्धये ॥७४॥
अन्या विंशत् सप्तशतं तैर्यन्त्रैर्न च पूजनम् ।
आसां पूजाजपाद्येषु यन्त्रेषु च समीरितम् ॥७५॥
एतल्लघुप्रकारन्ते यन्त्रं सर्व्वार्थदायकम् ।
तेन तन्त्रोक्तमखिलं साधयेद्वज्ररूपिणा ॥७६॥

---

क्रमेण प्रणवहृल्लेखायोजनञ्च कुर्य्यात् । तासां तत्रोदितनामाक्षरसंख्यामनुष्टुप् वाक्यरूपेणैव व्याख्यायतेऽस्माभिः । यथा :—सामस्तोमवनासङ्गभूतागीतावताचलैः । इत्थमर्णैः षोड़शभिः संख्या नामार्णगाः क्रमात् ॥ इति । एवं प्रोक्तसंख्याक्षरनाम विद्या षोड़शमोच्यते पूर्व्वविद्या स्वस्वनामरूपाभिः प्रोक्तद्वादशारचक्रे पूर्वोक्तक्रमेण षोड़शनित्याः समर्च्चयेदिति ॥ ७३ ॥

अस्मिन्नित्यादिना समीरितमित्यन्तेन श्लोकद्वयेनोपरिष्टाद्वक्ष्यमाणाणाभिः प्रधमाङ्गिनित्याया ललिताया विद्यायास्तत्खण्डाक्षराणां षसां चतुरक्षरभेदजनिताभिश्चतुर्विंशतिभेदजनिताभिश्चतुर्विंशतिभिदाङ्गिविद्याभिस्तत्पञ्चाक्षरप्रभेदस्थाभिर्विंशत्यधिक-शतसंख्याभिर्विद्याभिस्तत्-षड़क्षरजनिताभिर्विंशत्यधिक-सप्तशतसंख्याभिर्विद्याभिश्चास्मिन्नेव द्वादशारे प्रोक्ते चक्रे तस्या ललितायाः समाराधनमुपदिशति । तत्र तास्ता याभिर्विद्याभिरर्च्चितैस्तैर्विद्यास्वरूपभेदैः । यन्त्रेषु तत्तत्पटलवक्ष्यमाणेषु । आसां प्रोक्तसंख्याविद्यानाम् । पूजाजपाद्येषु आद्यशब्दस्तर्पणहोमादिविषयः । समीरितं विधानमिति शेषः । आसां विद्यानां उक्तसंख्यानां पूजनादिषु यन्त्रेषु च विधानमुक्तमित्यर्थः । अत्र यन्त्रेष्विति द्विरुपादानं संक्षेपविवरणरूपम् । एतदुक्तं भवति प्रधाननित्याया ललितायास्तद्द्वादशारचक्रमध्ये पूजाविधौ तद्विद्यातार्तीयखण्डाक्षरप्रभेदजनिताभिः प्रोक्तसंख्याभिर्विद्याभिश्चार्चयेत् । आभिर्यन्त्रपटलवक्ष्यमाणयन्त्रेष्वपि पूजादिकं कुर्य्यात् ॥ ७५ ॥

एतदित्यादिभिः कोणत इत्यन्तैरष्टभिः श्लोकैः षोड़शनित्यानामविद्याभिः

तद्वज्रं द्विविधं प्रोक्तं कोष्ठकोणात्मभेदतः ।
कोणात्मवज्रनिर्म्माणप्रयोगाः परतः शिवे ॥७७॥
तयोस्तु कोष्ठरूपन्तु वज्रं वक्ष्ये यथाविधि ।
यत्साधकार्थितावाप्तौ सुराङ्घ्रिपसमो भवेत् ॥७८॥
प्राक्प्रत्यग्दक्षिणोदक्क चतुर्विंशतिसूत्रतः ।
नवविंशतिभिः पञ्चशतं कोष्ठानि तेन वै ॥७९॥
कोणेषु मार्जयेत् षड्भिः षष्टिकोष्ठानि पूर्ववत् ।
शिष्टेषु वकोष्ठानि पञ्चषष्ट्या शतद्वयम् ॥८०॥

---

ललिताचतुर्विंशतिभेदैश्च कोष्ठरूपवज्रयन्त्रनिर्माणक्रमसुपदिशति । तत्र एतद्वक्ष्यमाणं ते वक्ष्यामीति शेषः । तेन यन्त्रेण तन्त्रोक्तमखिलं साधयेत् । षोड़शनित्याविद्याक्षरमयत्वात् । परतः यन्त्रपटले । तयोः कोष्ठकोणात्मकयोः यद्यन्त्रं सुराङ्घ्रिपसम इति स्वातन्त्र्यं सममित्यर्थः । तेषु कोष्ठेषु नवविंशत्यधिकपञ्चशतसंख्येषु कोणेषु कोणदिक्षु । षड्भिः सहितानीति शेषः षट्षष्टिकोष्ठानीत्यर्थः । पूर्व्ववत् मध्ये वज्ररूपं यथा भवेत्तथेत्यर्थः । तेषु पञ्चषष्ठ्यधिकद्विशतसंख्येषु कोष्ठेषु च चतुष्टयैः प्रतिदिशं अधोमध्यवाह्यारम्भात् सर्वाधःस्थपङ्क्तिस्थ-कोष्ठपञ्चकमध्यकोष्ठरूपवाह्यकोष्ठादारभ्य चित्रादिललितान्तिकं नामविद्याक्षराणि सम्भूय पञ्चविंशत्यधिकद्विशतसंख्यानीत्यर्थः । अवशिष्टेषु चतुर्विंशतिकोष्ठेष्वित्यर्थः । ललितार्णचतुर्भेदजनितामित्यस्य चतुर्विंशतिमित्यत्रान्वयः । नामशक्तियुक् तत्चतुर्विंशतिगतह्स्लें खोदरे प्रागवन्नाम लिखेदित्यर्थः । ललितां तार्त्तीयां साध्यगर्भां प्रागवत् ह्स्लें खागतसाध्यां । मध्यकोणतः मध्ये च त्रिकोणेष्वित्यर्थः । तेन प्रतिलोमतश्चतुर्विंशतिरूपां विद्यां लिखेदित्यर्थः । एवं कृते अनुलोमरूपाश्चतुर्विंशतितया लिखिता मध्ये भवन्तीति यावत् । तामेव त्रिकोणचतुष्टयेषु च लिखेदित्यर्थः । एतदुक्तं भवति प्राक्प्रत्यग्दक्षिणोदक्कसमान्तरालानि चतुर्विंशतिसूत्राण्यास्फाल्य नवविंशत्यधिकपञ्चशतकोष्ठानि सम्पाद्य तेषु चतसृषु कोणदिक्षु प्रतिकोणदिशं षट्षष्टिषट्षष्टिसंख्यानि च एवं सम्भूय चतुःषष्ठ्यधिकद्विशतसंख्यानि कोष्ठानि मध्ये वज्ररूपेण मार्जयित्वा मध्ये वज्र

तेषु प्राग्वत्त्रिकोणानि चतुर्दिक्षु चतुष्टयैः।
कोष्ठैर्विधायाधो मध्ये वाय्वारम्भात् प्रदक्षिणम् ॥८१॥
प्रवेशगत्या विलिखेच्चित्रादिललितान्तकम्।
मध्येऽवशिष्टे खण्डार्णचतुर्व्विंशतिमालिखेत् ॥८२॥
ललितार्णचतुर्भेदजनितां नामशक्तियुक्।
ललितां साध्यगर्भान्तु विलिखेन्मध्यकोणतः ॥८३ ॥
एवं यन्त्रं समालिख्य शिलालोहत्रयादिषु।
संस्थाप्य कुत्रचित् स्थाने पूजयेद्वाञ्छिताप्तये ॥८४॥
यस्मिन् देशे वज्रयन्त्रं स्थापितं योजनावधि।
मङ्गलान्येव जायन्ते नामङ्गलकथा भवेत् ॥८५॥

---

रूपावशिष्टेषु पञ्चषष्ट्यधिकद्विशतेषु कोष्ठेषु प्राग्वच्चतुर्दिक्षु कोष्ठचतुष्टयमेवं सम्भूय षोड़शकोष्ठानि मार्जयित्वा तत्र समत्रिरेखं त्रिकोणचतुष्टयं कृत्वा शिष्टेष्वेकोनपञ्चाशदधिकद्विशतसङ्ख्यकोष्ठेषु सर्वाधःस्थपङ्क्तिकोष्ठपञ्चकमध्यकोष्ठमारभ्य प्रादक्षिण्यप्रवेशगत्या मुक्तक्रमं चित्रादिललितान्तानि षोड़शनित्यानामरूपविद्याक्षराणि पञ्चविंशत्यधिकद्विशतसङ्ख्यानि यावत्सङ्ख्यापरिसमाप्त्या विलिख्यान्तरावशिष्टेषु चतुर्विंशतिकोष्ठेषु पूर्व्वलिखितानन्तरकोष्ठाद्यमुपात्तं प्रदक्षिणप्रवेशगत्या ललिताचतुरक्षरभेदजनितं तत्तत् ह्स्ल्रे खोदरस्थसाधकादित्रयसहितं विद्याचतुर्विंशतिकमनुलोमरूपा तत्प्रथमभूता ललिता मध्ये यथा भवेत्तथा विलोमतः समालिख्य सर्व्वमध्यगतानुलोमरूपललिता ह्स्ल्रे खोदरे प्राग्वत् नामत्रयं लिखित्वा तामेव चतुर्दिग्गतत्रिकोणचतुष्टयेऽपि साध्यगर्भां समालिखेत् इति ॥ ८३ ॥

एवमित्यादिना भवेदित्यन्तेन श्लोकद्वयेन पूर्वोक्तयन्त्रप्रयोगफलान्युपदिशति। तत्र लोहत्रयादिषु आदिशब्दो रत्नादिविषयः। संस्थाप्य निधाय प्राणप्रतिष्ठादिपुरःसरं अमङ्गलकथा अमङ्गलमिति शब्दस्तस्मिन्निति शेषः ॥ ८५ ॥

पूजाचक्रे च तासान्तु नामानि प्रतिकोणके ।
विलिख्य मध्ये ललितां साध्यगर्भां समालिखेत् ॥८६॥
बहिर्वृत्ते मातृकाञ्च तच्चक्रं स्थापयेद्भुवि ।
तेनापि पूर्व्ववत् प्रोक्तं देशे न स्यादभव्यकम् ॥८७॥
तस्मिन् सर्वत्र संलिख्य तां विद्यां सर्वमङ्गलाम् ।
मध्ये साध्याक्षरोपेतां स्थापयेत्तत्फलाप्तये ॥८८॥
प्रागुक्तवज्रयन्त्रे वा द्वादशारेऽपि वा शिवे ।
संस्थाप्य कुम्भं तद्वर्णभूरुहक्वाथपूरितम् ॥ ८९ ॥
विद्याया विधिवज्जप्तैरभिषिञ्चेज्जलैः शुभैः ।
जन्मर्क्षेषु विशेषेण समस्तलयशान्तये ॥ ९० ॥
पूर्वसम्पत्समृद्ध्यै च ग्रहरोगादिशान्तये ।

---

पूजाचक्रेत्यादिना अभव्यकमित्यन्तेन श्लोकद्वयेन पूर्वोक्तद्वादशकोणचक्रे षोड़श-श्लोकैः प्रागुक्तपूजाक्रमेण प्रोक्तस्थानेषु प्रतिस्थानमेकैकनाममन्त्रलेखनं तद्बहिर्वृत्तवीथ्यां मातृकालेखनगतस्वस्वविनियोगमुपदिशति । तत्र एतदुक्तं भवति द्वादशारे चक्रे सर्व्वमध्ये ललितां प्राग्वत् ससाध्यामभिलिख्यान्येषु स्थानेषु पञ्चदशनित्यानां नामविद्याः पूजाक्रमतो लिखित्वा सर्व्ववाह्यवृत्तवीथ्यां मातृकामनुलोमां सविन्दुकामालिख्य पूर्वोक्तदेशे स्थापनात् पूर्वोक्तफलसिद्धिरिति ॥ ८७ ॥

तस्मिन्नित्यादिना श्लोकेन प्रागुक्तद्वादशकोणे चक्रे सर्व्वस्थानेषु सर्व्वमङ्गला-विद्यालेखनतो विनियोगात् पूर्वोक्तफलसिद्धिरित्युपदिशति । तत्र मध्यसाध्याक्षरोपेतां नान्यत्रेति यावत् ॥ ८८ ॥

प्रागुक्तेत्यादिना शान्तये इत्यन्तेनाध्यर्द्धेन श्लोकद्वयेन प्रागुक्तवज्रयन्त्रद्वादश-कोणचक्रयोरभिषेकविधानतो वा भव्यानि फलान्युपदिशति । तत्र तद्वर्णभूरुहं तदङ्गिविद्यावर्णप्रोक्तौषधिर्द्वादशकोणे वज्रे वा ललिताया एव विद्याया अङ्गिरूपतया जन्मर्क्षेषु विजन्मसु पूर्व्वसम्पत्समृद्ध्यै पूर्वोक्तफलसमृद्धये ॥ ९१ ॥

तथान्यदपि देवेशि प्रयोगं सर्वपावनम् ॥ ९१ ॥
दारिद्र्यवनदावाग्निं पापाब्धिवड़वानलम्।
सङ्कोचध्वान्तमार्त्तण्डं सन्तोषाब्धिविधूदयम् ॥ ९२ ॥
प्रागुक्ताचरसम्भिन्नां विद्यां नित्यां समाहितः।
मौनी जपेत् प्रसूनैश्च पूजयेत् सौरभान्वितैः ॥ ९३ ॥
तर्पयेत् सलिलैः सिन्धुगामिनीसम्भवैः शिवैः।
सौरभाद्यैस्तिलैः शुभ्रैस्तण्डुलैर्विधिवद्‌ हुनेत् ॥९४॥
संस्थाप्य कुम्भं प्रोक्ताम्बुपूर्णं संजप्य भक्तितः।
समस्तं तत्क्रमादेकवारं तैरभिषेकतः ॥९५॥
घोराभिचारकृत्यादिदुःखेभ्यो मुच्यते चणात्।
भूतप्रेतपिशाचाप * * ॥९६॥
कुमारा गुह्यका वीरा डाकिन्याद्याश्च दारुणाः।
विमुच्य तत्चणाद्भीताः प्रयान्ति चान्यतः चणात् ॥९७॥

---

तथान्यदपीत्यादिभिः चणादित्यन्तैरर्द्धाद्यैः षड़् भिः श्लोकैः सर्व्वमङ्गलानित्याया आद्यन्तयोर्मातृकाविसरषोड़शस्वरयोजनतो जनितानां प्रोक्तसंख्यानां विद्यानां जपादिना फलमुपदिशति। तत्र प्रयोगे वच्यामीति शेषः। दारिद्र्यवनदावाग्निं दारिद्र्यं नामातुष्टिः। पापो नामाविमृश्यकारिता। सङ्कोच इति दुर्वासना। सन्तोषः स्वरूपानुभवः। प्रागुक्ताचरसम्भिन्नां मातृकाविसरषोड़शस्वरैराद्यन्तयोः सम्भिन्नामिति। विद्यां सर्व्वमङ्गलां च करोति भिन्नक्रमः। पूजयेच्च सर्व्वमङ्गलां नित्यां सौरभाद्यैः सलिलैरिति पूर्वत्रान्वयः। शुभ्रैरिति तिलतण्डुलयोर्विशेषणम्। संस्थाप्य द्वादशगुणितादिष्वन्यतम इत्यर्थः। प्रोक्ताम्बुपूर्णं मूलविद्याचरौषधिक्वाथाम्बुभिः। समुद्रगावहत्सलिलसरिदम्बुभिर्वा पूर्णं समस्तं तत्प्रोक्तसंख्यारूपमेक वारं एकावृत्तितः संजप्येत्यत्रान्वयः। तैर्जलैर्घोराभिचारकृत्यादिदुःखेभ्यः। आदिशब्दो ग्रहादिविषयः। तम् अभिषिक्तम् ॥ ९७ ॥

समुद्रगासरित्तोये ताः समावर्त्तयेत् स्थितः ।
कण्ठमात्रे मज्जनात्तु१ प्रागजन्माद्यैर्विमुच्यते ॥९८॥
तथैव घृतहोमेन तर्पणैः शुद्धवारिभिः ।
एवं सकलकल्याणसंप्रोक्ता सर्वमङ्गला ॥९९॥
नामानुरूपं भजतां कृपया फलमानतः ।
चिप्रप्रसादतो नित्यं हर्षोत्पादनतोऽपि च ॥१००॥
प्राणतत्त्वमयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निफालना चित्ते तत्तत्त्वस्वात्मसात् कृतम् ॥१०१॥
इति षोड़शनित्यातन्त्रे कादिमते एकोनविंशति पटलं
परिपूर्णं परामृष्टम् ।

---

समुद्रगेत्यादिभिरपिचेत्यन्तैस्त्रिभिः श्लोकैः सर्व्वमङ्गलायाः प्रोक्तसङ्ख्याविद्याजपादितः पापनाशादिकं फलमुपदिशति । तत्र प्रागजन्माद्यैश्चिरतनं दुर्वासनाभिः । तथैव प्रागजन्माद्यैर्मुच्यत इत्यर्थः । एवमुक्तप्रकारतः । सकलकल्याणा सकलैर्मङ्गलरूपा इत्यर्थः । कृपयेति पूर्वोत्तरत्रान्वयः । फलदानत इत्यादिना सिद्धानां पदानां नामानुरूपेत्यत्रान्वयः । हर्षोत्पादनतः स्वरूपानुभवतः ॥ १०० ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसार-सिंहराजप्रकाशाभिधानेन सुभगानन्दनाथेन विरचितायां मनोरमाख्यायां व्याख्यायां सर्व्वमङ्गलानित्याविद्याविधानप्रकाशनपरमेकोनविंशपटलं परिपूर्णं परामृष्टम् ॥१९ ॥

ग्रन्थसंख्या—ऊनविंशे तु पटले व्याख्याग्रन्थशतत्रयम् ।
अध्यर्द्धाष्टादश श्लोकाः संख्याताः सम्यगीचणात् ॥
अत्र यन्त्राणि लचाणि त्रयोदश तथा पुनः ।
षडुत्तरशतेनापि सहस्रमुनिविंशकम् ॥

---

१ मण्डलान्तु इति पाठो दृश्यते ।

## विंशपटलम् ।

अथ षोड़शनित्यासु पञ्चदश्युदिता तु या ।
तद्विधानं शृणु प्राज्ञे ज्वालामालिन्युदाहृता ॥ १ ॥
न्यासं ध्यानं तथा शक्तीः पूजामपि च साधनम् ।
यन्त्राणि विनियोगांश्च फलानि च शृणु क्रमात् ॥ २ ॥
एकद्वयचतुःपञ्च चतुष्टयदशाक्षरैः ।
कुर्य्यादङ्गानि मूलार्णैरादितः षट् कराङ्गयोः ॥ ३ ।
ज्वलज्ज्वलनसङ्काशां माणिक्यमुकुटोज्ज्वलाम् ।
षड्वक्त्रां द्वादशभुजां सर्वाभरणभूषिताम् ॥ ४ ॥

---

( २६ ल २७ स १ शहीश्री: ) पूर्व्वस्मिन्नेकोनविंशे पटले चतुर्द्दश्याः सर्व्वमङ्गलानित्याविद्याया विधानमुपदिश्यानन्तरं पञ्चदश्या ज्वालामालिनीनित्याया विधानमुपदिदिति। अथ षोड़शनित्येत्यादिना वैभवादितीत्यन्तेन श्लोकशतरूपेण विंशेन पटलेन। तत्र अथ षोड़शेत्यादिना क्रमादित्यन्तेन श्लोकद्वयेन पटलार्थानुद्दिशति। तत्र ज्वालामालिन्युदाहृता तृतीये पटले ज्वालामालिनीविद्योपदिष्टेत्यर्थः। शक्तीः आवरणगाः। विनियागान् तेषां यन्त्राणामिति शेषः। क्रमात् प्रोक्तक्रमादित्यर्थः ॥ २ ॥

एकेत्यादिना श्लोकेन कराङ्गन्याससमुपदिशति। तत्र आदितः मूलविद्यायाः। एतदुक्तं भवति मूलविद्याया आदिभूतेन प्रणवाक्षरेण हृदयं तदुपरिगतेनाक्षरद्वयेन शिरस्तदुपरिगताक्षरचतुष्केण शिखां तदुपरिगताक्षरपञ्चकेन कवचं तदुपरिगताक्षरचतुष्टयेन नेत्राणि तदुपरिगताक्षरदशकेनास्त्रं एवंक्रमेण भिन्नैः सजातिभिः मूलविद्याक्षरेष्वादितः सम्भूय षड्विंशत्यक्षररूपैः षड्भिर्मन्त्रैः षड़ङ्गानि करन्यासपूर्वं न्यसेदिति ॥ ३ ॥

ज्वलदित्यादिभिरन्विताभित्यन्तैः त्रिभिः श्लोकैर्देव्याः सपरिवाराया नित्यसपर्य्याध्यानमुपदिशति। अत्र षड्वक्त्रां अर्द्धपरचतुर्दिगन्तानि एतानि। द्वादश-

पाशाङ्कुशौ खड्गखेटौ चापबाणौ गदाधरौ ।
शूलवज्री वराभीती दधानां करपङ्कजैः ॥ ५ ॥
स्वसमानाभिरभितः शक्तिभिः परिवारिताम् ।
चारुस्मितलसद्वक्त्रसरोजां वीक्षणान्विताम् ॥ ६ ॥
ध्यात्वैवमुपचारैस्तैरर्चयेत्तान्तु नित्यशः ।
चतुरस्रद्वयं कृत्वा चतुर्द्वारसमन्वितम् ॥ ७ ॥
सशाखमष्टपत्राब्जं अन्तरष्टास्रकं ततः ।
षट्कोणं मध्यतस्त्र्यस्रं विधायात्र शिवां यजेत् ॥ ८ ॥
इच्छाज्ञानक्रियाशक्तीरर्चयेत्त्र्यस्रगाः क्रमात् ।
डाकिन्याद्याश्च षट्कोणे अष्टास्रे घस्मरादिकाः ॥ ९ ॥
घस्मरा विश्वकवला लोलाक्षी लोलजिह्विका ।
सर्वभक्षा सहस्राक्षी निःसङ्गा संहृतिप्रिया ॥ १० ॥

---

भुजां प्रतिवक्त्रं द्विद्विक्रमात्। अत्रायुधक्रमस्तु वामोर्ध्वादिदक्षिणाधरान्तं एकैकव्यत्यासे सति निबोद्धव्यः। वीक्षणान्वितां प्रतिवक्त्रमिति शेषः। ध्यायेदिति शेषः ॥ ६ ॥

ध्यात्वेत्यादिना यजेदित्यन्तेन श्लोकद्वयेन निगमनपुरःसरं नित्यसपर्य्याचक्रनिर्म्माणमुपदिशति। तत्र एवमुक्तप्रकारतः। तैः षोडशभिः। तां मूलदेवतां। सशाखं चतुर्षु द्वारेषु शाखाद्वयसहितमित्यर्थः। अन्तः यन्त्रान्तः ततः अष्टास्रः अन्तरिति शेषः। मध्यतः सर्व्वमध्ये इत्यर्थः। एतदुक्तं भवति प्राग्वदन्तर्बहिर्विभागेन चतुरस्रद्वयं सशाखाद्वयद्वारचतुष्टयोपेतं विधाय तदन्तः सवृत्तद्वयमष्टपत्रं पद्मं तदन्तरपि सवृत्तद्वयमष्टास्रं प्राग्वदन्तरपि सवृत्तद्वयं प्राग्वत् षडस्रं तदन्तरपि सवृत्तद्वयं समत्रिरेखं त्र्यस्रञ्च यथामानं कृत्वा तत्रार्चयेत् ॥ ८ ॥

इच्छेत्यादिभिः समीरितमित्यन्तैः पञ्चभिः श्लोकैः नित्यसपर्य्यायां पञ्चावरणशक्तिं तत्पूजाञ्चोपदिशति। तत्र क्रमात् अग्रादिप्रादक्षिण्येन षट्कोणे षट्कोणकोणेषु नित्यानित्यापटलोक्तवन्निर्ऋत्यादिदिग्गतकोणक्रमेण घस्मरादिकाः अनन्तरश्लोके

वह्निरष्टच्छदेष्वेताः पूजयेच्च प्रदक्षिणम् ।
अचिन्त्यामप्रमेयाञ्च पूर्णरूपां दुरासदाम् ॥ ११ ॥
सर्वगां सिद्धिरूपाञ्च पावनामेकरूपिणीम् ।
वह्निर्द्वारेषु कोणेषु पूजयेत् प्रागुदीरिताः ॥ १२ ॥
प्राग्वत् कृतार्च्चश्चक्रे तामुक्ते प्रोक्तक्रमाद् यजेत् ।
वलिहोमावसानान्तमिति सम्यक् समीरितम् ॥ १३ ॥
अष्टलक्षं हविष्याशी जपेद्विद्यां जितेन्द्रियः ।
तद्दशांशं तर्पणञ्च होमं कुर्य्याच्च गोघृतैः ॥१४॥
एवं संसिद्धमन्त्रस्तु कुर्य्याद् यन्त्राण्यनुक्रमात् ।

---

वक्ष्यमाणघस्रेत्यादिना श्लोकेनाष्टास्रेषु पूज्या अष्टशक्तीरुपदिशति । तत्र अग्रादिप्रादक्षिण्येन पूजनम् । वह्निरष्टास्राद् वह्निरष्टच्छदेष्वेता वक्ष्यमाणा अचिन्त्याद्याः । प्रदक्षिणम् अग्रादि । एतत् डाकिन्यादिवर्जं सर्वसाधारणम् । अचिन्त्यादिना एकरूपिणीमित्यन्तेनार्द्धद्वयेनाष्टपत्रेषु पूज्याः शक्तीरुपदिशति । वह्निर्द्वारेषु चतुरस्रद्वारेषु । प्रागुदीरिताः एतदुक्तं भवति नित्यानित्याया विधानपटले प्रोक्ताब्राह्म्यादीरष्टाविन्द्रादीशान्ता लोकपालशक्तीरष्टावनन्तब्रह्मनियतिकालशक्तीश्चतस्रश्चतुरस्रे तत्रोक्तारम्भक्रमेण पूजयेदिति । प्राग्वत् अङ्गमूलाभ्याम् । चक्रे प्रागुक्ते । तां देवीं प्रोक्तक्रमात् अभ्यन्तराद्बाह्यनिर्गमनगत्या अग्रादिप्रादक्षिण्यक्रमतः वलिहोमावसानान्तम् । एतदुक्तं भवति आदौ षोड़शाक्षरेणान्ते कुरुकुल्लासमाचर्य्या वलिं दत्त्वा प्रोक्तक्रमतो होमञ्च कुर्य्यादित्यर्थः । समीरितं पूजनमिति शेषः ॥ १३ ॥

अष्टलक्षमित्यादिना श्लोकेन विद्यायाः पुरश्चरणक्रमसुपदिशति । तत्र हविष्याशी प्राग्वत् । जितेन्द्रियः स्त्रीसेवनालापादिराहित्यात् । ततो जपसंख्यायास्तर्पणञ्च चकारेण दशांशमित्याक्षिप्यते । गोघृतैः अजादिघृतनिवृत्त्यर्थं गोग्रहणम् ॥ १४ ॥

एवमित्यादिभिर्भुवमित्यन्तैः सप्तभिः श्लोकैर्दशयन्त्रनिर्माणोपदेशं तद्विनि-

पूजाचक्रे वह्निभूतं चतुरस्रे त्वखण्डिते ॥ १५ ॥
विधाय तत्र विलिखेदक्षराणि यथाविधि ।
सर्वमध्ये तारगर्भे शक्तिमाख्यासमन्विताम् ॥ १६ ॥
यन्त्रञ्च त्रिषु कोणेषु षट्सु षट्कमथाष्टसु ।
अष्टकं वह्निरप्येवं वाह्ये दिक्षु नव क्रमात् ॥ १७ ॥
एवं मूलाक्षरैः कृत्वा यन्त्रं तेनैव साधयेत् ।
समस्तं वाञ्छितं पूजाधारणं स्थापनैः शिवे ॥ १८ ॥
अकारादिक्षकारान्तवर्णेषु स्वरयोगिषु ।
चतुष्टयं प्रोक्तयन्त्रे वर्णांस्तत्स्थानतो लिखेत् ॥ १९ ॥

---

योगादिप्रस्तावञ्च करोति । तत्र यन्त्राणि वक्ष्यमाणानि । चतुरस्रे त्वखण्डिते विधाय चतुर्द्वारस्यान्तरेखाखण्डनमन्तरेण चतुरस्रद्वयं विधायेत्यर्थः । तत्र यन्त्रे अक्षराणि ज्वालामालिनीविद्यायाः । यथाविधि वक्ष्यमाणविधिना । सर्व्वमध्ये त्रिकोणमध्ये । तारगर्भे विद्यादिभूतप्रणवमध्ये । शक्तिं मूलविद्यापञ्चचत्वारिंशदक्षररूपां ह्रल्लेखात्रयं विद्याद्वितीयाक्षरादि । त्रिषु कोणेषु त्रिकोणस्येत्यर्थः । षट्सु कोणेष्विति शेषः । षट्कं पूर्वोक्तत्रयादुपरितनम् । अष्टसु कोणेष्वित्यन्वयः । अष्टकं प्रागुक्तषट्कादुपरितनं वह्निरप्येवम् । अष्टपत्रेषु प्रागुक्ताष्टकादुपरितनमष्टकं लिखेदिति यावत् । वाह्ये दिक्षु नवक्रमात् चतुरस्रे प्रतिदिशं नवनवक्रमेण चतुर्दिक्षु सम्भूय षट्त्रिंशदक्षराणि प्रागुक्तषट्चत्वारिंशत्तमाक्षरह्रल्लेखाविधुराणि लिखेदित्यर्थः । मूलाक्षरैस्त्रिषष्टिसंख्यैः । तेन यन्त्रेण । अकारादीत्यादिना समन्वितमित्यन्तेनाध्यर्द्धेन श्लोकेन एतदुक्तं भवति अकारादिक्षकारान्तैः षट्त्रिंशत्संख्यैरक्षरैः प्रत्येकं षोड़शस्वरयोगतः षट्सप्तत्यधिकपञ्चशतसंख्यैर्मातृकाविसराक्षरैः चतुर्वर्गाक्षरचतुःषष्टिक्रमतः प्रागुक्तयन्त्रे विद्याक्षरसमेतं तत्तत्स्थानलिखितैस्त्रिषष्टिभिः सर्वमध्यलिखितचतुःषष्टितमलेखनतश्च नव यन्त्राणि प्रागुक्तैः केवलमूलविद्याक्षरैरेकं यन्त्रं सम्भूय दशयन्त्राणि संजातानीति । तेषां यन्त्राणां । विनियोगाद् यन्त्राणामित्यन्वयः । फलावाप्तिं विनियोगात् । यैर्विनियोगैः ।

शिष्टमेवं लिखेन्मध्ये साध्याक्षरसमन्वितम् ।
एवं यन्त्राणि जायन्ते दश तेषामनुक्रमात् ॥ २० ॥
विनियोगात् फलावाप्तिं प्रवक्ष्यामि शृणु प्रिये ।
यैरिष्टमखिलं प्राप्नोत्ययत्नात् साधको ध्रुवम् ॥ २१ ॥

---

दशयन्त्रविरचनाक्रमो यथा अन्तर्वहिर्विभागेन अखण्डितं चतुरस्रद्वयं यथामानं कृत्वा तदन्तरष्टदलपद्मं सवृत्तं कृत्वा तदन्तर्वृत्ताद्दिग्विदिक्स्पृष्टास्पृष्टकोणमष्टकोणं प्राग्वत् कृत्वा तदन्तः सवृत्तं प्राग्वत् षट्कोणं कृत्वा तदन्तः सवृत्तं त्रिकोणं समत्रिरेखं कृत्वा तत्र सर्व्वमध्यत्रिकोणमध्ये मूलविद्याया आद्याक्षरं प्रणवमालिख्य तदुदरे विद्यायाः षट्चत्वारिंशत्तमाक्षररूपां हृल्लेखां नामगर्भामालिख्य त्रिकोणस्य त्रिकोणेष्वग्रादिप्रादक्षिण्येन विद्याद्वितीयाक्षरादीनि त्रीण्यक्षराण्यालिख्य तद्वहिः षट्कोणस्य कोणेषु षट्स्वग्रादिप्रादक्षिण्येन पूर्वलिखितोपरितनानि षड़क्षराणि समालिख्य तद्वहिरष्टकोणस्याष्टकोणेषु प्राग्वत् क्रमेण षट्कोणलिखिताक्षरादुपरितमान्यष्टाक्षराण्यालिख्य तद्वहिरष्टदलपद्मस्याष्टसु पत्रेषु अग्रादिप्रादक्षिण्येन पूर्वलिखिताक्षरादुपरितनान्यष्टाक्षराण्यालिख्य सर्ववाह्यगतचतुरस्रद्वयान्तरवीथ्यां पूर्वलिखिताक्षरादुपरितनान्यक्षराणि मध्यलिखितहृल्लेखावर्जं पश्चिमादिप्राग्वत् प्रतिदिशं नव नव क्रमेण चतसृषु दिक्षु षट्त्रिंशदक्षराण्यालिख्य एवं मूलविद्यायास्त्रिषष्टिसंख्यान्यक्षराण्यालिख्य तेन यन्त्रेण सर्ववाञ्छितानि साधयेत् । एतत् प्रथमं यन्त्रम् । प्रागुक्तयन्त्रस्थमूलविद्याक्षरैः सार्द्धं षट्सप्तत्यधिकपञ्चशतसंख्यमातृकाक्षरेष्वादितश्चतुर्वर्गाक्षराणि चतुःषष्टिसंख्यानि विद्याक्षरस्थानेषु द्विषष्टिसंख्येषु त्रिरादिषष्टिसंख्यानि मध्ये पुनरपि शिष्टमेकमक्षरं लिखेत् । एवं कृते मध्ये द्वे अक्षरे दृश्येते । एतद्द्वितीयं यन्त्रम् । एवमन्यान्यपि मातृकाविसराक्षराणि पूर्वलिखितचतुर्वर्गाक्षरचतुःषष्टिकोपरितनोपरितनचतुर्वर्गाक्षरचतुःषष्टिकालेखनतो यावत्परिसमाप्ति पूर्वोक्ताभ्यां यन्त्राभ्यां सह दश यन्त्राणि सम्भवन्ति तैरिष्टेषु विनियोगान् कुर्य्यादिति ॥ २१ ॥

द्वितीयादीनि यन्त्राणि मातृकार्णयुतानि वै।
क्रमान्नवग्रहाणां स्युस्तत्तद्वारेषु तद्दिशि ॥ २२ ॥
तेषु देव्यर्चनात् प्रीतास्त्वनिष्टं ते न कुर्वते।
राहुकेतू स्थितौ यत्र तद्राश्यधिपवारकौ ॥ २३ ॥
षड़ष्टास्रान्तरालेषु ग्रहनाम द्वितीयया।
विभक्त्या भाजने सम्यक् प्रीणयामीति संलिखेत् ॥२४॥
आद्ये तु यन्त्रे संलिख्य प्रोक्तक्रममथार्चयेत्।
सर्वेष्वपि च वारेषु सर्वेषां प्रीतिसिद्धये ॥ २५ ॥
अनिष्टशान्त्यै नियतमर्चयेत्तान् ग्रहान् प्रिये।
एवं यन्त्रेषु दशसु पूजिता नित्यया सह ॥ २६ ॥

---

द्वितीयेत्याद्यैर्विधानत इत्यन्तैरेकोनषष्ट्या श्लोकैः प्रोक्तानां दशानां यन्त्राणां प्रयोगविशेषानुपदिशति। तत्र द्वितीयादीत्यादिभिर्वितन्वत इत्यन्तैः षड्भिः श्लोकैः ज्वालामालिनीनित्यया सह नवग्रहाणां तत्तद्वारेषु पूजनाद्दशसु यन्त्रेषु प्रयोगाननुपदिशति। तत्र द्वितीयादीनि केवलविद्याक्षररचितप्रथमयन्त्रविधुराणि नव यन्त्राणीत्यर्थः। मातृकार्णयुतानि प्रागुक्तमातृकाविसराक्षरोपेतानि। तद्दिशि अष्टविंशत्पटलवक्ष्यमाणक्रमान्मध्ये रविः प्रागादिप्रादक्षिण्येन महादिक्षु चन्द्रादिशुभग्रहान् वक्र्यादीशान्तासु चतसृषु विदिक्षु क्रूरग्रहानित्यर्थः। तेषु नवसु यन्त्रेषु मध्यगतहृल्लेखोपरिस्थानेष्विति शेषः। देव्यर्चनात् ज्वालामालिनीपूजनात्। ते नवग्रहाः। राह्वित्यादिना श्लोकोत्तरार्द्धेनैतदुक्तं भवति। यस्मिन् यस्मिन् राशौ राहुकेतू तिष्ठतः तत्तद्राश्यधिपवार एव तयोर्वारः तेन तस्मिंस्तस्मिन् वारे तत्तद्वाराधिपपूजनानन्तरं तत्तत्प्राप्ते यन्त्रे तयोः पूजां कुर्य्यादिति। षड़ष्टास्रान्तरालेषु च ग्रहनाम प्रत्यन्तरालमिति शेषः। भाजने समालिखेदित्यन्वयः। एतदुक्तं भवति षट्कोणान्तरालेषु अष्टकोणान्तरालेषु च प्रत्यन्तरालं तत्तद्वाराधिपत्वप्राप्तग्रहनाम द्वितीयान्तं सम्यक् प्रीणयामीति वाक्यान्तं विलिखेदिति ॥२४॥

आद्ये मातृकाविसराक्षररहिते। प्रोक्तक्रमं प्रागुक्ततत्तद्ग्रहप्राप्तदिग्विलेखनं मध्ये देवीपूजनादिकं। सर्वेषां नवानां ग्रहाणाम्। तान् ग्रहान् तत्तन्नामालेखनस्था-

प्रीताः क्रूरा अपि क्रूरस्थानस्था अपि सर्वदा ।
सौम्याः सौम्यगतानान्तु फलान्येव वितन्वते ॥ २७ ॥
दशस्वपि च यन्त्रेषु दरदैर्गैरिकैस्तु वा ।
लिखितेष्वर्च्चितेष्वेवं कुमारं कन्यकान्तु वा ॥ २८ ॥
सुशुभावयवामुग्धां स्नातां धौताम्बरां शुभाम् ।
तथाविधं कुमारं वा संस्थाप्याभ्यर्च्य विद्यया ॥ २९ ॥
स्पृष्ट्वा शीर्षं जपेद्विद्यां शतवारं तथार्च्चयेत् ।
प्रसूनैररुणैः शुभ्रैः सौरभाद्यैरथापि वा ॥ ३० ॥
दद्याद् गुग्गुलधूपञ्च यावत् कार्य्यावसानकम् ।
ततो देव्या समाविष्टे तस्मिन् संपूज्य यत्नतः ॥ ३१ ॥

---

नेषु नित्यया ज्वालामालिन्या । क्रूरा आदित्याङ्गारकशनिराहुकेतवः पञ्च क्रूरः क्रूरस्थानस्थाः जन्मद्वादशाष्टमादिस्थाः । एतन्नवग्रहसाधारणम् । सौम्याः प्रागुक्तपञ्चग्रहेतरास्चत्वारः सौम्यगतानां तेषामिति शेषः । सौम्यस्थानानि एकादशादीनि । एतदुक्तं भवति प्रोक्ततत्तद्दिग्गतेषु द्वितीयादिषु नवसु यन्त्रेषु तत्तद्वारेषु प्रोक्तस्थानेषु तत्तद्वाराधिपग्रहनाम प्रोक्तक्रमेणालिख्य सर्व्वमध्ये देवीमभ्यर्च्च्य नामालेखनस्थानेषु तत्तद्ग्रहान् संपूज्य नित्यावरणशक्तीस्तत्तत्स्थानेषु पूजयेत् । प्रथमं यन्त्रं सर्वेषु वारेषु तत्तद्दिग्गतं कृत्वा तत्तद्ग्रहनाम पूर्वोक्तस्थानेषु प्राग्वदालिख्य तत्र प्रतिवारमेकैकग्रहार्च्चनात् सर्वमध्ये देव्यर्च्चनाच्च प्रोक्तफलसिद्धिरिति ॥२७॥

दशस्वित्यादिभिः सुखीत्यन्तैः सप्तभिः श्लोकैः प्रोक्तदशयन्त्रैः स्वस्थावेशप्रकारादिकमुपदिशति । तत्र दशस्वपि च एकस्मिन्नेकस्मिन्निति शेषः । अर्च्चितेषु तत्तल्लिखितविद्याक्षरादिकैः । वा विकल्पे । मुग्धाम् स्खलितेन्द्रियां । तथाविधं सुशुभावयवस्खलितेन्द्रियत्वादियुक्तं । विद्यया ज्वालामालिन्याः शतवारमभ्यर्च्येत्यर्थः । स्पृष्टशीर्षं आविश्य तथार्चयेत् शतवारं पूर्वोक्तार्चनाप्रकार एव । अथापिवेति विकल्पार्थः । यावत् कार्य्यावसानकं देवतायाः समावेशावधि तस्मिन् देवता समाविष्टाधिकरणद्वये तां देवतामुपचारैः सम्पूज्येति पूर्वत्रान्वयः । प्रागुक्तैः षोडशभिः । विद्यया मूलविद्यया उपचारमन्त्रभूतया प्रजपन् विद्यामिति शेषः ।

ततस्तामुपचारैस्तैः प्रागुक्तैर्विद्यया वशी ।
पूजयेत्तां ततः पृच्छेदभीष्टं कथयेच्च सा ॥ ३२ ॥
भूतं भवद्भविष्यच्च यदन्यन्मनसि स्थितम् ।
जन्मान्तराण्यतीतानि सर्वं संपूजिता वदेत् ॥ ३३ ॥
ततस्तां प्राग्वदभ्यर्च्य स्वात्मन्युद्वास्य तां जपेत् ।
सहस्रवारं स्थिरधीः पूर्णात्मा विचरेत् सुखी ॥ ३४ ॥
तथा षट्कोणकोणेषु मध्ये वालिख्य दाहकम् ।
तत्र संस्थाप्य गदिनम् अभ्यर्च्योदीरितक्रमात् ॥३५॥
आविश्य रोगिणं रोगं पृच्छेत्तत्कारणं शमम् ।
प्रोक्ता तत् सकलं तस्य निर्देशादपयाति च ॥ ३६ ॥

---

तां देवतां । सा देवता । अन्यद्वाञ्छितं सा देवता । तां देवतां प्राग्वत् षोड़शोपचारैः सम्पूज्येति शेषः । तां विद्यां पूर्णात्मा देवतात्मैक्येन । एतदुक्तं भवति प्रोक्तेषु दशसु यन्त्रेषु अन्यतमस्मिन् प्राग्वत् सम्पूजिते मध्ये प्रोक्तरूपं कुमारं कन्यकां वा संस्थाप्य मूलविद्ययाभ्यर्च्य शतवारं प्रोक्तैः पुष्पैर्गन्धादिभिश्च तच्छिरः स्पृशन् मूलविद्यां शतवारं जपित्वा पुनरपि प्राग्वदभ्यर्च्य गुग्गुलधूपं देवतासमावेशावधि दत्त्वा देवतासमाविष्टे तस्मिन्नधिकरणद्वये अन्यतमस्मिंस्तां देवतां षोड़शभिरुपचारैर्मूलविद्ययाभ्यर्च्य तां विद्यां जपेत् तां देवतामात्मनोऽभीष्टं भूतं भवद्भविष्यच्च पृच्छेत् तया सर्वस्मिन् प्रश्नजाते कथिते सति प्राग्वदुपचारैरभ्यर्च्य प्राग्वत् स्वात्मन्युद्वास्य पूर्णाशयः सुखी विचरेदिति ॥ ३४ ॥

तथेत्यादिना अपयाति चेत्यन्तेन श्लोकद्वयेन रोगावेशार्थं षट्कोणयन्त्रनिर्माणं तत्प्रयोगादिकमुपदिशति । तत्र दाहकं विद्यागतं सप्तकृत्वः प्रोच्चार्यमाणं रेफम् । तत्र षट्कोणमध्ये गदिनं रोगिणं उदीरितक्रमात् विद्यायन्त्रलिखिताक्षरसप्तकाभ्यां रोगमावेश्येत्यन्वयः । तत्कारणं रोगकारणं तत्स्वावेशकारणं । तस्य मन्त्रिणः । अपयाति रोग इति शेषः । एतदुक्तं भवति अभीष्टमानभ्रमेण वृत्तं निष्पाद्य तत्र प्रागुक्तक्रमात् षट्कोणं कृत्वा तन्मध्ये षट्सु कोणेषु च मूलविद्यागतं रेफसप्तकमालिख्य तैर्विद्यया च तद्यन्त्रमभ्यर्च्य तत्र मध्ये रोगिणं

प्रथमं स्त्रीकपालस्य मध्यस्थं तापयेन्निशि।
जपन् विद्यां स्मरन् साध्यां सद्य आकृष्यतेऽथ सा॥ ३७॥
भीतिलज्जाभिमानादिरहिता वेपिताङ्गका।
निरस्तेतरसद्भावा मन्मथार्त्ताभियाति सा॥ ३८॥
तत् यन्त्रं पुंकपालस्थं तापयेत् प्रजपेत्तथा।
राजानो राजपुत्रा वा तथान्ये चापि केचन॥३९॥
विवेकविधुरा मूढास्त्यक्तजातिकुलक्रमाः।
वशगा दासवद्भूमौ तिष्ठन्त्यामरणाद् ध्रुवम्॥४०॥
सर्वासामपि नित्यानामुपदेशेऽथ तं गुरुः।
तत्तच्चक्रस्य मध्यस्थं वेष्टविद्याजपान्वितम्॥४१॥

---

संस्थाप्य शतवारं मूलविद्ययाभ्यर्च्य तामेव तच्छिरः स्फटिकया शतवारं जपित्वा रोगिणं तं रोगमाविश्य तदावेशकारणं पृष्ट्वा तेन तस्मिन् कारणे कथिते अपेहीति साधकस्यादेशेन स रोगोऽपयातीति॥ ३६॥

प्रथममित्यादिभिर्ध्रुवमित्यन्तैश्चतुर्भिः श्लोकैः प्रथमयन्त्रेणाकर्षणवशीकरणादिक मुपदिशति। तत्र प्रथमं यन्त्रं स्त्रीकपालस्य मध्यस्थं प्रागुक्तैर्द्रव्यैः स्त्रीकपालमध्ये प्रथमं यन्त्रं लिखित्वेत्यर्थः। तापयेत् अङ्गारे प्राणप्रतिष्ठाविद्याशतवारजपपुरः-सरमङ्गारे तापयेत् इति सम्प्रदायः। विद्यां जपन् तापनकाले स्मरन् साध्यां तदपि तत्काल एव। साध्या निरस्तेतरसद्भावा अनन्यचित्ता अभियाति स्वयमेवाभि-सरतीत्यर्थः। सा साध्या। तत् प्रथमं पुंकपालस्थं प्रागवत्तापयेत्। प्रागवत् प्राणप्रतिष्ठादिसहितं प्रजपेद्विद्यां। तथा यथा स्त्रीकपालस्थं। तेनैतदुक्तं भवति पुंकपाललिखितं तद्यन्त्रं कृतप्राणप्रतिष्ठादिकं निशि अङ्गारे विद्यां जपन् साध्यं स्मरन् तापयन् वक्ष्यमाणान् वशयतीति। दासवद्भूत्वा अस्य साधकस्य राजादयः साध्यवर्गाः॥ ४०॥

सर्वासामित्यादिभिस्तत इत्यन्तैस्त्रिभिः श्लोकैर्वक्ष्यमाणरूपस्य वेधद्वयस्य साधा-रणरूपं यामलवेधमुपदिशति। तत्र सर्वासां षोड़शानां नित्यानामुपदेशे विद्या-देवतयोरैक्यरूप्यात्। तं शिष्यं तत्तच्चक्रस्य तत्तन्नित्यसपर्य्याचक्रस्य वा मन्त्रोक्त-

वह्निज्वालापरीताङ्गं भावयन्निन्द्रियाण्यपि ।
मनःषष्ठानि चाकर्षेन्मनसा प्राग्वदात्मनि ॥४२॥
एवं कृते क्षणादेवं विसंज्ञो निपतेद् भुवि ।
ततस्समुत्थाप्य मुखे क्षिप्त्वार्घ्याम्बु वदेत्ततः ॥४३॥
एष वेधस्त्रिधा प्रोक्तः सद्यः प्रत्ययकारकः ।
शाक्तशाम्भवभेदाभ्यां द्वयोरैक्यात्मयामलात् ॥ ४४॥
शिष्यस्य मूलाधारादिस्थानेषु ब्रह्मरन्ध्रके ।
स्मर दाहार्णकान् सप्तेत्युक्त्वा प्राग्वदुदीक्षणात् ॥४५॥

---

दशयन्त्रेष्वन्यतमस्य वेत्यर्थः । अत्र नित्यसपर्याचक्रस्योपादानं गुरोर्भावनासिद्धिस्त्व शिष्यविषयम् । विद्याजपान्वितम् तत्तन्नित्यानां । वह्निज्वालापरीताङ्गं भावयेत् नित्यसपर्याचक्रगतश्चेत्तं केवलाग्निज्वालावृत्तरूपं शिष्यं प्रोक्तयन्त्रदशकान्यतमगतश्चेत्तत्तद्गतरेफसप्तकरूपवह्निज्वालावृत्तरूपं च भावयन् इत्यर्थः । इन्द्रियाणि ज्ञानरूपाणि श्रोत्रादीनि पञ्चमतः षष्ठानि मनो येषां षष्ठन्तानीति । मनसा भावनया प्राग्वत् प्राणप्रतिष्ठोक्तप्रक्रियया स्वात्मन्याकृष्य ततो विसंज्ञं भुवि निपातितं तन्मुखेऽर्घ्यजलं क्षिप्त्वा समुत्थाप्य ततः प्रागुक्तप्रक्रिययाधारत्रये विद्यान्तेजस्त्रयरूपिणीं स्वान्तादावाह्य संस्थाप्य तज्जीवकर्णे विद्यां वदेदिति ॥ ४३ ॥

एष इत्यादिभिः सम इत्यन्तैः सप्तभिः श्लोकैः त्रिविधे वेधे त्रिवेधरूपादिकमुपदिशति । तत्र एषः पूर्वोक्तसामान्यरूपो यामलवेधः । त्रिधा प्रोक्तरूपेण स्वात्मना वक्ष्यमाणाभ्यां च प्रत्ययकारकः गुरुदेवतात्मैक्यविश्वासकारकः । द्वयोः शाक्तशाम्भवयोः । ऐक्यात्मयामलात् प्रोक्तरूपयोर्द्वयोः शाक्तशाम्भवयोरैक्यात्मरूपाद् यामलादित्यर्थः । मूलाधारादिस्थानेषु षट्स्विति शेषः । ब्रह्मरन्ध्रके एवं सम्भूय सप्तसु स्थानेष्वित्यर्थः । स्मर दाहार्णकान् सप्तेत्युक्त्वेति शिष्यस्य स्वभावनीयगुरूपदेशतः । दाहार्णकान् मूलविद्यागतरेफसप्तकं प्रागवदग्निज्वालावृताङ्गत्वादितः । एतत् सर्ववेधसाधारणं विदध्यादुक्तरूपतः । सिद्धविद्यया उपदेष्टव्यया । एतदुक्तं भवति प्रागुक्तयन्त्रमध्यगतं शिष्यं गुरुर्मूलाधारादिब्रह्मरन्ध्रान्तस्थानसप्तके विद्यागतरेफसप्तकं स्मरेत्युक्त्वा प्राग्वदुपदेष्टव्यविद्यया वीक्ष्य भावनादिना भुवि

विद्ध्याच्छाक्तवेधन्तु देशिकः सिद्धविद्यया ।
शाम्भवन्तु शृणु प्राज्ञे वेधमद्भुतविग्रहम् ॥४६॥
तूष्णीं संस्थापितं शिष्यं तत्तच्चक्रे तदात्मना ।
स्वयं प्रविश्य तद्देहमेकीभूत्वा पुनः स्वके ॥४७॥
समागत्यात्मरूपेण तदात्मानं विभाव्य वै ।
कृतन्यासजपार्चैस्तु तत्तनुं वह्निना दहेत् ॥४८॥
स्यादेष शाम्भवो वेधः प्रोक्तः प्रागेव यामलः ।
इति वेधत्रयं प्रोक्तं त्वद्भावसिद्धिसूचकम् ॥४९॥
यामले तु विशेषोऽयं सिद्धः पश्चाद् गुरोः श्रुतम् ।
ज्ञानमन्यच्च सकलं संक्रमेत्तेन तत् समः ॥५०॥

---

निपातितं प्रागवदुत्थाप्य तत्तद्विद्यां वदेत् । एष शाक्तवेध इति । तत्र शाम्भवमित्यादिभिः सम इत्यन्तैः शिष्टैरर्द्धैश्चतुर्भिः श्लोकैरपुनरावृत्तिदारं शाम्भववेधं यामलवेधफलञ्चोपदिशति । तत्र शाम्भवं वक्ष्यमाणरूपमद्भुतविग्रहं सद्यः अपुनरावृत्तिकरत्वात् । तूष्णीं संस्थापितं प्रागुक्तशाक्तवेधभावनादिराहित्येन । तत्तच्चक्रे नित्यसपर्य्याचक्रादिषु । तदात्मना शिष्यात्मरूपेण । स्वयं गुरुः प्रविश्य सर्वात्मभावनया तद्देहं शिष्यदेहं प्रविश्येत्यन्वयः । एकीभूत्वा शिष्यात्मादिभिः पुनः स्वात्मादिभिः शिष्यात्मादीनामेकीकरणस्थैर्य्यानन्तरं स्वके देहे गुरुरिति शेषः समागत्य स्वके इत्यत्रान्वयः । आत्मरूपेण स्वात्मरूपेण स्वात्मविलापनेनेत्यर्थः । तदात्मानं शिष्यात्मानं कृतन्यासजपार्चैः स्वात्मनस्तत्तनुं शिष्यतनुम् मृतामित्यर्थः । वह्निना दहेन्मृतत्वादग्निसात् कुर्य्यादित्यर्थः । शाम्भवो वेधः प्रोक्तरूपः । एतदुक्तं भवति तत्तच्चक्रादिषु सद्गुरुः प्रागुक्तभावनाविरहितं तूष्णीं शिष्यं स्थापयित्वा तदात्मरूपेण तद्देहं सर्वात्मभावनया प्रविश्य तदात्मादिभिरेकीभूत्वा पुनः स्वशरीरमागत्य स्वात्मनि शिष्यात्मानं निःशेषं विलीनं विभाव्य कृतन्यासादिकः शिष्यशरीरं मृतं श्मशानं नीत्वाग्निसात् कुर्य्यादित्यर्थः । एष शाम्भवो वेधः केवलमोक्षेच्छोरिति । प्रोक्तः प्रागेव विसंज्ञो निपतेदित्यादिना । वेधत्रयं वेधस्तु स्वात्मना सच्चिदानन्दस्फुरणरूपपरिपूर्णपराहन्तात्मना शिष्यात्मनः सङ्कुचितरूपस्य एकीकरणतः पूर्वोक्त-

रक्तचन्दनपङ्केन लिखित्वा प्रथमं शिवे ।
लोहैर्विरचिते पट्टे फलकायां शिलातले ॥५१॥
भूमौ वा सुसमे शुद्धे लोष्टाङ्गारविवर्जिते ।
देवीमावाह्य तत्रैव पूजयेच्छक्तिभिर्युताम् ॥५२॥
दिनं दिनत्रयं सप्तवासरं सप्तमेव वा ।
मासं मण्डलमित्येवं क्रमादिष्टमवाप्नुयात् ॥५३॥
वश्यमाकर्षणं स्तम्भं निग्रहं लाभमीप्सितम् ।
अन्यच्च सकलन्त्विष्टमवाप्नोत्यचिरान्नाद्भुतम् ॥५४॥
तदा प्रोक्तान् गदान् सर्वान् जयेदन्यानि चाखिलान् ।
साधयेत् प्रथमेनैव यन्त्रेण यत्नतः शिवे ॥५५॥

---

पराहन्ताख्यस्वात्मीयकरणम् । एषामेतानि त्रीणि शाम्भवादीनि नामानि तत्तत् सिद्धान्तसिद्धानि । भावनासिद्धिसूचकं १ गुरोः इति शेषः । यामलेत्यादिना एतदुक्तं भवति यामलरूपे वेधे शिष्यात्मनः समाकृष्य चात्मनैकीकृत्य प्रतिष्ठापनतो विद्धे पुनश्च तस्माद् हे तस्मिन् गुरुगतं ज्ञानादिकं सकलं संक्रमेत् । तेन गुरुसमः शिष्य इत्येष विशेषो भवति इतराभ्यामस्येति ॥ ५० ॥

रक्तचन्दनमित्यादिभिः साधयेदित्यन्तैः त्रयोविंशत्या श्लोकैर्दशभिर्यन्त्रैः वश्यादिप्रयोगानुपदिशति । तत्र रक्तचन्दनेत्यादिभिः शिवे इत्यन्तैः पञ्चभिः श्लोकैः तेषु प्रथमयन्त्रेण साध्यान्युपदिशति । तत्र प्रथमं यन्त्रमिति शेषः । लोहैर्विरचिते पट्टे तत्रापि कुचन्दनमेव द्रव्यं फलकाशिलातलयोरपि तदेव । वा विकल्पे । तत्र यन्त्रमध्ये । शक्तिभिः नित्यपूजावरणोक्तादिभिः । दिनम् एकमिति शेषः । मण्डलं प्रागवत् इष्टं वक्ष्यमाणवश्यादिकं । ईप्सितं लाभमित्यन्वयः । अन्यत् प्रोक्तैभ्यः अर्चनाविल्योक्तक्रमतः । प्रोक्तान् षष्ठपटले काम्यप्रकरणप्रोक्तान् वक्ष्यमाणान् प्रमेहादींश्च । अन्यानि चाखिलान् अखिलान् अन्यानीति सामानाधिकरण्यमागमत्वादर्थानीति शेषः । शिवे इति देवीसम्बुद्धिः ॥ ५५ ॥

---

१ । त्वद्भावसिद्धिसूचकमिति पाठः मूलश्लोके तद्विवेच्यम् ।

द्वितीयं दरदे कृत्वा प्रोक्तेषूच्चं गते रवौ।
पूजयेत् प्रोक्तकालेन फलान्युक्तान्यवाप्नुयात् ॥५६॥
विलिख्य राजते पट्टे जपित्वा दिनशः स्पृशन्।
सहस्रवारं तन्नित्याविद्यां तद्वासिताम्बुभिः ॥५७॥
स्नानं पानं पाकजातं कुर्य्यादुक्तदिनं ततः।
प्रमेहैस्त्रिविधैर्घोरमूत्रकृच्छ्रैः सुदारुणैः ॥५८॥
अश्मरीमूत्रपाल्या १ दिरोगैर्मुक्तः सुखी भवेत्।
जीवेच्च सुचिरं भूमौ नीरोगः स्वस्थमानसः ॥५९॥
तृतीयं गैरिकैः कृत्वा वैरिनक्षत्रवृक्षजे।
तले भूमौ ततः खात्वा तत्राग्निं ज्वालयेत् सदा ॥६०॥
प्रोक्तैस्तैर्वासरैर्वैरी दाहज्वरगदादिभिः।
तच्चोत्क्षिप्य सलिले न प्रक्षिपेच्चेद्विनश्यति ॥६१॥

द्वितीयमित्यादिभिर्मानस इत्यन्तैश्चतुर्भिः श्लोकैर्द्वितीययन्त्रसाध्यान्युपदिशति। तत्र द्वितीयं यन्त्रं। प्रोक्तेषु प्रथमयन्त्रप्रोक्तलोहादिषु तेष्वपि दरदमेव द्रव्यम। उच्चं गते उच्चराशिभूतमेषस्थे आदित्ये चैत्रमास इत्यर्थः। तत्रापि उच्चकाले पूजयेद्देवीं नित्यपूजाक्रमत इति शेषः। प्रोक्तकालेन दिनादितः। उक्तानि वश्यादीनि। विलिख्य द्वितीयं यन्त्रं तत्रापि इदमेव द्रव्यं स्पृशन् यन्त्रं। नित्याविद्यां ज्वालामालिनीविद्यां। तद्वासिताम्बुभिः यन्त्रोषितजलैः। पाकजातं अन्नादि। उक्तदिनम्—अत्यन्तसंयोगे द्वितीया प्राग्वद्दिनानि। त्रिविधैर्दोषत्रयानुबन्धात्। मूत्रपालीति तत्राकारमेहवारिको रोगविशेषः। स्वस्थमानसः आधिराहित्यात् ॥५९॥

तृतीयमित्यादिना विनश्यतीत्यन्तेन श्लोकद्वयेन तृतीययन्त्रप्रयोगेण वैरिनिग्रहमुपदिशति। तत्र तृतीयं यन्त्रं। तले फलकायामित्यर्थः। तत्र यन्त्रखननप्रदेशे। प्रोक्तैर्दिनादिभिः। तत् यन्त्रं। सलिले न जलाशये विनश्यति तदा दाहज्वरेण रिपुरित्यर्थः ॥ ६१ ॥

१। मूत्रघाता।

चतुर्थं रोचनापङ्कैरालिख्योक्तप्रपूजनात् ।
प्राप्नोति विजयं प्रोक्तेष्वखिलेषु सुनिश्चितम् ॥६२॥
वादेषु द्विविधे द्यूते ग्रहेष्वन्येषु सर्वतः ।
सर्वदा जयिनः सर्वे भवन्त्यतस्य वैभवात् ॥६३॥
पञ्चमं कुङ्कुमैः कृत्वा तत्र तत्पूजनाद्दिनैः ।
वशे भवन्ति मनुजा दन्तिनो वाजिनः स्त्रियः ॥६४॥
षष्ठं हरिद्रयालिख्य कर्पटे नामसंयुतम् ।
मन्दोच्चे स्थापयेत् क्वापि सुवद्धन्त्विष्टकापुटे ॥६५॥
शत्रोर्जिह्वां गतिं शेषं दिव्यं राज्ञां समुद्यमम् ।
वादेच्छां सकलञ्चान्यदनिष्टं स्तम्भयेद् ध्रुवम् ॥६६॥
सप्तमं चन्दनैरिन्दुमिलितैरालिखेत्तथा ।
तत्रार्चयेन्नित्यशस्तां सन्ध्यासु भवने निजे ॥६७॥

---

चतुर्थमित्यादिना वैभवादित्यन्तेन श्लोकद्वयेन चतुर्थयन्त्रप्रयोगेण द्यूतादिषु जयमुपदिशति। तत्र चतुर्थं यन्त्रं। उक्तप्रपूजनादित्युक्तिरधिकरणसपरिवार-देवतादिवससंख्याविषया। तत्राधिकरणादीनि प्रथमयन्त्रप्रोक्तानीति सम्प्रदायः। प्रोक्तेषु वच्यमाणेषु वादादिषु ग्रहेषु पणबन्धेषु। एतस्य पूजितस्य यन्त्रस्य ॥६३॥

पञ्चमित्यादिना श्लोकेन पञ्चमयन्त्रप्रयोगेण मर्त्यादिवश्यमुपदिशति। तत्र तत्र यन्त्रे अधिकरणादीनि प्राग्वत्। तत् पूजनान्नित्यक्रमतः। दिनैः प्राग्वत् ॥ ६४ ॥

षष्ठमित्यादिना ध्रुवमित्यन्तेन श्लोकद्वयेन षष्ठयन्त्रप्रयोगेण शत्रुस्तम्भनमुपदिशति। तत्र षष्ठं यन्त्रं नामसंयुतम् एतत् सर्व्वयन्त्रसाधारणं। मन्दोच्चे शनौ तुलाराशिस्थिते तत्रापि तदुच्चकाल इति सम्प्रदायः। सुवद्धं त्विष्टकापुटे इष्टकामध्ये यन्त्रसन्निवेशानुरूपं रन्ध्रं तदिष्टकोत्सेधार्द्धखातमानं कृत्वा इष्टकान्तरेण स्रक्त्या वेष्टितया सुवद्धया दृढ़तरमावद्धमित्यर्थः। दिव्यं समुद्यमम् ॥ ६६ ॥

सप्तममित्यादिना शक्तय इत्यन्तेन श्लोकद्वयेन सप्तमयन्त्रप्रयोगेण लक्ष्मीप्राप्ति-

तद्दिनैरिन्दिरा तस्य सर्वलोकातिशायिनी ।
भवत्येव महेशानि विचित्रा यन्त्रशक्तय: ॥६८॥
अष्टमन्त्रगुरुक्षोदैरालिखेत् फलकापुटे ।
पीठे वा तत्र तां देवीं गुरावुच्चं गते दिने ॥६९॥
तदुच्चकाले सुरभिप्रसूनैरर्चयेत्तथा ।
वासांसि च विचित्राणि भूषणान्यप्यवाप्नुयात् ॥७०॥
मृगखेदैस्तु नवममालिख्याभ्यर्च्य तत्र ताम् ।
तदालिप्तो व्रजेद् यत्र कुत्रापि जनसंसदि ॥७१॥
सर्वे तं गुरुवद् दृष्ट्वा वश्याः स्युर्वनिता यदि ।
तदिष्टसाधिका यावज्जीवमस्यानुभावत: ॥७२॥
विलिखेद्दशमं प्रोक्तद्रव्यैः सर्वैस्तथैकशः ।
यद्यत्तैरीरितं सर्वं कार्य्यमेतत् सुसाधयेत् ॥७३॥

---

मुपदिशति । तत्र सप्तमं यन्त्रं । तथा प्रागुक्ताधिकरणपूजाक्रमत इत्यर्थः । तत्र यन्त्रे तां देवीं तद्दिनैः प्रागुक्तदिनादिभिः । महेशानीति देवीसम्बुद्धिः ॥ ६८ ॥

अष्टममित्यादिना अवाप्नुयादित्यन्तेन श्लोकद्वयेनाष्टमयन्त्रप्रयोगेण वासोभूषणावाप्तिमुपदिशति । तत्र अष्टमं यन्त्रम् । अगुरुक्षोदैः अगुरुपङ्कैः । तत्र यन्त्रे गुरावुच्चं गते बृहस्पतौ कर्कटस्थे । तदुच्चकाले तद्राशौ नभोमध्यं गते । एवमर्कादीनामप्युक्तः कालः । तथा नित्यक्रमतः ॥ ७० ॥

मृगखेदैरित्यादिनानुभावत इत्यन्तेन श्लोकद्वयेन नवमयन्त्रप्रयोगेण लोकस्त्रीवश्यसिद्धिमुपदिशति । तत्र नवमं यन्त्रमालिख्य प्रागुक्ताधिकरणेषु अभ्यर्च्य नित्यक्रमतः तां ज्वालामालिनीं । तदालिप्तो व्रजेत् पूजान्ते तद्यन्त्रं मार्ज्जयित्वा तन्मृगखेदालिप्तः । सर्वे तत्रस्था जनाः । तं साधकं वनिता यदि साध्या । अस्य प्रयोगस्य ॥ ७२ ॥

विलिखेदित्यादिना श्लोकेन दशमयन्त्रेण प्रागुक्तनवमयन्त्रवाच्यफलान्यनेन प्राप्तं प्रयोगादिकमुपदिशति । तत्र प्रोक्तद्रव्यैः सर्वैः प्रथमयन्त्रप्रोक्तकुचन्दनादिभि-

प्रोक्तेषु दशसु प्रोक्तद्रव्यैरालिख्य तेषु तु ।
संस्थाप्य कुम्भं विधिना जपित्वोग्रे ग्रहे तदा ॥७४॥
अभिषिञ्चेत्तद्ग्रहस्य दोषस्थानगतं फलम् ।
न भवेच्च भवेदेवं वश्यो यन्त्रेष्वशेषतः ॥७५॥
तथा तदुच्चे तत्पूजां होममन्त्राज्यपायसैः ।
निवेद्यञ्च प्रणम्यार्च्य दद्याच्छिवत्वमवाप्नुयात् ॥७६॥
तत्तद्ग्रहार्त्तिषु क्षिप्रं ते ग्रहास्तत्प्रभावतः ।
एकादशस्थफलदा नित्यशो यजनादपि ॥७७॥
सुवर्णे रजते वा तद्यन्त्रेष्वन्यतमं शिवे ।
विलिख्याभ्यर्च्य तद्विद्याविदे दद्यात् सुपूजितम् ॥७८॥

---

नवमयन्त्रप्रोक्तस्रगस्त्रेदान्तैर्नवभिर्द्रव्यैः समेतैरित्यर्थः । एकशः विकल्पार्थः एकैनैकेन वा । तैर्नवभिर्यन्त्रैः । सर्वमध्ये नामाक्षरविन्यासभेदतः । एतद्दशमं यन्त्रम् ॥ ७३ ॥

प्रोक्तेष्वित्यादिना अशेषत इत्यन्तेन श्लोकद्वयेन प्रोक्तेषु दशसु यन्त्रेषु अभिषेकविधानाद् ग्रहदोषशान्तिमुपदिशति । तत्र दशसु यन्त्रेष्विति शेषः । विधिना अष्टत्रिंशत्कलामिथुनार्चनादिपुरःसरं । जपित्वा विद्यां । उग्रे प्रतिकूले । तद्ग्रहस्य अशेषतः एवं सर्वयन्त्रेष्वित्यर्थः । एतदुक्तं भवति प्रोक्तेषु दशसु यन्त्रेषु प्रागुक्तक्रमात् तत्तद्ग्रहे प्राप्ते यन्त्रे तत्तद्ग्रहप्रातिकूल्यप्रोक्तक्रमाभिषेकात्तत्तद्ग्रहप्रातिकूल्यशान्तिरिति ॥ ७५ ॥

तथेत्यादिना अपीत्यन्तेन श्लोकद्वयेन प्रोक्तेषु यन्त्रेषु प्रागुक्तक्रमतो नवग्रहाणां प्रातिकूल्यशान्तिकरं पूजनमुपदिशति । तत्र तदुच्चे प्रतिकूलग्रहोच्चे । तत्पूजां प्रतिकूलग्रहपूजां । निवेद्यं चकारेण पायसैरित्याकृष्यते । ते प्रतिकूलाः नित्यशो यजनादपि कालयजनमन्तरेणापि । एतदुक्तं भवति प्रोक्तेषु दशसु यन्त्रेषु तत्तद्ग्रहस्य प्रागुक्तक्रमप्राप्ते यन्त्रे तत्तत्केवलप्रतिकूलग्रहोच्चकाले तत्कालमन्तरेण नित्यशस्तद्ग्रहपूजनेन देवीपूजामन्तरेण तत्तन्नाममन्त्रैः अन्नाज्यपायसैर्होमेन च तन्निवेद्येनार्घ्यपुरःसरेण च तत्तद्ग्रहाः प्रीताः सद्यः अनुकूला भवन्तीति ॥ ७७ ॥

सुवर्णेत्यादिभिर्विधानत इत्यन्तैस्त्रिभिः श्लोकैर्यन्त्राङ्कितसुवर्णपट्टादिदानेन तत्

षोड़श द्वादश नव षट् विनिष्कप्रकल्पितम् ।
नित्यार्चकस्य नित्यानामेकां पूजयितुं तु वा ॥७९॥
दद्याद् गन्धादिनार्च्यैतं प्रणम्य ग्रहविग्रहम् ।
पश्चिमामुखमासीनं तस्मै प्रोक्तविधानतः ॥८०॥
विद्याजप्ताम्बुपानेन वर्द्धते कुक्षिगोऽनलः ।
भुक्ते च जठरस्पर्शजपादपि सुनिश्चितम् ॥८१॥
मेषादिराशिगे भानौ मासेषु द्वादशस्वपि ।
प्रोक्तेषु दशयन्त्रेषु प्रत्येकञ्च त्रिवासरम् ॥८२॥
पूजयेद्देवीमब्देन धनधान्यगृहादिभिः ।
समृद्धो जीवति चिरमरोगः सुमना भुवि ॥८३॥

---

फलावाप्तिमुपदिशति । तत्र तद्यन्त्रेषु दशस्विति शेषः । अन्यतमं तत्तद्ग्रहप्राप्तं अभ्यर्च्य विद्याविद्धे तद्विद्याविद्धे ज्वालामालिनीविद्याविद्धे । सुपूजितं यन्त्रं षोड़श-द्वादशोत्तरहीनमानमशक्तविषयम् । एकां पूजयितुः षोड़शनित्यासु वा विकल्पे । दद्यादिति द्विरुक्तिः प्रस्तारविस्तारार्थत्वाददोषः । पश्चिमामुखं ग्रहरूपत्वात् । तस्मै विद्याविद्धे ग्रहरूपाय । एतदुक्तं भवति प्रोक्तयन्त्रेषु तत्तद्ग्रहप्राप्तं यन्त्रं प्रोक्तकाले सुवर्णादिपट्टे विकीर्य्य तद्यन्त्राङ्कितं सुवर्णपट्टं विद्यया पूजितं ज्वाला-मालिनीनित्याविद्याविद्धं वा षोड़शनित्याविद्धं वा एतास्वन्यतमनित्याविद्धं वा पश्चिमाभिमुखं भूमौ विलिखिते तद्यन्त्रे संस्थाप्य गन्धादिभिस्तद्विद्याभिस्तद्ग्रह-रूपं ध्यात्वाभ्यर्च्य तस्मै दद्यादिति ॥ ८० ॥

विद्येत्यादिना श्लोकेन जठराग्निवृद्ध्युपायमुपदिशति । तत्र विद्या जप्ताम्बु-पानेन ज्वालामालिन्याः । तत्र जपसंख्या अष्टोत्तरशतम् ॥ ८१ ॥

मेषादीत्यादिना भुवीत्यन्तेन श्लोकद्वयेन प्रोक्तेषु दशसु यन्त्रेषु एकस्मिन्नेकस्मिन् यन्त्रे त्रिवासरं क्रमात् द्वादशसु मासेषु भास्करादिदेवतार्चनादवाप्यानि फला-न्युपदिशति । तत्र मेषादिराशिगे भानावित्युक्त्या चैत्रमासमारभ्येति प्रत्येकं त्रित्रिवासम् एकस्मिन् एकस्मिन् यन्त्रे त्रिदिनमित्यर्थः । एवं प्रतिमासमेकावृत्ति-र्भवति । पूजयेत् भास्करसहितां देवीं । तत्र भास्करार्चनस्थानं प्रागवदिति ॥८३॥

यद्राशौ यो ग्रहस्तिष्ठत्येको द्वौ बहवोऽथवा ।
तद्दिनेषु तदुच्चेषु कालेषु च तदर्चनात् ॥८४॥
तत्तद्ग्रहाः सुसंप्रीताः पालयन्त्यनिशञ्च तम् ।
तथा तर्पणहोमाभ्यां जपदानादिनापि वा ॥८५॥
नवस्वपि च यन्त्रेषु नवग्रहमयत्वतः ।
तत्तत् क्षोभं विलिख्यान्तः पूजयेद्वैरिमर्दने ॥८६॥
रिपुनामयुतान्युक्तान्यालिख्य रविचन्द्रयोः ।
उपरागे समे भूमौ दिनशो जयमाप्नुयुः ॥८७॥
विद्याक्षरौषधानान्तु प्रत्येकं कर्षमर्पितम् ।
भाण्डे नवे पञ्चगव्ये खारिमाणे पचेच्च तत् ॥८८॥

---

यद्राशावित्यादिना अपि वेत्यन्तेन श्लोकद्वयेन तेषु यन्त्रेषु सर्वग्रहसमाराधनात् फलमुपदिशति । तत्र अथवा विकल्पे दिनेषु तत्तद्राशितत्तद्ग्रहावस्थानदिनेषु तत्तद्वारेष्वित्यर्थः । तदुच्चेषु कालेषु प्रागुक्तेषु । तदर्चनात् तत्तद्यन्त्रेषु तत्तद्ग्रहैः समं देवतार्चनात् । अस्मिन् प्रकरणे सर्व्वग्रहार्चनेषु मूलदेवताया सार्द्धं पूजनम् । तम् उपासकं जपदानादिना पूर्वोक्तक्रमतः । दानं सुवर्णपट्टस्य यन्त्राङ्कितस्य ॥८५॥

नवस्वित्यादिना आप्नुयुरित्यन्तेन श्लोकद्वयेन प्रोक्तेषु द्वितीयादिनवयन्त्रेषु प्राग्वद्ग्रहपूजया शत्रुमर्द्दनमुपदिशति । तत्र तत्तत् क्षोभं विलिख्यान्तः साध्यस्य शत्रोः प्रतिकूलं गृहं कर्णिकास्थाने देवदत्तम् आदित्यः क्षोभयत्वित्यादि । वैरिमर्दनप्रयोगे उपरागे ग्रहणे रविचन्द्रयोरित्यन्वयः । आप्नुयुः शत्रवः ॥८७॥

विद्येत्यादिभिर्विभञ्जकमित्यन्तैः पञ्चभिः श्लोकैः सर्व्वविद्याक्षरौषधभस्मसाधनतद्विनियोगादिकमुपदिशति । तत्र कर्षं निष्कत्रयम् एतन्मानमपुनरुक्तानां विद्याक्षरौषधानां पुनरुक्तानान्तु प्राग्वत्तदाप्तसंख्यागुणिताः । भाण्डे नवे तत् औषधं विद्यया संस्कृते तन्मूलविद्यया संस्कृते तदुदरोत्थिते भाण्डोदरोत्थिते वह्नौ हुत्वा सहस्रवारादहीनं । तत्र भस्मनि । तत्र भस्मगते यन्त्रे । देवीं तां तथा नित्याक्रमतः अर्चयेत् । तद्भस्म सर्वाभिः षोड़शनित्याभिः । तद्गृहे भस्माधिष्ठिते । श्रीखण्डाद्यैः चन्दनकुङ्कुमाद्यैः । एतदुक्तं भवति नवे भाण्डे खारिमाणं पञ्चगव्यं सर्वं समांशं तत्तदुपास्यमन्त्रविद्यादिभिर्निक्षिप्य तत्र सर्व्वमन्त्रविद्या पुनरुक्ताक्षरौषधानि तत्तद्विद्याजपसहितं प्रोक्तमानतो निक्षिप्य तत्तद्विद्या संस्कृते वह्नौ

विद्यया संस्कृते वह्नौ ततस्तदुदरोत्थिते ।
घृतेन विद्यया हुत्वा तद्भस्मादाय तत्र वै ॥८९॥
यन्त्राणि दश निष्पाद्य तत्र देवीं यजेत्तथा ।
ततस्तद्भस्म संगृह्य निदध्याद्दिनशोऽर्चयेत् ॥९०॥
तद्भस्म सर्वरक्षाकृत् सर्वाभिरपि साधयेत् ।
गदचोरग्रहारिष्टक्लेशा न स्युश्च तद्गृहे ॥९१॥
नित्यशो धारणं देहे श्रीकण्ठाद्यैर्विलेपनम् ।
भक्षणं सर्वकृत्यादि दुरितार्त्तिविभञ्जकम् ॥९२॥
वह्न्यक्षरेषु दशसु व्यञ्जनैः सप्तभिः पृथक् ।
स्वरत्रयं क्रमाद् युञ्ज्यात्तेन तान्येकविंशतिः ॥९३॥
त्रिकोणद्वयमालिख्य बाह्याभ्यन्तरयोगतः ।
तदन्तर्वृत्तमध्यस्थं षडस्रञ्च विधाय तु ॥९४॥

---

दृढ़पिहितभाण्डमुखं पाच्य ततस्तद्भाण्डोदरप्रोक्ते वह्नौ तत्तद्विद्यया सहस्रवारादर्हीनं हुत्वा पश्चात्तद्भस्मादाय तदनु अस्पृष्टभूतलमाकाश एव गोमयं गृहीत्वा तेन तद्भस्म विलोड्य पिण्डीकृत्य संशोष्य सकरीषं दग्ध्वा पश्चात्तत्रौषधसहितं पिण्डभस्मादाय पटलोदिते तस्मिंस्तस्या दशयन्त्राणि निष्पाद्य अन्यासां तत्तन्नित्यसपर्य्यायन्त्राणि निष्पाद्य तत्र तत्तद्देवतामावाह्य नित्यक्रमतोऽभ्यर्च्य सहस्रवारं जप्त्वा तद्भस्म समुद्गके निधाय प्रतिदिनं तत्तद्विद्यया पुष्पाञ्जलिं विधाय प्रोक्तविधानतः प्रोक्तफलसिद्धिरिति ॥८२॥

वह्न्यक्षरेष्वित्यादिभिरितीत्यन्तैरष्टभिः श्लोकैः पञ्चभूतप्रोक्ताग्नेयाक्षरदशकस्यान्योन्यमेलितजनितसंख्याक्षरैरेकविंशतियन्त्राणि तैर्जठराग्निवृद्धिप्रयोगादिकमुपदिशति । तत्र वह्न्यक्षरेषु पञ्चभूताक्षराणां मध्ये इत्यर्थः । तानि ईकारादिक्षकारान्तानि दश । सप्तभिः आदिगतस्वरत्रयरहितैः खकारादिवर्गद्वितीयरेफक्षाक्षरैः । पृथक् प्रति व्यञ्जनं । स्वरत्रयं इ ई ऐ इति तदादिभूतमक्षरत्रयं । तानि स्वरत्रयसहितानि व्यञ्जनानि तद्रूपाणि यथा खिँ खीँ खैँ इत्यादीनि चिँ चीँ चैँ इत्यन्तानि । तदन्तः त्रिकोणद्वयान्तः । नाम्ना सह इति शेषः साध्यादीना-

नाम्नाद्यं विलिखेन्मध्ये षट्कोणेषु च षट् क्रमात् ।
विलिखेदग्रमारभ्य प्रादक्षिण्येन पार्वति ॥९५॥
त्रिकोणान्तरतो लिख्य चतुर्दश तथा क्रमात् ।
शिष्टे साध्याक्षरन्त्वग्रे लिखेत् पञ्चदशस्वपि ॥९६॥
क्रमेण मध्ये त्वन्येषां निवेशादेकविंशति ।
भवन्ति यन्त्राणि तथा तैः कुक्ष्यग्निः प्रवर्त्तते ॥९७॥
त्रिकोणाकारके पट्टे ताम्रे तानि विलिख्य वै ।
स्पृशन् विद्यां जपेन्नक्तं तद्वर्णकृतसम्पुटम् ॥९८॥

---

मिति। आद्यं खिँ इत्यक्षरं स्वरत्रययुक्तेषु एकविंशतिसंख्येषु आग्नेयव्यञ्जनाक्षरेषु आद्यं। क्रमात् एकस्मिन्नेकस्मिन्नेकैकक्रमात्। पार्व्वतीति सम्बुद्धिः। चतुर्दश तथा क्रमात् स्वस्य वामपार्श्वे अधरादि ऊर्द्धान्तञ्चैकैकं पञ्चकं दक्षिणपार्श्वे ऊर्द्धाद्यधरान्तं पञ्चकमग्रे दक्षिणादिवामान्तञ्चतुष्टयं तदन्ते पञ्चदशमस्थाने साधकादित्रयं वा (च) लिखेत्। पञ्चदशस्वपि विंशतियन्त्रेषु पञ्चदशस्थानेष्वित्यर्थः। अन्येषां द्वितीयादीनामक्षराणां। तैरेकाविंशतिभिः। त्रिकोणाकारके पट्टे कुक्ष्यग्निवर्द्धनप्रयोगार्थमेकविंशतियोग्याधिकरणरूपे इत्यर्थः। तानि यन्त्राणि। तद्वर्णकृतसम्पुटं प्रागुक्तैकविंशत्यक्षराणि विद्याया आद्यन्तयोरनुलोमरूपेण योजयित्वा जपेदित्यर्थः। तद्यन्त्रपट्टं जपपूजितं उक्तरूपया विद्यया। पाकः प्राग्वदन्नादिभिर्भवति प्रदीप्तिरित्यत्रान्वयः। प्राग्जन्माघक्षयेण पूर्वजन्मपापनाशात् अभिषेकादिकृतात्। जायते प्रदीप्तिर्जायते इति निगमनरूपं। नित्यानामित्युक्त्या एष प्रयोगः सर्व्वसाधारण इत्यर्थः। इति प्रोक्ता इति शेषः। एकविंशतियन्त्रविरचनाप्रयोगक्रमो यथा पञ्चभूताक्षरेषु वह्न्यक्षराणि अन्योन्यसम्मेलनजनितैकविंशतिसंख्यानि। प्रोक्तरूपाण्यक्षराणि त्रिकोणाकारके ताम्रपट्टे वाह्याभ्यन्तरयोगात् समत्रिरेखं त्रिकोणद्वयं प्रागग्रमालिख्य तदन्तर्वृत्तमन्तर्गतत्रिकोणरेखात्रयस्पृष्टास्पृष्टं विधाय तदन्तः प्रागुक्तमानेन षट्कोणं विधाय तत्र लिखेत् यथा सर्वमध्ये आद्याक्षरं नामगर्भं समालिख्य तद्वहिः षट्सु कोणेषु अग्रादिप्रादक्षिण्येन षडक्षराण्यालिख्य तद्वहिस्त्रिकोण-

सतोयभाण्डे दिनशो निक्षिपेज्जपपूजितम् ।
तत्तोयेनान्नपाकाभिषेकतो भवति ध्रुवम् ॥९९॥
प्रदीप्तिर्जठराग्नेस्तु प्रागजन्माघक्षयेन वै ।
जायते परमेशानि नित्यानां वैभवादिति ॥१००॥
श्रोत्रतत्त्वमयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निष्कालनाच्चित्ते तत्तत्त्वं स्वात्मसात् कृतम् ॥१०१॥

इति षोड़शनित्यातन्त्रे श्रीकादिमते
विंशतिपटलम् ।

---

द्वयान्तरालवीथ्यां स्वस्य वामपार्श्वाधोभागमारभ्य तदूर्द्ध्वभागान्तपञ्चकं दक्षिणपार्श्वोर्द्ध्वभागादितदधोभागान्तपञ्चकं अग्रे दक्षिणपार्श्वादि वामपार्श्वान्तं चतुष्टयं तत्र तदन्त्ये पञ्चदशस्थाने साध्याक्षरम्। एवं साध्याक्षरान्तानि शिष्टानि चतुर्दशाक्षराण्यालिख्य एवं सम्भूयैकविंशत्यक्षराणि लिखेत्। एतत् प्रथमं यन्त्रम्। अस्मिन्नेव यन्त्रे सर्वमध्ये द्वितीयादीनां विंशाक्षराणां निवेशादितरेषां मध्ये मध्यलिखिताक्षरोपरितनादीनां तत्तत्पूर्वपूर्वाक्षरान्तानां विंशत्यक्षराणां वहिः प्रागुक्तक्रमनिवेशनाच्च पूर्वोक्तेन यन्त्रेण सार्द्धमेकविंशतियन्त्राणि सम्भवन्ति। एष्वन्यतमं यन्त्रं विद्यया तद्वर्णपुटितया सप्राणप्रतिष्ठं लक्षवारजप्तपूजितं दिनशः शतवारादर्वाचीनं विद्यया तद्वर्णपुटितयाभिजप्तपूजितं तोयभाण्डे निक्षिप्य तैर्जलैः कृताः पानपाकाभिषेकाः अस्य चिरन्तनपापानि नाशयित्वा जठराग्निवृद्धिकराणि भवन्तीति ॥१००॥

इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसारसिंहराजप्रकाशाभिधानेन सुभगानन्दनाथेन विरचितायां मनोरमाख्यायां
व्याख्यायां ज्वालामालिनी-नित्याविद्याविधानप्रकाशनपरं
विंशतितमं पटलं परिपूर्णपरामृष्टम् ॥२०॥

ग्रन्थसंख्याः—यन्त्राणि विंशे पटले द्वात्रिंशद्व्याक्रिया कृता ।
अध्यर्द्धपादरहितं त्रिशतं ग्रन्थसंख्यया ॥

---

# एकविंशपटलम् ।

अथ षोड़शनित्यासु या चिता षोड़शी शिवे ।
प्रोक्ता तत्कल्पमधुना शृणु सर्वार्थसिद्धिदम् ॥ १ ॥
विद्या प्रागेव कथिता तदङ्गन्याससंयुतम् ।
ध्यानं शक्तीः पूजनञ्च साधनं तत्फलानि च ॥ २ ॥
होमतर्पणयन्त्रार्चाभावनाः कथयामि ते ।
उपायैः पञ्चभिस्तैस्तैः साधयेदखिलेप्सितम् ॥ ३ ॥
विद्याद्यवायुना कुर्य्याद्दीर्घस्वरयुजा क्रमात् ।
षड़ङ्गानि यथापूर्वं मातृकां विद्यया न्यसेत् ॥ ४ ॥

---

पूर्वस्मिन् विंशे पटले पञ्चदश्या ज्वालामालिनीनित्याविद्याया विधानमुपदिश्यानन्तरं षोड़श्याश्चित्रानित्याविद्याया विधानमुपदिशति अथ षोड़शेत्यादिना अग्रणीरित्यन्तेन श्लोकशतरूपेणैकविंशेन पटलेन। तत्र अथ षोड़शेत्यादिभिरीप्सितमित्यन्तैस्त्रिभिः श्लोकैः पटलार्थानुपदिशति। तत्र शिवे इति सम्बुद्धिः। तत्कल्पं तद्विधानं। प्रागेव तृतीयपटले। शक्तीः आवरणस्थाः। साधनं पुरश्चरणं। तत्फलानि सिद्धविद्यस्य फलानि। एतैर्होमादिभिः ॥ ३ ॥

विद्येत्यादिना श्लोकेन षड़ङ्गन्यासोपदेशं मातृकान्यासातिदेशञ्च करोति। तत्र विद्याद्यवायुना विद्यादिभूतचकारेण। दीर्घस्वरयुजा प्राग्वत्। चाँ चीँ इत्यादिरूपेण। यथापूर्व्वम् एतत् काकाक्षिवत् अर्थवशात् पूर्वापरयोरन्वेति तेन पूर्वत्रान्वये जाते सष्टितं न्यसेदित्यर्थः परत्रान्वये तत्तत् स्थानेषु प्रागुक्तेषु न्यसेच्चेत्यर्थः। विद्यया प्रागुक्तन्यासक्रमातिदेशेनैकैकेनाक्षरेणान्ते युतामिति शेषः। न्यसेत् कुलसुन्दरीपटलोक्तक्रमादित्यर्थः ॥ ४ ॥

उद्यदादित्यविम्बाभां नवरत्नविभूषिताम् ।
नवरत्नकिरीटाच्च चित्रपट्टांशुकोज्ज्वलाम् ॥ ५ ॥
चतुर्भुजां त्रिनयनां शुचिस्मितलसन्मुखीम् ।
सर्वानन्दमयीं नित्यां समस्तेप्सितदायिनीम् ॥ ६ ॥
चतुर्भुजां भुजैः पाशमङ्कुशं वरदाभये ।
दधानां मङ्गलापद्मकर्णिकानवयोनिगाम् ॥ ७ ॥
तच्छक्तिभिस्तु तच्चक्रे तथैवार्च्चनमीरितम् ।
नवयोनावष्टवर्गयुता ब्राह्म्यादिका यजेत् ॥ ८ ॥

उद्यदादित्यादिभिर्नवयोनिगामित्यन्तैस्त्रिभिः श्लोकैः सविशेषनित्यसपर्य्यामण्डलातिदेशगर्भं देव्या नित्यसपर्य्याध्यानमुपदिशति । तत्र चित्रपट्टांशुकोज्ज्वलां चित्रपट्टांशुकपरीधानामित्यर्थः । सर्वानन्दमयीं आनन्दरूपविग्रहवतीं । चतुर्भुजामिति पुनरुक्तिरायुधधारणप्रस्तावार्थत्वादभ्युपगन्तव्या । अत्रायुधक्रम ऊर्द्ध्वादिवामदक्षिणक्रमेण । मङ्गलापद्मकर्णिकानवयोनिगां सर्व्वमङ्गलानित्यानित्यपूजाचक्रादस्याधिक्यं कर्णिकामध्यगतनवयोन्येव । एतदुक्तं भवति तत्रोक्तं चतुर्द्वारसहितं चतुरस्रद्वयं तदन्तः द्वात्रिंशद्दलं पद्मं तदन्तः षोडशदलं पद्मं तदन्तरष्टदलं पद्मं तत्कर्णिकायां नवयोनिं प्रोक्तमानेन कुर्य्यादिति ॥ ७ ॥

तच्छक्तिभिरित्यादिना अन्तिके इत्यन्तेन श्लोकद्वयेन देव्या नित्यसपर्य्याक्रमं षडावरणमुपदिशति । तत्र तच्छक्तिभिः सर्व्वमङ्गलावरणचतुष्टयशक्तिभिः । तथैव १ अभ्यन्तराद् वाह्यनिर्गमनक्रमेणाष्टवर्गयुताः अकचटतपयशादिवर्गाष्टकपूर्वाः । तेन ब्राह्म्यादीनां द्विरर्चनमायातं । परितः मध्यत्रिकोणाद्वहिरित्यर्थः । तद्भुजान्तिके दक्षिणाधरभुजादि वामाधरभुजान्तं प्रादक्षिण्येनेत्यर्थः । एतदुक्तं भवति पूर्वोक्तसर्व्वमध्यकर्णिकागतनवयोनिमध्यविशिष्टे सर्व्वमङ्गलानित्यपूजाचक्रे सर्व्वमध्ये चित्रानित्यामावाह्योपचारैरभ्यर्च्य तत्पृष्ठभागे प्रागुक्तान्तराले नवनाथपंक्तिं प्राग्वत्त्रित्रिक्रमतोऽभ्यर्च्य सर्व्वमध्ययोनि कोणेषु तदिच्छाज्ञानक्रियाशक्तीस्तद्वहिर्देव्यास्तत्तद्भुजान्तिके दक्षिणाधरादि वामाधरान्तं प्रादक्षिण्यात्तदायुधान्यभ्यर्च्य तद्बहिरष्टसु कोणेषु अग्न्यादिप्रादक्षिण्येन वर्गोपेता ब्राह्म्यादीर-

१ । तथैवं ।

इच्छाज्ञानक्रियाशक्तीरर्च्चयेन्मध्यकोणतः ।
द्वितीयश्च परितो १ देव्याः पूजयेत्तद्व जान्तिके ॥९॥
सर्वासामपि नित्यानां नाथान् देव्यास्तु पश्चिमे ।
पूजयेत्तत्तदाकारांस्तत्तन्मन्त्रैर्यथाविधि ॥ १० ॥
गुरुमण्डलपूजादि साधारणमुदीरितम् ।
सर्वासामपि नित्यानां यदाद्यास्यन्दजा इमाः ॥ ११ ॥
साधनञ्च तथा प्रोक्तं तदङ्गहवनन्तथा ।
एवं संसाधिता विद्या विनियोगाय कल्पते ॥ १२ ॥

---

भ्यर्च्च तद्बहिस्तद्वदष्टपत्रेषु सर्व्वमङ्गलापटलोक्ता भद्राद्यष्टशक्तीरभ्यर्च्य तद्बहिस्तद्वत् षोड़शपत्रेषु तत्रोक्ताः कलाद्याः २ षोड़शशक्तीरभ्यर्च्य तद्बहिस्तद्द्वात्रिंशद्दलेषु ३ तत्रोक्ताः कामिन्यादिद्वात्रिंशच्छक्तीः समभ्यर्च्य तद्बहिश्चतुरस्रे प्राग्वत्तत्रोक्ताः पश्चिमद्वाराद्ब्राह्म्यादीः पूर्व्वद्वारादिन्द्रादिका आग्नेयाद ४ नन्तादिकाश्च पूजयेदिति । तत्र वलिद्वयं पूजासमाप्त्यादि प्राग्वत् ॥ ९ ॥

सर्व्वासामित्यादिना इमा इत्यन्तेन श्लोकद्वयेन सर्वासां नित्यानां साधारणं नवनाथार्चनोपदेशं तत्तन्मण्डलादिषु प्रतिपर्व्व तदर्चनातिदेशं च करोति । तत्र तत्तदाकारान्मध्यमध्यदेवीसदृशरूपादिकान् । तत्तन्मन्त्रैः [ऽत्रि] द्वितीयपटलोक्तैः । यथाविधि त्रिविक्रमपंक्तितः । आद्यास्यन्दजाः आद्यायाः ललितायाः स्वेच्छोल्लासरूपत्वात् । आसां सर्व्वगुरुमण्डल सपर्य्यादिकं तत् समानमेवेत्यर्थः ॥ ११ ॥

साधनमित्यादिना श्लोकेन पुरश्चरणमुपदिशति । तत्र तथा यथा ललितायाः । तदङ्गहवनं साधनाङ्गो होमः । तथा प्राग्वत्तेनाचरविलचं कृतयुगे द्वादशलचं जपं दशांशमन्नाज्यादिभिर्होमञ्च कुर्य्यादित्यर्थः ॥ १२ ॥

---

१ । पुरत इति वा पाठः । २ । कलाद्याः ।
३ । तद्द्वात्रिंशद्दलेषु । ४ । आग्नेयाद्यनन्ता ।

काम्यहोमविधिं वक्ष्ये शृणु सर्वार्थदायकम् ।
येनातिमन्दभाग्योऽपि श्रीमान् भोक्ता सुखी भवेत् ॥ १३ ॥
मधुरत्रयसंसिक्तैररुणैरम्बुजैः श्रियम् ।
प्राप्नोति मण्डलाद्धोमात् सितैस्तैश्च महायशः ॥ १४ ॥
क्षौद्राक्तैरुत्पलैरक्तैर्हवनात् प्रोक्तकालतः ।
सुवर्णं समवाप्नोति निधिं १ वा च सुधान्तु वा ॥ १५ ॥
क्षीराक्तैः कैरवैर्होमात् प्रोक्तकालमवाप्नुयात् ।
धान्यानि विविधान्याशु सुभगः स भवेन्नरः ॥ १६ ॥
आज्याक्तैरुत्पलैर्होमाद्वाञ्छितं समवाप्नुयात् ।
तदक्तैरपि कह्लारैर्हवनाद्राजवल्लभः ॥ १७ ।
पलाशपुष्पैस्त्रिस्वादुयुक्तैस्तत्कालहोमतः ।
चतुर्विधन्तु पाण्डित्यं भवत्येव न संशयः ॥ १८ ॥
लाजैस्त्रिमधुरोपेतैस्तत्कालहवनेन वै ।
कन्यकां लभते यत्नात् समस्तगुणसंयुताम् ॥ १९ ॥
नालिकेलफलक्षोदं ससितं सगुड़न्तु वा ।
क्षौद्राक्तं जुहुयात्तद्वद्यत्नाद्धनदोपमः ॥ २० ॥

---

काम्यहोममित्यादिभिश्चेतन इत्यन्तैः सप्तदशभिः श्लोकैर्नाना होमद्रव्यैस्त्रिंशत्संख्यान् मङ्गलरूपान् होमविधीनुपदिशति । तत्र येन विधिना । तैरम्बुजैरुत्पलैः । रक्तैरक्तकुमुदैरित्यर्थः । कैरवैः सितैरिति शेषः । उत्पलैर्नीलोत्पलैः । तदक्तैराज्याक्तैश्चतुर्विधं प्राग्वद्वादित्वकवित्ववक्तृत्वज्ञात्वत्वतः । लभते यत्नाद-यत्नादिति पदच्छेदः । ससितं खण्डशर्करामिलितं । वा विकल्पे । तद्वदिति च विकल्पार्थे तथैव धनदोपम इत्यर्थः । तद्वत् प्राग्वदन्नाज्यतिलतण्डुलसर्वारुण-पुष्पवन्धूकपुष्पहोमाद्धनदोपमो भवतीत्यर्थः । सितरक्तैः पुष्पैः । गुड़ुच्याः प्राग्व-

---

१ । बिधिं ।

तथैवान्नाज्यहोमेन सतण्डुलतिलैरपि ।
प्रसूनैररुणैस्तद्वत्तथा बन्धूकसम्भवैः ॥ २१ ॥
सितैः प्रसूनैर्वाक्सिद्धिं हवनात् समवाप्नुयात् ।
सितरक्तैस्तु मिलितैरायुरारोग्यमाप्नुयात् ॥ २२ ॥
दूर्वात्रिकैस्त्रिमध्वक्तैर्हवनात्तु जयेद् गदान् ।
तथा गुडूच्या होमेन पायसेन तिलेन वा ॥ २३ ॥
श्रीखण्डपङ्ककर्पूरमिलितैः शतपत्रकैः ।
हवनाच्छ्रियमाप्नोति सा तदन्वयगा भवेत् ॥ २४ ॥
कुङ्कुमं हिमतोयेन पिष्ट्वा कर्पूरसंयुतम् ।
तत्पङ्कमर्दितैर्होमात् कह्लारैर्विकचैः शुभैः ॥ २५ ॥
राजकल्पः श्रिया भूयाज्जीवेद्वर्षशतं भुवि ।
निःसपत्नो निरातङ्को निर्द्वन्द्वो निर्म्मलाशयः ॥ २६ ॥
इक्षुकाण्डस्य सकलैर्हवनाद्वस्त्रमाप्नुयात् ।
तथैव करवीरोत्थैः प्रसूनैररुणैः सितैः ॥ २७ ॥
क्षौद्राक्तैः पाटलीपुष्पैर्हवनाद्वशयेद्वधूः ।
तथैव चम्पकैर्होमाद्रूपाजीवा वशं नयेत् ॥ २८ ॥
सरूपवत्सासितगोः क्षीराक्तसितहोमतः ।
लभतेऽनुपमां लक्ष्मीमपि पापिष्ठचेतनः ॥ २९ ॥

---

दम्भतालतया चकारेण गदाञ्जयेदित्याकृष्यते । श्रीखण्डं चन्दनं । शतपत्रकैः तन्नाम गुरुमुखादवगन्तव्यं । सा लक्ष्मीः तदन्वयगा शान्तां श्रियमवाप्नोतीत्यर्थः । शुभैः घुणक्षतादिरहितैः अखण्डितैः । निर्द्वन्द्वः निरुपमः । तथैव वस्त्रमाप्नुयादित्यर्थः । रूपाजीवाः वेश्याः । सितहोमतः शर्कराहोमतः । पापिष्ठचेतनः अविवेकी तस्य लक्ष्मी दुष्प्रापत्वात् ॥ २९ ॥

सौवीराक्तैस्तु कार्पासवीजैस्तत्कालहोमतः।
अर्द्धेन्दुकुण्डे नियतं विद्विष्टा रिपवोऽम्बिके ॥ ३० ॥
अरिष्टपत्रै(१)स्तद्वीजैस्तत्तैलाक्तैस्तथा हुतैः।
मृत्युवीजैर्निम्बतैलसिक्तैर्होमात्तु दन्तिनः ॥ ३१ ॥
रागाक्तैस्तुरगास्तद्वत्तत्पञ्चाङ्गैर्हुतैर्ध्रुवम्।
अचवीजैस्तु तैलाक्तैर्होमः सर्वविनाशवान् ॥ ३२ ॥
करञ्जवीजैस्तत्सिक्तैर्होमाद्वैरिविनाशनः।
तथैवाचतरूद्भूतपञ्चाङ्गहवनादपि ॥ ३३ ॥
निम्बतैलाप्लुतैरचद्रुमवीजैस्तु होमतः।
तद्दिने स्यादपस्मारी वैरी भवति निश्चितम् ॥ ३४ ॥
अरातेर्जन्मनचत्रवृत्तैश्च न गतैस्तले (२)।
तद्योनिपिशितैस्तैश्च हवनं मृत्युरक्तद्रिपोः ॥ ३५ ॥
यचाचवीजैः सर्षपतैलाक्तैर्हवनात्तथा।
जायन्ते वैरिणः कुष्ठरोगा देहविलापकाः ॥ ३६ ॥
मरीचैः सर्षपैर्होमात्तैलाक्तैर्मध्यरात्रके।
दाहज्वरेण ग्रस्तः स्यादरातिस्तद्दिनैर्ध्रुवम् ॥ ३७ ॥

---

सौवीरित्यादिभिर्ध्रुवमित्यन्तैरष्टभिः श्लोकैर्नवसंख्यं निग्रहहोममुपदिशति। तत्र अर्द्धेन्दुकुण्डे वच्यमाणे। तद्वीजैः अरिष्टवीजैः। तत्तैलाक्तैर्निम्बतैलाक्तैः। तथा विद्विष्टा भवन्तीत्यर्थः। तद्वद् यद्वत् दन्तिनः। तत्पञ्चाङ्गैः मृत्युपञ्चाङ्गैः। तदक्तैर्निम्बतैलाक्तैः। सर्व्वविनाशवान् सर्व्वजन्तुविनाशकरः। तत्सिक्तैर्निम्बतैलाक्तैः। तद्दिनैर्मण्डलादिभिः। तद्योनिपिशितैः शत्रुनचत्रयोनिमांसैः। तैश्च नचत्रवृत्तैः। यचाचवीजानि गुरुमुखादवगन्तव्यानि। तैलाक्तैस्तिलसम्भवतैलाक्तैः ॥३७॥

---

(१) अरिष्टयन्त्रै। (२) नगतैतले।

एवं निग्रहहोमेषु स्वरक्षायै तथान्वहम् ।
स्निग्धैः सम्प्राप्तसिद्धैर्जपहोमादि कारयेत् ॥ ३८ ॥
मृत्युञ्जयेन वा तद्वत् प्रयोगस्ताभिरेव च ।
विद्याभिरन्यथा सिद्धं मन्त्रमप्याशु नाशयेत् ॥ ३९ ॥
प्रागुक्तानान्तु कुर्व्वीत निग्रहं स्वस्य रोषतः ।
वित्ताशया वा न कदाप्याचरेद्भूतिकामुकः ॥ ४० ॥
नित्यक्लिन्नाविधौ प्रोक्तैस्तर्पणैस्तानि साधयेत् ।
अनया विद्यया कर्म्माण्यशेषाणि महेश्वरि ॥ ४१ ॥
अथ यन्त्राणि वक्ष्यामि नानाभीष्टप्रदानि वै ।
यैः सर्व्वे सर्व्वदा सर्व्वसमीहितमवाप्नुयुः ॥ ४२ ॥
स्वरयुक्तलिपिव्रातगर्भां विद्यां समालिखेत् ।
सर्व्वोक्तेषु विधिवत् स्थानेषु परमेश्वरि ॥ ४३ ॥

---

एवमित्यादिना नाशयेदित्यन्तेन श्लोकद्वयेनाभिचारकर्त्तुः स्वरक्षाविधानक्रममुपदिशति। तत्र स्निग्धैः आत्मसमसुखदुःखैः। मृत्युञ्जयेन चतुस्त्रिंशत्पटलवक्ष्यमाणेन। वा विकल्पे। अन्यथा स्वरक्षाविधानवैपरीत्येन ॥ ३९ ॥

प्रागुक्तेत्यादिना श्लोकेनाभिचारेण गुणविधानमुपदिशति। तत्र प्रागुक्तानां त्रयोदशपटले नवतितमादिश्लोकत्रयोक्तानामेवेत्यर्थः। आचरेन्निग्रहम् अभिचार्य्याणां तत्रोक्तानामित्यर्थः ॥ ४० ॥

नित्यक्लिन्नेत्यादिना श्लोकेन तर्पणान्युपदिशति। तत्र तानि तत्रोक्तानि ॥४१॥

अथ यन्त्राणीत्यादिभिर्विचक्षण इत्यन्तैरर्द्धाधिकैः षड्भिः श्लोकैर्विद्याया आद्ये मातृकाविसराक्षरयोजनात् सञ्जातेषु षट्सप्तत्यधिकपञ्चशतसंख्येषु रूपेष्वादितः षोड़शाधिकचतुःशतसंख्यैस्तैः वर्गक्रमतः षड्विंशतिविधानि यन्त्राण्युपदिशति। तत्र सर्वे साधकाः। स्वरयुक्तलिपिव्रातगर्भां अकारादिक्षकारान्तानि षट्सप्तत्यधिक-पञ्चशतान्यक्षराणि विद्याया आदौ एकमेकं योजयेत्। तेन तत्संख्यानि विद्यारूपाणि सम्भवन्तीत्यर्थः। उक्तेषु वक्ष्यमाणेषु। परमेश्वरीति देवीसम्बुद्धिः। तद्वयं द्वृत्तद्वयं। तद्वहिः षटकोणाद्वहिः। तत्त्रयं वृत्तत्रयं।

त्रिकोणं वृत्तयुग्मञ्च षट्कोणं तद्दयन्तथा ।
तद्वहिः षड् दलं पद्मं तत्तत्त्रयञ्च संलिखेत् ॥ ४४ ॥
आद्यकूटं लिखेत् साध्यं गर्भे मध्ये विधानतः ।
त्रिकोणेषु च षट्कोणे षट्पत्रेषु समालिखेत् ॥ ४५ ॥
कूटान्यन्यानि चोक्तानि तत्र पञ्चदशान्यपि ।
अन्तर्वृत्तान्तरद्वन्द्वे भूतार्णांश्च क्रियोचितान् ॥ ४६ ॥

---

त्रिकोणेषु यन्त्रस्य सर्वमध्यत्रिकोणत्रये इत्यर्थः। अन्यानि द्वितीयादीनि। तत्र पञ्चदशसु स्थानेष्वित्यर्थः। अन्तर्वृत्तान्तरद्वन्द्वे कोणवाह्यवृत्तद्वयवीथ्यां षट्कोणवाह्यवृत्तवीथ्याञ्चेत्यर्थः। क्रियोचितान् स्तम्भनवश्यादिक्रियोचितान् पार्थिववर्णादीन्। तत्र लेखनक्रमः प्रतिवीथिकं दशदशक्रमात्। ससाध्यकर्म्मवर्णैश्च अन्ते सहितमिति शेषः। मायाविन्दुयुक्तां क्रमोत्क्रमात्। एतदुक्तं भवति प्रत्यक्षरं विसर्जनीययुक्तां प्रतिलोमां मातृकां सर्व्ववाह्यवृत्तान्तरवीथीद्वये अन्तर्वृत्तवीथ्याम् अभितः समालिख्य प्रत्यक्षरं विन्दुयुक्तामनुलोमामेव वहिर्वीथ्यामभितः समालिखेदिति। एवं षड्विंशतिविधं। क्रमोत्क्रमात् वर्गक्रमतः। षड्विंशतियन्त्रविरचनाक्रमो यथा। इष्टप्रमाणभ्रमात् वृत्तं सम्पाद्य तदनन्तरैकैकाङ्गुलमानेन वृत्तद्वयं कृत्वा तदन्तरं चतुरङ्गुलमानेन वृत्तं कृत्वा तत्र षड्दलानि कृत्वा तदन्तरे एकाङ्गुलमानेन वृत्तं सम्पाद्य तद्वृत्तव्यासार्द्धमानतः प्राग्वत् षट्कोणं कृत्वा तदन्तरस्तत्सन्धिस्पृष्टास्पृष्टवृत्तं विधाय तदन्तरैकाङ्गुलमानेन वृत्तं निष्पाद्य तद्वृत्तरेखास्पृष्टत्र्यस्रं समरेखं त्रिकोणं विधाय तत्र सर्व्वमध्ये मूलविद्याया आदौ मातृकाविसरसंयोगसञ्जातेषु षट्सप्तत्यधिकपञ्चशतसंख्येषु कूटरूपेष्वाद्यं कूटं ससाध्यनामकमालिख्य त्रिकोणस्य त्रिकोणेषु अग्रादिप्रादक्षिण्येन द्वितीयादीनि त्रीणि कूटाक्षराण्यालिख्य तद्वहिः षट्सु कोणेषु अग्रादिप्रादक्षिण्येन पञ्चमादीनि षट्कूटाक्षराण्यालिख्य तद्वहिः षट्सु यन्त्रेषु एकादशाक्षरादीनि षट्कूटाक्षराणि संलिख्य एवं षोड़शाक्षराण्येकवर्गजाति समालिख्य त्रिकोणवाह्यवृत्तद्वयान्तरवीथ्यां षट्कोणवाह्यवृत्तद्वयान्तरवीथ्याञ्च कर्म्मोचितानि भूताक्षराण्यग्रादिप्रादक्षिण्येन दशदशालिख्य पद्मवाह्यवृत्तत्रयान्तरवीथीद्वये विन्दुविसर्जनीययुक्तामनुलोमप्रतिलोममातृकाञ्चान्ते साध्यादिसहितां वाह्यवीथ्यारम्भतः प्रागवद्विलिख्य प्रथमं यन्त्रं सम्पाद्यानन्तरमस्मिन्नेव

ससाध्यकर्म्मवर्णांश्च वह्निर्वृत्तान्तरद्वये ।
मातृकां विलिखेन्मायाविन्दुयुक्तां क्रमोत्क्रमात् ॥ ४७ ॥
एवं षड्विंशतिविधं यन्त्रं कुर्य्याद्विचक्षणः ।
परस्तात्तु शतेनापि षष्ट्या कूटैर्लिखेत् पविम् ॥ ४८ ॥
प्राक्प्रत्यग्दक्षिणोदक्क सूत्राण्यष्टादश क्षिपेत् ।
तैस्तु कोष्ठानि जायन्ते नवाशीतिशतद्वयम् ॥ ४९ ॥
तत्र कोणेषु कोष्ठानि द्वात्रिंशन्मार्जयेत्तथा ।
ततो वज्रं भवेन्मध्ये त्वेकषष्ट्या शतात्मकम् ॥ ५० ॥
तस्य दिक्षु त्रिकोणानि विदध्यादेककोष्ठतः ।
मध्यकोष्ठे लिखेद्विद्यां साध्याख्याकर्म्मसंयुताम् ॥ ५१ ॥
त्रिकोणेषु तु तत् कूटान्यालिखेत् साध्यवन्ति च ।
प्राग्वदारभ्य विलिखेत् प्रादक्षिण्यप्रवेशतः ॥ ५२ ॥

---

यन्त्रे वर्गक्रमतः प्रत्येकं यावत् षड्विंशतिसवर्गषोड़शाक्षरलेखनतः पूर्व्वोक्तेन यन्त्रेण सार्द्धं षड्विंशतिसंख्यानि यन्त्राणि सम्भवन्तीति ॥ ४७ ॥

परस्तादित्यादिभिः शुभमित्यन्तैः अर्द्धाद्यैः पञ्चभिः श्लोकैः मूलविद्यायाः प्रागुक्तषड्विंशतियन्त्रविनियुक्तशिष्टैः कूटरूपैः षष्ट्यधिकशतसंख्यैः कोष्ठवज्र-यन्त्रनिर्म्माणं तदनुभावञ्चोपदिशति । तत्र परस्तात् विनियुक्तकूटरूपेभ्यः । पवि-र्वज्रं । तैः सूत्रैः । द्वात्रिंशत् प्रतिकोणमिति शेषः । तथा यथा विषमवज्राकारं मध्येऽवशिष्टं भवेत् । तद्वैषम्यमेतद्यन्त्ररचनाव्याख्याने व्याख्यास्यामः । शतात्मकं शतकोष्ठात्मकमित्यर्थः । एककोष्ठतः प्रतिदिशं । विद्यां शुद्धरूपां मूलविद्यां । तत्र साध्याक्षरलेखनं ककारोदरे प्राग्वत् । कूटानीति सप्तविंशति-मवर्गप्रथमाक्षरादि प्रोक्तेषु (१) उक्तसंख्येषु आदितश्चत्वार्य्यक्षराण्यग्रकोणात् प्रादक्षिण्याच्चतुर्षु कोणेष्वालिखेदित्यर्थः । प्राग्वदारभ्य अग्रत्रिकोणोर्द्ध्वपंक्ति-कोष्ठपञ्चके मध्यकोष्ठमारभ्य त्रिकोणत्रिकोणचतुष्कलिखिताक्षरचतुष्टयो-परितनानीत्यर्थः । एतत् प्रोक्तरूपं (२) । एतत्कोष्ठवज्रयन्त्रविरचनाक्रमो यथा । प्राक्प्रत्यग्दक्षिणोदक्कसमान्तरालमाष्फालितैरष्टादशभिः सूत्रैरेकोननवत्य

---

१ । श्लोकेषु । २ । मोक्तरूपं ।

**एतद्वज्रं महद्यन्त्रं समस्तापन्निवारणम् ।**
**समस्ताभीष्टदं सर्व्वविजयश्रीप्रदं शुभम् ॥ ५३ ॥**

धिकद्विशतसंख्यानि कोष्ठानि निष्पाद्य तत्र परितः सर्व्ववाह्यपङ्क्तिं मार्जयित्वा ततश्चतसृषु दिक्षु सर्वमध्यपंक्तिपर्य्यन्तपंक्तिद्वयवाह्यरेखाद्वयाग्राणि त्रिकोणाकाराणि कृत्वा ततस्तदन्तश्चतुर्षु कोणेषु प्रतिकोणं दृश्यमानवाह्यवीथ्यां नव नवकोष्ठानि मार्जयित्वा ततस्तदन्तश्चतुर्षु कोणेषु प्रतिकोणं दृश्यमानवाह्यवीथ्यां पञ्च पञ्च कोष्ठानि मार्जयित्वा ततस्तदन्तश्चतुर्षु कोणेषु प्रतिकोणं दृश्यमानवाह्यवीथ्यां त्रीणि त्रीणि कोष्ठानि मार्जयित्वा सम्भूयैवं प्रतिकोणे द्वात्रिंशत् द्वात्रिंशत् कोष्ठानि सम्भूयास्मिन् यन्त्रे त्रिकोणवज्रमष्टविंशत्यधिकशतकोष्ठानि मार्जयेत्। एवं कृते चतसृषु दिक्षु प्रतिदिशं त्रिकोणचतुष्टयान्तरालस्थानान्तरालस्थपंक्त्या पञ्च पञ्चकोष्ठानि तदन्तरालस्थानान्तरालस्थपंक्तिद्वये प्रतिदिशं सप्त सप्त कोष्ठानि तदन्तरालस्थपंक्तौ प्रतिदिशं तत् कोष्ठसप्तकादधिकं चतुर्षु कोणेषु चत्वारि कोष्ठानि प्रतिकोणमेकैकक्रमेण पृथक् निर्गतानि भवन्ति। ततस्तदन्तरः असमचतुरस्रस्थानि (१) एकोनपञ्चाशत् कोष्ठानि चैवं सम्भूय सर्व्ववाह्यगतत्रिकोणचतुष्टयेन सार्द्धमेकषष्ट्यधिकशतसंख्यानि विषमेऽस्मिन् वज्रे यन्त्रे सम्भवन्ति। अस्य वज्रस्य मूले पूर्व्वोक्तं तथाशब्दाभिप्रेतं वैषम्यं तु (२) चतसृषु दिक्षु वाह्यतो द्वितीयतृतीयपंक्त्योः समसंख्यकोष्ठत्वं। तत्र सर्वमध्यकोष्ठे शुद्धां विद्यां प्रागृत् ककारोदरगतसाध्यादित्रयाख्यावतीमालिख्य सर्व्ववाह्यदिग्गतकोणचतुष्टये अग्रादिप्रादक्षिण्येन प्रागुक्तसंख्येषु मूलविद्यास्वरूपेषु पूर्व्वोक्तवर्गक्रमजनितषड्विंशतियन्त्रलिखितषड्विंशतिवर्गात्मषोड़शाधिकचतुःशताक्षरेभ्योऽवशिष्टेषु दशवर्गात्मसु षष्ट्यधिकशतसंख्येष्वादित (३) श्चत्वारि कूटरूपाक्षराणि प्रागवत् साध्यगर्भाणि समालिख्य तदुपरिगतपञ्चकूटादीनि षट्पञ्चाशदधिकशतसंख्यानि कूटाक्षराणि शिष्टेषु तत्संख्येषु कोष्ठेषु अग्रत्रिकोणोर्द्ध्वस्थपंक्तिगत (४) कोष्ठपञ्चकमध्यकोष्ठमारभ्य प्रादक्षिण्य-प्रवेशगत्या (५) युक्तक्रमं विद्यागर्भं सर्वमध्यकोष्टवर्जमालिखेदिति। एतद्विषमं महद्वज्रयन्त्रं प्रोक्तफलसिद्धिप्रदमिति ॥ ५३ ॥

१। असमसमचतुरस्रस्थानि।
२। वैषस्ये तु।　　३। आद्वित।
४। गते।　　५। सुक्तक्रमं।

सप्तविंशतिरुक्तानि यन्त्राण्येवं महेश्वरि ।
सप्तविंशति नक्षत्रसमान्येतानि चेदपि ॥५४॥

* * * * ॥५५॥

फलानि तेषां क्रमशो वदाम्युक्तक्रमेण वै ।
विनियोगक्रमञ्चैव सुस्फुटं परमेश्वरि ॥ ५६ ॥
प्रथमेनार्च्चितेन स्याद्रोगा नश्यन्त्यशेषतः ।
स्ववेश्मनि विधायैतत् पीठे भूमितलेऽपि वा ॥ ५७ ॥
प्रोक्तद्रव्याणि संपिष्य तत्पङ्केनाथ सुस्फुटम् ।
त्रिरात्रं सप्तरात्रं वा सप्तविंशतिरात्रकम् ॥ ५८ ॥
सम्पूज्य तत्र कुम्भन्तु विद्यौषधिजलान्वितम् ।
निधायाभ्यर्च्य गदिनमभिषिञ्चेत्ततः सुखी ॥ ५९ ॥
एवमन्यानि यन्त्राणि प्रोक्तेषु विनियोजयेत् ।
तेषां विलेखनद्रव्याण्याकर्णय वदामि ते ॥ ६० ॥
कुचन्दनं चन्दनञ्च सिन्दूरं सेन्दुरोचनम् ।
काश्मीरमगुरुं कुष्ठं एलाकक्कोलजातिभिः ॥ ६१ ॥
सर्व्वैव्वर्च्चैर्द्वादशभिर्हिमाम्बुपरिपेषितैः ।
जलैर्नक्षत्रवृक्षोत्थैः शुभैर्व्वा सूक्ष्मपेषितैः ॥ ६२ ॥
द्वितीयं विजयं प्राप्तैा विदध्यात् प्रोक्तरूपतः ।
वादे विवादे समरे द्यूतेषु च जयी भवेत् ॥ ६३ ॥

---

सप्तविंशतीत्यादिभिराप्युयादित्यन्तैः षोड़शभिः श्लोकैः सम्भूय सप्तविंशतियन्त्रैः सप्तविंशतिनक्षत्रेषु तदात्मना समर्च्चनादिकं वारेषु च तथार्च्चनं ततस्तिथिसमर्च्चनादिक्रमं चोपदिशति । तत्र सप्तविंशतियन्त्राणि अनन्तर पूर्वोक्तेन सह सप्तविंशति यन्त्राणीत्यर्थः । तेन कारणेन तान्येव सप्तविंशतिनक्षत्राण्येव विभक्त्या सार्द्धमिति शेषः । तान्येवेत्यत्र एवास्यान्वयः । साध्यं प्रागुक्तानि यन्त्राणि । तत्तद्दिनेषु तत्तद्यन्त्रप्राप्तेषु अश्विन्यादिनक्षत्रेषु । तेषां यन्त्राणाम् । परमेश्वरीति सम्बुद्धिः । स्यात्

तृतीयाद्येषु नवसु ग्रहान्नव समर्च्चयेत् ।
देव्यात्मरूपात्तेनास्य तैर्बाधा न भवेद् ध्रुवम् ॥ ६४ ॥
स्तम्भयेद्द्वादशेनाशु प्रोक्तक्रमविधानतः ।
संग्रामगमनं वर्षामुद्योगं वाचमाग्रहम् ॥ ६५ ॥
त्रयोदशाद्यैर्वक्ष्यमाणैर्यन्त्रैस्तिथिमयैरपि ।
तत्तत्तिथिषु तैः प्राग्वद्वाञ्छितानाप्नुयाद् ध्रुवम् ॥ ६६ ॥
तेषु तेषु तु यन्त्रेषु तत्तत्तिथिदिनाधिपान् ।
वारेशानपि संपूज्य तत्तत् फलमवाप्नुयात् ॥ ६७ ॥
कार्य्योद्योगेषु जातेषु वाञ्छितेष्वितरेष्वपि ।
वारर्क्षतिथिसंप्रोक्तयन्त्रे तां तैश्च दैवतैः ॥ ६८ ॥
आवृत्तामर्च्चयेदग्निरक्षोवाय्वीशदिग्गतैः ।
रोगशान्तिं समुद्योगफलाभीष्टान्यवाप्नुयात् ॥६९॥

अव्ययमिदमाख्यातप्रक्षेपकमवधारणार्थं । वा विकल्पे । प्रोक्तद्रव्याणि वक्ष्यमाणानि कुचन्दनादीनि । वा विकल्पे । तत्र यन्त्रे निधाय प्रोक्तदिवसपूजानन्तरं । सुखी गदीति शेषः । प्रोक्तेषु क्रमान्नक्षत्रेषु कार्य्येषु च वक्ष्यमाणेषु प्रोक्तेषु सेन्दुं सकर्पूरं । द्वादशभिः कुचन्दनादिनक्षत्रवृक्षोत्थैर्जलैः । शुभैः शुद्धरूपैः । वा विकल्पे सूक्ष्मपेषितैर्द्रव्यैरिति शेषः । द्वितीयं यन्त्रमिति शेषः । प्रोक्तरूपतः तत्तन्नक्षत्रादिषु तत्तद्दिनपूजनाभिषेकतः । तृतीयाद्येषु तृतीययन्त्राद्येषु नवसु यन्त्रेषु एकादशान्तेष्विति शेषः । देव्यात्मरूपात् देवीमयविग्रहात् तेन कारणेन । अस्य साधकस्य । तैर्ग्रहैः । एतद्ग्रहार्च्चनं तत्तद्वारेषु कर्त्तव्यमिति सम्प्रदायः । राहु-केत्वोर्वारौ प्राग्वत् । द्वादशेन प्रोक्तनवकात् परेण यन्त्रेणेति शेषः । प्रोक्तक्रमविधानतः तत्प्रासनक्षत्रतद्दिनार्च्चनादितः । त्रयोदशाद्यैः पूर्वोक्तात् परैः तिथिमयैः पञ्चदशसंख्याविशिष्टत्वात् । प्राग्वत् समर्च्चितैरिति शेषः । तिथि-दिनाधिपान् वक्ष्यमाणरूपान् । वारेशान् कुलसुन्दरीपटलोक्तान् द्विविधान् । तां देवीं । तैर्दैवतैः तिथ्यादीनामग्निरक्षोवाय्वीशदिग्गतैः तिथिनक्षत्रवारेशद्वय-पूज्यरूपैः प्रोक्तक्रमदिग्गतैः दैवतैरित्यत्रान्वयः । रोगशान्तिं प्रागुक्तां समस्ताम् । समुद्योगफलानि प्रारब्धकार्य्यफलानि ॥ ६९ ॥

वाराणामधिपाः प्रोक्तास्तिथिनक्षत्रदेवताः ।
ऋक्षवृक्षांस्तथा योनी निंगदे (१) परमेश्वरि ॥ ७० ॥
वह्निर्दस्रावुमा विघ्नो भुजङ्गा षन्मुखो रविः ।
मातरश्च तथा दुर्गा दिशो धनदकेशवौ ॥ ७१ ॥
यमो हरः शशी चेति तिथीशाः परिकीर्त्तिताः ।
नक्षत्रदेवताश्चापि शृणु वक्ष्ये यथाविधि ॥ ७२ ॥
अश्विनौ च यमो वह्निर्धाता चन्द्रः शिवोऽदितिः ।
गुरुः सर्पाश्च पितरः अर्य्यमा भग एव च ॥ ७३ ॥
दिनकृच्च तथा त्वष्टा मारुतेन्द्राग्निमित्रकाः ।
इन्द्रो निऋतितोयाख्यौ विश्वेदेवा हरिस्तथा ॥ ७४ ॥
वसवो वरुणः पश्चादज एकपदस्तथा ।
अहिर्बुध्नस्तथा पूषा प्रोक्ता नक्षत्रदेवताः ॥ ७५ ॥

वाराणामित्यादिभिर्गजा इत्यन्तैरेकादशभिः श्लोकैः प्रागुक्तवारदेवतास्मरणपुरःसरं तिथिनक्षत्रवृक्षनक्षत्रदेवतानक्षत्रयोनीश्चोपदिशति। तत्र प्रोक्ता कुलसुन्दरोपटले। तथा योनीर्नक्षत्रयोनीरित्यर्थः। वह्नीत्यादिना श्लोकेन तिथिदेवतासु पञ्चदशसु द्वादशदेवता उपदिशति। यम इत्यादिना श्लोकेनावशिष्टास्तिस्रस्तिथिदेवताः समुपदिश्य नक्षत्रदेवताप्रस्तावञ्च करोति। अश्विनावित्यादिना श्लोकेन सप्तविंशतिनक्षत्रदेवतासु तत्संख्यातासु द्वादशनामान्युपदिशति। तत्र शिवोऽदितिः शिवः अदितिरिति पदच्छेदः। दिनकृदित्यादिना श्लोकेन शिष्टासुपञ्च दशसंख्यासु तासु दशदेवतानामान्युपदिशति। तत्र इन्द्राग्नी इत्येकस्य नक्षत्रस्य देवते। वसव इत्यादिना श्लोकेन प्रोक्तावशिष्टदेवतापञ्चकनामोपदेशं प्रोक्तनिगमनञ्च करोति। कारस्कर इत्यादिना श्लोकेन सप्तविंशतिनक्षत्रवृक्षेपु तत्संख्येषु दशवृक्षनामान्युपदिशति। आमलकोदुम्बर इति दिव्यत्वात् सन्धिः आमलक उदुम्बर इत्यर्थः। पलाशेत्यादिना शिष्टेषु सप्तदशसंख्येषु तेषु एकादशवृक्षनामान्युपदिशति।

१। योनिमिदनी।

कारस्करश्चामलकोदुम्बरो जम्बुकस्तथा।
खदिरः कृष्णवंशौ च पिप्पलो नागरोहिणौ ॥ ७६ ॥
पलाशप्लक्षकाम्बष्ठविल्वार्ज्जुनविकङ्कताः।
वकुलः सरलः सर्जौ वञ्जुलः पनसस्तथा ॥ ७७ ॥
अर्कः शमी कदम्बश्च चूतो निम्ब स्तथाऽन्तिमे।
मधूकश्चेति संप्रोक्ता वृक्षा भानां क्रमादमी ॥ ७८ ॥
अश्वगजमजसर्पसर्पिणीश्वविड़ालिकाः।
अजामार्जारमूषाश्च मूषिका वृषमाहिषी ॥ ७९ ॥
व्याघ्रश्च महिषो व्याघ्री मृगी मृगशुनी कपिः।
गोकर्णौ (१) वानरी सिंही तुरगा सिंहगोगजाः ॥ ८० ॥
यदा रोगादि दुःखार्त्तिर्भवेत्तदर्द्धकैर्दिनैः।
मूक्रतैः संख्ययाहोभिः शान्तिः स्याद्दिगुणेन वा ॥ ८१ ॥

---

अर्केत्यादिना श्लोकेन प्रोक्तावशिष्टषड् वृक्षनामोपदेशं प्रोक्तनिगमनञ्च करोति। अत्र अन्तिमे मधूक इत्यन्वयः। रेवत्यां मधूक इत्यर्थः। भानां नक्षत्राणाम्। अश्वमित्यादिना श्लोकेन सप्तविंशतिनक्षत्रयोनिषु तत् संख्यासु त्रयोदशयोनिनामानि उपदिशति। तत्र श्वविड़ालिका श्वा च विड़ालिका चेत्यर्थः। वृष महिषी वृषश्च महिषी चेत्यर्थः। व्याघ्र इत्यादिना श्लोकेन शिष्टयोनिनामान्युपदिशति। तत्र महिषव्याघ्री महिषश्च व्याघ्री चेत्यर्थः। मृगशनी मृगशन्याविति उत्तरार्द्ध-पदम्। अत्र तिथिदेवतादिनक्षत्रयोन्यन्तानां सर्वेषां नामानि गुरुमुखादवगन्तव्याणि ॥ ८० ॥

यदेत्यादिना श्लोकेन ज्वरादिरोगारम्भे समयज्ञानेन रोगशान्तिसमयज्ञानोपायमुपदिशति। तत्र एतदुक्तं भवति यदा ज्वरादिरोगारम्भस्तदा यस्मिन्नक्षत्रे यावत्संख्याघटिकागतास्तत्संख्यैरहोभिर्वा तदर्द्धसंख्यैरहोभिर्वा रोगमुक्तिं जानीयादिति। अत्र सौम्येषु नक्षत्रेषु रोगारम्भश्चेत् प्रोक्तक्रमतो रोगशान्तिः। क्रूरेषु नक्षत्रेषु चेद्‌ रोगिणो देहत्याग इति सम्प्रदायः ॥ ८१ ॥

---

(१) गोखश्वो।

आधारे पञ्च यन्त्राणि स्वाधिष्ठाने चतुष्टयम् ।
प्रोक्तेषु भावयेत्तानि तावन्ति मणिपूरके ॥ ८२ ॥
अनाहते ततः पञ्च यन्त्राणि परिभावयेत् ।
विशुद्धाख्ये च चत्वारि पञ्चाज्ञायामिति क्रमात् ॥८३॥
तत्तत्तिथिदिनेष्वेवं भावयेत् षोड़शीं शिवाम् ।
तत्तच्चक्रगताः सर्वा भावयेत् सर्वसम्पदे ॥८४॥
आधारादिषु चक्राणि भावयेदुक्तयोगतः ।
नतु सर्वत्र सर्व्वाणि भावयेन्न कदाचन ॥८५॥
भावनायामशक्तानां तत्तद्यन्त्राद्बहिस्तथा ।
प्रोक्तान्याधारपद्मानि कृत्वा तत्रार्चयेच्छिवाम् ॥८६॥
एवं दिनेषु वारेषु नक्षत्रेषु त्रिषु क्रमात् ।
संपूज्य देवीमिष्टानि प्राप्नुयात् प्रोक्तवासरैः ॥८७॥

---

आधारेत्यादिभिः कदाचनेत्यन्तैश्चतुर्भिश्लोकैः प्रोक्तानां सप्तविंशतिसंख्यानां यन्त्राणां मूलाधारादिषु षट्स्वाधारेषु उक्तविभेदक्रमप्राप्तं यन्त्रं विभावयतः फलावाप्तिमुपदिशति। तत्र प्रोक्तेषु सप्तविंशतिसंख्येषु। तावन्ति चत्वारि इत्यर्थः। इति क्रमात् प्रथमयन्त्रादिक्रमतः। तत्तत्तिथिदिनेषु यन्त्रप्राप्तेषु। एतदुक्तं भवति प्रथमादीनां यन्त्राणां प्रोक्तसंख्याविभिन्नानां तत्तद्यन्त्रप्राप्ततिथिदिनेषु मूलाधारादिषु प्रतिदिनमेकैकस्य भावनमिति। षोड़शीं चित्रानित्यां शिवां ध्यायतः। नतु सर्वत्र सर्वाणि सर्वाधारेषु सर्वाणि यन्त्राणि स्वेच्छया प्रोक्तसंख्याविभागेन भावनीयानि। उक्त प्रथमादिविभेदक्रमतः प्रोक्तेषु प्रोक्तान्येव भावनीयानि॥ ८५ ॥

भावनायामित्यादिना वासरैरित्यन्तेन श्लोकद्वयेनाधारेषु भावनायामशक्तानां वहिस्तत्तदाधारपद्मानि प्रागवत् कृत्वा तत्तन्मध्ये तत्तत्प्राप्तं यन्त्रमालिख्य तत्तत्तिथिवारनक्षत्रेषु देवीं समाराध्य प्रोक्तवासरैः प्रागुक्त सप्तविंशत्या दिनैः। (१) प्रोक्तानि फलान्यवाप्नुयादित्युपदिशति ॥ ८७ ॥

---

(१) प्रागुक्त त्रिसप्ताद्यदिनैः।

बलिञ्च दद्यात्तेष्वेव वासरेषु यथाविधि ।
पञ्चाशन्मिथुनानाञ्च प्रोक्तचक्रेऽद्रिरालके ॥८८॥
मध्याह्ने सन्ध्ययोश्चापि चक्रस्थानामपीश्वरि ।
मिथुनोक्तक्रमे शक्तिमन्त्रवच्चक्रगामिनाम् ॥८९॥
कूटानां मन्त्ररूपाणि प्रोक्तानि स्फुटमीश्वरि ।
तैस्तेषां तेषु कालेषु बलिं दद्यात्तथेरितैः ॥९०॥
देव्यास्त्वनुग्रहप्रोक्तनिर्वेद्यैः शिक्थकं महत् ।
विधाय तस्य मध्ये तु कृत्वा दीपं घृताप्लुतम् ॥९१॥
विधाय तत्तन्मन्त्रैस्तु विदध्यात्तान्यनुक्रमात् ।
प्रत्येकं देवतानां वा मिथुनानामथापि वा ॥९२॥
दद्यादपूपपनसमोचाघृतगुडान्वितम् ।
कुल्माषपायसान्नेन व्यञ्जनं छागमांसयुक् ॥९३॥
इत्थं कार्य्यस्य गुरुतालाघवापेक्षया दिनैः ।
साधयेत् सप्तभिः पक्षान्मासान्मण्डलतोऽपि वा ॥९४॥
मिथुनानां बलिं दद्यात् प्रतिमासं गृहेऽर्चयेत् ।
प्रत्यब्दं वा गृहे मन्त्री जीवेदाद्यामहोदयः ॥९५॥

---

बलिमित्यादिभिर्नरा इत्यन्तैर्नवभिः श्लोकैर्देव्याः प्रागुक्तपञ्चाशन्मिथुनानाञ्च बलिदानप्रकारं तत्फलानि चोपदिशति । तत्र तेष्वेव वासरेषु प्रोक्तयन्त्रप्रयोगवासरेषु । अन्यदपि मङ्गलार्थं अमङ्गलप्रतिघातार्थञ्च नित्यशश्च पञ्चाशन्मिथुनबलिप्रदानं कुर्य्यादिति सम्प्रदायः । पञ्चाशन्मिथुनानां षोड़शपटलोक्तानां प्रोक्तचक्रे तत्रैवोक्ते । एतदुक्तं भवति षोड़शपटले अष्टनवतितमश्लोकोक्तचतुःषष्टिपदे चक्रे मध्यतश्चतुष्कोष्ठान्येकीकृत्य तत्र दिननित्यां साध्यगर्भामालिख्य वह्निरश्यादिप्रादक्षिण्यनिर्गमन घटिकाक्रमतो मिथुनानामर्चनबलिप्रदानादि कुर्य्यादिति । सन्ध्ययोः प्रातःसायन्तन्योः । चक्रस्थानां कूटविद्याशक्तीनां मूल (१) शक्तिसहितानां बलिं दद्यादित्यत्रान्वयः । ईश्वरीति देवीसम्बुद्धिः । शक्तिमन्त्रवत् मिथुनोक्त-

(१) भूत ।

एवं कालात्ममिथुनवलिदानेन पूजनात् ।
स्मरणात् कीर्त्तनात् सर्ववाञ्छितानाप्नुयुर्नराः ॥९६॥
मिथुनानां वलिद्रव्याख्याकर्णय महेश्वरि ।
यैस्तुष्टिं प्राप्य तान्याशु प्रयच्छन्त्यभिवञ्छितम् ॥९७॥
दशानां पायसं दद्याद्दशानान्तु गुडौदनम् ।
पञ्चानां मुद्गभिन्नान्नं पञ्चानां दधिभक्तकम् ॥९८॥
दद्यादपूपं पञ्चानां पञ्चानां क्षीरशर्करे ।
पञ्चानां नारिकेलस्य फलक्षोदं गुडान्वितम् ॥९९॥
पञ्चानां सितभक्ताभ्यां मोचाफलमुदीरितम् ।
मिथुनार्चारतो नित्यं योऽसौ स्यान्मान्त्रिकाग्रणीः ॥१००॥

---

शक्तिमन्त्ववत् । चक्रगामिनां कूटानामित्यत्रान्वयः । एतदुक्तं भवति—पूर्वं पञ्चाशन्मिथुनशक्तिविद्यावदत्रोक्तयन्त्रगतविद्याकूटशक्तीनामपि प्रोक्ताभिः प्रत्येकं पञ्चदशाक्षराभिः कूटसहिताभिर्विद्याभिः पूजनं वलिदानञ्च कुर्य्यादिति । ताः विद्या यथा प्रथमं वीजद्वयपूर्वं तत्तत्कूटमुच्चार्य्य ततो रूपिणीशक्तीत्युक्त्वा ततः समाचरीं वदेत् तेन पञ्चदशाक्षर्य्यः षट्सप्तत्यधिकपञ्चशतविद्याः सम्भवन्ति । तैर्मन्त्रैस्तेषु कालेषु प्रागुक्तसन्ध्यात्रयादिषु । ईरिते वक्ष्यमाणैर्द्व्याश्रितानित्यायाः अनुग्रहप्रोक्तनैवेद्यैः षोड़शे पटले नवतितमश्लोकोक्तपायसान्नगुडान्नभिन्नान्नहरिद्रान्नतिलान्नकेवलगुडान्नैरित्यर्थः । शिक्थकं पिण्डमित्यर्थः । प्रत्येकमित्यादिनैतदुक्तं भवति प्रधानदेवताया एव षड्भिः समेतैर्वा तस्यास्तत्परिवाराणामपि वा तस्यास्तत्परिवाराणां मिथुनानामपि युग्मस्य एकमेकं वा पृथक् पृथगिति वा वलिदाने पञ्चत्रयचतुष्टयमुक्तं भवतीति । अपूपादिद्रव्यनवकं पूर्वोक्तनिवेद्यद्रव्यसहितं भवति । तन्नामानि गुरुमुखादवगन्तव्याणि । अपि वा विकल्पे । वा विकल्पार्थः । स्मरणान्मिथुनानां कालरूपित्वानुसन्धानात् ॥९६॥

मिथुनानामित्यादिभिरग्रणीरित्यन्तैश्चतुर्भिः श्लोकैर्मिथुनवलिद्रव्याणि नित्यदेयानि तदर्चनफलं चोपदिशति । तत्र वलिद्रव्याणि नित्यदेयानि प्रयोगदेयानि

अहङ्कारमयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निष्फालनाच्चित्ते तत्तत्त्वं स्वात्मसात् कृतम् ॥१०१॥
इति नित्यातन्त्रे श्रीकादिमते एकविंशति-
पटलं परिपूर्णम् ।

---

च । दधिभक्तकं दधिमिश्रमन्नमित्यर्थः । सितभक्ताभ्यां मोचाफलं शर्करा-मिलितान्नकदलीफलानीत्यर्थः । एतान्येव नित्यवलिप्रदाने च मिथुनानां द्रव्याणि । असौ अर्चकः ॥१००॥

इति षोड़शनित्यातन्त्रे श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसारसिंह-
राजप्रकाशाभिधानेन सुभगानन्दनाथेन विरचितायां मनोरमाख्यायां
व्याख्यायां चित्रानित्याविद्याविधानप्रकाशनपरमेकविंशतितमं
पटलम् परिपूर्णं परामृष्टम् ॥ २१ ॥

ग्रन्थसंख्या—सप्तविंशतियन्त्राणि व्याख्याग्रन्थाः शतद्वयम् ।
पादाधिकाद्युत्तराः स्युः पटले त्वेकविंशके ॥

---

## द्वाविंशपटलम् ।

अथ षोड़शनित्यानां या प्रोक्ता बलिदेवता ।
सा विद्या कुरुकुल्लायाः पञ्चविंशाक्षरोदिता ॥ १ ॥
सैव त्रिखण्डा तत्रैव प्रोक्ता विद्या तु संख्यया ।
सप्तभिः प्रथमा प्रोक्ता त्रयोदशयुता पुरा ॥ २ ॥
तृतीया सा पञ्चविंशदक्षरा सकलेष्टदा ।
एवं सा त्रिभिरप्येतैर्विद्यारूपैरभीष्टदा ॥ ३ ॥
इक्षुसुराघृतदुग्धाब्धिमध्यगे नवरत्नके ।
द्वीपे तां ललितां नित्यविनोदानन्दितां यजेत् ॥ ४ ॥

---

पूर्वस्मिन्नेकविंशे पटले षोड़श्याश्चित्रानित्याया विधानमुपदिश्यानन्तरं सर्वासां नित्यानां बलिदेवतायाः स्वस्मात् स्वस्मात् अपृथग्भूतायाः कुरुकुल्लाया विधानमुपदिशति अथ षोड़शनित्येत्यादिना तदित्यन्तेन श्लोकशतरूपेण द्वाविंशेन पटलेन। तत्र अथ षोड़शेत्यादिभिरभीष्टदा इत्यन्तैस्त्रिभिः श्लोकैः कुरुकुल्लाविद्यायास्तृतीयपटलोक्तस्वरूपं त्रैविध्यं तेषां त्रयाणां खण्डानां (१) प्रत्येकं तत्रोक्तामक्षरसंख्यां तद्देवताया वाञ्छादायित्वञ्चोपदिशति। तत्र पञ्चविंशाक्षरोदिता तृतीये पटले इति शेषः। तत्र पञ्चविंशाक्षरा प्रथमद्वितीयखण्डप्रकृतिरूपा तृतीयखण्डभूता मूलविद्येत्यर्थः। सैव पञ्चविंशाक्षरैव। त्रिखण्डा त्रिरूपभेदा। तत्रैव तृतीयपटल एव। तृतीया सा सा खण्डद्वयमूलभूता विद्या तृतीयखण्ड इत्यर्थः। सा कुरुकुल्ला ॥ ३ ॥

इक्ष्वित्यादिना तीरपालिकामित्यन्तेन अध्यर्द्धश्लोकेन सर्वाङ्गिनित्याया ललितायाश्चतुर्थादिपटलत्रयप्रोक्तपूजाक्रमस्मारणेन अत्र अस्याः कुरुकुल्लायाः तदङ्गत्वमभिप्रैति। तत्र नित्यविनोदानन्दितां सङ्गीतादिभिः। तत्तीरेत्यादिना श्लोकपूर्वार्द्धेन प्रसङ्गतस्तस्या ललिताया अङ्गभूतामुपरितनपटलवक्ष्यमाणविधानमस्याः कुरुकुल्लायाः पूर्वमेवाभ्यर्चनीयत्वात् पञ्चमीं वाराहीं यजेदिति प्रस्तौति। तत्र तत्तीरे इक्षुसागरतीरे तस्य चतुर्णां प्रथमत्वात्। "इक्षुसागरवेलायां वाराहीमर्चयेत् ततः" इत्यागमान्तरोक्तत्वाच्च। तत्र तस्याः समवस्थानं दक्षिणपश्चिमकोणदिक् प्रदेशे ललिताभिमुखमिति सम्प्रदायः ॥ ४ ॥

---

(१) षोडशानां।

तत्तीरे पूजयेद्देवीं पञ्चमीं तीरपालिकाम् ।
तत्सागरेषु परितो रत्नपोतचरीं यजेत् ॥ ५ ॥
तदाज्ञया रत्नपोतं तन्नाम्नैव समर्च्चयेत् ।
वलिचक्रञ्च तेनैव तन्मध्ये च समर्च्चयेत् ॥ ६ ॥
पूर्वपश्चिमदिग्द्वारसंयुतं चतुरस्रकम् ।
कृत्वा तदन्तः पद्मञ्च साष्टपत्रं सकर्णिकम् ॥ ७ ॥
कर्णिकायां चारु कृत्वा नवयोनिं समर्च्चयेत् ।
षड़ङ्गं वालया कृत्वा तेनार्घ्यमपि साधयेत् ॥ ८ ॥९॥

---

तत्सागरेष्वित्यादिना समर्च्चयेदित्यन्तेनार्द्धाद्येन श्लोकेनास्याः कुरुकुल्लायाः पूजाप्रस्तावपूर्वकं तत्र रत्नपोतवलिचक्रार्चनमुपदिशति। तत्र तत्सागरेषु पञ्चम्यधिष्ठित तत्तीरसागरादिषु । रत्नपोतचरीं कुरुकुल्लां । तत्र तदाज्ञया तीरपालिकायाः पञ्चम्याः समनुज्ञया सागरेषु तस्याः कुरुकुल्लायाः पूजनं समवस्थानमिक्षुसागरे उत्तरपश्चिमकोणे । रत्नपोतचरीमितुरक्त्या साधकाभिमुखमिति सम्प्रदायः । तत्तु दक्षिणपश्चिमकोणे पञ्चम्याः समवस्थानात् । रत्नपोतं रत्ननिर्म्मितप्रवहणरूपं अद्यतनप्रवहणस्वरूपवदिति सम्प्रदायः। तन्नाम्नैव रत्नपोतनाम्नैव नमोऽन्तेन वक्ष्यमाणविसर्जनीयद्वन्द्वलेखापूर्वेण। यथा क्रोः रत्नपोताय नमः इति समर्च्चयेत् । वलिचक्रञ्च वक्ष्यमाणरूपं। तेनैव नाम्नैव प्राग्वन्नमोऽन्तेन विसर्जनीयशक्त्याद्येन । यथा क्रोः वलिचक्राय नमः इति समर्च्चयेत्। तन्मध्ये रत्नपोतमध्ये ॥ ६ ॥

पूर्वेत्यादिना समर्च्चयेदित्यन्तेनाध्यर्द्धेन श्लोकेन देव्याः कुरुकुल्लायाः नित्यसपर्य्याचक्रमुपदिशति। तत्र पूर्व्वपश्चिमदिग्द्वारसंयुतमित्यत्र शाखानिर्म्माणानुक्तावपि उत्तरत्र दक्षशाखादोतुरक्त्या प्रतिद्वारं शाखाद्वयोपेतत्वं चतुरस्रस्योक्तमिति सम्प्रदायः। चारु यथामानं। एतदुक्तं भवति प्राक्पश्चिमतः सशाखाद्वयद्वारयुग्मं समचतुरस्रद्वयं कोणेषु दिक्षु च देवतास्थानचिह्नितं विधाय तन्मध्यस्थलद्वयोपेतमष्टदलं पद्मं कृत्वा तस्य कर्णिकायां नवयोनिचक्रं प्रागुक्तचतुस्त्रिपञ्च चतुरंशैः विधाय तन्नाममन्त्रेण तदर्च्चयेदिति ॥ ८ ॥

षड़ङ्गमित्यादिना श्लोकोत्तरार्द्धेन षड़ङ्गन्यासमर्घ्यसाधनञ्चोपदिशति। तत्र वालया कुलसुन्दरीविद्यया सजातिकयेति शेषः। तेन षड़ङ्गेन मूलविद्यया पञ्चविंशत्यक्षरया त्रिवारादक्षोनमभ्यर्च्चयेच्च ॥ ८ ॥

त्रिखण्डमुद्रया मूलमन्त्रेणाद्येन चावहेत् ।
ध्यात्वेत्थं परिवारैस्तां देवीं गन्धादिभिः क्रमात् ॥ १० ॥
विकीर्णकुन्तलां नग्नां रक्तामानन्दविग्रहाम् ।
दधानां चिन्तयेद्बाणं चापपाशसृणीः करैः ॥ ११ ॥
तत् समानायुधाकारवर्णा देव्यस्तु वाह्यगाः ।
ऋतुस्नाताः स्फुरद्योन्यः सदानन्दारुणेक्षणाः ॥ १२ ॥
हृल्लेखया स्थापनादीनुपचारान् समाचरेत् ।
ततस्तदाज्ञया रोहे भ्रामिणीं द्राविणीं यजेत् ॥ १३ ॥
पश्चिमद्वारमारभ्य दक्षशाखादि पूजयेत् ।
सूर्य्यसोमं तिथिवारं योगर्क्षकरणान्यपि ॥ १४ ॥

---

त्रिखण्डेत्यादिभिरीक्षणा इत्यन्तैस्त्रिभिः श्लोकैरावाहनमुद्रामन्त्रपुरःसरं देव्याः सपरिवाराया नित्यसपर्य्याध्यानमुपदिशति। तत्र आद्येन सप्ताक्षररूपेण मन्त्रेणेति शेषः। इत्थं वक्ष्यमाणरूपतः। गन्धादिभिर्यजेदिति शेषः। नग्नां दिगम्बरां देव्या दिगम्बरत्वकथनं सचि (म्बि) दानन्दमयत्वात्। अनावृतत्वमित्यपस्करः सम्प्रदायार्थः। आनन्दविग्रहां सम्बिदानन्दरूपत्वात्। आयुधक्रमस्तु स्वदक्षिणाधरादित उत्तरान्तं अप्रादक्षिण्यात्। ऋतुस्नाताः स्फुरद्योन्यः एतद्देव्या अपि साधारणं तस्याः ऋतुस्नातत्वस्फुरद्योनित्वकथनं प्रागुक्तसच्चिदानन्दमयत्वनित्योल्लासातिशयत्वमिति सम्प्रदायः। अस्या ललिताङ्गत्वपूजनेऽपीत्थं तदेव ध्यानं नतु तत्समानमिति च सम्प्रदायः॥ १२॥

हृल्लेखेत्यादिभिः पूजयेदित्यन्तैरध्यर्द्धैः षड्भिः श्लोकैर्देव्या उपचारपूर्वं सावरणचतुष्टयनित्यसपर्य्याक्रममुपदिशति। तत्र हृल्लेखया सविसर्जनीययेति सम्प्रदायः। तया तत्तन्मन्त्रादिगतया अत्र सर्व्वशक्तीर्यजेदिति। स्थापनादीन् आदिशब्दः सन्निरोधादिविषयः। उपचारान् अर्घपाद्यादीन्। तदाज्ञया देव्याज्ञया। भ्रामिणीं द्राविणीं यजेत्। तयोरवस्थानन्तु रत्नपोतपूर्व्वपश्चिमकोण्योः। दक्षशाखादि देव्याः पश्चिमाभिमुखाया दक्षिणपार्श्वशाखादिप्रादक्षिण्याच्च। यक्षिणीश्चेत्यत्र वहुवचनान्तं तासां षट्त्रिंशत् संख्याविशिष्टत्वात्। तन्मन्त्रो यथा। ह्रीः यक्षिणीरूपिणीशक्तिपादुकाः पूजयामि इति। अन्यासां तत्तन्नामान्ते पादुकां

यक्षिणीश्च तथा तारां पूर्वद्वारस्य शाखयोः ।
व्योमवाय्वग्नितोयक्ष्मारूपिणीशक्तिसंयुतम् ॥ १४ ॥
शब्दस्पर्शञ्च रूपञ्च रसगन्धञ्च पूर्ववत् ।
प्राणान् बुद्धिं तथाशक्तिमष्टपत्रेषु पूजयेत् ॥ १५ ॥
तदन्तरष्टकोणेषु वाग्देव्यष्टकमर्चयेत् ।
ततो वाणान् धनुःपाशमङ्कुशञ्चाभितो यजेत् ॥ १६ ॥
मध्यत्रिकोणकोणेषु सेच्छाज्ञानक्रियात्मिकाः ।
शक्तीर्यष्ट्वाथ तन्मध्ये सम्बिदासनमर्चयेत् ॥ १७ ॥
ततस्तां पञ्चविंशार्णमूलमन्त्रेण पूजयेत् ।
ततस्तदाज्ञया पीतपरीतं द्वीपमागतः ॥ १८ ॥
पश्चिमं पुष्परागञ्च संप्राप्यावतरेत् क्रमात् ।
परीयमाणे दिक्षु तानर्चयेत्तत्र तत्र वै ॥ १९ ॥
इक्षुसिराघृतदुग्धाब्धीन् पश्चिमादि विलोमतः ।
नमोऽन्तैर्नामभिः पूर्व्वं पूजयेद्गन्धपुष्पकैः ॥ २० ॥

---

पूजयामीति क्लीः व्योमरूपिणीशब्दशक्तिपादुकां पूजयामीत्यादयः शब्दादीनां मन्त्रा वोद्धव्या इति। पूर्व्ववत् अग्न्यादिप्रादक्षिण्येन तथा रूपिणीशक्त्यादिसहितम् अर्चयेत्। अग्न्यादिप्रादक्षिण्येन अभितः प्राग्वन्मध्यत्रिकोणाद्वहिरभितस्तत्तद्‌ङ्गजान्ति-केष्वप्रादक्षिण्येन यद्वा प्राग्वत् क्रमात्तन्मध्ये त्रिकोणमध्ये। सम्बिदासन-मिति देवताया भर्त्तृभूतं सम्बिदात्मकं पुरुषमिति सम्प्रदायः। तत्र देवता-स्थानप्रकारस्त्वावरणशक्तीनामवस्थानप्रकारश्च गुरुमुखादेवावगन्तव्यः। तन्मन्त्रो यथा क्लीः सम्बिदासनाय नमः इति। पञ्चविंशार्णमूलमन्त्रेण खण्डद्वयप्रकृति भूतेन तृतीयेनेत्यर्थः ॥ १८ ॥

तत इत्यादिना पुष्पकैरित्यन्तेनार्द्धाधेन श्लोकद्वयेन देव्याः प्रधानदेवतारूप-ललिताङ्गत्वेन स्थितिमिक्ष्वादिसागरपूजाञ्चोपदिशति। तत्र तदाज्ञया कुरुकुल्ला-ज्ञया परीतं भवेदिति शेषः। पश्चिमं पुष्परागमिति ललितादेव्या नित्यपूजा-पटलोक्तनवरत्नद्वीपाग्रखण्डस्य पुष्परागमयत्वात् तत् स्मारयति। परीयमाणे परितो

नवरत्नमयं द्वीपमित्यादि प्रागुदीरितम् ।
एवं समर्चितं देव्या ललितायाः प्रियङ्करम् ॥ २१ ॥
एवं देवी पूजयितुः शीघ्रं वहु मनीषितम् ।
प्रसीदति यतस्तस्मात् पूजयेदेवमीश्वरि ॥ २२ ॥
देवीनां कुरुकुल्लान्तु तोयादुपरि पूजयेत् ।
पञ्चविंशार्णमूलेन पूजान्ते परमेश्वरि ॥ २३ ॥
देव्या वलिः समाख्यातस्ताराशक्तेस्तु विद्यया ।
तां शृणु त्वं प्रिये वच्मि ताराविद्यां दशाक्षरीम् ॥ २४ ॥
भूः खेन मरुता युक्तो रयो दाहस्वरान्वितः ।
रयो धरान्वितः पश्चाद्रययुग्मं मरुद्युतम् ॥ २५ ॥
एतत्तृतीयं षष्ठं स्याच्चतुर्थं सप्तमं भवेत् ।
षष्ठं तदष्टमं विद्यात् हृदम्बुमरुदन्वितम् ॥ २६ ॥

---

भ्राम्यमाणे तत्र तत्र प्रदेशे इति शेषः। पश्चिमादि विलोमतः प्रोक्तक्रमेण इक्षुसागरादीन् नमोऽन्तैर्नामभिः पूर्वं पूर्वमिति वीजद्वयं स्मारयति वीजद्वयं नामभिरादौ संयोज्य तैरित्यर्थः। तन्मन्त्रा यथा क्लीं श्रीं इक्षुसागराय नमः इत्यादयः॥ २०॥

नवरत्नमयमित्यादिना ईश्वरीत्यन्तेन श्लोकद्वयेन ललिताया देव्याः समाराधन विशेषे फलविशेषमुपदिशति। तत्र प्रागुदीरितं ललितानित्यपूजनोपदेशे प्रोक्तरूपतः। एवं प्राग्वत्। प्रसीदति प्रयच्छति देवी इति शेषः। ईश्वरीति देवीसम्बुद्धिः॥ २२॥

देवीनामित्यादिना श्लोकेन कुरुकुल्लाया देव्याः स्वतन्त्रपूजाक्रमसुपदिशति ॥२३॥

देव्या इत्यादिभिः परमेश्वरीत्यन्तैश्चतुर्भिः श्लोकैर्देव्याः कुरुकुल्लायाः स्वतन्त्रनित्यपूजायां वलिं तद्विद्यां दशाक्षरीं तथा वलिदानञ्चोपदिशति। तत्र देव्याः कुरुकुल्लायाः भूः खेन युक्तेति शेषः ॐ इति। मरुता युक्तो रयः ता इति। दाहस्वरान्वितः रे इति। रयो धरान्वितः तु इति। रययुग्मं मरुद्युतं ता इति। एतत्तृतीयं षष्ठं स्यात्। एतस्या एव विद्यायाः रे इति तृतीय-

हंसश्च मरुता युक्तः प्रोक्ता विद्या दशाक्षरी ।
अनयास्या वलिं दद्याद्विद्यया परमेश्वरि ॥ २७ ॥
ध्यानं देव्याः शृणु प्राज्ञे समस्तापन्निकृन्तनम् ।
अस्यास्तोयेषु सर्व्वत्र वाधो न भवति स्मृतः ॥ २८ ॥
श्यामवर्णां विनयजां द्विभुजां वरपङ्कजे ।
दधानां बहुवर्णाभिर्व्विहरूपाभिरावृताम् ॥ २९ ॥
शक्तिभिः स्मेरवदनां रत्नमौक्तिकभूषणाम् ।
रत्नपादुकयोः न्यस्तपदाम्बुजयुगां स्मरेत् ॥ ३० ॥
होमं कुर्य्यान्नित्यशस्तु घृताक्तै रक्तपुष्पकैः ।
सुगन्धिभिः सितैः पुष्पैरन्नाज्याभ्यां घृतेन वा ॥ ३१ ॥
प्राग्वद्व्रतयुतो विद्यां पञ्चविंशति लक्षकम् ।
जपित्वा पूजयेत् सन्ध्यास्वथ तर्पणहोमकम् ॥ ३२ ॥

---

मक्षरमेवास्याः षष्ठमक्षरं स्यादित्यर्थः । चतुर्थं सप्तमं । अस्या एव विद्यायाश्चतुर्थं तुकाराक्षरमेवास्याः सप्तममक्षरं भवेदित्यर्थः । षष्ठं तदष्टमं । अस्या एव विद्यायाः षष्ठं रेफ रे इत्यक्षरमेवस्या अष्टममक्षरं विद्यात् जानीयादित्यर्थः । हृदम्बुमरुदन्वितं स्वा इति नवममक्षरं । हंसश्च मरुता युक्तः हा इति दशममक्षरं भवति । अनया प्रोक्तया दशाक्षर्य्या अस्याः, कुरुकुल्लायाः वलिम् अतएव विद्यया । ताराशक्तेः सर्व्वपूजादौ षोड़शार्णेन वलिरिति सम्प्रदायः । परमेश्वरीति देवीसम्बुद्धिः ॥ २७ ॥

ध्यानमित्यादिभिः स्मरेदित्यन्तैस्त्रिभिः श्लोकैर्वलिदेवतायाः ताराशक्तेर्वलिसमयध्यानमुपदिशति । तत्र अस्यास्ताराशक्तेः यस्मात् कारणात् स्मृतेः वक्ष्यमाणध्यानादित्यर्थः । वरपङ्कजे वामदक्षिणाभ्यां । शक्तिभिः आवृतामिति पूर्व्वत्रान्वयः । न्यस्तपादाम्बुजयुगां वलिग्रहणार्थमभिमुखमायान्तीमित्यर्थः ॥ ३० ॥

होममित्यादिना श्लोकेन देव्याः कुरुकुल्लाया नित्यहोमद्रव्याण्युपदिशति । तत्र वा विकल्पे ॥ ३१ ॥

प्राग्वदित्यादिना क्रियामित्यन्तेनाध्यर्द्धेनैकेन श्लोकेन पञ्चविंशत्यर्णाया मूल-

कुर्य्यान्नित्योदितेष्वन्यतमेन हवनक्रियाम् ।
एवं संसिद्धविद्यस्तु नित्यार्च्चानिरतस्तथा ॥ ३३ ॥
प्रयोगानाचरेद्भक्त्या काम्यान् प्रोक्तक्रमेण वै ।
होमेन पूजया यन्त्रभावनेन च तान् शृणु ॥ ३४ ॥
घृताक्तैः सर्षपैर्होमाद्वशयेद्वनिताजनम् ।
सर्षपस्नेहसंसिक्तैर्मरिचैरानयेच्च ताः ॥ ३५ ॥
तैलाक्तैस्तु तिलैर्होमान्मध्यरात्रे यथाविधि ।
नारीनरनृपानन्यान् वशयेत् यावदायुषम् ॥ ३६ ॥
अजाघृताक्तैर्बन्धूककुसुमैर्मध्यरात्रके ।
हवनाद्वनिताः सर्व्वा मोहयेत् प्रेमकौतुकैः ॥ ३७ ॥
क्षीराक्तैर्मल्लिकापुष्पैर्हवनाद्ब्राह्मणान्नृपान् ।
वशयेच्छतपत्रैश्च तथा विचकिलैः शुभैः ॥ ३८ ॥
सवत्ससितगोदुग्धसमेतैर्नारिकेलजैः ।
फलक्षोदैः सितयुतैर्हवनात् स्वर्णमाप्नुयात् ॥ ३९ ॥
नारिकेलफलक्षोदैर्गुड्क्षौद्रघृताहुतैः ।
प्रागुक्तकालतो वित्तनिचयं समवाप्नुयात् ॥ ४० ॥
कदलीफलहोमेन स्याद्दाद्योऽम्बुजहोमतः ।
कह्लारहोमतोऽभीष्टं लभते कुमुदद्वयैः ॥ ४१ ॥

---

विद्यायाः पुरश्चरणमुपदिशति । तत्र व्रतं संकल्पः । विद्यां पञ्चविंशत्यक्षरां नित्योदितेष्वन्यतमेन नित्यहोमोक्तेषु रक्तपुष्पादिष्वन्यतमेन ॥ ३२ ॥

एवमित्यादिना शृण्वित्यन्तेनार्द्धाधिकेन श्लोकेन कृतपुरश्चरणस्यैव प्रयोगयोग्यतां प्रयोगप्रकारांश्चोपदिशति । तत्र नित्यार्च्चानिरतः पुरश्चरणानन्तरमपि । तान् प्रयोगान् ॥ ३४ ॥

घृतेत्यादिभिः कुमुदद्वयैरित्यन्तैः सप्तभिः श्लोकैः चतुर्द्दशभिर्द्रव्यैर्होमात् नानाफलप्राप्तिमुपदिशति । तत्र ता वनिताः । तैलाक्तैस्तिलस्नेहाक्तैः । अन्यान्

उत्पलैः पूजयेद्देवि समस्तापद्विमुक्तये ।
पद्मैः सितैर्लोहितैश्च पूजयेदिन्दिराप्तये ॥ ४२ ॥
कुमुदाभ्यां यजेद्वित्तलाभकामनया तथा ।
जपावन्धूककुसुमैस्तथा दाड़िमजैरपि ॥ ४३ ॥
सौगन्धिकैर्विचकिलैः कुटजैः शतपत्रकैः ।
पुन्नागजैः पाटलैश्च चम्पकोत्थैर्यजेच्छिवे ॥ ४४ ॥
सप्तभिः सप्तवारेषु भास्करादिषु पूजयेत् ।
प्रोक्तकालेषु वित्ताढ्यो धराधान्यांशुकादिमान् ॥ ४५ ॥
चन्दनैरर्च्चयेन्नित्यं समस्तमपि वाञ्छितम् ।
लभते प्रोक्तकालेन तथा कालागुरुद्रवैः ॥ ४६ ॥
कुङ्कुमैर्नित्यशः पूजां कुर्य्यात् सौभाग्यसिद्धये ।
कर्पूरैरायुषः सिद्ध्यै वश्यस्त्रीधनसिद्धये ॥ ४७ ॥
मृगस्वेदमदाभ्याञ्च पूजयेन्मासमात्रकम् ।
कन्दर्पसमसौभाग्यो वनितासु नरो भवेत् ॥ ४८ ॥
एलालवङ्गकक्कोलजातिभिर्नित्यशो यजेत् ।
अब्दमात्रं ततो लोके विश्रुतः स्यात् स वैभवैः ॥ ४९ ॥
कर्पूरशकलैः पूजा सर्व्वाभीष्टप्रदा भवेत् ।
पूजितैस्तैस्तु जग्धैः स्यान्नरो यात्यखिलप्रियः ॥ ५० ॥

---

सामन्तादीनपि । प्रेमकौतुकैः प्रणयात्कण्ठाभिः । ब्राह्मणान् विप्रान् । वशयेदित्यन्वयः । तथा विकल्पे । सितयुतः शर्करासंमिलितः । प्रागुक्तकालतः मण्डलादितः । आद्यः अम्बुजकह्लारयोरपि विषयः । कुमुदद्वयैः रक्तसितैः ॥ ४१ ॥

उत्पलैरित्यादिभिः प्रिय इत्यन्तैर्नवभिः श्लोकैर्नानाद्रव्यैः पूजनैर्नानाफलप्राप्तिमुपदिशति । तत्र सितैः पद्मैरित्यन्वयः । लोहितैस्तद्वत् कुमुदाभ्यां प्राग्वज्जपादिभिरपि श्रीलाभाय । सौगन्धिकैः कह्लारैः सप्तभिः सौगन्धिकादिभिः । तथा समस्ताभीष्टलाभ इत्यर्थः । वश्यस्त्रीधनसिद्धये कर्पूरैरित्य-

वृत्तत्रयं तथाष्टारमब्जं तन्मध्यतस्तथा।
नवयोनिं विधायात्र मध्ये मायां ससाध्यकाम् ॥ ५१ ॥
आलिख्याष्टसु कोणेषु मन्त्रार्णाष्टकमालिखेत् ।
बहिर्दलेष्वपि तथा लिखेद्द्विद्विक्रमेण वै ॥ ५२ ॥
वहिर्मातृकया मायास्वगया प्रतिलोमया ।
क्रमेण चाभिसंवेष्ट्य तेन यन्त्रेण साधयेत् ॥ ५३ ॥
समस्तवाञ्छितं पूजाधारणस्थापनादिभिः ।
यन्त्रं रोचनयालिख्य भूर्जे वा क्षौमखण्डके ॥५४ ॥

---

न्वयः। मृगखेदमदाभ्यां मृगखेदेन मृगमदेन चेत्यर्थः। ततः यजनतः। तैः कर्पूरादिभिः। जग्धैर्भक्षितैः ॥ ५० ॥

वृत्तत्रयमित्यादिभिः स्थापनादिभिरित्यन्तैरध्यर्द्धैस्त्रिभिः श्लोकैः पञ्चविंशत्य-क्षरया तृतीयया मूलविद्यया यन्त्रनिर्म्माणोपदेशं तद्विनियोगप्रकारप्रस्तावं च करोति। तत्र तन्मध्यतः अष्टदलाब्जमध्यतः। तथा कुलसुन्दरीपटलोक्त प्रक्रियया। अत्र मध्ये सर्वमध्ययोनिमध्ये। मायां प्राग्वत् ह्रल्लेखां सविसर्जनीयां पञ्चविंशत्यक्षरविद्यायामेकादशाक्षरभूतां। अष्टसु कोणेषु मध्यकोणविधुरेषु मन्त्रार्णाष्टकं प्रथमद्वितीयखण्डप्रकृतिभूतपञ्चविंशत्यक्षरमूलविद्याक्षरपञ्चविंशकेषु आदितोऽक्षराष्टकमित्यर्थः। आलिखेत् अग्रात् प्रादक्षिण्यमिति सम्प्रदायः। वहिः नवयोनेः। तथा प्रागुक्तक्रमसूचकः। द्विद्विक्रमेण प्रतिदलञ्च योनिलिखित विद्याक्षरनवकादुपरितनानि षोडशाक्षराणीति शेषः। वहिः अष्टपत्रपद्माद्बहिर्गत-वृत्तत्रयान्तरालवीथीद्वये। मायया स्वगया विसर्जनीययुक्तया विन्दुयुक्तया च। क्रमेण अनुलोमेन च। स्थापनादिभिरित्यत्रादिशब्दोऽभिषेकादिविषयः। यन्त्रविर-चनाक्रमो यथा—अभीष्टमानभ्रमतोऽन्तर्वहिर्विभागेन वृत्तत्रयं समध्यसूत्रं निष्पाद्य तत्राष्टदलं पद्मं विधाय तत्कर्णिकायां प्राग्वत् नवयोनिचक्रं विधाय तत्र सर्वमध्यस्थयोनिमध्ये प्रथमद्वितीयखण्डप्रकृतिभूतपञ्चविंशाक्षरतृतीयमूल विद्यायामेकादशाक्षरभूतां सविसर्जनीयां ह्रल्लेखां साधकादित्रययुक्तामालिख्य वाह्यकोणेष्वष्टस्वग्रादिप्रादक्षिण्यात्तन्मूलविद्याक्षरेष्वादितोऽष्टौ संलिख्य तद्बहि-रष्टदलेषु प्रागुक्तक्रमात् सर्वमध्यलिखितह्रल्लेखाविधुरं शिष्टाक्षरषोडशकं प्रतिदलं द्विद्व्यक्षरं क्रमात् समालिख्य तद्वाह्यगतवृत्तत्रयान्तरालवीथीद्वये

गुलिकीकृत्य सिक्थस्य मध्यगं तद्विधाय तु।
तापयेद्रात्रिषु दिनैः प्रागुक्तैः स्त्रियमानयेत्॥ ५५॥
दरदेन विलिख्यैतत् पटे वा फलकोदरे।
तत्र देवीं समावाह्य पूजयेत्तैर्दिनैर्भवेत्॥ ५६॥
वशे त्रिभुवनं सर्व्वं नरनारीनृपादिकम्।
गजवाजितरक्षादितिर्य्यग्जातीरपि ध्रुवम्॥ ५७॥
तद्यन्त्रं सिन्धुतीरे वा नदीतीरेऽथवा लिखेत्।
गौरक्षेण समावाह्य देवीं तत्रैव पूजयेत्॥ ५८॥
समस्तरोगदुःखार्त्तिशान्तिः स्यादुदितैर्दिनैः।
लाभश्च पूजनात्तच्च पशुदासीधनादिनाम्॥ ५९॥
तद्यन्त्रं चन्दनैः कृत्वा पीठे तद्दिनपूजनात्।
पुत्रपौत्रकलत्राज्ञाधनधान्यादिमान् भवेत्॥ ६०॥
तद्यन्त्रं हेमरूप्ये वा भूर्जे वालिख्य धारणात्।
समस्तरोगदुःखार्त्तिरहितो वर्द्धते सुखी॥ ६१॥

---

अन्तर्वीथ्यां मातृकया विसर्जनीययुक्तया प्रतिलोमया प्राग्वत् संवेष्ट्य तद्वाह्यवीथ्यामनुलोमया अनया बिन्दुयुक्तया च तथा प्राग्वत् संवेष्ट्य वक्ष्यमाणपूजादिक्रमेण विनियोगात् सर्वफलसिद्धिरिति॥ ५४॥

यन्त्रमित्यादिभिः सुखी इत्यन्तैरर्द्धाद्यैः सप्तभिः श्लोकैस्तस्य यन्त्रस्य प्रयोगपञ्चकमुपदिशति। तत्र यन्त्रं प्रोक्तं। आलिख्येति पदच्छेदो वा विकल्पे। सिक्थस्य मधूच्छिष्टस्य। गुलिकीकृत्य यन्त्रं। प्रागुक्तैर्मण्डलादिभिः। दरदेन प्राग्वत्। एतद् यन्त्रं। वा विकल्पार्थः। तत्र यन्त्रमध्ये पूजयेन्नित्यक्रमतः। तैः प्राग्वत् वशे भवेदिति पूर्वत्र सम्बन्धः। तरक्षः व्याघ्रः तिर्य्यग्जातीश्चतुष्पदीजातीः वशयेदिति शेषः। सिन्धुतीरे समुद्रतीरे। वा विकल्पार्थः। अथवेति च तद्वत् आलिखेत्। तत्र तत्र सुसमे भूतले इति शेषः। तत्र यन्त्रे पूजयेत् प्राग्वत्। उदितैः प्राग्वत् तत्र पूजनादित्यन्वयः। तत्रेति सिन्धुतीरादिविषयः।

प्राक्प्रत्यगुदग्दक्षिणोदक्क सूत्रषट्कनिपातनात् ।
कोष्ठेषु पञ्चविंशत्सु त्रीणि कोणेषु मार्जयेत् ॥ ६२ ॥
कोष्ठैर्वज्रं ततः शेषैस्त्रयोदशभिरीरितम् ।
तन्मध्ये शक्तिमायाख्यामालिख्याख्यां ततोऽभितः ॥ ६३ ॥
लिखेद्विद्यां ततस्तस्मिन् पूजयेदङ्गराचकीं ।
वाञ्छितां वनितां मानकुललज्जातिलङ्घिनीम् ॥ ६४ ॥
तृणराजदले कृत्वा यन्त्रं सर्षपरिङ्गुभिः ।
पट्टशुण्ठीमागधिकामरिचार्कपयोयुतम् ॥ ६५ ॥
निशासु सिक्थगं दीपवह्नौ सन्तापयेज्जयम् ।
विद्यां त्रयोदशार्णान्तु तद्दिग्वक्त्रो दिनैः स्वयम् ॥ ६६ ॥

---

धनादीनां लाभाश्चेति चान्वयः । आन्नाचरा वलालंघनीयवचनतः । वाद्वयं विकल्पार्थः ॥ ६१ ॥

प्राक्प्रत्यगित्यादिभिः मन्निभा इत्यन्तैर्दशभिः श्लोकैस्त्रयोदशाक्षरया द्वितीयया मूलविद्यया कोष्ठवज्रयन्त्रनिर्माणं तेन यन्त्रेण प्रयोगचतुष्टयञ्चोपदिशति । तत्र त्रीणि प्रतिकोणमिति शेषः । शेषैः कोष्ठैस्त्रयोदशभिरित्यत्रान्वयः । तन्मध्ये यन्त्रस्य सर्वमध्यकोष्ठे । शक्तिमायाख्यां शक्तिरिति विसर्जनीय हृल्लेखाया ईकारस्यापि नाम अत्र सम्प्रदायात् प्रकरणाच्च विसर्जनीयस्य नाम मायेति च पूर्वोक्तानां नाम अत्र प्रागवत् हृल्लेखाया मायेति नाम तेन विद्याया-मेकादशाक्षरभूतविसर्जनीयहृल्लेखास्थं यथा भवति तथा इत्यर्थः । आख्यां साधकादीनां । ततः मध्यकोष्ठतः वह्निरिति शेषः । विद्यां सशक्तिहृल्लेखाविधुरां द्वादशाक्षरां । तस्मिन् यन्त्रे पूजयेद्देवीमिति शेषः । यन्त्रविरचनाक्रमो यथा— प्राक्प्रत्यगुदग्दक्षिणोदक्क समान्तरालानि षटसूत्राण्यास्फाल्य पञ्चविंशतिकोष्ठानि निष्पाद्य तेषु कोष्ठेषु प्रतिकोणं प्रतिकोणं चतुर्षु कोणेषु त्रीणि त्रीणि कोष्ठानि सम्भूय द्वादशकोष्ठानि मध्ये वज्ररूपं यथा भवेत्तथा मार्जयित्वा शिष्टकोष्ठत्रयोदशके सर्वमध्यकोष्ठमध्ये त्रयोदशाक्षरद्वितीयमूलविद्या-क्षरत्रयोदशके एकादशाक्षरभूतां सविसर्जनीयां हृल्लेखां प्रागवत्

आकर्षयेन्नवागच्छेत्तत्र कामज्वराङ्कनः ।
अवस्थाभिश्च दशभिर्मृतिमेति सुनिश्चितम् ॥ ६७ ॥
भूर्जे तालदले वा तदालिख्य स्पष्टविग्रहम् ।
मधूच्छिष्टप्रतिकृतैे ऋजु तं तापयेत्तथा ॥ ६८ ॥
नरनारीनृपश्चान्यं प्राणिनां स्नेहविह्वलाम् ।
करोति यावद्देहान्तं ते प्रतीपा लपन्ति च ॥ ६९ ॥
कज्जलैर्यन्त्रमालिख्य भूर्जे क्षौमे सितेऽथवा ।
जपित्वा धारयेत् सर्वरोगदुःखार्त्तिनाशनम् ॥ ७० ॥
गैरिकैश्चन्दनोपेतैरालिख्य विमलाम्बरे ।
तदा स्त्रियः शयानस्य वैरिण्यो दाससन्निभाः ॥ ७१ ॥
वृत्तद्वयान्तराकृत्वा षट्कोणं तस्य मध्यतः ।
भूः स्वगर्भगतं नाम विलिख्यास्त्रिषु षट्स्वपि ॥ ७२ ॥

---

साधकादित्रयाख्यायुक्तामालिख्य तदधःपंक्तिकोष्ठमध्यत्रिकमध्यकोष्ठमारभ्य युक्तक्रमं स्वप्रादक्षिण्यनिर्गमनगत्या शिष्टकोष्ठद्वादशके मध्यकोष्ठलिखितमविमर्जनीयद्वन्द्वरेखाविधुरं द्वितीयमूलविद्याक्षरद्वादशकमालिख्य तत्र पूजादिभिर्वक्ष्यमाणैः प्रयोगैर्वक्ष्यमाणफलसिद्धिरिति। तृणराजदले तालपत्र इत्यर्थः। यन्त्रं प्रोक्तं। पटुलवणं मागधिका पिप्पली सिक्थगं प्रागवत्। दीपवह्नौ दीपरूपाग्नौ। तद्दिग्वक्त्रः साध्याशाभिमुखः। दिनैर्मण्डलादिभिः। नचागच्छेत् साध्यापदिति शेषः। तत्र यन्त्रे स्थिता अवस्थाभिश्च दशभिः नयनप्रीत्यादिभिर्मरणादिभि.। मृतिमिति दशमावस्थास्वरूपं। वा विकल्पे। तद् यन्त्रं। मधूच्छिष्टैः प्रतिकृतैः साध्यायाः। तन्निर्माणमेकविंशे पटले वक्ष्यमाणांशकानुगुणतः। तथा विद्याजपसहितं दीपाग्नौ प्रोक्तदिनादित्यर्थः। अन्यशब्दः सामन्तादिविषयः। ते प्राणिनः। प्रतीपाः प्रतिकूलाः। कज्जलैर्मसीभि.। सितं क्षौमविशेषणमेतत्। अथवेति विकल्पार्थः। जपित्वा प्राणप्रतिष्ठादिसहितं मूलविद्याम्। आलिख्यन्त्रमिति शेषः। धारयेत् तद्यन्त्रसहिताम्बरमितिशेष ॥ ७१ ॥

वृत्तद्वयेत्यादिभिर्विंहिरित्यन्तैर्दशभिः श्लोकैः सप्ताक्षरया प्रथमया मूलविद्यया यन्त्रनिर्म्माणक्रमं तेन यन्त्रेण प्रयोगकञ्चोपदिशति। तत्र तस्य षट्कोणस्य

षड़क्षराणि विलिखेत् सप्ताक्षर्य्याः क्रमेण वै ।
यन्त्रमेतत्तालपत्रे भूर्जे चौमेऽर्कपत्रके ॥ ७३ ॥
प्रजप्य विद्यामयुतं वल्मीके निक्षिपेच्च तत् ।
तत्र स्थिता ये भुजगाः पलायन्तेऽथ तद्दिने ॥ ७४ ॥
तदूर्म्मिकादौ संलिख्य संजप्याभ्यर्च्य कुत्रचित् ।
विधाय नित्यशः पूजाममेते रक्षतो गृहे ॥ ७५ ॥
भूतप्रेतपिशाचापस्मारवेतालराक्षसाः ।
यक्षगन्धर्वभुजगवृश्चिकाद्या न तत्र वै ॥ ७६ ॥
तन्निमग्ना कुम्भसलिले जपित्वा विद्ययानया ।
सहस्रवारं सलिलैरासेकः क्ष्वेड़नाशनः ॥ ७७ ॥
तत्पीतं जठरं प्राप्तमशेषं नाशयेद्विषम् ।
देहगं परमेशानि विविधं भीषणात्मकम् ॥ ७८ ॥

---

भूः स्वगर्भगतं भूरिति ओकारः स्वमिति विन्दुः प्रथममूलविद्यादिवर्णभूतसविन्दुकत्रयोदशस्वरगर्भगतमित्यर्थः । नाम प्राग्वत् । षड़क्षराणि मध्यलिखित प्रथमाक्षरमूलप्रणवविधुराणि सप्ताक्षर्य्या मूलविद्यायाः क्रमेण अग्रादिप्रादक्षिण्यरूपेण एतन्नि.खत्वेति शेषः । अथवेत्यध्याहार्य्यं । विद्यां सप्ताक्षरीं । तद्यन्त्रं । तद्दिने निक्षेपदिने । यन्त्रस्यायं विरचनाक्रमः—यथा अभीष्टमानभ्रमणीनान्तर्वहिर्विभागतो वृत्तद्वयं विधाय तत्रान्तर्वृत्तमध्ये प्राग्वत् षट्कोणं विधाय तत् षट्कोणमध्ये प्रथमभूतसप्ताक्षरमूलविद्याद्यक्षरभूतं प्रणवं प्राग्वत् साध्यगर्भमालिख्य वहिःषट्सु कोणेषु अग्रादिप्रादक्षिण्येन मध्यलिखितप्रणवविधुराणि मूलविद्यायाः सप्ताक्षर्य्याः ( ? षड़क्षर्य्याः ) षड़क्षराण्यालिखेत् । एवमेतद्यन्त्रं भूर्जादिष्वन्यतमे लिखित्वा सप्राणप्रतिष्ठं सप्ताक्षरीविद्यामयुतं जपित्वा तस्य यन्त्रस्य वल्मीकनिक्षेपणात्तत्रस्थाः सर्पाः तद्दिन एवोच्चाटिता भवन्तीति । तद्यन्त्रं ऊर्म्मिकादौ ऊर्म्मिकेत्यङ्गुलीयकम् आदौ शब्दो वलयाङ्गदाद्याभरणविषयः । रक्षतः पुरुषस्य । वृश्चिकाद्याः आद्यशब्दो लूतामूषकादिविषयः । तत्र स्थापितगृहविशेषणम् । तत् ऊर्म्मिकादिलिखितं यन्त्रम् । अनया प्रथमया सप्तवर्णया आसेकः अभिषेकः । क्ष्वेड़नाशनः सर्व्वविषापहरः । तद्यन्त्राधिवासिताभिरद्भिः सेकः

तद्विलिख्य नखाग्रेण नारिकेलदले स्मरन्।
तद्रूपं फणिनं विद्याजपपूर्व्वं नखादिना ॥ ७९ ॥
पीड़नात् पाटनाद्भोगी पीड़ितः पाटितो भवेत्।
एवं सर्व्वं त्रिप्रकारं गरलं नाशयेदिदम् ॥ ८० ॥
वालुकासु समालिख्य यन्त्रमभ्यर्च्य देवताम्।
तत्र तैर्वेष्टयेत् सप्त भोगिनं न व्रजेद्बहिः ॥ ८१ ॥
अनावृत्तानि विद्यायामक्षराणि त्रयोदश।
तैः षोड़शस्वरोपेतैः संख्याष्टौ च शतद्वयम् ॥ ८२ ॥

---

देहगमिति विषविशेषणं त्रिविधं प्रागवत्तत्स्थावरजङ्गमकृत्रिमात्मकम्। एतदुक्तं भवति यन्त्राभिवासिताभिजप्तं जलं पीतं जठरगतविषं देहगतं त्रिविधञ्च नाशयेदिति। तद् यन्त्रं। तद्रूपं यन्त्रं लिखितनालिकेरपत्ररूपं स्मरन्नित्यत्रान्वयः। पीड़ितं पाटितमिति दिव्यत्वादङ्गीकरणीयं यन्त्रपीड़नात् पाटनात् पीड़ितः पाटितश्चेत्यर्थः। एवमुक्तरूपतः। त्रिप्रकारं। प्रागवत् इदं यन्त्रं वालुकासु सिकतासु। यन्त्रं प्रोक्तम् तत्र यन्त्रे। तैः ताभिरित्यर्थः। वालुकाविशेषणत्वात्। अत्रापि दिव्यत्वादचिन्त्यं व्रजेत्। प्रवुद्धोपि भोगी वहिः वालुकावेष्ठनात् ॥ ८१ ॥

अनावृत्तानीत्यादिना महेश्वरीत्यन्तेन श्लोकद्वयेन पञ्चविंशाक्षरायां खण्डद्वयप्रकृतिभूतायां तृतीयायां मूलविद्यायां प्रागवदपुनरुक्तैस्त्रयोदशभिरक्षरैः स्वरप्रसारणादष्टोत्तरद्विशतसंख्यैस्तैर्यन्त्राष्टकमुपदिशति। तत्र विद्यायां सर्व्वप्रकृतिभूतायां पञ्चविंशाक्षरायां मूलविद्यायां त्रयोदश तानि तु ककार उकार रेफ लकार यकार ओकार हकार सकार वकार जकार नकार शकाराक्षराणि। अत्रामस्थक्तस्वरग्रहणेऽपि प्रागुक्तप्रयोजकातिलङ्घनेन संयुक्तस्यापि स्वरस्य ग्रहणे त्रयोदशेतुरक्तिप्रावल्यात् तयोरक्षरयोरनावृत्तत्वमस्त्येव। तैः अनावृत्ताक्षरैः। तानि अष्टोत्तरद्विशतसंख्यान्यक्षराणि। पूर्वाद्ययन्त्रे पूर्वोक्तेषु यन्त्रेष्वाद्ययन्त्रे। अस्मिन्नेव पटले पूर्वत्र वृत्तत्रयमित्याद्येकपञ्चाशत्तमाद्येन श्लोकत्रयेण प्रोक्ते। मध्यतः सर्वमध्यतो द्वयं। अक्षरयोः। वह्निर्मध्यगोनितः। प्रागवद्विलिखेदिति सम्बन्धः। तैः अष्टोत्तरद्विशतसंख्यैरक्षरैः। अष्टौ सम्भूय। महेश्वरीति

तानि पूर्व्वाद्ययन्त्रे तु विलिखेन्मध्यतो द्वयम्।
वहिः प्राग्वत्ततस्तैः स्यात् यन्त्राण्यष्टौ महेश्वरि॥ ८३॥
तेष्वाद्यं सर्व्ववारेषु विनियुञ्ज्यादुदीरिते।
द्वितीयादीनि यन्त्राणि सप्त भान्वादिवासरे॥ ८४॥
विनियुञ्ज्यात् प्रोक्तकर्म्मस्वाख्यालेखनपूर्व्वकम्।
वाराख्यां सप्तमीयुक्तामालिखेत् साधयेति तत्॥ ८५॥
वश्याकर्षणशान्त्याप्त्यै विद्ध्यादाद्ययन्त्रतः।
प्रोक्तक्रमेण विधिना शान्तिमर्चनतस्तथा॥ ८६॥
सप्तमं पूजितं क्वापि स्थापितं पोतगर्भके।
तन्नाशयन्ति तत्पोतमधौ सर्व्वं तथा शिवे॥ ८७॥

---

सम्बुद्धिः। एतदुक्तं भवति पूर्वोक्तेषु यन्त्रेषु आद्ये वाह्यादभ्यन्तरप्रवेशक्रमाद्वृत्तत्रयाष्टपत्राम्बुजनवयोनिरूपे यन्त्रे सर्वमध्ये स्वरविक्रतपञ्चविंशाक्षरे मूलविद्यानाद्यन्ताक्षरत्रयोदशकरंजाताष्टोत्तरद्विशतसंख्येष्वक्षरेष्वादितोऽक्षरद्वयं प्रत्यक्षरं साध्यादुपेतमालिख्य तद्बाह्यगतकोणेष्वष्टसु सर्वमध्यलिखिताक्षरद्वयादुपरितनान्यष्टाक्षराण्यग्रात्प्रादक्षिण्येनालिख्य तद्बहिरष्टपत्रेषु प्रतिपत्रं द्वयंद्वयमितिक्रमेण नवयोनिर्विलिखिताक्षरदशकादुपरितनानि षोड़शाक्षराणि प्राग्वदालिख्य एवं संभूय षड़्विंशत्यक्षराणि क्रमाद्विलिख्य वाह्यवृत्तत्रयान्तरालवीथिद्वये प्राग्वत् मातृकावेष्टनं कुर्य्यात्। एतत् प्रथमं यन्त्रं। एवमस्मिन्नेव यन्त्रे पूर्वलिखिताक्षरषड़्विंशतिकादुपरितनमुपरितनमक्षरषड़्विंशतिकं क्रमेणालिख्य पूर्वोक्तेन यन्त्रेण सहाष्टौ यन्त्राणि सम्पादयेदिति॥ ८३॥

तेष्वादिभिजन्मिनामित्यन्तैः षड़्भिः श्लोकैस्तद्यन्त्राष्टकविनियोगादिकमुपदिशति। तत्र तेषु अष्टसु यन्त्रेषु। आद्यं यन्त्रमिति शेषः। उदीरिते वश्याकर्षणेत्यादिषड़शीतितमश्लोकेन वक्ष्यमाणे। सप्त इति पदच्छेदः। भान्वादिवारके आदिशब्दः सोमाङ्गारकवुधवृहस्पतिशुक्रशनैश्चरविषयः तेषां वारे इत्यर्थः। प्रोक्तकर्मसु वक्ष्यमाणकर्मसु। आख्यालेखनपूर्वकं प्राग्वत् साध्यादिनामालिखनपूर्वकमित्यर्थः। वाराख्यां माध्याधः साधयेति। तदिति लेखनीयवाक्यरूपं। एतदुक्तं भवति सर्वमध्यगताक्षरद्वयमध्ये प्रत्येकस्मिन् वारे एतत्

तथा वारेषु तेषूक्तान्यालिख्याभ्यर्च्चयेच्छिवाम् ।
वाञ्छितेषु समस्तेषु तैर्दिनैस्तान्यवाप्नुयात् ॥ ८८ ॥
रोगशान्तिं जयं लाभं नानाभीष्टार्थविग्रहम् ।
शत्रुभङ्गं व.ं नारीनृपमर्त्यादिजन्मिनाम् ॥ ८९ ।
प्राक्प्रत्यगदक्षिणोदक्सूत्राण्यास्फालयेत् क्रमात् ।
द्वाविंशतिं ततश्चैकचत्वारिंशच्चतुःशतम् ॥ ९० ॥
तेषु कोणेषु परितो मार्जयेत् पूर्ववत् क्रमात् ।
पञ्चपञ्चाशदन्यानि कोष्ठवज्रे महेश्वरि ॥ ९१ ॥
शतद्वयं चैकविंशं तेषु दिक्षु त्रिकोणकम् ।
मध्येऽवशिष्टनवकमध्ये नामोदरां लिखेत् ॥ ९२ ॥

साधयेति अक्षराण्यधरादूर्द्ध्वान्तमालिखेदिति । आद्ययन्त्रतः अष्टस्विति शेषः । प्रोक्तक्रमेणेति विधिनेत्यस्य विशेषणम् । स विधिस्तु प्राणप्रतिष्ठापुरःसरं आधारस्थापनादिः । अर्चनतः तत्र देवीपूजनतः । तथेति समुच्चये पूजितम् । तत्तत्प्राप्तवारेषु नाशयन्तीति यन्त्रसप्तकसंख्यापेक्षया बहुवचनम् । शिवे इति देवीसम्बुद्धिः । तेष्विति वारविशेषणम् । उक्तानि यन्त्राणीति शेषः । तैः प्राग्वन्मण्डलादिभिः । तानि रोगशान्त्यादीनि वक्ष्यमाणानि । मर्त्त्यादिजन्मिनामित्यादिशब्दः अमात्यसामन्तादि सकलप्राणिजातविषयः ॥ ८८ ॥

प्राक्प्रत्यगित्यादिभिः शिवे इत्यन्तैः षड्भिः श्लोकैः प्रागुक्तैः स्वरप्रसारितैरष्टोत्तरद्विशतसंख्यैर्मूलविद्याक्षरैरविकृतमूलविद्याक्षरपञ्चविंशतिकैश्चैकविंशत्यधिकद्विशतकोष्ठरूपवज्रयन्त्रनिर्माणं तद्विनियोगांश्चोपदिशति । तत्र क्रमाद्वाविंशतिं प्राक्प्रत्यग्द्वाविंशतिं दक्षिणोदक्द्वाविंशतिमिति एवं क्रमादित्यर्थः । ततः आस्फालनतः । तेषु एकचत्वारिंशदधिकचतुःशतसंख्येषु कोष्ठेषु । कोणेषु चतुर्षु । पूर्व्ववन्मध्ये वज्राकारं यथा भवति । क्रमात् पञ्चपञ्चाशत् प्रतिकोणं पञ्चपञ्चाशत् कोष्ठानि इत्येवं क्रमादिति यावत् । संभूय चतुर्षु कोणेषु विंशत्यधिकद्विशतसंख्येषु कोष्ठेष्वित्यर्थः । चतुःकोष्ठैः प्रतिदिशमेकैककोष्ठमार्जनत इत्यर्थः । अन्यानि मार्ज्जनावशिष्टानीति शेषः । तेषु एकविंशत्यधिकद्विशतसंख्येषु कोष्ठेष्वित्यर्थः । चतुः कोष्ठेषु प्रतिदिशं एकैककोष्ठमार्जनत इत्यर्थः । प्राङ्मध्यतः प्राग्दिगन्त पङ्क्तिकोष्ठेषु मध्यकोष्ठमारभ्येत्यर्थः । तानि अष्टोत्तर

मायां तदभितो मन्त्रवर्णांस्त्रिस्त्रिःक्रमेण वै ।
त्रिकोणेषु च साध्यानि लिखेद्वज्रमितीरितम् ॥ ९३ ॥
तद्वज्रयन्त्रे तु पटे क्षौमे वा सुसिते शुभे ।
विलिख्याभ्यर्च्य तद्यन्त्रं पोते रक्षति वारिधौ ॥ ९४ ॥
प्रागुक्तानि समस्तानि साधयेद्वज्ररूपिणा ।
यन्त्रेणानेन कालेन प्रोक्तेन सततं शिवे ॥ ९५ ॥

---

द्विशतसंख्यानि स्वरविकृतमूलविद्याक्षराणि लिखेत् । यावदक्षरपर्यवसानतः । मध्ये यन्त्रस्येति शेषः । नवकमध्ये नवकमध्यकोष्ठ इत्यर्थः । नामोदरां साधकादिनामगर्भां । मायां पञ्चविंशार्णमूलविद्याया एकादशाक्षरभूतां । तदभितः तदन्तर्गतमध्यकोष्ठानन्तरप्राक्पङ्क्तिमध्यकोष्ठमारभ्य प्रादक्षिण्यनिर्गमनगत्या त्रिःत्रिःक्रमेण मध्यकोष्ठवर्जं प्रतिकोष्ठमिति शेषः । त्रिकोणेषु चेत्यत्र चकाराच्चतुर्षु त्रिकोणेष्वपि साध्याक्षराणि मायास्थानि लिखेदिति । तद्यन्त्रं वज्रयन्त्रमिति शेषः । यन्त्रविरचनाक्रमो यथा—प्राक्प्रत्यगुदक्षिणोदक्समान्तरालानि द्वाविंशति द्वाविंशति सूत्राण्यास्फाल्य तेनैकचत्वारिंशदधिकचतुःशतसंख्यानि कोष्ठानि निष्पाद्य तेषु चतुर्षु कोणेषु प्रतिकोणं पञ्चपञ्चाशत्कोष्ठानि सम्भूय विंशत्यधिक द्विशतसंख्यानि कोष्ठानि प्रागवन्मध्ये वज्राकारं यथा भवति तथा तथा मार्जयित्वा ततश्चतुर्षु दिक्षु प्रतिदिशमेकैक कोष्ठमार्जनतश्चत्वारि त्रिकोणानि कृत्वा शिष्टेषु सप्तदशाधिक द्विशतसंख्येषु कोष्ठेषु सर्वप्राचीनपङ्क्तिस्थकोष्ठत्रये मध्यकोष्ठमारभ्य प्रादक्षिण्यप्रवेशगत्या युक्तक्रममष्टोत्तरशतद्विशतसंख्यानि स्वरविकृतमूलविद्याक्षराणि यावदक्षरपर्यवसानमालिख्य ततो मध्यतः शिष्टेषु नवसु कोष्ठेषु सर्वमध्यस्थकोष्ठमध्ये पञ्चविंशार्णमूलविद्याया एकादशाक्षरभूतहृल्लेखां साध्यगर्भामालिख्य शिष्टेष्वष्टसु कोष्ठेषु मध्यकोष्ठानन्तर प्राचीनपंक्तिमध्यकोष्ठमारभ्यायुक्तक्रमं प्रादक्षिण्यनिर्गमनगत्या प्रतिकोष्ठं पञ्चविंशाक्षरमूलविद्याक्षराणि हृल्लेखाविधुराणि त्रीणि त्रीण्यालिख्य चतुर्दिग्गत त्रिकोणचतुष्केष्वपि मध्यकोष्ठवत् ससाध्यां हृल्लेखामालिख्य तेन यन्त्रेण वक्ष्यमाणान् विनियोगान् कुर्य्यादिति । वा विकल्पे । सुसित इति क्षौमविशेषणम् । रक्षति यन्त्रमित्यत्रान्वयः । तेन कर्त्तृभूतं यन्त्रमिति । प्रागुक्तानि अत्र प्रोक्तानि कार्य्याणि । प्रोक्तेन प्रागवन्मण्डलादिना । शिवे इति देवीसम्बुद्धिः ॥ ९५ ॥

तां देवीं पाशसम्बद्धं साध्यमङ्कुशताड़नात् ।
आकर्षन्तीं स्वपादान्ते साञ्जलिं प्रणतिं मुहुः ॥ ९६ ॥
रक्ष रक्षेति भाषन्तं स्मरन् विद्यां जपन्निशि ।
साध्यो नरोथ नारी च वशमेति सुनिश्चितम् ॥९७॥
अथवा साञ्जलिं साध्यं प्राग्वद्वादिनमङ्कुशे ।
प्रोतकेशसमाकृष्टं जपेत् प्राग्वद्वशो भवेत् ॥९८॥
मन्त्राक्षराणां तेजोभिः परीतं वा तथाविधाम् ।
स्वयमेवानयेत्तान्तु स्मरन् जापैर्व्वशं नयेत् ॥ ९९ ॥
एवं सा कुरुकुल्ला ते प्रोक्ता सर्व्वार्थसाधिका
ललिताविग्रहा येन वशिन्यादियुता ततः ॥१००॥
बुद्धितत्त्वमयो व्याप्तिरिति सम्यक् समोरिता ।
अस्या निष्कालनाच्चित्ते तत्तत्त्वं स्वात्मसात् कृतम् ॥१०१॥

## इति षोड़शनित्यातन्त्रे श्रीकादिमते द्वाविंशत पटलः ॥२२॥

तामित्यादिभिस्तत इत्यन्तैश्चतुर्भिः श्लोकैर्मन्त्रदेवताभावनाकर्षणवशीकरणं त्रैविध्यं तस्याः कुरुकुल्लाया देव्या वशिन्यादिशक्त्यष्टकपरिवृतत्ववासनां चोपदिशति। तत्र तामित्यस्योत्तरश्लोके (वातत्) स्मरन्नित्यनेनान्वयः। साध्यमित्यस्य पदस्यास्य श्लोकस्योत्तरार्द्धगताकर्षन्तीमित्यनेनान्वयः। विद्यां पञ्चविंशार्णां। अथवेति पक्षव्यावृत्तौ। प्राग्वद्वादिनं रक्षरक्षेति प्राग्वत्। आकर्षन्तीं देवीं स्मरन् विद्यां जपेदित्यर्थः। भवेत् प्रागुक्तः साध्यवर्गः। मन्त्राक्षराणां पञ्चविंशार्णमूलविद्याक्षराणां। तथाविधां रक्षरक्षेति भाषणादियुक्तां। स्वयमेव आकर्षणादृते। एतदुक्तं भवति साध्य मन्त्राक्षरतेजोभिः परीतं तेजःसहनाशक्तत्वात् प्राग्वद्भाषमाणादियुक्तः स्वयमेव देवताकर्षणादिव तामन्तः स्मरन् विद्यां जपन् वशयतीति। एवं प्रोक्तरूपतः। ते इति देवीं निर्दिशति। येन ललिताविग्रहवत्त्वकारणेन। ततः कारणात् ॥१००॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य ऽपञ्च-सार-सिंह-
राजप्रकाशाभिधानेन श्रीसुभगानन्दनाथेन विरचितायां मनोरमाख्यायां
व्याख्यायां षोड़शनित्यावलिदेवतारूपकुरुकुल्लाविद्याविधानप्रका-
शनपरं द्वाविंशत् पटलम् परिपूर्णं परामृष्टम् ।

ग्रन्थसंख्या । द्वादशोक्तानि यन्त्राणि द्वाविंशे व्यक्रियागताः ।
ग्रन्थाः स्युः सार्द्धपादैकचत्वारिंशच्छतद्वयाम् ॥

## त्रयोविंशपटलम् ।

अथ षोड़शनित्यानामङ्गभूता तु पञ्चमी ।
तद्विधा कथिता पूर्वं तदङ्गानि च पूजनम् ॥ १ ॥
साधनं सिद्धमन्त्रस्य प्रयोगध्यानपूजनैः ।
होमैर्यन्त्रैश्च वच्यामि समस्ताभीष्टसिद्धये ॥ २ ॥
अङ्गानि कृत्वा मन्त्रार्णैः सप्तभिः षड़् युगेन च ।
दशभिः सप्तभिः सप्तसंख्यैर्जातिभिरन्वितम्॥ ३ ॥
त्रिकोणवृत्तषट्कोणवृत्तद्वयसमन्वितम् ।
विधाय चक्रं तत्रैव स्वनाम्नावाह्य पूजयेत् ॥ ४ ॥

---

पूर्वस्मिन् द्वाविंशे पटले षोड़शनित्यानां वह्निदेवतायाः कुरुकुल्लाया विधानमुपदिश्यानन्तरं षोड़शनित्याङ्गभूतायाः पञ्चम्याख्याया वाराह्या विधान मुपदिशति। अथ षाड़शेत्याद्यनयेत्यन्तश्लोकशतरूपेण त्रयोविंशेन पटलेन। तत्र अथ षोड़शेत्यादिना सिद्धये इत्यन्तेण श्लोकद्वयेन पटलार्थानुपदिशति। तत्र पूर्वं तृतीये पटले। साधनं विद्याया इति शेषः ॥२॥

अङ्गानीत्यादिना श्लोकेन षड़ङ्गन्यासमन्त्रानुपदिशति। अत्र अङ्गानि षट् कृत्वा इत्यस्योत्तरश्लोकोत्तरार्द्धान्तर्गतपूजयेदित्यनान्वयः। मन्त्रार्णैर्वच्यमाण-संख्याक्रमभिन्नैर्मूलविद्यायामादितः सम्भूय त्रिचत्वारिंशताचरैः। षड़् युगेन षड़्भिरचरैः शिरोमन्त्रः षड़्भिरचरैः शिखामन्त्रश्चेत्यर्थः। जातिभिः हृदयाय नमः इत्यादिभिः षड़्भिः। अन्वित क्रियाविशेषणमेतत् ॥ ३ ॥

त्रिकोणत्यादिर्भिरतात्यन्तैः षड़्भिः शाकदैव्या नित्यपूजाचक्रं सावरण-द्वयपूजाविधानं नित्यभजनक्रमं तत्फलञ्चापदिशति। तत्र समन्वितं चक्र-मित्यस्य विशेषणं। नित्यपूजाचक्रविरचनाक्रमोयथा -अभीष्टमान (प्रमाण भ्रमादन्तर्वैहिर्विभागेनैकाङ्गुलान्तरालं वृत्तद्वयं विधाय तदन्तर्वृत्तमध्ये प्रागुक्त-मानतः षट्कोणं विधाय तन्मध्यतः सन्धिरेखास्पृष्टास्पृष्टं वृत्तं विधाय

दशोत्तरशताचर्य्या वाराहीविद्यया प्रिये।
सर्वमध्ये समभ्यर्च्य वामदक्षाग्रकोणतः॥ ५॥
क्रोधिनीं स्तम्भिनीं चण्डोच्चण्डाञ्चैव स्वनामभिः।
आद्यबीजान्त्यप्राणैरुपेतामथ पूजयेत्॥ ६॥
षट्सु कोणेषु स्वाग्रादिब्राह्म्याद्या वामतोऽर्चयेत्।
वृत्ते चैव महालक्ष्मीं पञ्चमीं मध्यतस्तथा॥ ७॥
बलिन्तु षोड़शार्णेन कृत्वाभ्यर्च्योपचारकैः।
तदग्रे तां जपेद्विद्यां सहस्रमथवा शतम्॥ ८॥
होमञ्च कुर्य्याद्दिनशः सुशुद्धैस्तिलतण्डुलैः।
घृतेन वा ततो विद्या सिद्धा स्यादष्टतस्ततः॥ ९॥

---

तन्मध्ये प्राग्वत् समलिखेत् त्रिकोणं यथोपदेशं विधाय तत्र देवीमावाह्य वक्ष्यमाणक्रमेण पूजयेदिति। स्वनाम्नावाह्य सविन्दुकहृल्लेखाद्येन नाम्ना। द्वितीयान्तेन क्रियायुक्तेन। तन्मन्त्रो यथा—ह्रीं वाराहीमावाहयामीति पूजयेत्। वक्ष्यमाणक्रमतः दशोत्तरशताचर्य्या तृतीयपटलोक्तया। प्रिये इति देवीसम्बुद्धिः। सर्व्वमध्ये चक्रस्य सर्वमध्यत्रिकोणमध्य इत्यर्थः। वामदक्षाग्रकोणतः देव्याः। चण्डोच्चण्डामित्युक्ता स्वस्वनामभिः अस्याः परिवारशक्ती-र्नमोऽन्तैर्नाममन्त्रैश्चतुर्थ्यन्तैः पूजयेदिति सम्प्रदायः। आद्यबीजान्त्यप्राणै-रित्यनेनैतदुक्तं भवतीति। क्रोधिनीं स्तम्भिनीञ्च तत्तन्नामाद्याक्षरे सविन्दुके क्रों इति स्तं इति चोच्चार्य्य ततस्तन्नामभ्यां चतुर्थ्यन्ताभ्यां नमोन्ताभ्यामर्च-यित्वा ततश्चण्डोच्चण्डान्तु मातृकान्त्याक्षरभूतक्षकारस्य ओँकारप्रकरणप्राप्त विन्दुश्च तैः संयुतं क्षों इत्युच्चार्य्य तदनन्तरं पारम्पर्य्यप्रोक्त क्रोमिति चो-च्चार्य्य ततश्चण्डोच्चण्डायै नम इत्युक्ताचयेदिति। अत्र क्रोधिन्यादिशक्ति-त्रयस्य हृल्लेखावैधुर्य्यं स्वस्वबीजाद्यत्वादिति सम्प्रदायः। वामतः अप्रादक्षिण्येन अर्चयेत्। हृल्लेखाद्यैर्नमोन्तैर्नामभिः। अत्रासां शक्तीनां सप्तानां हृल्लेखा-द्यत्वं स्वस्वबीजाद्यराहित्यादिति च सम्प्रदायः। वृत्ते सर्ववाह्यगतवृत्तद्वय-वीथ्यां। तदग्रे देव्या अग्रे। अभिमुखं चामरतालवृन्तसङ्गीतादिव्याहृ-ताभिरनन्ताभिः शक्तिभिर्वृत्तद्वयवीथ्यां परितः स्थिताभिर्महालक्ष्म्यादिभिरिति सम्प्र-

जितेन्द्रियो हविष्याशी मौनी सन्ध्यासु पूजयन् ।
विद्यां जपेल्लक्षसंख्यां तद्दशांशेन तर्पणम् ॥ १० ॥
अर्चनं हवनं कृत्वा सिद्धमन्त्रो दयान्वितः ।
गुरुभक्तः सुसन्तुष्टः शान्तचित्तः क्षमान्वितः ॥ ११ ॥
प्रयोगानाचरेद्भक्त्या यैरिष्टमखिलं क्षणात् ।
सिध्यत्ययनतो देव्याः प्रसादाद्वैभवादपि ॥ १२ ॥
ध्यायेच्च देवीं कोलास्यां तप्तकाञ्चनसन्निभाम् ।
आकण्ठं वनितारूपां ज्वलत्पिङ्गशिरोरुहाम् ॥ १३ ॥

दायः । पञ्चमीं वाराहीं मूलदेवतां । मध्यतः प्राग्वत् । तथा मूलविद्यया त्रिवाराद-हीनमिति शेषः । अर्चयेदिति पूर्वत्रान्वयः । एतदुक्तं भवति चक्रमध्ये देवी-मावाह्य तदनन्तरं सविन्दुकया ह्लक्षेखया विधुरैर्नमोन्तैर्नामभिरभ्यर्च्य (१) तद्बहिः षट्सु कोणेषु ब्राह्म्याद्याश्चामुण्डान्ताः षट्शक्तीश्च सर्वाश्चान्तद्दयवीथ्यां देव्य-ग्रमभिमुखमासीनां प्रोक्तराज्यचिह्नपरिवारां महालक्ष्मीं च सम्भूय सप्तशक्ती-स्तन्नाममन्त्रैः ह्लक्षेखाद्यैर्नमोन्तैरर्चयित्वा पुनरपि मध्ये देवीं तद्विद्यया त्रिवारादहीनमर्चयेत् इति । वलिन्तु षोड़शार्णेन षोड़शाक्षरेण वलिमन्त्रेण पूजारम्भावसानसमये वलिं प्राग्वत् कुर्य्यादित्यर्थः । सर्वत्र वलिद्वयप्रदानं मूलदेवताग्रभागे इति सम्प्रदायः । उपचारकैः षोड़शभिः । आवाहनाद्यनन्तरं पूजान्ते च अत्रार्घ्यस्थापनमनुक्तमपि पूर्वमेव साधारणोक्तत्वात् । षडङ्ग मूलाभ्यां प्राग्वत् स्थापयेदिति मुख्यागमः । तां दशोत्तरशताक्षरीं । अथवा विकल्पार्थः । वा पक्षान्तरे इति प्रोक्तनित्यभजनतः ॥ ८ ॥

जितेन्द्रिय इत्यादिभिर्वैभवादपीत्यन्तैस्त्रिभिः श्लोकैर्मूलदेवतायाः पुरश्चरणं कृतपुरश्चरणस्य प्रयोगार्हत्वञ्चोपदिशति । तत्र जपेल्लक्षसंख्यं केवलमर्चनं हवनं जपदशांशतर्पणं हवनं च कुर्य्यादिति सर्वमन्त्रसामान्यं । सिद्धमन्त्रः प्रोक्तरूपतः दयान्वित इत्यादिसिद्धमन्त्रलक्षणं । वैभवात् देव्या वैश्वरूप्यात् । अपिः समुच्चये ॥ १२ ॥

ध्यायेदित्यादिभिर्विश्रुत इत्यन्तैश्चतुस्त्रिंशता श्लोकैः देव्याः सपरिवारायाः स्वतन्त्रनित्यपूजासु ध्यानं आवाहनञ्चोपदिशति । तत्र ध्यायेदित्यादिभिः शिवे

१ । "स्थापनादीनुपचारान् विधाय मूलविद्यया एकवारमभ्यर्च्य" इत्यधिकः पाठः ।

त्रिनेत्रामष्टहस्ताञ्च चक्रशङ्खमथाम्बुजम् ।
पाशञ्च मुशलं शीरमभयं वरदं तथा ॥ १४ ॥
दधानां गरुडस्कन्धे सुखासीनां विचिन्तयेत् ।
नित्यपूजासु तच्छक्तीस्तत्समानाः स्मरेच्छिवे ॥ १५ ॥
प्रयोगेषु स्मरेद्देवीं सिंहस्थां व्याघ्रगामपि ।
गजारूढां हयारूढां तार्क्ष्यारूढाञ्च शक्तिभिः ॥ १६ ॥
श्यामामप्यरुणां पीतामसितां धूम्रविग्रहाम् ।
तत्प्रयोगेषु च तथा ध्यायेत्तत्तदवाप्तये ॥ १७ ॥
अरुणामरुणाकल्पामरुणाभिश्च शक्तिभिः ।
आवृतां पञ्चमीं ध्यायन् जपेद्वश्याप्तयेऽनिशम् ॥ १८ ॥

---

इत्यन्तैस्त्रिभिः श्लोकैर्देव्याः स्वतन्त्रनित्यपूजासु क्वचित्प्रयोगेषु च ध्यानावाहनविशेषादिकमुपदिशति । तत्र ध्यायेच्च देवीमित्यत्र चकारेण देव्याः सपरिवाराया ललिताङ्गपूजायां तत्समानायुधाकारात्मकध्यानमन्तरेण च स्वतन्त्रनित्यपूजादिषु वक्ष्यमाणक्रमेण ध्यायेदिति सम्प्रदायार्थः । कोलास्यां वराहमुखीं आकण्ठवनितारूपामित्यन्तेन कण्ठादधोरूपविग्रहस्य वराहात्मकत्वं प्रमादेनापि न चिन्तनीयमिति परिहरतीति यावत् । ज्वलत्पिङ्गशिरोरुहां ज्वलदिव ऊर्द्ध्वाग्रपिङ्गलकेशां ॥ १३ ॥ अत्रायुधक्रमस्तु अष्टभुजेषूर्द्ध्वादिदक्षिणवामक्रमेण । दधानां भुजैरिति शेषः । सीरं हलं विचिन्तयेदिति नित्यपूजासु । वक्ष्यमाणगरुडेतरवाहनध्यान परिवारार्थत्वान्न पुनरुक्तिदोषः । तच्छक्तीः परिवारशक्तीः स्मरेदिति नित्यपूजास्विति पूर्वत्रान्वयः ॥ १५ ॥

प्रयोगेष्वित्यादिना अवाप्तये इत्यन्तेन श्लोकद्वयेन सर्वप्रयोगेषु सामान्येन वाहनवर्णादिकमुपदिशति । तत्र शक्तिभिः परिवारशक्तिभिः । सहेति शेषः । वक्ष्यमाणक्रमेण ॥ १७ ॥

अरुणामित्यादिना श्लोकेन तस्या एव ध्यानमुपदिशति । तत्र अरुणाकल्पां पद्मरागादिभिः कृताकल्पाम् ॥ १८ ॥

पीतां पीताम्बरां पीतभूषणस्रग्विलेपनाम् ।
पीतशक्त्यावृतां ध्यायेत् स्तम्भनेषु तु सर्वदा ॥ १९ ॥
श्यामाञ्च दुर्गमे मार्गे सिंहस्थां भीमविग्रहाम् ।
शक्तिभिः स्वसमानाभिरनन्ताभिः समायुताम् ॥ २० ॥
चिन्तयन् प्रजपन् विद्यां यजेत्तच्छक्तिमध्यतः ।
स्वात्मानं भावयन्मन्त्री व्रजेदक्लिष्टवैभवः ॥ २१ ॥
सिंहर्क्षद्वीपिशरभशृङ्गिकुक्कुरशूकरैः ।
गवयैर्भुजगैर्भीमैर्दन्तिभिर्मदमन्थरैः ॥ २२ ॥
चौरैः क्रूरप्रहरणैः क्रूरैरन्यैर्भयावहैः ।
भूतप्रेतपिशाचाद्यैराकुलेऽरण्यसङ्कटे ॥ २३ ॥
अलब्धमार्गे विपिने गिरिशृङ्गे तथाविधे ।
स्मरेद्देवीमुक्तरूपां निरातङ्को व्रजेत् सुखी ॥ २४ ॥
समरेष्वपि भीमेषु पतत्सु रथदन्तिभिः ।
सङ्कटेषु दुरन्तेषु स्मृत्वेत्थं विजयी भवेत् ॥ २५ ॥

---

पीतामित्यादिना श्लोकेन स्तम्भनप्रयोगमुपदिशति । तत्र पीतशक्त्यावृतां पीतवर्णाभिः शक्तिभिरावृताम् ॥ १९ ॥

श्यामामित्यादिभिः सुखी इत्यन्तैः पञ्चभिः श्लोकैर्दुर्गममार्गरक्षाविधानमुपदिशति । तत्र अनन्ताभिः प्रत्येकमसंख्याताभिः क्रोधिन्यादिभिरावरणस्थाभिः । अक्लिष्टवैभवः अध्वश्रान्तादिभिरप्यक्लिष्टपरिच्छदादियुतः । भीमैरिति सिंहादीनां सर्वेषां विशेषणम् । अन्यैः शाखामृगादिभिः । आकुले निविड़े । अरण्यसङ्कटे अरण्यैः पिहितमार्गे । अलब्धमार्गे इतः पूर्वममानुष्यगोचरतयेति शेषः । तथाविधे इति पूर्वत्र गिरिशृङ्गे इत्यनेनान्वयः । उक्तरूपां श्यामामित्यादिना श्लोकेनेति शेषः । निरातङ्कः नितरां क्लेशरहितः । व्रजेदिति प्रोक्तोपसंहारार्थत्वान्न पुनरुक्तिदोषः ॥ २४ ॥

समरेष्वित्यादिभिर्मदोद्धतैरित्यन्तैः पञ्चभिः श्लोकैः समरविजयध्यानमुपदिशति । तत्र दुरन्तेषु मरणनिरोधनप्रलापनाम जल्पविशेषः (?) । इत्थं

नखरं छुरिकां खड्गं वाणं शूलं गदां सृणिम्।
चक्रञ्च दक्षिणैर्बिभ्रद्बाहुभिर्भीमविग्रहाम् ॥ २६ ॥
तर्जनीं खेटकं चर्म्म चापं डमरुकं हलम्।
पाशं शङ्खञ्च दधतीमन्यैर्नीलां स्वशक्तिभिः ॥ २७ ॥
गजाधिरूढ़ां द्विरदैः शक्त्यारूढ़ैः समावृताम्।
वैरिसेनां समस्ताञ्च निपात्य परिवैर्भुवि ॥ २८ ॥
तदुपर्य्यभितः प्रेङ्खत् कदलीकेतुसङ्कुलम्।
चरन्तीं शक्तिवृन्दैश्च भीमारावैर्म्मदोद्धतैः ॥ २९ ॥
भानुमण्डलमध्यस्थां शूलप्रोतारिविग्रहाम्।
तद्देहनिर्य्यद्रक्ताक्तशूलां देवीं विचिन्तयेत् ॥ ३० ॥
कण्ठमात्रे जले स्थित्वा जपेद्विद्यामनन्यधीः।
सप्तरात्रप्रयोगेण वैरिणं मारयेज् ज्वरात् ॥ ३१ ॥

---

वक्ष्यमाणप्रकारेण। छुरिकं असिधेनुं भीमविग्रहामिति देवीविशेषणम्। अन्यैः वामैः अष्टभिर्व्वाहुभिरिति शेषः। तत्र आयुधानां नामान्याद्यमुखादवगन्तव्यानि। अत्र आयुधक्रमस्तु उभयपार्श्वयोरप्यधरादूर्द्धान्तमित्यवगन्तव्यम्। नीलां वर्णेनेति शेषः। स्वशक्तिभिः तद्वर्णाभिः शक्तिभिः सहितामिति यावत्। परिवैः देव्याः परिवारशक्तीनाञ्च दक्षिणपार्श्वोर्द्धादित्वतीयभुजस्थैः। तदुपरि सेनोपरि कदलीकेतुसङ्कुलं कदलीनिभगजपताकासङ्कुलं देशमिति शेषः ॥ २८ ॥

भानुमण्डलेत्यादिना ज्वरादित्यन्तेन श्लोकद्वयेण ज्वरेण रिपुमारणप्रयोगमुपदिशति। तत्र भानुमण्डलेत्यादिनैतदुक्तं भवति। पूर्व्वोक्तषोड़शभुजविधृतायुधां नीलाभां देवीं भानुमण्डलमध्ये निजदक्षिणोर्द्ध्वादिचतुर्थजस्थशूलप्रोतारिविग्रहां तद्देहान्निःसरद्रक्ताक्ततच्छूलां विचिन्तयन्निति। अनन्यधीः एकाग्रचित्तः ॥ ३१ ॥

देव्याः सपरिवाराया हेतिभिः शकलीकृतम्।
रिपुदेहं स्मरेत् फेरुकङ्कक्रव्यादकुक्कुरैः॥ ३२ ॥
भक्ष्यमाणं जपेद्विद्यां त्रिदिनं सलिले स्थितः ।
प्राग्वत्तावद्दिनैर्वारिहतं स्मृ(स्मृ)त्वा समुत्तरेत् ॥ ३३ ॥
द्विभुजां धूम्रवर्णाभां साध्यजिह्वाहृदम्बुजे ।
उत्पाटयन्तीं संचिन्त्य जपन् शत्रून् यमं नयेत् ॥ ३४ ॥
तथाविधां पीतवर्णां स्मृत्वा संजप्य वैरिणः ।
क्रोधं संशमयेद्वादे विवादे समरेऽपि च ॥ ३५ ॥
तार्क्ष्यारूढाञ्च तां तार्क्ष्यगणस्थाभिश्च शक्तिभिः ।
वृतां तार्क्ष्यगणोद्दामपक्षमारुतमूर्च्छिताम् ॥ ३६ ॥

---

देव्या इत्यादिना समुत्तरेदित्यन्तेन श्लोकद्वयेन रिपुमारणप्रयोगविशेषमुपदिशति। तत्र देव्याः षोडशकरायुधनीलवर्णादिविशिष्टविग्रहाया इति शेषः। फेरुः क्रोष्टा क्रव्यादाः पिशाचाद्याः कुक्कुरः सारमेयः भक्ष्यमाणं पूर्वोक्तैः फेरुप्रमुखैः। प्राग्वत् कण्ठमात्रे जले तावद्दिनैः सप्तदिनैः त्रिदिनैर्वा। तत्र कण्ठमात्रजलापेक्षया पश्चात्तरेदिति। वारिहतं जले मृतं रिपुमिति शेषः॥ ३३॥

द्विभुजामित्यादिना श्लोकेन रिपुमारणप्रयोगध्यानमुपदिशति। तत्र साध्यजिह्वाहृदम्बुजे द्वितीयाद्विवचनमेतत्। यमं मृत्युं। एतदुक्तं भवति साध्यं रिपुमुत्तानशायिनं भूमौ निपात्य तदुदरकण्ठयोः पादद्वयं विन्यस्य एकेन करेण तस्य हृदयाम्बुजमितरेण तस्य जिह्वाञ्चोत्पाटयन्तीं धूम्रवर्णां देवीं संचिन्त्य जपन् शत्रुं मारयेदिति सम्प्रदायार्थः॥ ३४॥

तथाविधामित्यादिना श्लोकेन क्रोधस्तम्भनध्यानमुपदिशति। तत्र तथाविधां साध्यजिह्वाहृदम्बुजोत्पाटनादिना अत्र देवीं चतुर्भुजां साध्यं जङ्घवामभुजस्थहलेनाकृष्य तद्दक्षिणभुजस्थमुशलेन प्रहृत्य प्राग्वदुत्पाटयन्तीं ध्यायेदिति सम्प्रदायार्थः॥ ३५॥

तार्क्ष्यारूढामित्यादिना क्षणादित्यन्तेनार्द्धाधिकेन श्लोकेन रिपुसेनाविद्रावणमुपदिशति। तत्र तां देवीं। तार्क्ष्यगणोद्दामपक्षमारुतमूर्च्छितामित्यस्य उत्तरत्र सेनामित्यनेनान्वयः। क्षणात् स्मृतिमात्रेण॥ ३६॥

स्मृत्वा जयेद्रिपोः सेनां दूरतो द्रावयेत् क्षणात् ।
तथैवाष्टभुजैः खड्गान् दधानां शक्तिभिर्वृताम् ॥ ३७ ॥
तथैवारातिपृतनां समरे नाशयेत् क्षणात् ।
विकीर्य्य केशानरुणवारवाणधरो हयैः ॥ ३८ ॥
तरक्षकेशरिकपिकोलर्क्षगरुड़स्थितैः ।
शक्तिवृन्दैस्त्रिशूलाग्रप्रोतपत्त्यश्ववारणैः ॥ ३९ ॥
क्रीड़ाविनोदां माणिक्यमण्डपे सिंहविष्टरे ।
ध्यायन्नरातेः पृतना नाशयेत् स्वैर्बलैर्नृपः ॥ ४० ॥
पीतप्रसूनैः पीताभामर्च्चयेत् स्तम्भनाय वै ।
प्रागुक्तैर्म्मण्डलाद्यैस्तु वासरैः परमेश्वरि ॥ ४१ ॥
अरातीनां गतिं सेनां मतिं जिह्वां समुद्यमम् ।
दृष्टमन्यच्च सकलं स्तम्भयेत् साधकः क्षणात् ॥ ४२ ॥

---

तथैवेत्यादिना क्षणादित्यन्तेनार्द्धद्वयेनारातिसेनाविनाशध्यानमुपदिशति । तत्र तथैव गरुड़स्कन्धाधिरूढ़ां । शक्तिभिस्ताच्ययाधिरूढ़ाभिरिति शेषः । तथैव जपादिना । क्षणात् प्रागवत् ॥ ३७ ॥

विकीर्येत्यादिना नृप इत्यन्तेनार्द्धाधिकेन श्लोकद्वयेनारिसेनाविनाशनध्यानमुपदिशति । तत्र अरुणवारवाणधरः अरुणकञ्चुकधरः । इत्यस्य उत्तरत्र नृप इत्यनेनान्वयः । हयैः सहित इति शेषः । त्रिशूलाग्रप्रोतपत्त्यश्ववारणैरिति शक्तिवृन्दविशेषणम् । सिंहविष्टरे स्थितां देवीमिति शेषः । एतदुक्तं भवति तरक्षादिषड्वाहनारूढ़ैः शक्तिवृन्दैः स्वस्वकरस्थशूलाग्रप्रोते रिपुसेनापत्त्यश्ववारणैर्दर्शितक्रीड़ाविनोदां माणिक्यमण्डपान्तः सिंहासनस्थां देवीं ध्यायन्नरुणकञ्चुकधरः स्वकेशान् विकीर्य्य हयवृन्दसहितो हयारूढ़ो नृपः शत्रुसेनां स्वबलैर्नाशयेदिति ॥ ४० ॥

पीतेत्यादिना क्षणादित्यन्तेन श्लोकद्वयेन पूजासु पुष्पादिविशेषेण स्तम्भनीयपञ्चाङ्गादिकं चोपदिशति । तत्र पीताभां देवीमिति शेषः । स्तम्भनाय अभिमतानामिति शेषः । अरातीनामित्यस्य गत्यादिभिः पञ्चभिः प्रत्येकमन्वयः । क्षणात् प्रागवत् ॥ ४२ ॥

अरुणामरुणैः पुष्पैरर्च्चयेन्मध्यरात्रतः ।
निहन्तुकामः सर्वांस्तु रिपुं कुर्य्याद्वशे ध्रुवम् ॥ ४३ ॥
विषनाड्यां दग्धयोगे मृतियोगे सनाशके ।
यमकण्टककाले वा कृष्णपुष्पैस्तथाविधाम् ॥ ४४ ॥
पूजयंस्तद्दिनैः शत्रून् जीवितेशपुरं नयेत् ।
श्यामाञ्च सौरभाद्यैस्तैः पुष्पैरभ्यर्च्य वासरैः ॥ ४५ ॥
उदितैरिन्दिराढ्यः स्यादरोगः सुमना वशी ।
सुखं जीवति भूमौ स शतवर्षाणि विश्रुतः ॥ ४६ ॥

---

अरुणामित्यादिना श्लोकेन रिपुवश्यार्थं पुष्पविशेषात् पूजाविशेषमुपदिशति। तत्र अरुणां अरुणवर्णां देवीं ध्यात्वेति शेषः। अरुणैः अरुणवर्णैः मध्यरात्रतः मध्यरात्रे ॥ ४३ ॥

विषनाड्यामित्यादिना नयेदित्यन्तेनार्द्धाद्येन श्लोकेन कालविशेषेषु पूजाविशेषेण रिपुमारणप्रयोगमुपदिशति। तत्र सनाशके नाशयोगसहिते यमकण्टककाले रव्यादिसप्तवारेषु क्रमेण पञ्चमचतुर्थतृतीयद्वितीयप्रथमसप्तमषष्ठसंख्याङ्कसहित-काले। विषनाड्यश्च यथा—अश्विनीनक्षत्रस्य पञ्चाशत्घटिकानन्तरं चतस्रो नाड्यः विषनाड्िकाः। एवमग्रेऽपि। तथाचोक्तं—

अश्वादीनां क्रमाज्ज्ञेयाश्चतस्रो विषनाड़िकाः।
खाद्या ५० ज्जिनात् २४ विन्दुगुणा ३०त् खाब्धे ४० रिन्द्रात् १८ कुपक्षतः २१।
खाग्ने ३० र्नखात् १० पदा ३२ दष्टादशा १८त् खाग्ने ३० र्नखा १० त्ततः।
कुदस्र: २१ विंशतेः २० खेन्दो १० रिन्द्रात् १४ खेन्दो १० श्चतुर्द्दशात् १४।
षट्पञ्चतो ५६ जिना २४ द्विंशात् २० दिशः १० पङ्क्तेः १० स्मृतेः १८ न्नृपात् १३।
जिना २४ त्तथा च खाग्नेश्च ३० ता नाड्यः परतः स्थिताः ॥ इति ॥
कृष्णैः कृष्णवर्णैः। तथाविधां कृष्णवर्णां। तद्दिनैः प्रागुक्तमण्डलाद्यैः ॥ ४५ ॥

श्यामामित्यादिना विश्रुत इत्यन्तेनार्द्धाद्येन श्लोकेन पूजापुष्पादिविशेषेण लक्ष्मीप्राप्तिप्रयोगादिकमुपदिशति। तत्र श्यामां श्यामवर्णां। तैः श्यामवर्णैरुदितै र्वासरैरिति पूर्वत्रान्वयः ॥ ४६ ॥

होमं कुर्य्यात्तथा रात्रौ चतुरस्रेऽथ कुण्डके।
हरिद्रामिलितैरन्नैस्तिलैर्म्माषैः सतण्डुलैः ॥ ४७ ॥
पीतैः पुष्पैस्तथा पीतैः फलैस्तालदलैरपि ।
सकलीकृत्य लिखितसाध्यवर्णसमन्वितैः ॥ ४८ ॥
निशाघृतसमोपेतैः स्तम्भयेत् प्रागुदीरितान्
निशाचूर्णैर्घृताक्तैस्तु होमः स्तम्भयते तथा ॥ ४९ ॥
अर्द्धरात्रेऽरिवृक्षेद्भवह्नौ तद्योनिदेहजैः ।
मांसैस्तद्देहसम्भूतस्नेहाक्तैर्द्दिनैः ॥ ५० ॥
मारयेद्वैरिणं रोगशस्त्रशृङ्गफणीजलैः ।
दहनैर्व्याघ्रैरन्यैः प्रमादैः कण्टकादिभिः ॥ ५१ ॥
निर्घाततरुकुड्यादिपतनाद्विषभक्षणात् ।
शत्रुभिर्व्वा प्रयोगामो न भवन्त्येव भङ्गुराः ॥ ५२ ॥

होममित्यादिभिः भूतल इत्यन्तैश्चतुर्द्दशभिः श्लोकैर्होमद्रव्यादिकविशेषैः फलविशेषादिकमुपदिशति। तत्र होममित्यादिभिस्तथेत्यन्तैस्त्रिभिः श्लोकैः स्तम्भनहोमद्रव्यविशेषानुपदिशति। तत्र तथा रात्रौ मध्यरात्रे इत्यर्थः। चतुरस्रे कुण्डपटलवक्ष्यमानलक्षणे। हरिद्रामिलितैः हरिद्राचूर्णसहितैः एतदन्नादिचतुर्णां द्रव्याणां विशेषणम्। सकलीकरणं साध्यादिनामविलेखनादिकं तालपत्राणामेव निशाघृतसमोपेतैर्हरिद्राचूर्णघृतसमोपेतैः तालदलैरिति पूर्वत्रान्वयः। ईरितान् अरातिगत्यादिपञ्चकं। निशाचूर्णैः घृताक्तैर्घृतपरिप्लुतैः। तथा मण्डलादिभिः ॥ ४९ ॥

अर्द्धरात्र इत्यादिभिः भङ्गुरा इत्यन्तैस्त्रिभिः श्लोकैर्मारणप्रयोगहोमविशेषं तेन तत्र साधारणमारणप्रकारविशेषांश्चोपदिशति। तत्र अरिवृक्षोद्भवह्नौ शत्रुनक्षत्रवृक्षसमुद्भूतकाष्ठप्रदीप्तवह्नौ। तद्योनिदेहजैः शत्रुनक्षत्रयोनिदेहसमुद्भूतैः। तद्देहसम्भूतस्नेहाक्तैः साध्ययोनिसमुद्भूतस्नेहाप्लुतैः। दिनैः प्रागवन्मण्डलादिभिः। अन्यैर्व्याघ्रादिभिः। प्रमादैरनवधानैः। कण्टकादिभिरित्यत्रादिशब्दः शङ्कादिविषयः। निर्घातः अशनिः। प्रयोगामो प्रयोगाः अमीति दिव्यत्वात् पदच्छेदः। भङ्गुराः निष्फलाः ॥ ५२ ॥

धूम्रां कङ्कसमारूढां नखराद्यायुधैर्युताम् ।
ध्यायन् रिपोरष्टमे तु राशौ छागघृताप्लुतैः ॥ ५३ ॥
मरीचैः सर्षपैर्होमैस्तद्दिनैर्मारयेद्रिपून् ।
तीव्रदाहज्वरग्रस्तं विसंज्ञं विकृताङ्गकम् ॥ ५४ ॥
बालार्काभां स्मरन्नाद्यहेतिभिः संयुतां शिवाम् ।
सरूपवत्सारुणगोघृताक्तैररुणैः शुभैः ॥ ५५ ॥
प्रसूनैः किंशुकोद्भूतैस्तथा बन्धूकसम्भवैः ।
जपाप्रसूनैः पालाशैः करवीरसमुद्भवैः ॥ ५६ ॥
कह्लारैरुत्पलै रक्तैः कमलैः पाटलोद्भवैः ।
अशोकजैः कुसुम्भोत्थैरन्यैः पुष्पैश्च लोहितैः ॥ ५७ ॥
हवनान्नृपतुल्यः स्यादैश्वर्य्येणाज्ञया धनैः ।
अन्यैरपि च तत्सज्जपरैरङ्गैः सुनिश्चितम् ॥ ५८ ॥

---

धूम्रामित्यादिना विकृताङ्गकमित्यन्तेन श्लोकद्वयेन मारणहोमविशेषमुपदिशति। तत्र धूम्रां धूम्रवर्णां। नखराद्यायुधैर्युतां पूर्वं वज्रखरमित्यादिषट्त्रिंशत्श्लोकप्रोक्तषोड़शभुजस्थैरिति शेषः। छागः अजविशेषः। मरीचैः सर्षपैः। एतद्द्वयं घृताप्लुतैरित्यस्य विशेष्यं। तद्दिनैः प्राग्वत् विकृताङ्गकं अस्वाधीनाङ्गम् ॥ ५४॥

बालार्काभामित्यादिभिः सुनिश्चितमित्यन्तैश्चतुर्भिः श्लोकैरैश्वर्य्यप्राप्तिकरणहोममुपदिशति। तत्र आद्यहेतिभिः संयुतां स्वतन्त्रनित्यपूजोक्तायुधाष्टकसंयुतां शिवां पञ्चमीं। सरूपवत्सारुणगोघृताक्तैः निजसदृशवत्सारुणवर्णगोघृताप्लुतैः। शुभैः मुकुलपतितम्लानशीर्षजन्तुदूषितघ्राताङ्गस्पृष्टरहितैः प्रसूनैः इत्येतत् पूर्वं तारुणैरित्यस्य विशेष्यं कर्त्तव्यं। करवीरसमुद्भूतैः अरुणैरिति शेषः। रक्तैरित्येतदुत्पलकमलपाटलानां विशेषणम्। अङ्गैः छत्रचामरादिभिः परिच्छदैः ॥ ५८ ॥

अरुणां नखराद्यैस्तु युतां ध्यायन् समाहितः ।
मध्यरात्रे हुनेत् साध्यदिङ्मुखो मरिचैस्तथा ॥ ५९ ॥
प्रोक्तैर्दिनैर्नृपो नारीनरलोकोऽपि बा वशी ।
भवेत् कीर्त्तीन्दिरायुक्तश्चिरं जीवति भूतले ॥ ६० ॥
विलिख्य भूपुरं मध्ये निजसाध्यं समालिखेत् ।
भौमाक्षराणि तद्बाह्ये दशाग्रादभितो लिखेत् ॥ ६१ ॥
वहिरष्टदलं पद्मं कृत्वा तत्र लिखेत् क्रमात् ।
मन्त्राक्षराणि ऋतुशस्तद्वहिर्वृत्तयुग्मकम् ॥ ६२ ॥
तत्रापि पार्थिवानर्णान् वहिः षट्कोणमालिखेत् ।
तत्कोणेष्वन्तरालेषु मन्त्रार्णान् भूदशान्वितान् ॥ ६३ ॥

---

अरुणामित्यादिना भूतल इत्यन्तेन श्लोकद्वयेन वश्यादिकहोमविधानमुपदिशति । तत्र नखराद्यैः पूर्वत्रास्मिन् पटले षट्त्रिंशच्छ्लोकोक्तनखराद्यायुधषोड़शकेन । समाहितः अनन्यचित्तः । प्रोक्तैर्दिनैः प्रागवन्मण्डलादिभिः अपिवा अपिचेत्यर्थः ॥ ६० ॥

विलिख्येत्यादिभिरानयेदित्यन्तैश्चत्वारिंशता श्लोकैरेतद्विद्याक्षरजनितानि स्तम्भनादिकराणि अष्ट यन्त्राणि विद्यावैभवञ्चोपदिशति । तत्र विलिख्येत्यादिभिर्वाहिनीमित्यन्तैः पञ्चभिः श्लोकैर्लोकपालस्य शत्रुसेनायाश्च स्तम्भनकरं यन्त्रमुपदिशति । तत्र मध्ये भूपुरस्य । तद्बाह्ये भूपुरवाह्ये । भौमाक्षराणि पञ्चम षष्ठत्रयोदशस्वरपुरःसरकादिवर्गतृतीयाक्षराणि सविन्दूनि दशसंख्यानि । अभितः प्रादक्षिण्येन [वहिः भौमाक्षरवेष्टनात् तत्र तेषु दलेषु क्रमात् अग्रादिप्रादक्षिण्यक्रमात् । ऋतुशः षट्षड़क्षराणि प्रतिदलमिति शेषः । तद्वहिः पद्माद्वहिः । तत्र वृत्तवीथ्यां । पार्थिवानर्णान् प्रागवत् । वहिर्वृत्तयुग्मात् । तत्कोणेषु षट्कोणेषु अन्तरालेषु कोणान्तरालेषु षट्सु । मन्त्रार्णान् भूदशान्वितान् अष्टदललिखितशिष्टान् प्रागुक्त भूतदशार्णसहितान् मूलविद्यावर्णान् । प्रागवत् प्रतिस्थानं षट्षट्क्रमेण । अभितः अग्रादिप्रदक्षिणं बहिः षट्कोणात् । तत्र वीथ्यां । न्यस्य विलिख्य । वहिः वृत्तद्वयात् । कृत्वेति पूर्वत्रान्वयः मूलविद्यया सहेति शेषः ।

विलिखेत् प्रागवदभितो वहिर्वृत्तद्वयं लिखेत् ।
विलोममातृकां तत्र न्यस्य भूमिपुरं वहिः ॥ ६४ ॥
कृत्वानुलोममालिख्य मातृकां मूलविद्यया ।
पूजयन्नखिलं लोकं स्तम्भयेदरिवाहिनीम् ॥ ६५ ॥

---

पूजयन् नित्योक्तक्रमतो देवीमिति शेषः। अरिवाहिनीं शत्रुसेनां। चकारोऽत्राध्याहार्य्यः। अयं यन्त्रविलेखनक्रमः। अभीष्टमानेन प्रोक्तलक्षणं भूपुरं विलिख्य तद्बहिस्तत्कोणाग्रस्पृष्टास्पृष्टिकया वृत्तं कृत्वा तद्बहिरेकाङ्गुल षड़ङ्गुलमानान्तरालं वृत्तद्वयं कृत्वा तत्र वाह्यविषाणवीथ्यामष्टदलं पद्मं विधाय वाह्यवृत्ताद्बहिः वृत्तमेकाङ्गुलमानेन वृत्तं कृत्वा तद्बहिस्तद्वृत्तमध्यविष्कम्भार्द्धमानेन वृत्तं कृत्वा तदन्तराले प्राग्वत् षट्कोणं विधाय षट्कोणाग्रवृत्ताद्बहिरेकाङ्गुलमानेन वृत्तं कृत्वा तद्बहिरेकाङ्गुलमानेन चतुरस्रं कृत्वा सर्वमध्यस्थभूपुरमध्ये साध्यसाधककर्माण्युपर्य्यधोन्तरालक्रमेण लिखित्वा तद्बहिर्भूपुरवाह्यवृत्तद्वयवीथ्याम्[ग्न्यादिप्रादक्षिण्येन] भौमानि उं ऊं ओं गं जं डं दं वं लं व्वं इति दशाक्षराणि समालिख्य तद्बहिः पद्मदलेष्वष्टावग्न्यादिप्रादक्षिण्येन मूलविद्याक्षरेषु दशोत्तरशतसंख्येषु प्रतिदलं षट्षट्क्रमेणाष्टचत्वारिंशदक्षराण्यालिख्य तद्बहिर्वृत्तवीथ्यां प्राग्वत् क्रमेण भौमाक्षरदशकमालिख्य तद्बहिः षट्कोणेषु प्राग्वदग्न्यादिप्रादक्षिण्येन पूर्वमष्टदललिखितमूलविद्याक्षरशिष्टेषु अक्षरेषु द्विषष्टिसंख्येषु षट्त्रिंशदक्षराणि प्रतिकोणं षट् षट्क्रमेणालिख्य तत् षट् कोणान्तरालेषु षट्सु च प्रत्यन्तरालं प्राग्वत् क्रमेणाग्रकोणोत्तरपार्श्वादिदक्षिणपार्श्वान्तं षट्कोणलिखितविद्याक्षरशिष्टाक्षरषड्विंशतिकं भौमाक्षरदशकञ्च सम्भूय षट्त्रिंशदक्षराणि षट्षट्क्रमेणालिख्य तद्बहिर्वृत्तवीथ्यां अग्न्यादिप्रादक्षिण्येन विलोमां मातृकां सविसर्जनीयामालिख्य तद्बहिर्वृत्तभूपुरान्तरालवीथ्यामीशादीशान्तं प्रादक्षिण्येन मातृकाक्षराण्येकपञ्चाशत्सविन्दूनि मूलविद्याक्षरदशोत्तरशतकं च सम्भूयैकषष्ठ्युत्तरशताक्षराणि प्रतिदिशं चत्वारिंशत् चत्वारिंशदक्षराणि उत्तरस्यां दिश्येकचत्वारिंशदक्षराणि चालिख्य तत्र देवीमावाह्य स्वतन्त्रनित्यपूजाक्रमेण पूजयन् प्रोक्तं फलं प्राप्नोतीति ॥ ६५ ॥

नवास्रं वृत्तयुग्मञ्च वस्वस्रं तद्दयं वहिः ।
चतुरस्रञ्च संलिख्य मन्त्रार्णान् षट् षड़ालिखेत् ॥ ६६ ॥
अष्टान्तरालेष्वेकैकं वाह्यवृत्ते तु मातृकाम् ।
चतुरस्रे च विलिखेत् प्रतिलोमानुलोमकम् ॥ ६७ ॥
साध्याख्यां सर्वतो लिख्य (१) यजेदष्टभुजां शिवाम् ।
स्तम्भः स्यात् पूर्व्वमुक्तानां विधानात् परमेश्वरि ॥ ६८ ॥

नवास्रमित्यादिभिः परमेश्वरीत्यन्तैस्त्रिभिः श्लोकैः सर्वस्तम्भनकरं यन्त्रमुपदिशति । तत्र नवास्रं नवयोनिं । वस्वस्रं प्राग्वदष्टकोणं । तद्दयं वृत्तद्वयं । षट् षट् नवकोणेषु अष्टकोणेषु च प्रतिकोणमित्यर्थः । अष्टान्तरालेषु अष्टकोणान्तरालेषु एकैकं मूलविद्याक्षराणि कोणलिखितशिष्टान्यष्टौ प्रत्यन्तरालमेकमेकमित्यर्थः । वाह्यवृत्ते अष्टकोणवाह्यवृत्तद्वयान्तरालवीथ्यां । तुः समुच्चये । प्रतिलोमानुलोमकं वृत्तवीथ्यां प्रतिलोमं चतुरस्रेऽनुलोमञ्च । सर्व्वतः अक्षरलेखस्थानेषु । पूर्वमुक्तानामरातिगत्यादीनाम् । परमेश्वरीति सम्बुद्धिः । अयं यन्त्रलेखनक्रमः अभीष्टमानेन वृत्तं कृत्वा तन्मध्ये प्राग्वन्नवयोनिं कृत्वा तद्वहिरेकाङ्गुलान्तराले वृत्तद्वयं कृत्वा तद्वहिर्भूपुरद्वयरूपदिग्विदिग्गत कोणमष्टकोणं कृत्वा तद्वहिस्तत्कोणाष्टकस्पृष्टास्पृष्टिकया वृत्तं विधाय तद्वहिरेकाङ्गुलान्तराले चतुरस्रं कृत्वा सर्वमध्यस्थयोनिमारभ्य निर्गमनगत्याग्रादि प्रादक्षिण्यक्रमेण नवसु कोणेषु प्रतिकोणं षट् षट् क्रमात् मूलविद्याक्षरेषु प्रोक्तसंख्येष्वादितः पञ्चाशदक्षराण्यालिख्य तद्वहिरष्टकोणेष्वष्टसु प्रागवत् अग्रादिप्रादक्षिण्येन पूर्वलिखितमूलविद्याशिष्टाक्षरेषु षट्पञ्चाशत्सु प्रतिकोणं षट् षट्क्रमेणाष्टचत्वारिंशदक्षराण्यालिख्य तदष्टकोणान्तरालेषु अष्टस्वग्रकोणोत्तरपार्श्वमारभ्य तद्दक्षिणपार्श्वान्तशिष्टविद्याक्षरात्मकं प्रत्यन्तरालमेकं विलिख्य तद्वाह्यवृत्तद्वयान्तरालवीथ्यां प्राग्वदग्रादिप्रादक्षिण्येन विलोमां सविसर्जनीयां मातृकां विलिख्य तद्वहिर्वृत्तचतुरस्रान्तराले प्रागवदीशादीशान्तं प्रादक्षिण्यात् प्रतिदिशं त्रयोदशत्रयोदशक्रमेणोत्तरस्यां दिशि द्वादशक्रमेण च सम्भूय मातृकाक्षराण्येकपञ्चाशत् सविन्दूनि समालिख्य सर्व्वत्राक्षरलेखनस्थानेषु सप्तविंशतिषु साधकादीनां नामत्रयं विलिख्य तत्र नित्यपूजात्र मोक्ताष्टभुजां देवीमावाह्य पूजयन्नरातिगत्यादिकं स्तम्भयतीति ॥ ६८ ॥

१ । "ध्यायेद" इति वा ।

वृत्तं त्र्यस्रं पुनर्वृत्तं षडस्रं वृत्तयुग्मकम् ।
अष्टास्रं तद्बहिर्वृत्ते इति कृत्वात्र विन्यसेत् ॥ ६९ ॥
एकं मध्ये वहिः कोणेष्वन्तरालेषु च क्रमात् ।
त्रयं त्रयं समालिख्य वहिः शिष्टन्तु पार्थिवैः ॥ ७० ॥
विलिख्य मध्ये नामापि जपित्वाभ्यर्च्य साधकः ।
स्थापयेत् क्वापि तत्रैव नित्यशश्च वलिं क्षिपेत् ॥ ७१ ॥

---

वृत्तमित्यादिभिः क्षिपेदित्यन्तैस्त्रिभिः श्लोकैः स्तम्भनयन्त्रान्तरमुपदिशति । तत्र अत्र यन्त्रे एकं मध्ये सर्वमध्ये मूलविद्याप्रथमाक्षरं त्रिकोणाकारं लिखेदिति सम्प्रदायः । मध्ये सर्वमध्यस्थप्रथमाक्षररूपत्रिकोणमध्ये । क्वापि भित्त्यादिषु । तत्रैव स्थापितप्रदेशे । अयं यन्त्रविरचनाक्रमः—अभीष्टमानेन भ्रमेण वृत्तं कृत्वा तद्बहिस्तद्वृत्तविष्कम्भार्द्धमानं वृत्तं कृत्वा तदन्तराले प्राग्वत् षट्कोणं कृत्वा तद्बहिरेकाङ्गुलमानेन वृत्तं कृत्वा तद्बहिः प्राग्वत् अष्टास्रं कृत्वा तद्बहिस्तत्कोणाग्रस्पृष्टास्पृष्टिकया वृत्तं कृत्वा तद्बहिरेकाङ्गुलमाने च वृत्तं कृत्वा तत्र सर्वमध्यस्थवृत्तमध्ये मूलविद्याक्षरप्रथमाक्षरं त्रिकोणरूपं च ससाधकादित्रयमुपरि सविन्दुकं समालिख्य तद्बहिस्त्रिकोणकोणेषु त्रिषु मूलविद्याया द्वितीयाक्षरादिदशमाक्षरान्तं प्रतिकोणं त्रयं त्रयमग्रादिप्रादक्षिण्येन नवाक्षराण्यालिख्य तत्कोणान्तरालेषु त्रिषु एकादशाक्षरादीनि एकोनविंशाक्षरान्तानि प्राग्वत् त्रित्रिक्रमेणाग्रकोणोत्तरपार्श्वादितद्दक्षिणपार्श्वान्तं नवाक्षराण्यालिख्य तद्बहिः षट्कोणकोणेष्वग्रादिप्रादक्षिण्येन विद्याविंशतितमाक्षरादीनि सप्तविंशाक्षरान्तानि प्रतिकोणं त्रित्रिक्रमेणाष्टदशाक्षराण्यालिख्य तत्कोणान्तरालेषु च प्राग्वदष्टत्रिंशाक्षरादीनि पञ्चपञ्चाशत्तमाक्षरान्तान्यष्टादशाक्षराण्यालिख्य तद्बहिरष्टास्रकोणाष्टके षट्पञ्चाशत्तमाक्षरादीन्येकोनाशीतितमाक्षरान्तानि चतुर्विंशत्यक्षराणि प्राग्वत्त्रित्रिक्रमेणालिख्य तदन्तरालाष्टके चाशीतितमाक्षरादीनि त्र्यधिकशततमाक्षरान्तानि चतुर्विंशत्यक्षरान्तानि प्राग्वदारम्भक्रमादालिख्य चतुरधिकशततमाक्षरादीनि शिष्टमूलविद्यासप्ताक्षराणि तदन्ते भौमदशाक्षराणि च सम्भूय सप्तदशाक्षराणि अष्टकोणबाह्यवृत्तद्वयान्तरालवीथ्यां प्राग्वदभितो विलिख्य तत्र देवीमावाह्य प्राग्वत् संपूज्य तद्यन्त्रं शरावादिसंपुटितं कृत्वा भित्त्यादिषु संस्थाप्य तत्र प्रतिदिनमभ्यर्च्य तत्र वलिं दत्त्वा पूर्वोक्तफलं प्राप्नोतीति ॥ ७१ ॥

कृत्वा षड़ष्टकोणानि षट्कोणानि पृथक् पृथक्।
क्रमात्त्रिकोणवृत्तान्तरालान् षट्कोणसंयुतान् ॥ ७२ ॥
वाह्यात् क्रमेण मध्यान्तं नक्षत्रतिथिवारयुक्।
विलिखेल्लिपिशः सर्व्वां मातृकां शक्तिसंयुताम् ॥ ७३ ॥
साध्यं सप्तसु मध्येषु विलिखेच्च प्रदक्षिणम्।
मायामध्यगतं देवि धारयेत् सर्व्वसिद्धये ॥ ७४ ॥
भूतप्रेतपिशाचादिशान्त्यै सर्व्वार्त्तिशान्तये।
गजवाजिखरोष्ट्रादिरोगशान्त्यै च धारयेत् ॥ ७५ ॥

---

कृत्वेत्यादिभिर्द्धारयेदित्यन्तैश्चतुर्भिः श्लोकैः सर्व्वरोगशान्तिकरं यन्त्रमुपदिशति। तत्र षड़ष्टकोणानि षट्कोणानि अष्टकोणानीति पदच्छेदः। अन्तः षट्कोणानि वहिः अष्टकोणानि चेत्यर्थः। पृथक् पृथक् क्रमात् त्रिकोणवृत्तान्तरालान् षट्कोणयुतान् पूर्व्वलिखितषट्कोणाष्टकोणयोः षट्कोणसंयुतान् त्रिकोणवृत्तान्तरालप्रदेशान् पृथक् पृथक् प्रत्येकं षट्कोणानि कुर्य्यादिति ग्रन्थयोजनाक्रमः। वाह्यात् क्रमेण मध्यान्तं वाह्याष्टकोणकोणादिसर्व्वमध्यगतषट्कोणं कोणमध्यान्तं। नक्षत्रतिथिवारयुक् साध्याक्षरलेखनस्थानेष्विति शेषः। लिपिश इत्यस्य शक्तियुतामित्यत्रान्वयः। मातृकां विसर्ज्जनीयरहितां पञ्चाशदक्षरवतीं प्रत्यक्षरं विसर्ज्जनीययोगात्तद्राहित्यं। शक्तिसंयुतामित्यस्याक्षरद्वयमाराध्यमुखादवगतं लिख्यते—यथा विसर्ज्जनीयसहितां मूलविद्याक्षरसहिताञ्चेति। सप्तसु मध्येषु षट्कोणसप्तकस्य सप्तसु मध्येष्वित्यर्थः। विलिखेच्च चकारेण पूर्व्वोक्तयन्त्रवद्विद्याशिष्टाक्षरदशकं भौमाक्षरदशकञ्च वाह्यवृत्तवीथ्यां विलिखेदित्येकोऽर्थः। समाकृष्यत इति सम्प्रदायार्थः। प्रदक्षिणं सर्व्वाणि उक्ताक्षराणि मायामध्यगतं हृल्लेखया क्रोड़ीकृतम्। भूतप्रेतपिशाचादिशान्त्यै आदिशब्देनापस्मारादयः। तैः कृतपीड़ाशान्त्यै गजवाजिखरोष्ट्रादि इत्यत्रादिशब्देन गोमहिषाजादयश्चतुष्पदा उच्यन्ते। अयमत्र विलेखनक्रमः—अभीष्टमानेन भ्रमेण वृत्तं कृत्वा तत्र-नित्यानित्यापटले प्रोक्तानुग्रहचक्रक्रमेण षट्कोणसप्तकमालिख्य तद्वहिः प्राग्वदष्टकोणं कृत्वा तद्वहिरष्टकोणाग्रस्पृष्टास्पृष्टिकया वृत्तं कृत्वा तद्वहिर्विकाङ्गुल-

प्राक्प्रत्यग्दक्षिणोदक्करेखाद्वादश संलिखेत्।
रेखाग्रे सर्व्वतः शूलास्तन्मध्याग्रे च पार्श्वयोः॥ ७६॥
स्तम्भयेति समालिख्य मध्यकोष्ठेऽरिनाम च।
परितो विलिखेन्मन्त्रवर्णान् भौमसमन्वितान्॥ ७७॥
भूर्जे वा कर्पटे लोहे शिलायां वा समालिखेत्।
गृहपट्टनयोर्लोहहृशदोरिष्टसिद्धिदम्॥ ७८॥

मानेन वृत्तं कृत्वा तत्र वाह्याष्टकोणेष्वग्न्‍कोणादि प्रादक्षिण्येन सविसर्ज्जनीयान्मातृकावर्णानादितोऽष्टौ समालिख्य तेष्वेव कोणेषु मूलविद्याया आदितः षोड़शाक्षरेषु प्रतिकोणमेकमेकं चैवमष्टाक्षराण्यादितः समालिख्य तत्कोणान्तरालेषु अष्टसु मातृकाया विद्यायाश्च नवमाक्षरादीनि षोड़शाक्षरान्तमष्टाक्षराणि प्राग्वत् क्रमादालिख्य तदन्तः षट्कोणमारभ्य प्रादक्षिण्येन प्रतिषट्कोणं षट्सु षट्सु कोणेषु तदन्तरालेष च षटसु षट्सु च संभूय चतुरशीतिसंख्येषु स्थानेषु मातृकाया विद्यायाश्च सप्तदशाक्षरादीनि पञ्चाशत्तमाक्षरान्तानि चतुस्त्रिंशदक्षराणि चतुस्त्रिंशत्स्थानेष्वालिख्य शिष्टेषु पञ्चाशत्स्थानेषु पुनरप्यकारादीनि विसर्जनीयरहितानि क्षकारान्तानि प्रत्यक्षरं त्रिसर्जनीययुक्तानि मातृकाक्षराणि पञ्चाशत् संख्यानि मूलविद्यैकपञ्चाशत्तमाक्षरादिभिः शततमाक्षरान्तैः पञ्चाशद्भिरक्षरैः सह प्राग्वत् क्रमेण समालिख्य विद्याशिष्टाक्षरदशकं भौमार्णदशकञ्च प्राग्वत् सर्ववाह्यवृत्तवीथ्यामालिख्य षट्कोणसप्तकमध्यसप्तके तत्तत्प्रयोगदिवसप्राप्तनक्षत्रतिथिवारान् सप्तम्यन्तानालिख्य तत्तदुपरि साधकादित्रयं प्राग्वदालिख्य तत्सर्वं यन्त्रं क्ष्मारेखाया उपरिगतचतुर्थस्वरेण क्रोड़ीकृत्य तत्र देवीमावाह्याभ्यर्च्य प्रोक्तक्रमसन्धारणात् प्रोक्तफलसिद्धिरिति॥ ७५॥

प्राक्प्रत्यगित्यादिभिर्द्वयोरित्यन्तैः पञ्चभिः श्लोकैः स्तम्भनकर कोष्ठयन्त्रमुपदिशति। तत्र तन्मध्याग्रे च पार्श्वयोः तत्तच्छूलं मध्यरेखाग्रे तत्तच्छूलमध्यरेखापार्श्वयोश्च स्तम्भय इति त्र्यक्षराणि यथाक्रमं त्रिशूलमध्यरेखाग्रे तद्दक्षिणवामपार्श्वयोश्च मध्यकोष्ठे सर्वमध्यस्थकोष्ठमध्ये सर्वमध्ये कोष्ठाधःपङ्क्तिमध्यकोष्ठमारभ्य निर्गमनगत्येत्यर्थः। भौमसमन्वितान् भौमवर्णसमन्वितान् मन्त्रवर्णान् गृहपत्तनयोर्निर्माणस्तम्भने तद्गतामङ्गलस्तम्भने वा इति शेषः। लोहदृशदोः पूर्वोक्ताधिकरणचतुष्टयस्य मध्ये तालेन हरितालेन शुभं मनोहरं क्रमतः शरावादिसंपुटनाक्रमतः यावत् फलावाप्तिस्तावत् कुर्व्वीत

गौरक्षेणाथ शिलायां तालेन विलिखेच्छुभम् ।
स्थापयेद्भित्तिमध्ये च भूमौ च क्रमतः शिवे ॥ ७६ ॥
नित्यशः पूजयेत् पुष्पैः सुगन्धैः प्रजपेत्तथा ।
यावत्फलाप्ति कुर्वीत नियतं सन्ध्ययोर्द्वयोः ॥ ८० ॥
प्राक्प्रत्यग्दक्षिणोदक् कुर्य्यात् सूत्राणि षोड़श ।
तैस्तु कोष्ठानि जायन्ते पञ्चविंशैः शतद्वयम् ॥ ८१ ॥
तेषु कोणेषु परितो मार्जयेत् प्राग्वदीश्वरि ।
अष्टाविंशति कोष्ठानि ततः शिष्टेषु दिक्ष्वपि ॥ ८२ ॥
प्राग्वदेकैकतः कुर्य्यात्त्रिकोणानि यथाविधि ।
मध्ये त्रिषु तु कोष्ठेषु साध्यसाधककर्म्म च ॥ ८३ ॥
उपर्य्यधो मध्यतश्च शेषेषु प्राग्वदालिखेत् ।
मन्त्रार्णानग्रमारभ्य विलिखेदभितः शिवे ॥ ८४ ॥

---

जपार्च्चनादिकमित्यर्थः । नियतं प्रतिदिवसं । यन्त्रविरचनाक्रमो यथा—प्राक्प्रत्यग्दक्षिणोदक् द्वादश द्वादश रेखाः समालिख्यैकविंशत्यधिकशतसंख्यानि कोष्ठानि निष्पाद्य तत्तद्रेखाग्राष्टचत्वारिंशत्कोष्ठ परितः प्रत्येकं त्रिशूलं कृत्वा तत्र सर्व्वमध्यस्थकोष्ठमध्ये साधकादित्रयं प्राग्वदालिख्य तत्कोष्ठाधःपङ्क्तिस्थमध्यकोष्ठमारभ्य प्रादक्षिण्यनिर्गमनगत्या यावदक्षरसमाप्ति मूलविद्याक्षराणि विलिख्य शिष्टकोष्ठदशके भौमाक्षरदशकमालिख्य वाह्यगतत्रिशूलेषु मध्यगतत्रिशूलेषु मध्यगतरेखाग्रतद्दक्षवामपार्श्वयोश्च स्तम्भय स्तम्भयेति त्र्यक्षरं प्रतित्रिशूलमालिखेत्तद्यन्त्रं भूर्जाद्यधिकरणचतुष्टयाद्यन्यतमस्थं प्रोक्तद्रव्येण विलिख्य प्राणप्रतिष्ठादिकं कृत्वा तत्र देवीमावाह्याभ्यर्च्य प्राग्वच्छुरावादिपुटितं कृत्वा प्रोक्तस्थानयोः संस्थाप्य तत्र सन्ध्याद्वयेपि प्रतिदिवसं गन्धसुपुष्पैरिष्टसिद्ध्यवधि पूजयन्नभीष्टं फलमाप्नोतीति ॥ ८० ॥

प्राक्प्रत्यगित्यादिभिर्ध्रुवमित्यन्तैरष्टभिः श्लोकैः समस्ताभीष्टफलप्रदं महावज्रयन्त्रमुपदिशति । तत्र तैः सूत्रैः । तेषु कोष्ठेषु अष्टाविंशतिकोष्ठानि प्रतिकोणमिति शेषः । शिष्टेषु त्रयोदशाधिकशतसंख्येषु । एकैकतः एकैककोष्ठात् ।

एतद्वज्रं महायन्त्रं समस्ताभीष्टसाधकम् ।
यत्रैतत् स्थापितं लोहशिलादिलिखितं शिवे ॥ ८५ ॥
तत्र चोरग्रहव्याधिरिपुसर्पसमुद्भवाः ।
भूतप्रेतपिशाचादिकोपजाश्चाप्युपप्लवाः ॥ ८६ ॥
न भवन्ति कदाप्यत्र सम्भवन्ति च सम्पदः ।
वास्तुमर्म्मादिदुःखादि शमयेद् गेहगञ्च तत् ॥ ८७ ॥
यस्मिन् गृहे स्थापितन्तु यन्त्रं तद्गेहवर्त्तिनाम् ।
कृत्याभिचारक्षुद्रादि पीड़ा न भवति ध्रुवम् ॥ ८८ ॥

---

साध्यसाधककर्म च साध्यसाधककर्म्माणीत्यर्थः। अग्रमारभ्य विलिखेदित्यनेनान्वयः। उपर्य्यधो मध्यत इति पूर्वत्र साध्यसाधककर्म चेत्यनेनान्वयः। तल्लेखनप्रकारास्तूपरिकोष्ठे साधकमधः कोष्ठे साध्यं मध्यकोष्ठे कर्म्म चेति। शेषेषु दशोत्तरशतसंख्येषु। प्राग्वत् प्रादक्षिण्यप्रवेशगत्या दशोत्तरशताक्षरान् मन्त्रार्णान् लिखेदित्यनेनान्वयः। शिलादीत्यत्रादिशब्देन भूर्जपत्रपटतालान्युच्यन्ते। पिशाचादीत्यत्रादिशब्दोऽपस्मारादिविषयः। उपप्लवाः उपद्रवाः न भवन्तीति पूर्व्वत्रान्वयः। मर्म्मादीत्यादिशब्दो द्वारभित्तिभागादिविषयः। गेहगञ्च तत् गृहस्थापितं तद्यन्त्रमित्यर्थः। क्षुद्रादीत्यादिशब्दः पिशाचादिविषयः। अयमत्र विलेखनक्रमः—प्राक्प्रत्यग्दक्षिणोदक्क षोड़शसूत्रास्फालनेन पञ्चविंशत्यधिकशतद्वयकोष्ठानि निष्पाद्य तेषु कोष्ठेषु चतुर्षु कोणेषु प्रतिकोणमष्टाविंशत्यष्टाविंशतिकोष्ठानि सम्भूय द्वादशाधिकशतसंख्यानि कोष्ठानि प्राग्वन्मध्ये वज्राकारं यथा भवति तथा मार्जयित्वा तथा शिष्टेषु त्रयोदशाधिकशतसंख्येषु कोष्ठेषु चतसृषु दिक्षु प्रतिदिशमेकैकं कोष्ठं सम्भूय चत्वारि कोष्ठानि मार्जयित्वा तत्र त्रिकोणानि प्राग्वत् समत्रिरेखानि कृत्वा तत्र सर्वमध्यकोष्ठे कर्म्म तदुपरितनकोष्ठे साधकं तदधःस्थितकोष्ठे साध्यञ्चालिख्य शिष्टेषु चतुर्दिग्गतत्रिकोणचतुष्टयसहितेषु दशोत्तरशतसंख्येषु कोष्ठेषु अग्रत्रिकोणादिप्रादक्षिण्यप्रवेशगत्या तत्संख्यानि मूलविद्याक्षराणि विलिख्य एतद् यन्त्रं प्रोक्ताधिकरणान्यतमगतं कृत्वा प्रोक्तेषु देशेषु प्राणप्रतिष्ठादिपुरःसरमभ्यर्च्य स्थापनात् प्रोक्तफलसिद्धिरिति ॥ ८८ ॥

वायग्निनैर्ऋतेशञ्च कुर्य्याद्‌द्वादशसूत्रकम्।
तैर्व्वज्ररूपकोष्ठानि एकविंशशतम्भवेत्॥ ८९॥
तेषु मध्ये समालिख्य साध्यनाम ततो वहिः।
अग्रादभित एवान्यान्यक्षराणि समालिखेत्॥ ९०॥
निर्गमेन महीवर्णपूर्व्वाणि क्रमतः शिवे।
स्थापितं लोहशिलादिलिखितं पूजितन्तु वा॥ ९१॥
रोगभूतग्रहोन्मादपिशाचापस्मृतिद्विषः।
अन्यानि क्लेशकारीणि यानि तानि विनाशयेत्॥ ९२॥

---

वाय्वित्यादिभिर्भूतलइत्यन्तैः सप्तभिः श्लोकैर्वज्रवज्राभिधं यन्त्रं तद्विनियोगादिकञ्चोपदिशति। तत्र तैः सूत्रैस्तेषु वज्ररूपकोष्ठेषु। मध्ये सर्वमध्यस्थवज्रकोष्ठे। साध्यनाम साधककर्म्माणि अग्रान्मध्यकोष्ठाधःस्थकोष्ठारभ्य तः। अभितः प्रादक्षिण्येन। अन्यानि कोष्ठानि। अक्षराणि मूलविद्याक्षराणि अन्येषु कोष्ठेषु अक्षराणि लिखेदित्यर्थः। महीवर्णपूर्वाणि पूर्वं भौमाक्षराणि विलिख्य शेषेषु कोष्ठेषु विद्याक्षराणि लिखेदित्यर्थः। शिवे इति सम्बुद्धिः। शिलादीत्यत्रादिशब्दो भूर्जपत्रपटादिविषयः। अन्यानि शत्रुस्थापितकृत्याकालभस्मादीनि प्रोक्तेषु रोगादिषु आर्त्तिषु पीड़ासु प्रोक्तरोगादिसञ्जातासु पीड़ास्वित्यर्थः। तद्वज्रं वज्रवज्रं मध्ये सर्वमध्यस्थकोष्ठमध्ये तुविशेषः। क्षीरद्रुक्वाथपूरितं अश्वत्थोडुम्बरप्लक्षवटानां चतुर्णां क्षीरवृक्षाणां त्वग्भिः सह क्वाथितैः प्रशमितोष्णैः खारिमाणैस्तोयैः पूरितम्। निधाय इत्यस्य पूर्वत्रान्वयः। देवीं पञ्चमीं। सलिले कुम्भस्थे इति शेषः। आत्मवान् अधिगतः। तैर्जलैर्यन्त्रविद्यादिशक्तिसंक्रमतः कलितानुभावैः। अयमत्र विलेखन क्रमः—इष्टमानभ्रमेण वृत्तं निष्पाद्य तत्र प्राक्प्रत्यग्दक्षिणोत्तरञ्च तद्वृत्तावधि ब्रह्मसूत्रद्वयमास्फाल्य प्राक्प्रत्यग्ब्रह्मसूत्रस्य प्रागग्राद्दक्षिणोत्तरब्रह्मसूत्रदक्षिणाग्रान्तं तदग्रात् प्राक्पश्चिम ब्रह्मसूत्रपश्चिमाग्रान्तं तदग्राद्दक्षिणोत्तरब्रह्मसूत्रोत्तराग्रान्तं तदग्रात् प्राक्पश्चिमब्रह्मसूत्रप्रागग्रान्तं ज्यारूपं सूत्रचतुष्टयमास्फाल्य ब्रह्मसूत्रद्वयस्य वृत्तस्य च मार्जनाद्दिग्गतकोणचतुष्टयं समचतुरस्रं विधाय वायुदिक्स्थरेखादिवह्निदिक्स्थरेखान्तं नैर्ऋतदिक्स्थरेखादि ईशदिक्स्थरेखान्तं च समान्तरालदशसूत्रास्फालनेन वज्रवज्राकारमेकविंशत्यधिकशतसंख्यवज्ररूपकोष्ठसहितं यन्त्रं विधाय तत्र

प्रोक्तेष्वाप्तिं ष्वपि तथा तद्वज्रं गौरकैर्भुवि ।
विलिख्य मध्ये कुम्भन्तु क्षीरद्रुक्काथपूरितम् ॥ ९३ ॥
निधाय देवीं सलिले समावाह्याभिपूज्य च ।
स्पृशञ्जलं जपेद्विद्यां सहस्त्रत्रयमात्मवान् ॥ ९४ ॥
तैर्जलैरभिषिञ्चेत्तं गदिनं प्राङ्मुखं ततः ।
तैः क्लेशैर्मुक्तदेहस्तु सुखी जीवति भूतले ॥ ९५ ॥
विद्याप्राप्त्यभिषेकन्तु वज्रेऽस्मिन् कोष्ठवज्रके ।
सैकविंशशते वापि कुम्भं संस्थाप्य सेचयेत् ॥ ९६ ॥
वेदाङ्गुलपरिभ्रान्त्या वृत्तं कृत्वा ततो बहिः ।
द्व्यङ्गुले द्व्यङ्गुले कुर्य्यादेकादश ततः क्रमात् ॥ ९७ ॥
तेषु द्व्यङ्गुलमानेषु तिर्य्यक् सूत्राणि पातयेत् ।
एकादश ततस्तेषु प्राङ्मध्यात्तु प्रदक्षिणम् ॥ ९८ ॥
भूदशार्णांस्तु तां विद्यामालिखेन्निर्गमक्रमात् ।
रेखाग्राणि च शूलानि कृत्वा साध्यञ्च मध्यतः ॥ ९९ ॥

---

सर्वमध्यस्थकोष्ठमध्ये साधकसाध्यकर्माणि प्राग्वदालिख्य तदधःस्थवज्रकोष्ठमारभ्य प्रादक्षिण्यनिर्गमनगत्या भौमाक्षरदशकं वज्रकोष्ठदशके विलिख्य शेषेषु दशोत्तरशतसंख्यवज्ररूपकोष्ठेषु तत्संख्यानि मूलविद्याक्षराणि विलिख्यैतद्यन्त्रं प्रोक्ताधिकरणेष्वन्यतमगतं कृत्वा स्थापनेन पूजनेन च तद्यन्त्रे प्रोक्तक्रमाभिषेकेन वा प्रोक्तफलसिद्धं भवतीति ॥ ९५ ॥

विद्येत्यादिना श्लोकेन प्रोक्तेषु सप्तसु यन्त्रेषु यन्त्रत्रयं विद्याप्राप्त्यभिषेके अप्यतिदिशति। अत्र च तुर्विशेषे। वज्रेऽस्मिन् अनन्तरपूर्वोक्तवज्रवज्राभिध सप्तमे यन्त्रे। कोष्ठवज्रके कोष्ठवज्ररूपे षष्ठे यन्त्रे। सैकविंशशते सैकविंशशतसंख्यकोष्ठरूपे पञ्चमे यन्त्रे। वा विकल्पे तेषु त्रिषु अन्यतमंयन्त्रे इत्यर्थः ॥ ९६ ॥

वेदाङ्गुलेत्यादिभिरनयेत्यन्तैश्चतुर्भिः श्लोकैरखिलसिद्धिकरं यन्त्रं विद्यावैभवञ्चोपदिशति। तत्र वेदाङ्गुलपरिभ्रान्त्या प्रतिदिशं चतुरङ्गुलमानपरिभ्रान्त्या। ततस्तद्वृत्तात्। द्व्यङ्गुले द्व्यङ्गुले द्व्यङ्गुलमाने द्व्यङ्गुलमाने एकादश-

तद्यन्त्रं प्राग्वदखिलविनियोगेषु योजितम् ।
नासाध्यमस्ति भुवने विद्यया सिद्धयाऽनया ॥ १०० ॥
मनस्तत्त्वमयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निष्फालनाच्चित्ते तत्तत्त्वं स्वात्मसात्कृतम् ॥

इतिश्रीषोड़शनित्यातन्त्रेषु श्रीकादिमते
त्रयोविंशपटलं परिपूर्णम् ॥

---

वृत्तानीति शेषः । तेषु वृत्तेषु तत् द्व्यङ्गुलमानेषु स्वैकादशांशसहितेष्विति शेषः । एतन्मानमन्तर्वृत्तस्यैवोक्तम् । तिर्य्यक् सूत्राणि सर्व्वमध्यवृत्तात् सर्ववाह्यवृत्तान्तग-रूपाणीत्यर्थः । तेषु कोष्ठेषु । प्राङ्मध्यात् सर्वमध्यवृत्तान्तर्भूतप्रदेशरूपकर्णि-काया वहिस्तदनन्तरवीथ्यां प्राङ्मध्यकोष्ठोत्तरकोष्ठे च साधकसाध्यकर्माणि लिखेदिति सम्प्रदायार्थः । प्राग्वत् प्राणप्रतिष्ठापुरःसरमर्च्चनधारणस्थापना-दिभिः । अखिलविनियोगेषु प्रोक्तेष्विति शेषः । अयमत्र विलेखनक्रमः— प्रतिदिशं चतुरङ्गुलमानभ्रमेण वृत्तं निष्पाद्य तद्वहिर्द्व्यङ्गुलद्व्यङ्गुलमानेन प्राग्वदेकादशवृत्तानि निष्पाद्य तत्र सर्वमध्यवृत्ते तत्सर्ववाह्यवृत्ते च तत्त-द्विष्कम्भमानं त्रिगुणीकृत्य तत्तन्मानमेकादशधा विभज्य तत्तद्देशेष्वेकादश चिह्नानि पश्चिमादिविधाय तत् सर्वमध्यवृत्तस्थचिह्नैकादशकमारभ्य तत् सर्ववाह्यवृत्तस्थचिह्नैकादशचिह्नमध्ये एकादश सूत्राण्यास्फाल्य तत्सर्ववाह्य-वृत्तस्थैकादशरेखाग्रं किञ्चित् प्रसार्य्य प्रत्येकं शूलाकारं कृत्वा एवं मध्य-कर्णिकाया वहिरेकविंशतुत्तरशतकोष्ठसहितं वृत्ताकारं वहिः शूलोपेतं यन्त्रं निष्पाद्य तत्र तत्कर्णिकायां साधकादीनि प्राग्वदालिख्य तदनन्तरवाह्य-वृत्तवीथ्यां प्राङ्मध्यकोष्ठमारभ्य उत्क्रमात् प्रादक्षिण्यनिर्गमनगत्या दशोत्तर शतसंख्येषु कोष्ठेषु विद्याक्षराणि तत्संख्यानि विलिख्य शिष्टकोष्ठैकादशके भौमाक्षरदशकमालिख्य शिष्टे चैकस्मिन् प्राग्वत् साधकादित्रयमालिखेत्तत्प्रोक्ता-धिकरणेष्वन्यतमगतं कृत्वा प्राग्वत् प्रोक्तप्रयोगेषु प्राणप्रतिष्ठापुरःसरमर्च्चना दिभिः प्रोक्तफलसिद्धिर्भवेदिति ॥ १०० ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्च-सार-सिंह
राजप्रकाशाभिधानेन श्रीसुभगानन्दनाथेन विरचितायां मनोरमाख्यायां
व्याख्यायां षोड़शनित्याङ्गभूतपञ्चमीविद्याविधानप्रकाशनपरं
त्रयोविंशं पटलम् परिपूर्णं परामृष्टम् ॥ २३ ॥

ग्रन्थसंख्या । त्रयोविंशे तु पटले यन्त्राणि मुनिसंखया ।
व्याखगाग्रन्था नेत्रशतमेकाशीतिस्तथार्द्धकम् ॥

## चतुर्विंशपटलम् ।

अथ षोड़शनित्यानां ध्यानानि विविधानि ते ।
कथयामि शृणु प्राज्ञे वाञ्छितार्थसुरद्रुमान् ॥ १ ॥
एकैकमङ्गाङ्गित्वेन तासां तच्छक्तिभिस्तथा ।
प्रयोगेषु समस्तेषु वाह्याभ्यन्तरतः क्रमात् ॥ २ ॥
श्रियै कीर्त्त्यै जयावाप्त्यै वश्याकर्षणसिद्धये ।
ध्यायेद्देवीः समस्ताश्च लोहिताकारमण्डनाः ॥ ३ ॥
विद्याप्तौ शान्तिके मुक्ताविन्दुकर्पूरसन्निभाः ।
विद्वेषोच्चाटनिधननिग्रहेष्वसिताः स्मरेत् ॥ ४ ॥
धूम्रा वा चिन्तयेत् सर्व्वाः प्रोक्तद्वेषादिसिद्धये ।
सर्व्वत्र स्वसमाकारवर्णशक्तिभिरावृताः ॥ ५ ॥

---

पूर्वस्मिंस्त्रयोविंशे पटले षोड़शनित्यानामङ्गभूताया वाराह्या विधानमुपदिश्यानन्तरं षोड़शनित्यानां विविधानि ध्यानानि तासां प्रत्येकमङ्गाङ्गित्व क्रमतः प्रयोगादिकञ्चोपदिशति—अथ षोड़शेत्यादिना सिद्धिकृदित्यन्तेन श्लोकशतरूपेण चतुर्विंशेन पटलेन। तत्र अथ षोड़शेत्यादिना क्रमात् इत्यन्तेन श्लोकद्वयेन पटलार्थानुपदिशति। तत्र सुरद्रुमान् सुरद्रुमसदृशानि अभिमतार्थप्रदानादिष्वमोघतयेति यावत्। एकैकं एकैकक्रमेण तासां नित्यानां तच्छक्तिभिः तत्तत्परिवारशक्तिभिः सहेति शेषः। वाह्याभ्यन्तरतः स्थूलसूक्ष्मभेदतः। ध्यानानीति पूर्वत्रान्वयः॥ २ ॥

श्रियै इत्यादिना श्लोकेन श्रीकीर्त्तिजयवश्याकर्षणेषु सामान्यध्यानमुपदिशति। तत्र वश्याकर्षणसिद्धये च वश्यसिद्धये आकर्षणसिद्धये च। समस्ताः षोड़श नित्याः सपरिवारा लोहिताकारमण्डना इत्यत्र मण्डनशब्दो वसनभूषणमाल्यानुलेपनादिविषयः॥ ३ ॥

विद्याप्तावित्यादिना श्लोक पूर्वार्द्धेन विद्याप्राप्तिकरं शान्तिकरं मुक्तिसिद्धिकरं सामान्यध्यानमुपदिशति। तत्र इन्दुकर्पूरसन्निभाः इन्दुसन्निभाः कर्पूरसन्निभाश्च कान्तिवर्णाभ्यामिति शेषः॥ विद्वेषेत्यादिना वृता इत्यन्तेनार्द्धाधेन श्लोकेन

क्षित्यादिभूतैः सत्त्वादिगुणैरेकैकसंहतैः।
एकद्व्यादिसमारब्धैर्व्वर्णाकारैस्तु शक्तयः॥ ६॥
असंख्याता भवन्त्यासां कात्स्न्याद्ध्यानन्तु को वदेत्।
को वा शृणोति साकल्यात् ततः किञ्चिद्वदामि ते॥ ७॥
भौमाकाराः पीतवर्णाः सर्वाः स्तम्भनकारिकाः।
आप्याः सत्त्वगुणाः सर्व्वाः सिताकाराः समीरिताः॥ ८॥
ताः सर्व्वा ज्ञानशान्तिश्रीकीर्त्तिसौभाग्यमुक्तिदाः।
आग्नेया राजसाः सर्व्वा लोहिताकारसंयुताः॥ ९॥

---

विद्वेषोच्चाटननिधननिग्रहेषु सामान्यध्यानमुपदिशति। तत्र असिताः आकारवसनमाल्यभूषणानुलेपनादिभिरिति शेषः। धूम्राः प्रागवदाकारादिभिरिति शेषः। वा विकल्पे। सर्व्वा नित्याः। सर्वत्र प्रोक्तेषु ध्यानभेदेषु॥ ५॥

क्षित्यादीत्यादिना वदामि ते इत्यन्तेन श्लोकद्वयेन परिच्छिन्नरूपायाः परायाः शक्तेः परिच्छिन्नाकारतया विविधवर्णाद्युपलब्धिकारणं तत्तदुपलब्धशक्तीनामसंख्यातत्वादिकञ्चोपदिशति। तत्र क्षित्यादिभूतैः पृथिव्यप्तेजोवाय्वाकाशैः। सत्त्वादिगुणैः सत्त्वरजस्तमोभिः एकैकसंहतैः पृथक् पृथक् सम्बद्धैः परस्परमिति शेषः। एकद्व्यादिसमारब्धैः भूतानां पृथक् पृथक् सम्बद्धगुणानामेकद्व्यादिसमसमांशविषमविषमांशपरिकल्पितैर्वर्णाकारैः संजाता इति शेषः॥ आसां शक्तीनां कात्स्न्येन ध्यानन्तु को वदेत् कोवा शृणोति साकल्यात् वक्तृणां श्रोतॄणाञ्चानित्यत्वादिति यावत् ततस्तस्मात् किञ्चिदित्युक्तिस्तेषु शक्तिभेदेषु मन्त्रेषु वक्ष्यमाणरूपस्यैकदेशत्वात्। एतदुक्तं भवति सत्त्वादिगुणैः पृथक् पृथक् नित्यसम्बन्धानां क्षित्यादिभूतानामेकद्व्यादिसमविषमांशपरिकल्पनाभेदभिन्नवर्णाकाराणां शक्तीनामसंख्यातत्वात्तासामाकारभेदमनुभावञ्च वक्तुं श्रोतुं वाऽशक्यत्वात्तेषु शक्तिभेदेषु विघ्नपरित्राणार्थं शक्तितः किञ्चिद्वदामीति॥ ७॥

भौमाकारा इत्यादिभिः स्मृता इत्यन्तैरर्द्धाधिकैस्त्रिभिः श्लोकैरेकैकगुणयुक्तानां पञ्चभूतशक्तीनां क्रमेण ध्यानं तत्प्रयोगांश्चोपदिशति। तत्र भौमाकारा भूमिस्वरूपाः। पीतवर्णाः विग्रहवसनभूषणानुलेपनमाल्यादिभिरितिशेषः। सर्वाः परिवारा नित्याः स्तम्भनकारकाः। भूमेरचलात्मकत्वात्। आप्या जलात्मिकाः शक्तयः। सत्त्वगुणाः सत्त्वगुणयुक्ताः। सर्वाः प्रागवत् सिताकाराः प्राग-

वश्याकर्षणशान्तिश्रीसौभाग्यविजयप्रदाः।
वायुरूपा धूम्रवर्णा सर्वा द्वेषादिकारकाः॥ १०॥
नाभसा नीलवर्णास्ता मारणोत्सादयोः स्मृताः।
आसां मुखभुजादेहविधानं शृणु पार्वति॥ ११॥
एकवक्त्राश्चतुर्वक्त्रा नववक्त्रास्तथा पराः।
षोडशास्याः पञ्चविंशद्वदना अपि काश्चन॥ १२॥
षट्त्रिंशद्वदना क्वापि चत्वारिंशन्नवाननाः।
चतुःषष्टिमुखास्तद्वदेकाशीतिशताननाः॥ १३॥

---

वह्निग्रहादिभिः। ताः सर्वा जलरूपाः शक्तयः। जलशक्तीनां ज्ञानादिप्रदत्वं सुष्ठ्वात्मकत्वात्। लोहिताकारसंयुताः प्राग्वह्निगृहादिभिः। आग्नेयानां शक्तीनां वश्यादिप्रदत्वं ग्रासाद्यात्मकत्वात्। वायुरूपाः शक्तय इति शेषः। धूम्रवर्णाः प्राग्वह्निगृहवसनादिभिः। द्वेषादिकारका इत्यत्रादिशब्द उच्चाटनादिविषयः वायोरुच्चाटनादिकारकत्वं चलनात्मकत्वात्। नाभसा आकाशात्मिकाः शक्तयः। नीलवर्णाः प्राग्दिग्गृहादिभिः। ताः सपरिवारा नित्या मारणोत्सादनयोः उत्सादो नाम मृतवत् अकिञ्चित्करत्वं तयोः कर्मणोरिति शेषः। स्मृता धराताः। आकाशात्मकशक्तीनां निधनसिद्धिकरत्वमाकाशस्थाविग्रहत्वात् वायुनभसोराजसगुणात्मकत्वमस्तीति सम्प्रदायः॥ १०॥

आसामित्यादिनोत्तरार्द्धेन कद्यादिसमविषमांशयोगसंजातानां तासां शक्तीनां मुखभुजदेहस्वरूपभेदविधानं प्रस्तौति। तत्र पार्वतीतिसम्बुद्धिः॥ ११॥

एकवक्त्रा इत्यादिना शताननाः इत्यन्तेन श्लोकद्वयेन गुणानां भूतानामेकद्व्यादि समसमांशगुणयोगात्तासां वक्त्रसंख्याभेदध्यानमुपदिशति। तत्र एकवक्त्रा एकवदनयुक्ताः। चतुर्वक्त्राः प्राग्वत्। अपरा अन्याः शक्तय इति शेषः। षोडशास्याः षोडशमुखाः काश्चन प्राग्वत् शक्तयः। क्वापि प्रयोगविशेषे चत्वारिंशन्नवाननाः एकोनपञ्चाशदाननाः। एकाशीतिशताननाः एकाशीत्याननाः शताननाश्च भूतानामेकद्व्यादिदशान्तानामंशानां गुणानामेकद्व्यादिदशान्तैरंशैः समसंख्यांशक्रमेण संगुणनादेवं संजातसंख्यवक्त्राः शक्तयो दशविधा दर्शिता भवन्ति। तासां मुखक्रमस्तु कण्ठपीठोपरि एकवक्त्रं चतुर्वक्त्रपक्षे तु

बहुना किं मुखभुजसंख्यासाधनवाञ्छया ।
तथापि दर्शितं किञ्चिद्वक्त्रे भुजद्वयं द्वयम् ॥ १४ ॥
नामरूपातिगा येन तेन साऽनन्तविग्रहा ।
वसन्ति नानारूपाश्च भवेयुस्तव वाञ्छया ॥ १५ ॥
आद्याया ललितायाः स्युरन्याः पञ्चदशाङ्गगाः ।
ललिताङ्गित्वरूपेण सर्वासामात्मविग्रहाः ॥ १६ ॥
तेन तासान्तु सर्वासां स्वान्तान्ताः परिचारिकाः ।
तत्तद्वर्णायुधाकारवाहनैश्च सुसंयुताः ॥ १७ ॥
तथाविधैः स्वस्वशक्तिवृन्दैश्च वेष्टिता अपि ।
इति तासां ध्यानभेदाः स्थूलाः प्रोक्ता महेश्वरि ॥ १८ ॥

---

प्रथमवक्त्रोपरि तिर्य्यग्रूपेण वक्त्रत्रयं तेन सह चतुर्वक्त्रम् । नववक्त्रपक्षे तु तदुपरि च तिर्य्यक्पङ्क्तिरूपेण पञ्चवक्त्रं तैः सह नववक्त्रम् । एवमुत्तरत्रापि उपरि उपरि सप्तनवैकादशत्रयोदशपञ्चदशसप्तदशैकोनविंशतिसंख्यान्तं वक्त्रं परिकल्पनात् प्रोक्तसंख्यवक्त्रा भवन्ति इति च सम्प्रदायार्थः ॥ १३ ॥

बहुनेत्यादिना वाञ्छयेत्यन्तेन श्लोकद्वयेन नामरूपातिगाया ललितायाः प्रोक्तक्रमेणोत्तरत्रापि भूतांशानां गुणांशानां समसंख्यगुणनादेकद्व्यादिदशदशांश गुणनाच्च संजातानां शक्तीनामसंख्यातत्वात्तासां मुखभुजादिभेदपरिकल्पितविग्रहादेः साधकाभिमतानुगुणत्वमुपदिशति । तत्र बहुना विग्रहविशेषपरः शतेन च । वक्त्रे वक्त्रे भुजद्वयं प्रोक्तानां मुखसंख्यानामेकैकस्य मुखस्य द्विद्विभुजक्रमेण यावत् संख्यं कल्पयेदिति यावत् । नामरूपातिगा नाम्नां रूपाणाञ्चापरिच्छिन्नत्वात् परायाः शक्तेर्बहुत्वाच्चेति शेषः । आसां नित्यानाम् ॥ १५ ॥

आद्याया इत्यादिभिर्महेश्वरीत्यन्तैस्त्रिभिः श्लोकैः षोड़शनित्यानामङ्गाङ्गित्वक्रमादिकमुपदिशति । तत्र अङ्गगा मध्यनित्याङ्गगाः । आत्मविग्रहाः तत्तन्नित्याविग्रहाः । स्वान्तान्ताः तत्तन्नित्यान्ताः शेषनित्यान्ताः । तत्तद्वर्णायुधाकारवाहनैः मध्यस्थमध्यस्थनित्यावर्णायुधाकारवाहनैः । तथाविधैः तत्तद्वर्णायुधाकारवाहनैः । महेश्वरीति सम्बुद्धिः । एतदुक्तं भवति षोड़शनित्यानामङ्गाङ्गित्वध्यानेष्वङ्गिरूपेण मध्ये स्थिताया ललितायाः कामेश्वर्य्यादिपञ्चदशनित्याः परिवारत्वेन

सूक्ष्मरूपाणि च तथा कथयामि तवानघे ।
येन ते साधकाः सर्व्वं वाञ्छितं प्राप्नुयुः क्षणात् ॥ १९ ॥
प्रोक्तेष्वाधारपद्मेषु लोहितात्मैक्यविग्रहाम् ।
विभाव्य तेजोनिचये तत्र सिद्धिञ्च चिन्तयेत् ॥ २० ॥
तेन सर्व्वमभीष्टन्तु समवाप्नोत्ययत्नतः ।
पूजातर्पणहोमादिरहितं भावनेन वै ॥ २१ ॥
परन्तु ध्यानमुदितमखण्डात्मविमर्शतः ।
निर्व्वातदीपसङ्काशमात्मनात्मसमीक्षणात् ॥ २२ ॥

---

वहिर्ललितासदृशविग्रहायुधवाहनादियुताः । कामेश्वरीनित्याया अङ्गित्वे तु कामेश्वरीविग्रहादियुता ललितैवमित्येतदात्मकत्वेनाङ्गिरूपेण स्थिता । तदनन्तरं भगमालिन्यादिचित्रान्ताश्चतुर्दशनित्याश्च तदन्ते कामेश्वरी च सम्भूय पञ्चदश नित्याः परिवारत्वेन वहिः स्थिताः । एवं भगमालिन्यादीनामङ्गित्वेपि तत्तन्नित्याविग्रहा ललितैव मध्याङ्गित्वेन तद्बहिस्तदनन्तरनित्यास्तत्तन्नित्यान्ताः पञ्चदश नित्यास्तत्तदाकाराः परिवारत्वेन स्थिताश्च ध्येया भवन्तीति ॥ १८ ॥

सूक्ष्मरूपेत्यादिभिर्भावनेन वै इत्यन्तैस्त्रिभिः श्लोकैः प्रस्तावादिपुरःसरं सूक्ष्मरूपध्यानं तेन प्रयोगादिकञ्चोपदिशति । तत्र सूक्ष्मरूपाणि तासां ध्यानानि इति शेषः । अनघे इति सम्बुद्धिः । येन सूक्ष्मध्यानानुसन्धानेन । प्रोक्तेषु नित्यानित्यापटले इति शेषः । लोहितात्मैक्यविग्रहां लोहिताकारत्वेन स्वैक्यविग्रहवत्तां । तत्र तेजोनिचये । सिद्धिं अभिमतामिति शेषः । तेन भावनेनेत्यनेनान्वयः । एतदुक्तं भवति प्रोक्तेष्वाधारपद्मेषु लोहिताकारं स्वस्मादपृथग्भूतं तेजोनिचयं विभाव्य तत्तेजोमध्ये साध्यसाधककर्मणां स्वरूपेण भावनया समीहितफलं प्राप्नोतीति ॥ २१ ॥

परमित्यादिना श्लोकेन परध्यानमुपदिशति । तत्र अखण्डात्मविमर्शतः कटकमुकुटाद्यखिलभूषणादिविशेषेष्वपृथक्त्वेन तत्तदाकारतया स्थितकनकसत्तामात्रवदिदमाकारतया प्रतीतेषु सकलपदार्थेष्वपृथक्त्वेन तत्तदाकारतया स्थित परशक्तिविमर्शतः । निर्वातदीपसङ्काशं देशकालाद्यपरिच्छिन्नतया निश्चलपूर्णप्रकाशरूपमुपलब्धमिति शेषः । आत्मनात्मसमीक्षणात् अनन्यप्रकाशरूप-

स्थूलेन साधयेत्तत्तदिष्टञ्चैव शुभाशुभम् ।
प्रोक्तक्रमेण देवेशि सततं साध्यसाधकैः ॥ २३ ॥
सिद्धस्तु सूक्ष्मरूपेण ध्यानेन सकलेप्सितम् ।
साधयेत् पररूपन्तु साध्यं साधनसिद्धये ॥ २४ ॥
ब्रूहि देव महेशान स्थूलसूक्ष्मस्वरूपयोः ।
ध्यानयोः कर्म्मणा सिद्धिं विविधां फलयोगतः ॥ २५ ॥
तासां तत्तत्करेषूक्ताप्यायुधान्यप्यशेषतः ।
शृणु वक्ष्ये महेशानि क्रमेण तव साम्प्रतम् ॥ २६ ॥
वामदक्षिणयोः स्यातां द्विभुजे तु वराभये ।
पाशाङ्कुशौ चतुर्ब्बाहौ षड्भुजे चापसायकौ ॥ २७ ॥

---

त्वादात्मन इत्यर्थः। एतदुक्तं भवति अखण्डात्मविमर्शतः आत्मनात्मसमीक्षणा दुपलब्धं निर्वातदीपसङ्काशस्वरूपं परध्यानमिति ॥ २२ ॥

स्थूलेत्यादिना सिद्धये इत्यन्तेन श्लोकद्वयेन प्रोक्तत्रिविधध्यानेषु साध्यादीनां प्रयोगादिषु ध्यानविभागक्रममुपदिशति। तत्र स्थूलेन ध्यानेनेति शेषः। साधयेत् साधयेतामित्यर्थः। तुर्विशेषे। पररूपं विमर्शात्मकमिति यावत्। तुर्विशेषे। साध्यं प्राप्यं उपपेयंरूपं विश्रान्तिभूमिरित्यर्थः। अपृथक्त्वभावनयेति शेषः। अपरिच्छिन्नायां परायां शक्तौ स्वस्मादपृथक्त्वेन सिद्धायामप्यपरप्राप्याभावादात्मलाभान्न परं विद्यत इति वचनाच्च तदेव प्राप्यमिति यावत् ॥ २४ ॥

ब्रूहीत्यादिना श्लोकेन स्थूलसूक्ष्मध्यानयोः कर्म्मणा सिद्धिक्रमं देवी पृच्छति। तत्र फलयोगतः समीहितफलं प्राप्नोति ॥ २५ ॥

तासामित्यादिना श्लोकेन वक्ष्यमाणायुधविशेषान् पृष्टार्थंकथनञ्च प्रस्तौति। तत्र अपिशब्देन त्वत्पृष्टविविधकर्म्मसिद्धीश्च वक्ष्ये इत्युक्तमिति सम्प्रदायः। महेशानीति सम्बुद्धिः। क्रमेण द्विसंख्यचतुःसंख्यभुजादिक्रमेण ॥ २६ ॥

वामेत्यादिना वाञ्छयेत्यन्तेन श्लोकद्वयेनायुधसामान्यपरिभाषाक्रमादिकमुपदिशति। तत्र वामदक्षिणयोः करयोरिति शेषः। द्विभुजे द्विभुजध्याने। वराभये वराभयसंज्ञे मुद्रे एतत् प्रथमाद्विवचनं। पाशाङ्कुशौ चतुर्बाहौ चतुर्भुजध्याने। ऊर्द्ध्वभुजवामदक्षिणे पाशाङ्कुशौ इतरयोः प्राग्वत् वराभयमुद्रे चेत्यर्थः।

चर्म्मखड्गौ चाष्टभुजे गदाशूलौ दशोदिते।
मुखपाण्यायुधानान्तु रूपसंख्यादिवाञ्छया ॥ २८ ॥
यस्मिन् कर्म्मणि तां देवि यथा स्मरति साधकः।
तथा तस्याग्रतो भूत्वा पालयति तमादरात् ॥ २९ ॥
सर्व्वत्र स्मेरवदननयनाः शुभकर्म्मसु।
दंष्ट्रोग्रा भीमनयनवदनाः क्रूरकर्म्मसु ॥ ३० ॥
शुभेषु कर्म्मस्वासीना स्थिता वाहनगा अपि।
शुभेतरेषु ताः सर्व्वाः प्रयोगेषु तु सर्व्वदा ॥ ३१ ॥
वलयैरङ्गदै रत्नमयैरप्यङ्गुलीयकैः।
विराजमानास्ताः सर्व्वा दिव्यांशुकधरा अपि ॥ ३२ ॥

---

षड्भुजे चापसायकौ षड्भुजध्याने प्राग्वत् ऊर्द्ध्वभुजयोः पाशाङ्कुशौ तदधःस्थयोः प्राग्वद्वराभयमुद्रे च। चर्म्मखड्गौ अष्टभुजे अष्टभुजध्याने प्राग्वदूर्द्ध्वभुजयोः पाशाङ्कुशौ तदधःस्थयोः प्राग्वच्चापसायकौ तदधस्थयोर्वामदक्षिणक्रमेण चर्म्मखड्गौ तदधःस्थयोः प्राग्वद्वराभयमुद्रे। गदाशूलौ दशोदिते दशभुजध्याने प्राग्वदूर्द्ध्वभुजयोः पाशाङ्कुशौ तदधस्थयोश्चापसायकौ तदधस्थयोश्चर्मखड्गौ तदधःस्थयोर्वामदक्षिणक्रमेण गदाशूलौ तदधःस्थयोः प्रागवद्वराभयमुद्रे च। रूपसंख्यादीत्यत्रादिशब्दः प्रोक्तविषयसंख्येतरविषयः ॥ २८ ॥

यस्मिन्नित्यादिना श्लोकेनाभिमतकर्म्मणि तासामभिमतसिद्धिप्रदत्वमुपदिशति। तत्र तस्य साधकस्य। भूत्वा इत्यस्य तथा इत्यनेनान्वयः। आविर्भूयेत्यर्थः ॥ २९ ॥

सर्वत्रेत्यादिभिर्महेश्वरीत्यन्तै रध्यर्द्धैश्चतुर्भिः श्लोकैः शुभाशुभकर्मसु सामान्यध्यानमुपदिशति। तत्र सर्वत्र इत्येतत्तन्त्रसामान्यं। सर्वत्रेत्याद्यर्द्धेन शुभकर्मसु ध्यानं। दंष्ट्रोग्रा इत्युत्तरार्द्धेनाशुभकर्म्मसु ध्यानम् ॥ ३० ॥

शुभेष्वित्यादिना श्लोकेन श्लोकपूर्वार्द्धस्याद्यपादेन शुभकर्म्मसु ध्यानं। स्थिता इत्यादिना श्लोकावशिष्टपादत्रयेण तदितरध्यानम्। अपि अपिवेत्यर्थः। रत्नमयैरित्येतद्वलयादित्रयाणां विशेषणम्। दिव्यांशुकधरा इत्यत्र दिव्यत्वं तत्त्ववेदिभिः कैश्चिद्दृशा दृष्टत्वात्। सर्वाः सपरिवारा नित्याः। अत्र भूषणानां

हारग्रैवेयरत्नादिमुद्रिका नूपुरादिभिः ।
नवरत्नमयैः सर्व्वास्तवकैश्चोपशोभिताः ॥ ३३ ॥
एवं सामान्यमुदितं ध्यानं तासां महेश्वरि ।
विशेषं शृणु वक्ष्यामि तत्तत्कर्म्मसु सिद्धिदम् ॥ ३४ ॥
गजवाजिरथारूढ़ा(१) विमानस्थाश्च सिंहगाः ।
व्याघ्रतार्क्ष्यसमारूढ़ा ध्येया रक्षासु सर्व्वदा ॥ ३५ ॥
समरेषु जयावाप्तौ नृपराष्ट्रादिरक्षणे ।
पिशाचचोरव्यालादिदुर्गमेऽरण्यवर्त्मनि ॥ ३६ ॥
ध्यायेत्ता देवताः सर्व्वाः सर्व्वशक्तिभिरावृताः ।
एकैकशः समस्ता वा सुखी भवति निश्चितम् ॥ ३७ ॥
ऋक्षवानरभल्लूकखरसैरिभवाहनाः ।
उच्चाटनेषु सर्व्वास्ता भीमा ध्येयाः सुदारुणाः ॥ ३८ ॥

---

नामान्याराध्यपादादवगन्तव्यानि । एतानि भूषणानि सर्वप्रयोगसाधारणानि । महेश्वरीति देवीसम्बुद्धिः ॥ ३३ ॥

विशेषमित्यादिभिः समीरिता इत्यन्तै रर्द्धाद्यैः सप्तभिः श्लोकैर्विशेषध्यानप्रस्तावपूर्वं प्रयोगविशेषेषु सामान्यवाहनभेदध्यानादिकमुपदिशति । तत्र विशेष मित्याद्यर्द्धेन विशेषध्यानं प्रस्तौति । तत्र विशेषं सामान्येन प्रोक्तरूपादिति शेषः ॥ ३४ ॥

गजेत्यादिभिर्निश्चितमित्यन्तैस्त्रिभिः श्लोकै रक्षादिषु वाहनविशेषध्यानादिकमुपदिशति । तत्र रक्षासु आत्मरक्षास्विति शेषः । राष्ट्रादीत्यत्रादिशब्दः पुरग्रामनगरपत्तनखर्वटग्टहादिविषयः । व्यालादीत्यत्रादिशब्दः सिंहतरक्षादिविषयः । एकैकशः समस्ता वा नित्यासु षोड़शस्वभोष्टां नित्यां स्वपरिवारादिसहितां सर्वाः स्वस्वपरिवारसहिता वा । निश्चितमित्यन्तेनामोघफलत्वमुच्यते ॥ ३७ ॥

ऋक्षेत्यादिना श्लोकेनोच्चाटने वाहनभेदध्यानमुपदिशति । तत्र भीमा विग्रहादिभिरिति शेषः । सुदारुणाः कर्म्मणीति शेषः ॥ ३८ ॥

---

१ । समारूढ़ा ।

कङ्कश्ये नवकक्रौञ्चकाककौशिकवाहनाः ।
विद्वेषणेषु सर्वास्ता घोरप्रहरणाकुलाः ॥ ३९ ॥
खड्गगोमायुशललीगवयाहरिणाप्लवगाः ।
चिन्तयेत् सकलाः सर्व्वं क्षुद्रकर्म्मसु साधकः ॥ ४० ॥
पिशाचवेतालगता ध्येयाः सर्व्वत्र मारणे ।
इति वाहनभेदेन फलभेदाः समीरिताः ॥ ४१ ॥
सर्वास्ताश्च्यंगता वह्निवायुहस्तद्वयान्विताः ।
त्रिनेत्रास्त्वेकवदना दंष्ट्रोग्रा भीमविग्रहाः ॥ ४२ ॥
दहन्त्यो वैरिनिवहं ध्येयाः स्वाकारशक्तिभिः ।
भीमरावाभिरभितो वेष्टिता रणमूर्द्धनि ॥ ४३ ॥
विजयी भवति क्षिप्रं वैरिसेनाविनाशतः ।
पलायनोत्सगहनात् पादयोः पतनेन वा ॥ ४४ ॥

---

कङ्केत्यादिना श्लोकेन विद्वेषणेषु वाहनभेदध्यानमुपदिशति । तत्र कौशिकः दिवाभीतः । घोरप्रहरणाकुला घोरायुधनिविड़ाः ॥ ३९ ॥

खड्गेत्यादिना श्लोकेन वश्याकर्षणादिकर्म्मसु वाहनविशेषमुपदिशति ॥ क्षुद्रकर्मसु वश्याकर्षणादिषु ॥ ४० ॥

पिशाचेत्यादिना श्लोकेन मारणकर्मसु वाहनभेदध्यानादिकमुपदिशति । तत्र वाहनभेदेन ध्यानेनेति शेषः ॥ ४१ ॥

सर्वा इत्यादिभिः षोड़श इत्यन्तैः पञ्चविंशतिभिः श्लोकैर्वाहनवक्त्रायुधादिभेदेन समरविजयादिध्यानादिकमुपदिशति । तत्र सर्वा नित्याः सपरिवाराः । वह्निवायुहस्तद्वयान्विता इत्यत्र दक्षिणवामहस्तयोर्वह्निवायुक्रमेणेति यावत् । दहन्त्यः स्वस्वकरस्थस्वापायुधसंधुक्षितेन वह्निनेति यावत् । भीमरावाभिर्भीमरावं कुर्वन्तीभिः । वेष्टिता इत्येवं तत्पूर्वत्र सर्वा इत्यनेनान्वयः । वा विकल्पे । वैरिसेनाया विनाशपलायनसंव्याहनपादपतनेष्वन्यतमेनेति यावत् । छिन्दन्त्यः मर्द्दयन्त्यः । उक्तक्रमेणारिसेनाविनाशादिचतुर्ष्वन्यतमप्रकारेण । तद्द्विगुणभुजा अष्टादशभुजाः । वा विकल्पे । वामैर्भुजैर्नवभिरिति शेषः । तर-

चतुर्म्मुखा अष्टभुजा छिन्दन्त्यः महतीं चमूम् ।
विभाव्य वा जयं युद्धे प्राप्नोत्युक्तक्रमेण वै ॥४५ ॥
नवाननास्तद्द्विगुणभुजा वा भीमविग्रहाः ।
वामैः कोदण्डनिवहमन्यैः खड्गञ्च विभ्रतीः ॥ ४६ ॥
ध्यात्वारिसेनां सकलां शरभिन्नकलेवराम् ।
वमद्रुधिरधाराञ्च विजयं प्रोक्तमाप्नुयात् ॥ ४७ ॥
अथवा नवभिः खेटमन्यैः खड्गञ्च विभ्रती ।
चतुरङ्गरिपोः सेनां छिन्दतीस्तरवारिभिः ॥ ४८ ॥
चिन्तयित्वा जयं युद्धे भीमाकारे सुदुर्जये ।
पत्त्यश्वेभरथाटोपवाद्यनिःशनसङ्कुले ॥ ४९ ॥
प्राप्नोत्ययत्नतः चिप्रं प्रागुक्तक्रमयोगतः ।
अथवा नवभिर्हस्तैर्गदा वामैस्तथेतरैः ॥ ५० ॥
नखरान् पाणिभिर्भीमा दधतीः समरे स्मरन् ।
तद्भिन्नचतुरङ्गांश्च सेनां विजयमाप्नुयात् ॥ ५१ ॥
तथा शूलकुठारौघैः पातयन्तीर्द्विषां वलम् ।
विजयी भवति प्रोक्तक्रमाद्घोरे रणाङ्गणे ॥ ५२ ॥
तथैव चर्म्मच्छूरिकानिवहैर्निघ्नतीर्वलम् ।
ध्यात्वा वा विजयी भूयात् समरे रोमहर्षणे ॥ ५३ ॥

---

वारिभिः खड्गदक्षिणकरस्थैः खड्गैः चिन्तयन्नित्यस्य पूर्वत्र छिन्दन्त्य इत्यनेनान्वयः। आटोपः संरम्भः। प्राप्नोतीत्यस्य पूर्वत्र विजयमित्यनेनान्वयः। प्रागुक्तक्रमयोगतः वैरिविनाशादिष्वन्यतमेन। अथवा प्राग्वत् पद्मान्तरे तथा प्राग्वद्रिपुविनाशादिना। इतरैर्दक्षिणैः पाणिभिरित्यस्य पूर्वत्रेतरैरित्यनेनान्वयः। भीमा विग्रहादिभिः। तद्भिन्नचतुरङ्गान्तासां शक्तीनां दक्षिणकरनिवहस्थनखरैर्भिन्न चतुरङ्गां। विजयमाप्नुयादित्यस्य पूर्वत्र तथा इत्यनेनान्वयः। तथा प्राग्वद्वामदक्षिणभुजनिवहक्रमेण। शूलकुठारौघैः शूलौघैः कुठारौघैश्च। प्रोक्त-

निद्रातिमिरहस्ता वा मोहयन्ती द्विषां बलम्।
ध्यात्वा विजयमाप्नोति नियतं समरे नृपः॥ ५४॥
पिशाचसर्पहस्ता वा तैः सेना मृदतीः स्मरन्।
विजयं समरे शश्वदश्नुते शङ्करोपमः॥ ५५॥
पाशकर्त्तरिकाभिर्वा निघ्नतीः पृतनां रणे।
स्मृत्वा विजयमाप्नोति नृपः प्रोक्तक्रमाद्ध्रुवम्॥ ५६॥
अङ्कुशक्रकचाभ्याञ्च दारयन्तीश्चमूः क्षणात्।
चिन्तयन् समरे भीमे विजयी स्यात् सुनिश्चितम्॥ ५७॥
हलैश्च मुशलैर्नित्यं प्रहरन्तीर्द्विषां बलम्।
स्मरन् प्रविजयं युद्धे प्राप्नोति ध्यानवैभवात्॥ ५८॥
तथा षोड़शवक्त्रास्ता द्वाविंशैर्बाहुभिर्युताः।
प्राग्वत् प्रमथितारातिपृतनाश्चिन्तयन् जपेत्॥ ५९॥
पञ्चविंशतिवक्त्रा वा पञ्चाशद्भुजसंयुताः।
तथैकादशभिर्भेदैरायुधैर्निघ्नतीर्बलम्॥ ६०॥

---

क्रमात् सेनाविनाशाद्यन्यतमप्रकारेण। तथैव वामदक्षिणभुजक्रमेण चर्म्मच्छुरिकानिवहैः चर्म्मनिवहैः च्छुरिकानिवहैश्च। बलं रिपूनामिति शेषः। वा विकल्पे। रोमहर्षणे वीराणामिति शेषः। निद्रातिमिरहस्ता वामदक्षिणक्रमेनेत्यर्थः। पिशाचसर्पहस्ता वामदक्षिणहस्तक्रमेणेति शेषः। अश्नुते प्राप्नोति। पाशकर्त्तरिकाभिः वामदक्षिणहस्तनिवहस्थाभिः। प्रोक्तक्रमात् प्रागुक्तवैरिसेनाविनाशाद्यन्यतमेन। अङ्कुशक्रकचाभ्यां वामदक्षिणहस्तनिवहस्थाभ्यामिति शेषः। हलैः वामभुजनिवहस्थैरिति शेषः। मुशलैः दक्षिणभुजनिवहस्थैरिति शेषः। तथा प्रागुक्तवह्निवाय्वादिषु हलमुशलान्तेष्वेकादशविधायुधद्वन्द्वयुक्तहस्तक्रमेण दधाना इति यावत्। ताः शक्तीः। प्राग्वद्वैरिसेनाविनाशादिष्वन्यतमेन। एकादशभिर्भेदैः वह्निवाय्वादिभिरिति शेषः। बलं रिपूणामिति शेषः। विचिन्त्य इत्यस्य पूर्वेण

विचिन्त्य जयमाप्नोति समरे सर्वदा नृपः ।
तथा स्मरणसंयुक्तैः पूजयेत्तास्तदाऽऽग्रहे ॥ ६१ ॥
षट्त्रिंशद्वदना देवीर्द्विसप्ततिकराः स्मरेत् ।
तथैव दशरूपैस्तैर्वीरैः प्रहरणैर्युताः ॥ ६२ ॥
एकोनपञ्चाशद्वक्त्रा हस्तैस्तद्द्विगुणैर्युताः ।
प्रहरन्तीस्तथारातीन् स्मृत्वा जयमवाप्नुयात् ॥ ६३ ॥
चतुःषष्टिमुखा देवीः करैस्तद्द्विगुणैर्युताः ।
प्रहरन्तीः स्मरेद् युद्धे जयी भवति निश्चितम् ॥ ६४ ॥
एकाशीतिमुखा देवीस्तद्द्वैगुण्यभुजैर्युताः ।
तथाविधैः प्रहरणैः स्मरन् युद्धे जयी भवेत् ॥ ६५ ॥
शतवक्त्रास्तद्द्विगुणकरास्तद्धेतिभिर्युताः ।
स्मृत्वा विजयमाप्नोति समरे ताश्च षोडश ॥ ६६ ॥
एवं वक्त्रकरैर्युक्तास्त्वनेकैरिष्टरूपतः ।
तथा तैर्हेतिनिवहैर्व्याकुलक्रमहस्तकैः ॥ ६७ ॥
असंख्याता भवेयुस्ताः साधकाभीष्टसिद्धिदाः ।
एवमुद्दामसमरसंकटादिषु चिन्तयन् ॥ ६८ ॥

---

निघ्नतीरित्यनेनान्वयः। तथा स्मरणसंयुक्तैः पूजयेत्ताः प्रोक्तरूपरूपध्यानसंयुक्तैः साधकैस्तद्विग्रहादिभिरुपलक्षितानां तासां नित्यानां पूजां कारयेदित्यर्थः। तदा समरकाले। तथा प्राग्वद्वैरिसेनाविनाशादिष्वन्यतमेन। तद्द्विगुणैरष्टनवतिसंख्यैः। तद्द्विगुणैरष्टाविंशत्युत्तरशतसंख्यैः। तद्द्वैगुण्यभुजैर्युताः द्विषष्ट्युत्तरशतसंख्यैर्भुजैर्युताः। तथाविधैः दहनादिभिः। तद्द्विगुणकराः शतद्वयसंख्यभुजाः। तद्धेतिभिः पूर्व्वोक्तैकादशविधद्वन्द्वहेतिभिः ॥६६॥

एवमित्यादिभिर्निश्चितमित्यन्तैश्चतुर्भिः श्लोकैः प्रोक्तसंख्यामन्तरेणापि वाञ्छितसंख्यवक्त्रभुजादिविशेषसहितेन व्याकुलक्रमायुधादिध्यानेन समरविजयप्रयोगं तत्र साधकविशेषांश्चोपदिशति। तत्र एवं प्रोक्तक्रमेण। व्याकुलक्रम-

देवीस्तास्स्मरति क्षिप्रमापदो मनुजोऽथवा ।
देवो वा राक्षसो यक्षः किन्नरो वा भुजङ्गमः ॥ ६९ ॥
पिशाचो वा गुह्यको वा सिद्धो वा दानवोऽथवा ।
न कदाचित् स्मरन्नित्यं भङ्गमाप्नोति निश्चितम् ॥ ७० ॥
चोरादिसङ्कटेऽरण्ये गिरिदुर्गमवर्त्मनि ।
द्विविधैर्वैरिभिर्जातैः कृच्छ्रे राजभयेऽथवा ॥ ७१ ॥
क्षुद्रपीडासु भूतापस्माररक्षससङ्कटे ।
पिशाचडाकिनीवृन्दब्रह्मराक्षसपीडने ॥ ७२ ॥
अन्येष्वपि च कृच्छ्रेषु विस्तरेषु महत्स्वपि ।
स्मरन्नित्यं जयेत् सर्वा विपदो ध्यानवैभवात् ॥ ७३ ॥
एकवक्त्राश्च द्विभुजाः साधकाभीष्टधारिकाः ।
सपादुकाः समागत्य सर्वाभरणभूषिताः ॥ ७४ ॥
स्वसमानाभिरभितः शक्तिभिः परिवारिताः ।
गायन्तीभिश्च नृत्येषु वनमालाभिरन्विताः ॥ ७५ ॥
ध्यायन्नभिमतं सर्वमाप्नुयात् षोडशापि ताः ।
नासाध्यमस्ति भुवने ध्यानादासां महेश्वरि ॥ ७६ ॥

---

हस्तकैः वासनापटलप्रोक्तप्रकारेणेति शेषः । उद्दामसमरसङ्कटादिष्वित्यत्रादिशब्दो वादयुद्धसङ्कटादिविषयः । देवोः इत्येतत् पूर्वत्र चिन्तयन्नित्यनेनान्वयः । इत्थमभीष्टमुखकरायुधादिरूपतः । भङ्गं पराजयम् ॥ ७० ॥

चोरादीत्यादिभिर्महेश्वरीत्यन्तैः षड्भिः श्लोकैर्नित्यानां ध्यानविशेषेण सर्वापत्तारणप्रयोगमुपदिशति । तत्र चोरादिसङ्कटे इत्यत्रादिशब्दो व्याघ्रादि विषयः । द्विविधैः सहजप्राकृताद्यैः । क्षुद्रपीडासु शत्रुभिः प्रयुक्तकालभङ्ग्यादिसमुद्भवपीड़ासु । अन्येषु आध्यात्मिकादितापत्रयात्मकेषु । इत्थं वक्ष्यमाणध्यानप्रकारेण । द्विभुजाभीष्टधारिकाः द्विभुजाभ्यां साधकाभीष्टं दधानाः । स्वसमानाभिः द्विनयनादिविग्रहविशेषैरिति शेषः । ताः नित्याः । आसां नित्यानां । महेश्वरीति सम्बुद्धिः ॥ ७६ ॥

अलङ्कृतहयारूढाः शक्तिभिश्च तथावृताः।
स्मेराननाश्च गायन्तीः स्मृत्वा विश्वं वशं नयेत्॥ ७७॥
तथाविधा गजारूढास्तथा शक्तिभिरावृताः।
सङ्गीतासक्तमहिलावृन्दसंकुलमध्यगाः॥ ७८॥
स्मृत्वा लक्ष्मीमवाप्नोति राजमान्यामतिस्थिराम्।
नानाभोगसमोपेतां प्रख्यातनिजवैभवाम्॥ ७९।
तथाविधरथारूढास्तथाशक्तिभिरावृताः।
तथा सङ्गीतसंसक्तशक्तिवृन्दसमन्विताः॥ ८०॥
स्मरन् भुवमवाप्नोति राजा वै वैरिमण्डलम्।
एवं तत्त्रिविधध्यानात् सौभाग्यमतुलं यशः॥ ८१॥

---

अलङ्कृतेत्यादिना श्लोकेन विश्ववशीकरणध्यानमुपदिशति। तत्र शक्तिभिश्च तथावृताः अलङ्कृतहयारूढाभिः शक्तिभिः परिवृताः॥ ७७॥

तथेत्यादिना वैभवामित्यन्तेन श्लोकद्वयेन लक्ष्मीप्राप्तिप्रयोगध्यानमुपदिशति। तत्र तथाविधाः प्रागुक्तद्विनेत्रादिविग्रहविशिष्टाः। गजारूढा अलङ्कृतगजारूढाः तथा शक्तिभिरावृताः अलङ्कृतगजारूढाभिः स्वस्वसमानविग्रहाभिः शक्तिभिरावृताः। सङ्गीतासक्तमहिलावृन्दं नाम संगीतासक्तयोगिनीवृन्दम्। अतिस्थिरां राजचौराद्यप्रधृष्यां। नानाभोगसमोपेतां नानाभोग्यैर्द्रव्यविशेषैस्तत्तद्भोगशक्त्यादिभिश्च समोपेतां। प्रख्यातनिजवैभवां आकार(१)गुणविद्यादर्पपौरुषादिभिरिति शेषः॥ ७८॥

तथाविधेत्यादिना यश इत्यन्तेन श्लोकद्वयेन भूमिप्राप्त्यादिकप्रयोगध्यानमुपदिशति। तत्र तथाविधरथारूढाः प्राग्वदलङ्कृतरथारूढा इत्यर्थः। तथा शक्तिभिरावृताः अलङ्कृतरथारूढशक्तिभिरावृताः। तथा सङ्गीतसंसक्तशक्तिवृन्दसमन्विताः अलङ्कृतरथारूढा संगीतादिरतशक्तिवृन्दसमन्विताः। भुवं अभीष्टामिति शेषः। वैरिमण्डलं शत्रुराज्यं। एवं तत्त्रिविधध्यानात् प्रोक्तक्रमालङ्कृतहयगजरथारूढध्यानात्। अतुलं निरुपमम्॥ ८१॥

---

१। अपार; आचार।

कदलीकाननेऽरण्ये निर्जने तास्तथा स्मरन् ।
पादुकासक्तचरणा आगच्छन्ति स्वशक्तिभिः ॥ ८२ ॥
मण्डलं मासमर्द्धं वा जपन् विद्यां ततो विशेत् ।
निधिं संप्राप्य भुवने भोगी स्यात् यावदायुषम् ॥ ८३ ॥
पूगारामे तथा स्मृत्वा निधिमाप्नोत्ययत्नतः ।
एवं चम्पकपुन्नागनमेरुवकुलेष्वपि ॥ ८४ ॥
तथा पर्वतकुञ्जेषु ताः स्मृत्वा वित्तमाप्नुयात् ।
राजतो धनितोऽन्यस्माद् येनासौ स्यात् सुखी चिरम् ॥ ८५ ॥
समुद्रतीरेऽरण्येषु तथा नित्यं स्मरन् धिया ।
प्राप्नोत्यनर्घरत्नानि बहूनि ध्यानवैभवात् ॥ ८६ ॥
समुद्रगासरिन्मध्यतरुवाटीषु तास्तथा ।
स्मरन् कनकमाप्नोति वर्णोत्कृष्टमसंख्यकम् ॥ ८७ ॥

---

कदलीत्यादिना आयुषमित्यन्तेन श्लोकद्वयेन निधिप्राप्तिप्रयोगध्यानमुपदिशति । तत्र ता नित्याः । तथा पूर्वोक्तद्विनेत्रादिविग्रहविशिष्टशक्तिभिः सहेति शेषः । मण्डलं प्राग्वदेकपञ्चाशद्दिनानि (१)। अर्द्धं मण्डलमासयोः। वा विकल्पे यावत् सिद्धीत्यर्थः । विद्यां नित्याविद्यास्वभीष्टामित्यर्थः । यावदायुषं यावज्जीवम् ॥ ८३ ॥

पूगेत्यादिना श्लोकेन प्रोक्तध्यानेन निधिप्राप्तप्रामुख्यानपञ्चकविशेषानुपदिशति । तत्र तथा अनन्तरपूर्व्वोक्तप्रकारेण ॥ ८४ ॥

तथेत्यादिना श्लोकेन पूर्वोक्तध्यानेन वित्तप्राप्तिप्रयोगादिविशेषमुपदिशति । तत्र तथा प्रोक्तप्रकारेण। पर्वतकुञ्जेषु पर्वतगुहासु । ता नित्याः। राजतः राजसकाशात् । येनासौ स्यात् सुखी चिरं यावता धनेन साधकः चिरं सुखी स्यात्तावद्धनमित्यर्थः ॥ ८५ ॥

समुद्रेत्यादिना श्लोकेन पूर्व्वोक्तध्यानेनानर्घरत्नप्राप्तिप्रयोगमुपदिशति। तत्र तथा पूर्वोक्तध्यानप्रकारेण ॥ ८६ ॥

समुद्रगेत्यादिना श्लोकेन पूर्वोक्तध्यानेनासंख्यातोत्तमकनकप्राप्तिप्रयोगमुपदिशति। तत्र तथा प्राग्वत् ध्यानप्रकारेण ॥ ८७ ॥

---

१। एकोनपञ्चाशद्दिनानीत्यपि पाठो दृश्यते ।

निर्जने विपिने स्मृत्वा प्राप्नोति महिला: शुभा: ।
रूपयौवनशीलाढ्या: प्रेमनिघ्नास्त्वनन्यगा: ॥ ८८ ॥
उक्तेषु तेषु स्थानेषु हयारूढा: स्मरन्नर: ।
नृपतिं कुरुते वश्यं मनोवाक्कायकर्म्मभि: ॥८९ ॥
तेषूक्तेषु गजारूढा: स्मृत्वा नारीर्नरान्नृपान् ।
वशीकरोति भुवने प्राणिनश्चा विशेषत: ॥ ९० ॥
तथा तेषु रथारूढा: स्मृत्वा देवीस्तथोदिता: ।
वाञ्छितं समवाप्नोति मुक्त: स्यान्निगड़ादित: ॥ ९१ ॥
शतवक्त्रास्तद्द्विगुणभुजास्तेष्वायुधान्यपि ।
वाञ्छितानि लिखित्वा ता: पटेषु नवसु स्फुटम् ॥ ९२ ॥
पटांस्तान्मध्यपर्य्यन्तद्वये संस्थापयेत्तथा ।
रथदन्तिहयानान्तु तिरस्करणिकायुतान् ॥ ९३ ॥
प्रतिसैन्याभिमुख्ये तु तांस्तु सम्यक् प्रदर्शयेत् ।
वस्त्रालिखितनिशानभेरीपणवमर्द्दलान् ॥ ९४ ॥

---

निर्जनेत्यादिना श्लोकेन पूर्वोक्तध्यानेन महिलाप्राप्तिप्रयोगध्यानमुपदिशति। तत्र स्मृत्वा प्रोक्तप्रकारेणेति शेष:। प्रेमनिघ्ना: प्रेमपरवशा: ॥ ८८ ॥

उक्तेष्वित्यादिमिरादित इत्यन्तै स्त्रिभि: श्लोकैर्नृपादिवशीकरणसहितं निगड़ादिमोचनध्यानमुपदिशति। तत्र उक्तेषु तेषु स्थानेषु अनन्तरपूर्वोक्तेषु कदलीकाननादिषु निर्जनविपिनान्तेषु तेषु दशसु स्थानेषु। तेषु उक्तेषु प्रागवत् स्थानेषु। प्राणिनश्चा विशेषत: सुरनरमृगपक्षिसरीसृपाद्यविशेषेण सर्वान् प्राणिनश्च। तेषु प्रागवत् स्थानेषु। निगड़ादित इत्यत्रादिशब्दो राजादिभि: कृतबन्धनविशेषादिविषय: ॥ ९१ ॥

शतेत्यादिभिरनघे इत्यन्तै: पञ्चभि: श्लोकै: समरविजयप्रयोगविशेषमुपदिशति। तत्र वाञ्छितानि स्वपरिचिन्तितानि। ता नित्या:। नवसु नवसंख्येषु। स्फुटं सुव्यक्तं मध्यपर्य्यन्तद्वये संस्थापयेत्। तथा रथदन्तिहयानान्तु। तेषु नवसु पटेष्वश्वरथादीनां त्रयाणां मध्ये तत्तद्वामदक्षपार्श्व-

आहत्य वद्दयन् शृङ्गशङ्खकाहलकादिकम् ।
वज्राद्दभिमुखं वैरी धावत्याशु पराजितः ॥ ६५ ॥
तत्सेनासंमुखा पश्चान्न जातु भवति ध्रुवम् ।
इति ध्यानान्यशेषेण कथितानि तवानघे ॥ ६६ ॥
सूक्ष्मध्यानेन सिद्धानां साधकानां फलोदयः ।
अतस्तच्छृणु वक्ष्यामि सर्वाभीष्टाभिकारकाः ॥ ६७ ॥
दाड़िमीकेसरप्रख्यतेजोरूपां स्मरन् धिया ।
तन्मध्ये साध्यरूपञ्च निजवाञ्छानुरूपकम् ॥ ६८ ॥
समस्तमिष्टमाप्नोति शुभानप्यशुभानपि ।
तथा सुषुम्नान्तस्तच्च चिन्तयेद्वा गमागमम् ॥ ६९ ॥
तेनाखिलं निजेष्टन्तु प्राप्नोति ध्यानवैभवात् ।
साधकश्च तथा सिद्धस्तयोरेवाशुसिद्धिकृत् ॥ १०० ॥

---

पर्य्यन्तद्वये च त्रीन् त्रीन् संस्थापयेत्। तिरस्करणिकायुतान् तिरस्करणीभिः सहेति शेषः। तिरस्करणिका नाम प्रावरणपटी प्रतिसैन्याभिमुख्ये। तान् नव पटानिति शेषः। वज्रालिखितनिशानभेरीपणवमर्द्दलान् विजयानित्यापटलोक्तसमरेष्वित्यादिचतुर्नवतितमादिश्लोकत्रयप्रोक्तप्रकारवज्रयन्त्रेणालिखित निशानभेरी पणवमर्द्दलनिवहान्। काहलकादिकमित्यत्रादिशब्दो भेर्य्यादिविषयः। तत्सेना वैरिसेना। अनघे इति सम्बुद्धिः ॥ ८६ ॥

सूक्ष्मेत्यादिभिः सिद्धिकृदित्यन्तैश्चतुर्भिः श्लोकैः प्रस्तावपुरःसरं सूक्ष्मध्यानं तेन प्रयोगादिकमुपदिशति। तत्र तत् सूक्ष्मध्यानम् आधारेष्विति शेषः। तन्मध्ये नित्यानिवहात्मकतेजोमध्ये। निजवाञ्छानुरूपकं स्वसमीहितकर्म्मानुगुणम्। तथा तत्तेजोरूपतया। सुषुम्नान्तः सुषुम्नानाड़ीमध्ये। तत्निजवाञ्छानुरूपं स्वसाध्यम्। वा विकल्पे। गमागमं मूलाधारादिब्रह्मरन्ध्रान्तं ब्रह्मरन्ध्रादिमूलाधारान्तं मुहुर्म्मुहुरारोहावरोहक्रमेणेत्यर्थः। तेन प्रोक्तोभयप्रकारेण। तयोरेव इत्यत्र एवकारेण साध्यस्य सूक्ष्मरूपध्यानप्रयोगेष्वनधिकारत्वमुच्यते ॥ १०० ॥

प्रकृत्यात्ममयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निभालनाच्चित्ते तत्तत्त्वं स्वात्मसात्कृतम् ॥

इति षोड़शनित्यातन्त्रे श्रीकादिमते चतुर्व्विंशति
पटलं परिपूर्णं परामृष्टम् ।

इति षोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसारसिंह-
राजप्रकाशाभिधानेन श्रीसुभगानन्दनाथेन विरचितायां मनोरमाख्यायां
व्याख्यायां षोड़शनित्याध्यानप्रपञ्चप्रकाशनपरं चतुर्व्विंशं
पटलम् परिपूर्णं परामृष्टम् ॥ २४ ॥

---

ग्रन्थसंख्या । पटलेऽस्मिंश्चतुर्विंशे यन्त्राणि न भवन्ति च ।
व्याख्याग्रन्थाः षोड़श स्युरधिकास्ते शतद्वयात् ॥

# पञ्चविंशपटलम् ।

अथ षोड़शनित्यानां षट्त्रिंशत्तत्त्वविग्रहैः ।
वर्णैस्तज्जनितैर्मन्त्रैर्यन्त्रैः कालात्मतां क्रमात् ॥ १ ॥
कथयामि प्रयोगांश्च नानाभीष्टाप्तिकारणान् ।
यज्ज्ञानोपास्तिभेदाभ्यां मन्त्राः सिध्यन्ति वर्णिनः ॥ २ ॥
स्वराः षोड़श नित्याः स्युः कादिक्षान्ताः स्वरान्विताः ।
तेषु तत्त्वानि षड्विंशद्वर्गा नाथनवात्मिकाः ॥ ३ ॥

---

पूर्वस्मिन् चतुर्विंशे पटले षोड़शनित्यानां प्रयोगेषु धग्रानादिकमुपदिश्यानन्तरं षोड़शनित्यानां षट्त्रिंशत्तत्त्वस्वरूपैर्वर्णप्रयाविभूतवर्णैस्तत्तद्योगभूतभेदोत्पन्नैर्मन्त्रैर्यन्त्रैश्च कालात्मकत्वं तैः प्रयोगादिकञ्चोपदिशत्यथषोड़शेत्यादिना शिव इत्यन्तेन श्लोकशतरूपेण पञ्चविंशेन पटलेन। तत्र अथेत्यादिना वर्णिन इत्यन्तेन श्लोकद्वयेन पटलार्थांस्तदनुभावञ्चोपदिशति। तत्र षोड़शनित्यानां षोड़शस्वराणां षट्त्रिंशत्तत्त्वविग्रहैः षट्त्रिंशद्व्यञ्जनाक्षरैः व्याप्तेरिति शेषः। वर्णैर्वक्ष्यमाणसंख्यैः संजातैरिति शेषः। तज्जनितैः तेषां संयोगभेदजातैः। कालात्मतां कालस्वरूपतां। यज्ज्ञानोपास्तिभेदाभ्यां आभ्यन्तरानुसन्धानभेदेन वाह्यपूजाभिषेकहोमादिभेदेन च वर्णिनः वर्णवत्तामात्राः। वासनापटलवक्ष्यमाणाः सत्त्वादिविहीनाः ॥ २ ॥

स्वरा इत्यादिना श्लोकेन षोड़शस्वराणां षोड़शनित्याभिः षट्त्रिंशद्व्यञ्जनानां षट्त्रिंशत्तत्त्वैः मातृकानववर्गानां नवनाथैश्च तादात्म्यमुपदिशति। तत्र स्वरान्विताः अकाराद्यक्षरसंयुताः। ककारादिक्षकारान्तानां पञ्चत्रिंशदक्षराणां स्वरेण सह (१) षट्त्रिंशत्तत्त्वात्मकत्वेनोभयात्मकत्वात्तदात्मकस्य प्रथमस्वरस्यापि स्वरव्यञ्जनात्मकत्वेनोभयात्मकत्वमस्तीतुग्रपस्कारसंप्रदायाच्च (१) स्वरसंज्ञया प्रथमस्वर एवात्र विवक्षित इति यावत्। तुरवधारणे। एतदुक्तं भवति—ये षोड़श स्वरास्त एव षोड़श नित्याः स्युः। ये षट्त्रिंशद्व्यञ्जनवर्णा स्त एव षट्त्रिंशत्तत्त्वानि स्युः। ये मातृकाया नवात्मका वर्गास्त एव नवात्मका नाथाः स्युरिति ॥ ३ ॥

---

१। षट्त्रिंशत्तत्त्वात्मतोपदेशात् प्रथमातिक्रमे कारणाभावादितिन्यायेन च महानित्यायाः शिवशक्त्यात्मकत्वेनोभयात्मकत्वात् तदात्मकस्य प्रथमस्वरस्यापि स्वरव्यञ्जनात्मकत्वेनोभयात्मकत्वमस्ती तुग्रपस्कार सम्प्रदायाच्च ।

अष्टावष्टौ स्वरे वर्गः परतः पञ्च पञ्च वै ।
मातृणान्तु स्वरैरेको वर्गः पूर्ववदुत्तरम् ॥ ४ ॥
नित्यानां तत्त्वसंयोगे वर्णसंख्याः समीरिताः ।
षट्सप्तत्या पञ्चशतं तत्संख्याब्दैस्तु पूर्णता ॥ ५ ॥
तत्संख्यानाञ्च यन्त्राणां तावदब्दैस्तु पूर्णता ।
पूर्णकालसमावृत्तिर्युगकल्पादिनामभाक् ॥ ६ ॥
त्रिसहस्रसमावृत्त्या प्रोक्तः कृतयुगावधिः ।
तस्य तुर्य्यांशतुर्य्यांशह्रान्या त्रेतादिसम्भवः ॥ ७ ॥

---

अष्टावित्यादिना श्लोकपूर्वार्द्धेन मातृकाया नववर्गस्वरूपमुपदिशति । तत्र अष्टावष्टौ स्वरे वर्गः । अष्टभिरष्टभिरक्षरैः स्वरेष्वेकैको वर्गो भवति । मातृणामित्युत्तरार्द्धेन वशिन्यादीनां मातृणामष्टवर्गव्याप्तिं मातृकाक्षराणां अष्टवर्गस्वरूपञ्चोपदिशति । तत्र मातृणां वशिन्यादीनां । तुरवधारणे । स्वरैः षोड़शभिरिति शेषः । पूर्ववदुत्तरं कादिक्षान्ताक्षरेषु पञ्चत्रिंशत्संख्येषु व्यञ्जनेषु वर्गप्रोक्तरूपेण पञ्चभिः पञ्चभिरेकैको वर्गो भवति ॥ ४ ॥

नित्यानामित्यादिना नामभागित्यन्तेन श्लोकद्वयेन स्वराणां व्यञ्जनानाञ्च प्रत्येकयोगजातां वर्णसंख्यां तद्वर्णानां तत्संख्यानां मातृकाचक्राणाञ्च तत्संख्याब्दैर्व्याप्तिं तत्संख्यानामब्दानामावृत्तेरवान्तरयुगकल्पादिसंज्ञाञ्चोपदिशति । तत्र नित्यानां तत्त्वसंयोगे प्रत्येकं षोड़शस्वराणां प्रत्येकमकारादिक्षकारान्तैः षट्त्रिंशद्व्यञ्जनाक्षरैः संयोगे पूर्णता तेषामुक्तसंख्यानां वर्णानामिति शेषः । यन्त्राणामस्मिन् पटले वृत्तमित्यादिना समीरिता इत्यन्तेनार्द्धाधिश्लोकद्वयेन प्रोक्तानां तत्संख्यानां चक्राणामित्यर्थः । एतदुक्तं भवति कृतादियुगेषु प्रतियुगमारभ्य षट्सप्तत्यधिकपञ्चशत-(५७६) संख्यानां वर्णानां तत्संख्यानां मातृकाचक्राणाञ्च तत्तदात्मकत्वेन तत्संख्यैस्तत्संख्यैरब्दैः पूर्णता भवतीति । युगकल्पादिनामभाक् युगकल्पादिसंज्ञा भवति ॥ ६ ॥

त्रिसहस्रेत्यादिना श्लोकेन प्रोक्तमण्डलाब्दसमावृत्तिभिः कृतादिचतुर्युगानामब्दानां संख्यामुपदिशति । तत्र तस्य कृतयुगस्य । एतदुक्तं भवति पूर्णकालाब्दानां षट्सप्तत्यधिकपञ्चशतानां सहस्रत्रयावृत्तिजनितसंख्याष्टाविंशतिसहस्रा-

मायाधराग्निवातखैः कृताद्यर्णाः समीरिताः ।
तान् दिनाक्षरसंयुक्तान्मध्ययोनौ समालिखेत् ॥ ८ ॥
दिनार्णेषु स्वरा न्यासे विन्दुरूपा अनुक्रमात् ।
वामोर्द्धदक्षपार्श्वेषु पञ्च पञ्च समीरिताः ॥ ९ ॥
तत्तद्युगार्णास्तत्स्थाने स्वरूपेण व्यवस्थिताः ।
व्यञ्जनेषु तु सर्व्वत्र सुश्लिष्टाः खेन संयुताः ॥ १० ॥

---

धिकसप्तदशलक्षवर्षैः (१७२८०००) कृतयुगो भवति। कृतयुगस्य तुर्य्यांश-हान्या द्वात्रिंशत्सहस्राधिकचतुर्लक्षविहीनैस्तत्कृतयुगाब्दैः षण्णवतिसहस्रोत्तर-द्वादशलक्षमितैर्वर्षैः (१२९६०००) स्त्रेता युगो भवति। पुनः कृतयुगतुर्य्यांश-प्रोक्तवर्षविहीनैस्त्रेतायुगवर्षैश्चतुःषष्टिसहस्रोत्तराष्टलक्षमितैर्वर्षैः (८६४०००) द्वापर-युगो भवति। पुनश्च तत् कृतयुगवर्षतुर्य्यांशविहीनैस्तद्वापरवर्षैस्तदर्द्धमितैर्वर्षैः द्वात्रिंशत्सहस्राधिकचतुर्लक्षमितैर्व्वर्षैः (४३२०००) कलियुगो भवति। तेषां सम्भूय विंशति सहस्राधिकत्रिचत्वारिंशल्लक्षवर्षैः (४३२००००) रेकश्चतुर्युगो भवतीति॥७॥

मायेत्यादिभिः संयुता इत्यन्तैस्त्रिभिः श्लोकैः कृतादियुगविग्रहवर्णान् तद्वर्णानां अस्मिन् पटले वक्ष्यमाणघटिकाचक्रेषु वक्ष्यमाणघटिकावर्णैः सह लेखनक्रमादिकञ्चोपदिशति। तत्र मायाधराग्निवातखैः माया विसर्जनीयः, धरा उकारः, अग्निरिकारः, वातः अकारः, खं विन्दुः। एतदुक्तं भवति अः उं इं अं इति चतुर्वर्णाः क्रमात् कृतादिचतुर्युगविग्रहा भवन्तीति। तान् युगार्णान् दिनाक्षर-संयुक्तान् घटिकानां दिवसावयवत्वात्। वक्ष्यमाणघटिकाक्षरसंयुक्तानित्यर्थः। मध्ययोनौ वक्ष्यमाणघटिकायन्त्राणामिति शेषः। दिनार्णेषु प्राग्वत् घटिकार्णेषु। स्वराः विसर्जनीयरहितवक्ष्यमाणघटिकात्मकपञ्चदश स्वराः। विन्दुरूपाः विन्द्वा-कारलिखितरूपाः। वामोर्द्धदक्षपार्श्वेषु प्रागवद्वक्ष्यमाणघटिकायन्त्राणां मध्ययोनौ देवताया इति शेषः। तत्स्थाने सर्व्वमध्ययोनिमध्ये प्राग्वत्। एतदुक्तं भवति वक्ष्यमाणघटिकाक्षरयन्त्रेषु घटिकाक्षरत्वेन कदाचित् स्वररूपाक्षरे लेखनीये सति तद्यन्त्राणां मध्ययोनौ देवताया वामपृष्ठदक्षपार्श्वेषु पञ्च पञ्च चाङ्गीकृतेषु तान् वर्णान् वामपार्श्वस्थांशमारभ्य अकारादीनां पञ्चदशस्वराणां स्थानं परिकल्प्य घटिकाक्षरत्वेन तत्कालायातस्वरस्थांशे एकविन्दुं तदात्मकत्वेन विलिख्य

सर्वत्र यन्त्रविन्यासप्रतिष्ठार्चाद्यनुग्रहे।
निग्रहे वास्तुविन्यासे गर्भन्यासेष्टसिद्धिकृत्॥ ११ ॥
आरभ्य भानोरुदयमेकशो घटिकाक्रमात्।
एकैकं मातृकावर्णपञ्चाशत्परिवृत्तितः॥ १२ ॥

---

तदा तत्कालायातयुगाक्षरं मध्ये देवतास्थाने स्वरूपेण लिखेत्। व्यञ्जनेषु घटिकाक्षरत्वेन लेखनीयेष्विति शेषः। सर्व्वत्र अस्मिन् पटले घटिकाक्षरयुगाक्षरयोर्विलेखने स्वरूपेण लिखेत्। व्यञ्जनेषु सुश्लिष्टाः सुश्लिष्टसम्बद्धाः तत्तत्प्राप्तसन्धिकार्य्यवर्णाः अविभक्तरूपा इति यावत्। एतदुक्तं भवति अस्मिन् पटले सर्व्वत्र घटिकाक्षरयुगाक्षरयोर्विलेखने घटिकाक्षरं स्वररूपञ्चेत् प्रोक्तरूपप्रकारेण वामादिपार्श्वेषु स्वररूपघटिकाक्षरं स्वांशे विन्दुरूपं लिखित्वा मध्ययोनिमध्ये युगार्णं स्वरूपेण लिखेत्। व्यञ्जनं चेत्तन्मध्ययोनिमध्ये तेन घटिकाक्षररूपेण व्यञ्जनेन युगार्णं प्राग्वत् सुश्लिष्टसम्बद्धं कृतयुगे सविसर्जनीयमितरेषु सविन्दुकं लिखेदिति॥ १०॥

सर्व्वत्रेत्यादिना श्लोकेन घटिकाचक्राणां विनियोगं तत् फलानि च उपदिशति। तत्र गर्भन्यासेष्टसिद्धिकृत् गर्भन्यासे इष्टसिद्धिकृदिति पदच्छेदः। आगमानां सन्धिर्दिव्यत्वादस्माभिर्न विचारणीयः॥ ११॥

आरभ्येत्यादिना प्रवर्त्तत इत्यन्तेन श्लोकद्वयेन मातृकावर्णचक्रस्य घटिकात्मकत्वेन ज्योतिश्चक्रेण व्याप्तिक्रमसुपदिशति। तत्र भानोरुदयं लङ्कायामिति शेषः। पञ्चाशत्परिवृत्तितः अकारादिक्षकारान्तानामन्त्यस्वरवर्जितानां वर्णानां पञ्चाशत् परिवृत्तितः। तस्याः परिवृत्तिरूपिण्या मातृकायाः। एतदुक्तं भवति प्रतियुगं युगप्रथमदिवसे लङ्कार्कोदयमारभ्यैकैकघटिकाक्रमेण मातृकाया अकारादिक्षकारान्तानि विसर्जनीयस्वररहितानि पञ्चाशदक्षराणि पञ्चाशद्भिः घटिकाभिरुद्यन्ति। अ ए च त य इति पञ्चमातृका घटिकापारायणे ज्ञेयाः। पुनरपि प्रथमदिवसशिष्टघटिकाभिर्दशभिरकारादिलृकारान्तानि दशाक्षराणि समुद्यन्ति। द्वितीयदिवसे प्राग्वदर्कोदयादेकादशाक्षरमेकारमारभ्य शिष्टचत्वारिंशदक्षराणि चत्वारिंशद्घटिकाभिः समुद्यन्ति। पुनर्द्वितीयदिवसे शेषघटिकाभिर्विंशतिभिरकारादि ङकारान्तानि विंशत्यक्षराणि समुद्यन्ति। पुनस्तृतीयदिवसे तदनन्तरं

दिवसैः पञ्चभिस्तस्याः षड़ावृत्त्या उदीरिताः ।
एवं युगादिमारभ्य कालात्मार्णैः प्रवर्त्तते ॥ १३ ॥
योनौ त्रिकोणमालिख्य तस्मिन् योनिं समालिखेत् ।
तेषु पर्य्यायनित्यार्णवर्णानालिख्य वाह्यतः ॥ १४ ॥
युगार्णं घटिकार्णेन मध्ये विन्यस्य तत्र वै ।
नित्याः षोढ़श देवेशि पूजयेन्नित्यमर्चकः ॥ १५ ॥

---

चकारादि त्रिंशदक्षराणि अकारादि ण कारान्तानि त्रिंशदक्षराणि च समुद्यन्ति। चतुर्थे दिवसे तदनन्तरं तकारादिविंशत्यक्षराणि अकारादिमकारान्तानि चत्वारिंशदक्षराणि च समुद्यन्ति। पञ्चमे दिवसे तदनन्तरं यकारादिदशाक्षराणि अकारादिक्षकारान्तानि पञ्चाशदक्षराणि च समुद्यन्ति। एवं क्रमात् पञ्चभिः पञ्चभिर्दिवसैः मातृकायाः प्रोक्तपरिवृत्तिक्रमरूपिण्याः षट्षड़ावृत्तयः सम्भवन्तीति ॥ १३ ॥

योनावित्यादिभिरयोग्यतेत्यन्तैस्त्रिभिः श्लोकैर्घटिकाचक्रविरचनाक्रमं तत्र युगपर्य्यायदिवसघटिकाभेदतो विद्यालेखनक्रमं तच्चक्रे षोड़शनित्यार्चनस्यावश्य-कर्त्तव्यतां तदकरणे साधकस्यायोग्यताञ्चोपदिशति। तत्र योनौ स्वाभिमुखाग्र-त्रिकोणमध्ये। त्रिकोणं स्वानभिमुखाग्रत्रिकोणं। तस्मिन् तन्मध्ये। योनिं प्राग्वत्। तेषु वाह्यावरणमध्यमावरणयोर्योनित्रिकोणरूपयोस्त्रिषु कोणेषु। पर्य्यायनित्यार्णवर्णान् अनन्तरवक्ष्यमाणसंख्यासु विद्यासु गतपर्य्यायसंख्याप्राप्त-विद्यार्णत्रयं दिनप्राप्तविद्यार्णत्रयञ्च। वाह्यतः वाह्यावरणमारभ्येति शेषः। मध्ये मध्यस्थयोनिमध्ये। नित्यं प्रतिदिवसम्। उत्तमा नित्यनित्यमित्युक्त्या प्रतिदिवस-मर्चनस्यावश्यकर्त्तव्यतामुपदिशति। पर्वपर्वणि उक्तेषु पर्वसु प्रतिपर्वेति यावत्। मासमात्रेण तेषु पर्वसु प्रतिमासमन्यतमस्मिन् पर्वणि। अत्र मध्यमाधमपक्षयो-र्विधानं राष्ट्रक्षोभदुर्भिक्षव्याध्यादिकृच्छ्रेष्वेव अयोग्यता द्वितोये पटले सहस्रमित्या दिना सप्ततितमश्लोकोत्तरार्द्धेनोक्तप्रायश्चित्तमकृत्वा नित्यभजनादिषु साधकस्येति शेषः। अयमत्र घठिकाचक्रविरचनाक्रमः। दृष्टमानभ्रमेण वृत्तं निष्पाद्य तत्र प्राक्प्रत्यग्व्रह्मसूत्रमास्फाल्य तदर्द्धमानेन प्राग्व्रह्मसूत्राग्रवृत्तसन्धिमवष्टभ्य तद्वृत्तपार्श्वयोश्चिह्नयुगं कृत्वा तच्चिह्नद्वयगताग्रयुगं तिर्य्यक्सूत्रमास्फाल्य तद-

उत्तमा नित्यनित्यं हि मध्यमा पर्वपर्वणि ।
अधमा मासमात्रेण मासादूर्द्ध्वमयोग्यता ॥ १६ ॥
पूर्णमण्डलवर्णाः स्युः प्रथमे त्वादितः क्रमात् ।
षट्त्रिंशत्तत्त्ववर्णास्तद्द्वितीया मरुता क्रमात् ॥ १७ ॥
तृतीया सर्वतो वह्निरेवं विद्यास्तु त्र्यक्षराः ।
त्रिपुराः सर्वसिद्धानामाकराः कथिताः क्रमात् ॥ १८ ॥

---

अग्रद्वयादारभ्य ब्रह्मसूत्रपश्चिमाग्रावधि सूत्रद्वयं विन्यस्य योनिं निष्पाद्य तद्योनिवामदक्षिणपार्श्वरेखामध्यगताग्रद्वयां तिर्य्यग्रेखां कृत्वा तदग्रद्वयात्तद्योनेः तिर्य्यग्रेखामध्यान्तसूत्रद्वयविन्यासात्त्रिकोणं निष्पाद्य तत्त्रिकोणपार्श्वद्वयमध्यगताग्रद्वयं तिर्य्यक् सूत्रं कृत्वा तदग्रद्वयादारभ्य तत्त्रिकोणतिर्य्यग्रेखामध्यान्तं सूत्रद्वयास्फालनेन मध्ययोनिं कृत्वा ब्रह्मसूत्रवृत्तञ्च मार्जयित्वा एवं घटिकाकालात्मकं चक्रं निष्पाद्य तत्र वाह्ययोनेरग्राद्यप्रादक्षिण्येन कोणत्रयेषु पूर्वोक्तविद्यागतपर्य्यायात्तत्तद्विद्याक्षरत्रयं विलिख्य तदन्तर्गतत्रिकोणकोणेषु पूर्वाग्राद्यप्रादक्षिण्येन नित्याविद्याक्षरत्रयं विलिख्य तदन्तर्गतयोनिमध्ये तत्तद्घटिकार्णेन प्रागुक्तप्रकारेण सहितं युगार्णं विलिख्य तत्र कालात्मके चक्रे नानाज्ञानं मनोमतस्थं तद्विद्धि इत्येकादशाक्षरवाक्यजनितसंख्या ( ८४६७५०५०००० ) भेदाभिन्ने प्रोक्तकाले षोडश नित्याः समर्चयेदिति ॥ १६ ॥

पूर्णमण्डलेत्यादिना क्रमादित्यन्तेन श्लोकद्वयेन पूर्णमण्डलवर्णेष्वक्षरयोगविशेषप्रक्रियावशेन जातास्त्र्यक्षरास्त्रिपुराविद्यास्तासामनुभावञ्चोपदिशति । तत्र पूर्णमण्डलवर्णाः अ आ इत्यादीनि चं चः इत्यन्तानि षट्सप्तत्यधिकपञ्चशतसंख्यान्यक्षराणि । प्रथमे प्रथमान्यक्षराणि विद्यानामिति शेषः । वाग्भवत्वेन भवतीत्यर्थः । आदितः क्रमात् अकारादिक्रमतः षट्त्रिंशत्तत्त्ववर्णाः प्रागुक्ता अकारादयः क्षान्तवर्णाः । तद्द्वितीया वर्णाः कामराजात्मकाः मरुता आकारेण कृतसन्धिका इति शेषः । तृतीया लिपिरिति शेषः । तासां विद्यानां तृतीया लिपिः सर्व्वतः वक्ष्यमाणसंख्यास्वासु विद्यासु वह्निः वह्निसंज्ञालिपिः इकारः तासां विद्यानां शक्तिवीजत्वेन स्थिता इत्यर्थः । एवं उक्तप्रकारेण त्रिपुराः संज्ञया स्वरूपेणेति शेषः । एतदुक्तं भवति अस्मिन् पटले

एताः पुस्तकमारोप्य पीठे संस्थाप्य पूजयेत् ।
यत्र तत्र गदालक्ष्मीग्रहदुर्भिक्षशात्रवाः ॥ १९ ॥
भूतापमृत्युकृत्याद्या न भवन्ति पुरादिके ।
अभीप्सितानि सिध्यन्ति तस्य योऽर्चति नित्यशः ॥ २० ॥
षट्त्रिंशत्तत् सप्तशतं सहस्राणि च विंशतिः ।
तासां संख्या समाख्याता तदावृत्तिस्तदात्मिकृत् ॥ २१ ॥

---

षट्त्रिंशदित्याद्येकविंशतितमेन श्लोकेन वक्ष्यमाणसंख्यानां प्रत्येकशः त्र्यक्षरात्मकानां त्रिपुराविद्यानामुद्धारे प्रथमाक्षरत्वेन प्रोक्तेषु पूर्णमण्डलवर्णेषु यथाक्रममेकमेकं प्रथममुच्चार्यानन्तरं तद्द्वितीयाक्षरत्वेन क्रमात् प्रागुक्तानि षट्त्रिंशत्तत्त्वात्मकान्यक्षराण्याकारेण कृतसन्धिकानि समुच्चार्यानन्तरं तत्तृतीयाक्षरत्वेन सर्वत्र ईकारमुच्चारयेत् । तेन पूर्णमण्डलवर्णेषु एकमेकमक्षरं षट्त्रिंशत् षट्त्रिंशद्विद्यानामाद्यमाद्यमक्षरं भवति । तेन वक्ष्यमाणसंख्या विद्याः सम्भवन्तीति ॥ १८ ॥

एता इत्यादिना नित्यश इत्यन्तेन श्लोकद्वयेन तासां त्रिपुराविद्यानां विनियोगं फलानि चोपदिशति । तत्र एता विद्याः । आरोप्य विलिख्य । पीठे पूजयेदित्यत्रान्वयः । संस्थाप्य प्रतिष्ठां कृत्वा । शात्रवाः शत्रव इत्यर्थः । कृत्याद्या इत्यत्राद्यशब्दः हत्यादिविषयः । पुरादिके इत्यत्रादिशब्दो ग्रामपत्तननगरखेटखर्वटगृहादिविषयः । तस्य अर्चकस्य ॥ २० ॥

षट्त्रिंशदित्यादिना श्लोकेनोक्तविद्यानां संख्यां तदनुसन्धातुः फलं तेन तन्त्रेण पर्यायनित्यादिकं चोपदिशति । तत्र तदावृत्तिस्तासां विद्यानां वक्ष्यमाणक्रमेण परिवृत्तिः । तदात्मिकृत् देव्यात्मत्वं करोति इति यावत् । अत्राद्युपस्कारः सम्प्रदायार्थो नाथाज्ञया लिख्यते । आसां विद्यानां देव्यात्मकत्वात्तच्छब्देन विद्योच्यते । तस्माद्दिननित्यात्मकत्वेन तासामावृत्तिः तासां दिननित्यानामेकैकस्या एव विद्यायाः पर्यायात्मकत्वेन प्राप्तिं करोतीति यावत् । किञ्च तासां विद्यानां पर्यायात्मकत्वेनावृत्तिश्च । तासामेकैकस्या एव विद्यायाः पर्यायात्मकत्वेन च प्राप्तिं करोति । घटिकाचक्रादिषु पर्यायविद्यालेखनस्थानेष्वेव पर्याये पर्यायात्मिकां विद्यां तत्तत् पर्यायविद्यया सह विलिखेत् । युगान्तेषु यदा दिननित्यात्वेन विद्याद्वयं भवति तदा तद्द्वयं तत् स्थानेष्वेव लिखेत् ॥ २१ ॥

स्तम्भनाद्येषु तद्वर्णास्तद्रूपा हेतिवाहनैः ।
एतद्ग्रन्थितजापेन मन्त्राः सिध्यन्ति वर्णिनः ॥ २२ ॥
नाथावृत्तिर्मन्त्रराशौ द्विसहस्रं शतद्वयम् ।
चत्वारि चेति विज्ञेयास्तत्त्वावृत्तिरुदीरिता: ॥ २३ ॥
पूर्णमण्डलसंख्यैव नित्यावृत्तिः सहस्रतः ।
द्विशतं पञ्चवत्यश्च निःशेषं समुदीरिताः ॥ २४ ॥
कृतादीनां युगानान्तु दिनेष्वेकैकशः क्रमात् ।
ता विद्यास्तत्त्वरूपिण्यः शेषास्त्वन्ते द्विशः स्मृताः ॥ २५ ॥

---

स्तम्भनाद्येष्वित्यादिभिः समुदीरिता इत्यन्तैस्त्रिभिः श्लोकैस्तासां प्रोक्तसंख्यानां विद्यानां विनियोगप्रकारं नवनाथव्याप्तिक्रमं षट्त्रिंशत्तत्त्वव्याप्तिक्रमं षोड़शनित्याव्याप्तिक्रमञ्चोपदिशति । तत्र स्तम्भनाद्येषु आद्यशब्दश्चतुर्विंशत्पटलोक्तषट्कर्म्मादिविषयः । तद्वर्णास्तत्तद्विद्यावर्णाश्चतुर्विंशतिपटलोक्तपीतादिवर्णाश्च । तद्रूपाः पञ्चत्रिंशत् पटलवक्ष्यमाणषड्भेदरूपाः । एतैः प्रथमभेदरूपैर्मन्त्रैर्ग्रन्थितजापेन एकान्तरितजापेन मन्त्राः सर्वे इति शेषः । वर्णिनः प्राग्वत् । एतदुक्तं भवति नित्याविद्यासु मनीषितां विद्यामाभिर्विद्याभिरेकैकविद्यान्तरितं जपेत् । एष जपप्रकारः उक्तप्रकारेण सर्वाक्षराणां नित्यात्मकत्वात् सर्व्वमन्त्राणां अक्षरात्मकत्वाच्च सर्व्वमन्त्रसाधारण इति । अस्य रहस्यार्थस्त्वाराध्यमुखादवगन्तव्यः । नाथावृत्तिः नवसंख्यावृत्तिः । तत्त्वावृत्तिः षट्त्रिंशत् संख्यावृत्तिः । पूर्णमण्डलसंख्या षट्सप्तत्यधिकानि पञ्चशतानि । नित्यावृत्तिः षोड़शषोड़शसंख्यावृत्तिः निःशेषं समस्तव्याप्तिः ॥ २४ ॥

कृतादीनामित्यादिना सिद्धये इत्यन्तेन श्लोकद्वयेन कृतादिषु चतुर्युगेष्वङ्गनानामुक्तविद्याव्याप्तिक्रमं प्रयोगेषु तत्तद्दिनपूजावश्यकर्त्तव्यतां तत्फलानि चोपदिशति । तत्र एकैकशः एकैका विद्याः । तत्त्वरूपिण्यः प्रत्येकं तत्त्वाक्षराः । प्रत्येकमक्षरत्रयात्मकतया ज्ञातृज्ञानज्ञेयात्मकत्वाच्चाशेषविद्यानामिति शेषः । अन्ते युगानामिति शेषः । द्विशः प्रतिदिनं द्वे द्वे विद्ये । एतदुक्तं भवति कृतादिषु चतुर्युगेषु परिवृत्तितः प्रोक्तसंख्या विद्या एकैकस्य दिवसस्य यथाक्रममेकैका विद्या भवति । तत्तद्युगान्तेषु केषुचिद्दिनेषु प्रतिदिनं द्वे द्वे विद्ये भवतः ।

प्रयोगेषु तु सर्व्वत्र तत्तद्दिनप्रपूजनम् ।
विशेषतो विधातव्यं जयारोग्यादिसिद्धये ॥ २६ ॥

---

तत् सर्व्वमालिख्यते । यथा कृतयुगे प्रोक्तक्रमेण सप्तत्रिंशदधिकचतुःशतोत्तरत्रिंशत्-सहस्र ( ३०४३७ ) संख्येषु पर्य्यायेषु गतेषु अनन्तरपर्य्याये चतुःषष्ट्युत्तरद्विशता-धिकनवसहस्रसंख्यासु ( ८२६४ ) दिननित्याविद्यासु गतासु अनन्तरं ताटाई इतिरूपिणीं विद्यामारभ्य तत्पर्य्यायशेषमनन्तरपर्य्यायञ्च प्रतिदिनं विद्या इयं इयं भवति। सम्भूय कृतयुगे पर्य्याया एकोनचत्वारिंशदधिकचतुःशतोत्तरत्रिंशत् सहस्रसंख्या ( ३०४३८ ) भवन्ति। त्रेतायुगे च प्रोक्तक्रमेणाष्टाविंशत्यधिकाष्ट-शतोत्तरद्वाविंशतिसहस्रसंख्येषु ( २२८२८ ) पर्य्यायेषु गतेषु अनन्तरपर्य्याये अष्टचत्वारिंशदधिकनवशतोत्तरषट्सहस्रसंख्यासु ( ६८४८ ) दिननित्या-विद्यासु गतासु अनन्तरं ठाथाई इतिरूपिणीं विद्यामारभ्य तत्पर्य्यायशेषं अनन्तरपर्य्यायशेषञ्च प्रतिदिनं विद्याद्वयं इयं भवति। सम्भूय त्रेतायुगपर्य्याया एकोनत्रिंशदधिकाष्टशतोत्तरद्वाविंशतिसहस्रसंख्या ( २२८२९ ) भवन्ति। द्वापरयुगे च प्रोक्तक्रमेणाष्टदशोत्तरशतद्वयाधिकपञ्चदशसहस्रसंख्येषु (१५२१८) पर्य्यायेषु गतेषु अनन्तरपर्य्याये द्वाविंशदधिकषट्शतोत्तरचतुःसहस्रसंख्यासु ( ४६२२ ) दिननित्याविद्यासु गतासु अनन्तरं जडाई इति रूपिणीं विद्या-मारभ्य तत्पर्य्यायशेषमनन्तरपर्य्यायञ्च प्रतिदिनं द्वे द्वे विद्ये भवतः। सम्भूय द्वापरपर्य्याया विंशत्यधिकशतद्वयोत्तरपञ्चदशसहस्रसंख्या ( १५२२० ) भवन्ति। कलियुगे च प्रोक्तक्रमेण नवाधिकषट्शतोत्तर सप्तसहस्रसंख्येषु (७६०९) पर्य्यायेषु गतेषु अनन्तरपर्य्याये षोड़शाधिकशतत्रयोत्तरसहस्रद्वयसंख्यासु (२३१६) दिन-नित्याविद्यासु गतासु अनन्तरं घढाई इति रूपिणीं दिननित्याविद्यामारभ्य तत् पर्य्यायशेषमनन्तरपर्य्यायञ्च प्रतिदिनं द्वे द्वे विद्ये भवतः। सम्भूय कलियुगे पर्य्याया दशोत्तरषट्शताधिकसप्तसहस्रसंख्या (७६१०) भवन्ति। सम्भूय चतुर्युग-पर्य्यायाः साष्टनवतिषट्सप्ततिसहस्रसंख्या (७६०९८) भवन्तीति। युगानामन्ते प्रतिदिनं दिननित्याविद्याद्वयभजनवासना पूज्यपादमुखादवगन्तव्या। युगदिन-संख्यापि ज्योतिःशास्त्रे सिद्धान्तशिरोमणौ द्रष्टव्या। "पञ्चाङ्गरामास्तिथयः खवह्नी सार्द्धद्विदस्नार्कदिनाख्यमब्दैः"। अस्यार्थः एकस्मिन् सौरवत्सरे पञ्च-षष्ट्यधिकशतत्रयं दिनानि (३६५) पञ्चशद्दण्डाः (१५) त्रिंशत्पलाः (३०) सार्द्धद्वा-

विंशतिर्विपलाः (२२।३०) भवन्तीति । तत्र द्वात्रिंशत्सहस्राधिकचतुर्लक्षवर्षसंख्ये (४३२००० ) कलियुगे दिनसंख्यापञ्चषष्ट्यधिकशतत्रयदिनसम्बन्धीनि अशीतिसहस्राधिकषट्सप्ततिलक्षोत्तरपञ्चदशकोटिसंख्यानि ( १५७६८०००० ) दिनानि भवन्ति कलियुगे पञ्चदशदण्डसम्बन्ध्यशीतिसहस्राधिकचतुःषष्टिलक्षदण्डसम्बन्धीनि अष्टसहस्राधिकलक्षसंख्यानि (१०८०००) दिनानि भवन्ति कलियुग एव त्रिंशत्पलसम्बन्धिषष्टिसहस्राधिकोनत्रिंशल्लक्षोत्तरकोटिसंख्यपलसम्बन्धीनि षट्शताधिकसहस्रत्रयसंख्यानि ( ३६०० ) दिनानि भवन्ति कलियुगे सार्द्धद्वाविंशतिविपलसम्बन्धि विंशतिसहस्राधिकसप्तनवतिलक्षसंख्य ( ९७२०००० ) विपलसम्बन्धीनि पञ्चचत्वारिंश ( ४५ ) द्दिनानि भवन्ति अत्र कलियुगे दिनसम्बन्धीनि दिनानि (१५७६८००००) दण्डसम्बन्धीनि दिनानि (१०८०००) पलसम्बन्धीनि दिनानि ( ३६०० ) विपलसम्बन्धीनि दिनानि पञ्चचत्वारिंश (४५) चैवं सम्भूय पञ्चचत्वारिंशदधिकषट्शतोत्तरैकनवतिसहस्राधिकसप्तसप्ततिलक्षोत्तरपञ्चदशकोटि संख्यानि (१५७७९१६४५) कलियुगदिनानि भवन्ति । ततः षट्त्रिंशदधिकसप्त शतोत्तरविंशतिसहस्रसंख्यानां (२०७३६) मन्वाणां नवाधिकषट्शतोत्तरसप्तसहस्रावृत्तिभिः (७६०९) चतुर्विंशत्यधिकशतद्वयोत्तराशीतिसहस्राधिकसप्तसप्ततिलक्षोत्तरपञ्चदशकोटिसंख्यानि ( १५७७८०२२४ ) दिनानि भवन्ति तदनन्तरं दशमावृत्तौ अवशिष्टेषु एकविंशत्यधिकचतुःशतोत्तरैकादशसहस्रसंख्येषु (११४२१) दिनेषु षडुत्तरैकविंशतिशतसंख्येषु (२१०६) दिनेषु एकैका विद्या भवति । पञ्चदशाधिकशतत्रयोत्तरनवसहस्रसंख्येषु (९३१५) दिनेषु द्वे द्वे विद्ये भवतः । तेन दशमपर्य्यायपूर्त्तिरिति । द्वापरादि द्विगुणादिना ऊहनीयमिति । अङ्कतो यथा ३१५५५८३२९० द्वापरदिनानि ४७३३७४९३५ त्रेतायुगदिनानि ६३११६६५८० सत्ययुगदिनानि । अत्रैते संग्रहश्लोकाः—

पञ्चा (५)ङ्ग (६)रामा(३)स्तिथयः(१५)खा(०)ग्नि(३) सार्द्धाश्वि(२)चक्षुषी (२)।
दिनादिर्विपलान्तश्च कालः सौरे तु वत्सरे ॥
वाण (५) वेदो (४) र्म्मि (६) रात्रीश (१) ग्रह (९) भूधर (७) भूधरे (७)।
वाण (५) श्चन्द्रः (१) कलियुगे दिनसंख्याः समीरिताः ॥
पर्य्याया स्तत्र विज्ञेयाः ख (०) चन्द्र (१) रस (६) भूधराः (७)।
नव (९) शून्या(०) ङ्ग (६) पाताल (७) पर्य्यायदिवसाः पुनः ॥
वेद(४) द्वि(२)नेत्र(२)खा(०) ष्टा (८)श्व(७)मुनी(७)षु (५) शशि(१)संख्यया ।
शिष्टेषु चन्द्र (१) नेत्रा (२) ब्धि (४) भू (१) भू (१) संख्या दिनेषु च ॥

धातुचक्रेशयोः पूजां कुर्य्यात्तत्तदवाप्तये ।
तत्प्रकारः प्रयोगानां पटले साधु वक्ष्यते ॥ २७ ॥
तेषु पञ्चाशदर्णानां पञ्चाशन्मिथुनानि वै ।
घटिकाक्रमयोगेन भजन्ते परिवर्त्तनम् ॥ २८ ॥
अथ यन्त्राणि वक्ष्यन्ते प्रोक्तसंख्यान्यनुक्रमात् ।
वृत्तं षट्त्रिंशदस्रञ्च तद्वदष्टादशास्रकम् ॥ २९ ॥

---

पर्य्याये त्वङ्ग (६) शून्ये (०) न्दु (१) नेत्र (२) संख्ये दिने गते ।
एकैकस्मिन् दिने द्वे द्वे विदेत्र ज्ञेये क्रमादिति ॥
वर्षे दिनादिकं बुद्ध्वा युगवासरकादिकम् ।
द्वापरादिषु तत्सर्व्वं द्विगुणत्रिगुणादिकम् ॥ इति ।

प्रयोगेषु प्रयोगदिनेषु तत्तद्दिनेषु तत्तद्दिनप्रपूजनं यस्मिन् यस्मिन् दिवसे प्रयोगाः क्रियन्ते तत्तद्दिनपतीनां पूजनं। तेन तद्दिनपतयः दिननित्या च तिथिनित्या च तिथ्यधिपो वासरेशो नक्षत्रेशश्च षड्विधाः। तेषां दिननित्यासमर्च्चनमस्मिन् पटले वक्ष्यति। तत्तत्तिथिनित्यार्चनं तत्तत्पटले प्रोक्तं। तिथीशनक्षत्रेशयोर्नामार्च्चने चित्रानित्यापटले प्रोक्ते वारेशद्वयनामार्च्चने कुलसुन्दरीपटले विशेषतः प्रोक्ते। तदकरणे नैष्फल्यं कर्त्तृपीड़ाप्रसङ्गात्। एतदुक्तं भवति प्रयोगदिवसेषु प्रोक्तषड्विधदिनपतीनां प्रोक्तक्रमात् पूजनमवश्यं विधातव्यमिति ॥ २६ ॥

धात्वित्यादिना परिवर्त्तनमित्यन्तेन श्लोकद्वयेनोत्तरत्र प्रयोगपटले वक्ष्यमाणप्रकारेण धातुचक्रेशयोरर्च्चनमपि प्रयोगदिवसेषु अवश्यकर्त्तव्यतया मातृकाव्याप्तौ प्रस्तौति। तत्र धात्वीशाः डाकिन्यादयः। प्रोक्ताः चक्रेशाः। परिवर्त्तनं मण्डलीकरणम् ॥ २८ ॥

अथ यन्त्राणीत्यादिभिरन्यवदित्यन्तैर्नवभिः श्लोकैः षट्सप्तत्यधिकपञ्चशतपूर्णमण्डलाचरैस्तावत्संख्यातानामब्दानां प्रत्यब्दमेकैकशस्तावत्संख्यातानि चक्राण्युपदिशति। तत्र प्रोक्तसंख्यानि षट्सप्तत्यधिकपञ्चशतसंख्यानीत्यर्थः।

द्वादशास्रं नवास्रं वा स्वरे चास्रं नवास्रकम् ।
चतुरस्रमथ त्र्यस्रमिति भेदा नव क्रमात् ॥ ३० ॥
एतानि वर्णविन्यासभेदात् प्रत्येकमष्टधा ।
तेन द्वासप्ततिर्भेदास्तेषु नित्यार्णभेदतः ॥ ३१ ॥
प्रत्येकमष्टधेत्येवमुक्तसंख्याः समीरिताः ।
एतेष्वाद्यस्य वृत्तस्य विन्यासेनान्यदुन्नयेत् ॥ ३२ ॥
षडङ्गुलपरिभ्रान्त्या वृत्तमेकन्तु वर्त्तयेत् ।
एवं पुनः पुनः कुर्य्यादेकैकाङ्गुलतो वहिः ॥ ३३ ॥
यदा सप्तदशाभुवंस्तदा तद्विभजेद्दरैः ।
षट्त्रिंशद्भिस्ततस्तेषु न्यसेद्वर्णान् तथादितः ॥ ३४ ॥

---

वृत्तमित्यादिना श्लोकोत्तरार्द्धेन चक्रत्रयं द्वादशास्रमित्यर्द्धेन चक्रचतुष्टयं तत्र स्वरे षोड़शारे चक्र इत्यर्थः। चतुरस्रमित्यादिना श्लोकोत्तरार्द्धाद्यपादेन चक्रद्वयं। एतानि प्रोक्तानि नव चक्राणि। वर्णविन्यासभेदात् अस्मिन् पटले अनुलोमेत्यादिना पञ्चत्रिंशेन श्लोकेन वक्ष्यमाणतत्त्वार्णविन्यासभेदेन। तेषु द्वासप्ततिभेदेषु। नित्यार्णभेदतः षोड़शस्वरविन्यासभेदेन। उक्तसंख्याः षट्सप्तत्यधिकपञ्चशतसंख्याः। एतदुक्तं भवति प्रोक्तानां वृत्तादीनां अस्रान्तानां नवानां चक्राणां च वक्ष्यमाणप्रकारेण तत्त्वाक्षरनित्याक्षरविन्यासभेदात् प्रत्येकं चतुःषष्टिरूपत्वात् सम्भूय प्रोक्तसंख्या भवन्तीति। एतेषु नवसु चक्रेषु। वृत्तस्य वृत्तरूपस्य चक्रस्य। अन्यत् वृत्तेतरं चक्रं। उन्नयेत् अष्टारविन्यासतन्मानादिकं कुण्डपटले वक्ष्यमाणप्रकारेणोहयित्वा लिखेदित्यर्थः। षड़ङ्गुलपरिभ्रान्त्या प्रतिदिशमिति शेषः। वर्त्तयेत् भ्रमयेत् यदा सप्तदशाभुवन् वृत्तानीति शेषः। तच्चक्रान्तेषु पूर्णमण्डलसंख्येषु कोष्ठेषु। अर्णान् पूर्णमण्डलवर्णान्। आदितः अ आ इत्यादिक्रमतः क्षं क्ष इत्यन्तः। चक्रविरचनाक्रमो यथा—समे तले हंसपदं विधाय तत्सन्दंशस्थानमध्यभेदेन प्राक्प्रत्यग्व्रह्मसूत्रं कृत्वा तदवष्टम्भेन षड़ङ्गुलप्रमाणसूत्रभ्रमेण वृत्तं निष्पाद्य तद्वहिरेकैकाङ्गुलान्तरालं षोड़शवृत्तानि सम्भय सप्तदशवृत्तानि विधाय एकोनत्रिंशत्पटले वक्ष्यमाणक्रमेण

अनुलोमविलोमौ च वाह्याभ्यन्तरसंपुटे ।
वाह्याभ्यन्तःपरावृत्तौ तथा व्याकीर्णमित्यपि ॥ ३५ ॥

---

परितः षट्त्रिंशदरान् समान्तरालान्निष्पाद्य ब्रह्मसूत्रं मार्जयित्वा तद्वीथीगतेषु कोष्ठेषु पूर्णमण्डलसंखेष्रु वक्ष्यमाणक्रमेण तत्संख्यान् वर्णान् विन्यस्य वृत्तरूपेऽस्मिन्नेव चक्रे चतुःषष्टिचक्राणि सम्पादयेत्। षट्त्रिंशदस्त्रादिसर्व्व-चक्रेषु प्राग्वत् सर्व्वमङ्गलापटलोक्तप्रकारेण तत्तदुक्तारसंख्यचिह्नानि परितो वृत्तेषु विधाय चिह्नाच्चिह्नं ज्यारूपेण सूत्राख्यास्फाल्य तद्वृत्तखण्डमार्जनात्तत्त-दस्त्रात्मकं चक्रं भवति। अष्टास्त्रं चक्रं सप्तत्रिंशद्भिर्वृत्तैः प्राग्वत् षोड़शारैश्च कुर्य्यात् ॥ ३४ ॥

अनुलोमेत्यादिना श्लोकेन तेषु नवषु चक्रेषु वर्णविन्यासभेदक्रममुपदिशति। तत्र अनुलोमविलोमौ च चकारः समुच्चयार्थः। तेनैव स्वराणां विन्यासभेदा आक्षिप्यन्ते। वाह्याभ्यन्तरसंपुटौ वाह्याभ्यन्तरार्द्धयोः स्थानभेदादन्योन्य-संपुटद्वयं वाह्याभ्यन्तरपरावृत्तौ प्राग्वदर्द्धद्वयस्य मध्यकोष्ठद्वयादुभयतः प्रति-लोमानुलोमेन द्विधा लेखनं। तथा वाह्याभ्यन्तरस्थानभेदतः। एतदुक्तं भवति प्रोक्तेषु नवसु चक्रेषु वाह्यात् कर्णिकावधि प्रत्येकं षोड़शकोष्ठात्मिका वीथयः षट्-त्रिंशत्संख्याः परितः सम्भवन्ति। तास्च वीथ्योऽनुलोमानुलोमात्मकेषु प्रतिचक्रमष्ट-खण्डसु भेदेष्वग्रादि प्रादक्षिण्येन तत्तत्स्वाक्षराणां विलेखनवीथयो भवन्ति। तासु वीथीष्वग्रवीथीस्थकोष्ठषोड़शके वाह्यादाभ्यन्तरप्रवेशगत्या षोड़शस्वरान् विलिख्य प्रदक्षिणक्रमयोगात्तदनन्तरवीथीगतकोष्ठषोड़शके ककारस्य षोड़शस्वरभिन्नरूपाणि प्राग्वद्विलिखेत्रवं प्रदक्षिणक्रमेण वीथीषु खादिक्षान्तानामक्षराणां षोड़शस्वरयो-जनेन भिन्नानि रूपाणि प्रतिवीथिकं षोड़शसु कोष्ठेषु प्राग्वद्विलिखेत्। अयमनु-लोमानुलोमक्रमः। एतच्चक्रं पूर्णमण्डलाख्ययुगेषु प्रथमवत्सरात्मकं। अस्मिन् एवं चक्रे षट्त्रिंशत्तत्स्वाक्षराणां प्रत्यक्षरं षोड़शस्वरभिन्नानि रूपाणि पूर्णानि। तत्तदनुलोमक्रमवीथिस्थितादेरष्वेवाभ्यन्तरकोष्ठारभ्यतो वाह्यकोष्ठान्तं विलेखना-दनुलोमविलोमाख्यं तद्युगद्वितीयसम्वत्सरात्मकं चक्रम्। अस्मिन्नेव चक्रे तासु बीथीष्वेव षट्त्रिंशत् तत्स्वाक्षराणां प्रत्यक्षरं स्वरभिन्नेषु रूपेषु वाह्यकोष्ठा-दिषु क्रमादष्टसु कोष्ठेषु प्रवेशगत्याष्टौ रूपाण्यनुलोमतो लिखित्वा ततः सर्वा-भ्यन्तरकोष्ठादिनिर्गमनगत्या शेषेष्वष्टसु च कोष्ठेषु शेषरूपाष्टकानि क्रमाद्वि-

कर्णिकायां मरुद्बिन्दुनाम्ना संलिख्य सर्व्वतः।
योजयेद्बाह्यकोष्ठस्थैः प्रागुक्तविधिना क्रमात्॥ ३६॥

---

लिखेत्। एतच्चक्रमनुलोमवाह्यसंपुटाख्यं प्रोक्तयुगतृतीयसम्वत्सरात्मकं चक्रं भवति। अस्मिन्नेव चक्रे तासु वीथीष्वेव तत्त्वाक्षराणां प्रागवत् षोड़शसु रूपेषु आदितः क्रमादष्टौ रूपाणि सर्वाभ्यन्तरकोष्ठादिष्वष्टसु कोष्ठेषु निर्गमनगत्या च शेषरूपाष्टकं क्रमाद्बाह्यकोष्ठारम्भतः प्रवेशगत्या च लिखेत्। एतदनुलोमाभ्यन्तरसंपुटाख्यं तद्युगचतुर्थवत्सरात्मकं चक्रम्। अस्मिन्नेव चक्रे तास्वेव वीथीसु प्रागुक्ताक्षराणां प्रागवत् षोड़शसु रूपेषु आदितः क्रमादष्टौ रूपाणि अष्टमकोष्ठादिसर्व्ववाह्यकोष्ठान्तम् अष्टसु कोष्ठेषु निर्गमनगत्या च नवमकोष्ठादिसर्वाभ्यन्तरकोष्ठान्तमष्टसु कोष्ठेषु शेषरूपाष्टकं क्रमात् प्रवेशगत्या च विलिखेत्। एतदनुलोमवाह्यपरावृत्ताख्यं प्रोक्तयुगपञ्चमसंवत्सरात्मकं चक्रं भवति। अस्मिन्नेव चक्रे तास्वेव वीथीषु तत्त्वाक्षराणां तेषु षोड़शस्वररूपेषु आदितः क्रमादष्टौ रूपाणि नवमकोष्ठारम्भतः सर्वाभ्यन्तरकोष्ठान्तमष्टसु कोष्ठेषु प्रवेशगत्या चाष्टमकोष्ठादिसर्व्ववाह्यकोष्ठान्तं शिष्टेष्वष्टसु कोष्ठेषु निर्गमनगत्या शेषरूपाष्टकानि विलिखेत्। एतदनुलोमाभ्यन्तरपरावृत्ताख्यं तद्युगषष्ठसम्वत्सरात्मकं चक्रम्। अस्मिन्नेव चक्रे प्राग्वत्तत्त्वाक्षराणां षोड़शरूपाणि प्रतिवीथिकं षोड़शसु कोष्ठेषु प्रथमे षोड़शे द्वितीये पञ्चदशे तृतीये चतुर्दशे चतुर्थे त्रयोदशे पञ्चमे द्वादशे षष्ठ एकादशे सप्तमे दशमे ऽष्टमे नवमे च कोष्ठे आदितः क्रमाद्विलिखेत्। एतदनुलोमवाह्यव्याकीर्णाख्यं प्रोक्तयुगसप्तमसंवत्सरात्मकं चक्रं भवति। अस्मिन्नेव चक्रे तास्वेव वीथीषु प्रोक्ततत्त्वाक्षराणां प्रोक्तानि रूपाणि प्रतिवीथि षोड़शसु कोष्ठेषु षोड़शे प्रथमे पञ्चदशे द्वितीये चतुर्द्दशे तृतीये त्रयोदशे चतुर्थे द्वादशे पञ्चमे एकादशे षष्ठे दशमे सप्तमे नवमे अष्टमे च कोष्ठे आदितः क्रमाद्विलिखेत्। एतदनुलोमाभ्यन्तरव्याकीर्णाख्यं तद्युगाष्टमसम्वत्सरात्मकं चक्रं भवति। अस्मिन्नेव षट्त्रिंशदरसप्तदशवृत्तात्मके चक्रे प्रतिवीथिकं षोड़शकोष्ठात्मिकासु षट्त्रिंशत्सु वीथिषु अग्रवीथ्यां चकारस्य षोड़शस्वरभिन्नानि रूपाणि वाह्यकोष्ठारम्भादाभ्यन्तरप्रवेशगत्या क्रमाद्विलिख्य प्रादक्षिण्यक्रमायाततदनन्तरवीथ्यादिषु पञ्चत्रिंशत्सु वीथिषु ल्लादीनां शेषतत्त्वाक्षराणां षोड़शस्वरभिन्नानि रूपाणि प्रागवद्विलिखेत्। एतद्विलोमानुलोमाख्यं

तद्युगनवमसम्वत्सरात्मकं चक्रं भवति। अस्मिन्नेव चक्रे प्रागुक्तप्रक्रियाभि स्तत्त्वाक्षराणां स्वरभिन्नानां रूपाणां क्रमाद्विलेखनतो विलोमविलोमाख्यं विलोमवाह्यसंपुटाख्यं विलोमाभ्यन्तरसंपुटाख्यं विलोमवाह्यपरावृत्ताख्यं विलोमाभ्यन्तरपरावृत्ताख्यं विलोमवाह्यव्याकीर्णाख्यं विलोमाभ्यन्तरव्याकीर्णाख्यं तद्युगदशमसम्वत्सरादिषोड़शसम्वत्सरात्मकं यथाक्रममेकैकवत्सरात्मकं चक्रं भवति। भूयोऽपि तस्मिन्नेव प्रागुक्तरूपे चक्रे अग्रवीथ्यां अकारस्य षोड़शरूपाणि वाह्यतोऽभ्यन्तरप्रवेशगत्या विलिख्य प्रदक्षिणक्रमायाततदनन्तरवीथ्यादिषु सप्तदशसु वीथीषु ककारादिथकारान्तानां सप्तदशाक्षराणां प्रत्यक्षरं षोड़शस्वरभिन्नानि रूपाणि प्राग् वद्विलिख्य तत्तत्क्रमायाततदनन्तरैकोनविंशवीथ्यादिषु शिष्टास्वष्टादशसु वीथिषु चकारादिदकारान्तानामष्टादशाक्षराणां प्राग्वत् स्वरभिन्नानि रूपाणि प्राग्वद्विलिखेत्। एतद्वाह्यसंपुटानुलोमाख्यं तद्युगसप्तदशवत्सरात्मकं चक्रं भवति। अस्मिन्नेव चक्रे तेषां तत्त्वाक्षराणां प्राग्वत् षोड़शस्वरसहितानां रूपाणां प्रागुक्तप्रक्रियाभिर्विलेखनतो वाह्यसंपुटविलोमाख्यम् वाह्यसंपुटवाह्यसंपुटाख्यम् वाह्यसंपुटाभ्यन्तरसंपुटाख्यम् वाह्यसंपुटवाह्यपरावृत्ताख्यम् वाह्यसंपुटाभ्यन्तरपरावृत्ताख्यम् वाह्यसंपुटवाह्यव्याकीर्णाख्यम् वाह्यसंपुटाभ्यन्तरव्याकीर्णाख्यञ्च तद्युगाष्टादशवत्सरादि चतुर्विंशवत्सरान्तमेकैकवत्सरात्मकं चक्रं भवति। अस्मिन्नेव चक्रे प्रोक्तरूपेऽग्रवीथ्यां दकारस्य प्राग्वत् षोड़शरूपाणि प्राग्वद्वाह्यादभ्यन्तरप्रवेशगत्या विलिख्य प्रदक्षिणक्रमायाततदनन्तरवीथ्यादिषु सप्तदशसु वीथिषु धकारादीनां क्षकारान्तानां सप्तदशाक्षराणां प्रत्यक्षरं षोड़शस्वरभिन्नानि रूपाणि प्राग्वद्विलिख्य तत्तत्क्रमायाततदनन्तरैकोनविंशवीथ्यादिषु अष्टादशसु वीथिषु अकारादीनामकारान्तानामष्टादशाक्षराणां प्राग्वत् स्वरभिन्नानि रूपाणि प्रोक्तक्रमात् विलिखेत्। एतदाभ्यन्तरसंपुटानुलोमाख्यम् तद्युगपञ्चविंशवत्सरात्मकं चक्रं भवति। अस्मिन्नेव चक्रे तत्त्वाक्षराणां प्राग्वत् षोड़शस्वरभिन्नानां रूपाणां प्रागुक्तप्रक्रियाभिर्विलेखनादाभ्यन्तरसंपुटविलोमाख्यम् आभ्यन्तरसंपुटवाह्यसंपुटाख्यम् आभ्यन्तरसंपुटाभ्यन्तरसंपुटाख्यमाभ्यन्तरसंपुटवाह्यपरावृत्ताख्यमाभ्यन्तरसंपुटाभ्यन्तर-परावृत्ताख्यमाभ्यन्तर-संपुटवाह्य-व्याकीर्णाख्यमाभ्यन्तरसंपुटाभ्यन्तरव्याकीर्णाख्यम् च तद्युगषड्विंशवत्सरादिद्वात्रिंशवत्सरान्तमेकैकवत्सरात्मकं चक्रं भवति। भूयोऽपि तस्मिन्नेव प्रोक्तरूपे चक्रेऽग्रवीथ्यां थकारस्य प्रागवत् षोड़शरूपाणि वाह्यादभ्यन्तरप्रवेशगत्या विलिख्य

**अन्येषामरविन्यासः षट्त्रिंशत् समुदीरितः ।**
**अष्टास्रे षोड़शाराः स्युः षट्त्रिंशद्वृत्तमन्यवत् ॥ ३७ ॥**

---

प्रदक्षिणक्रमायाततदनन्तरवीथ्यादिषु सप्तदशसु वीथीषु तकारादीनामकारान्तानां सप्तदशाक्षराणां प्रागवत् षोड़शरूपाणि प्रागवद्विलिख्य तत्क्रमायाततदनन्तरै-कोनविंशवीथ्यादिषु अष्टादशसु वीथिषु दकारादीनां क्षकारान्तानां प्रागवत् षोड़शरूपाणि विलिखेत्। एतद्वाह्यपरावृत्तानुलोमाख्यं तद्युगलत्रयस्त्रिंशद्वत्-सरात्मकं चक्रं भवति। अस्मिन्नेव चक्रे तेषां तत्त्वाक्षराणां प्रागवत् षोड़श रूपाणां प्रागुक्तप्रक्रियाभिर्विलेखनतो वाह्यपरावृत्तविलोमाख्यं वाह्यपरावृत्त-वाह्यसंपुटाख्यं वाह्यपरावृत्ताभ्यन्तरसंपुटाख्यं वाह्यपरावृत्तवाह्यपरावृत्ताख्यं वाह्यपरावृत्ताभ्यन्तरपरावृत्ताख्यं वाह्यपरावृत्तवाह्यव्याकीर्णाख्यं वाह्यपरा-वृत्ताभ्यन्तरव्याकीर्णाख्यम् च तद्युगचतुस्त्रिंशवत्रादिचत्वारिंश (४०) -वत्सरान्तं यथाक्रममेकैकवत्सरात्मकं चक्रं भवति। पुनश्च तस्मिन्नेव चक्रे-ऽग्रवीथ्यां क्षकारस्य प्रागवत् षोड़शरूपाणि वाह्यादाभ्यन्तरप्रवेशगत्या विलिख्य प्रदक्षिणक्रमायाततदनन्तरवीथ्यादिषु सप्तदशसु वीथिषु ळकारादीनां दकारान्तानां सप्तदशानामक्षराणां प्रागवत् षोड़शरूपाणि प्रागवद्विलिख्य तत्क्रमायात तदनन्त-रैकोनविंशवीथ्यादिषु अष्टादशसु वीथिषु अकखादीनां थकारान्तानामष्टादशा-क्षराणां प्रागवत् षोड़शरूपाणि विलिखेत्। एतदाभ्यन्तरपरावृत्तानुलोमाख्यमेक-चत्वारिंशद्वत्सरात्मकं चक्रं भवति। अस्मिन्नेव चक्रे तेषां तत्त्वाक्षराणां प्रागवत् षोड़शरूपाणां प्रागुक्तप्रक्रियाभिर्विलेखनादाभ्यन्तरपरावृत्तविलोमाख्यं आभ्यन्तरपरावृत्तवाह्यसंपुटाख्यमाभ्यन्तरपरावृत्ताख्यमाभ्यन्तरसंपुटाख्यमाभ्यन्तर-परावृत्तवाह्यपरावृत्ताख्यम् आभ्यन्तर-परावृत्तवाह्यव्याकीर्णाख्यमाभ्यन्तर-परावृत्ताभ्यन्तर-व्याकीर्णाख्यं च तद्युगद्विचत्वारिंशवत्सराद्यष्टचत्वारिंश वत्सरान्तमेकैकवत्सरात्मकं चक्रं भवति। पुनरपि तस्मिन्नेव चक्रेऽग्रवीथ्यां प्रागवत् अकारस्य षोड़शरूपाणि वाह्यादभ्यन्तरप्रवेशगत्या विलिख्य प्रदक्षिण क्रमायाततदनन्तरवीथ्यादिषु पञ्चविंशतसु यथाक्रमं क्षकलख हगसघ षङ शच वछ लज रझ यञ मट भठ बड फढ पण नत धथ दद्वत्येषां अक्षराणां पञ्च-विंशानां प्रत्यक्षरं प्रागवत् स्वरभिन्नानि रूपाणि प्रागवद्विलिखेत्। एत-द्वाह्यव्याकीर्णानुलोमाख्यं तद्युगैकोनपञ्चाशद्वत्सरात्मकं चक्रं भवति। अस्मि-

न्नेव चक्रे तेषां तत्त्वाक्षराणां षोडशस्वरभिन्नानां रूपाणां प्रागुक्तप्रक्रियाभि र्विलेखनतो बाह्यव्याकीर्णविलोमाख्यं बाह्यव्याकीर्णबाह्यसंपुटाख्यं बाह्यव्याकीर्णाभ्यन्तरसंपुटाख्यं बाह्यव्याकीर्णबाह्यपरावृत्ताख्यं बाह्यव्याकीर्णाभ्यन्तरपरावृत्ताख्यं बाह्यव्याकीर्णबाह्यव्याकीर्णाख्यं बाह्यव्याकीर्णाभ्यन्तरव्याकीर्णाख्यं च तद्युगपञ्चाशद्वत्सरादिषट्पञ्चाशद्वत्सरान्तं यथाक्रममेकैकवत्सरात्मकं चक्रं भवति। पुनरपि तस्मिन्नेव चक्रेऽग्रवीथ्यां बाह्यादभ्यन्तरप्रवेशगत्या चकारस्य षोडशरूपाणि विलिख्य प्रदक्षिणक्रमायाततदनन्तरवीथ्यादिषु पञ्चत्रिंशत्सु वीथिषु यथाक्रमं अलुकहखसगषघशङभफअवमचभटवलफडटपनणधतछवठ? इत्येषामक्षराणां पञ्चत्रिंशतां प्रत्यक्षरं षोडशरूपाणि प्राग्वद्विलिखेत्। एतदाभ्यन्तरव्याकीर्णानुलोमाख्यं तद्युगसप्तपञ्चाशद्वत्सरात्मकं चक्रं भवति। अस्मिन्नेव चक्रे तेषां तत्त्वाक्षराणां प्राग्वत् षोडशस्वरभिन्नानां रूपाणां प्रागुक्तप्रक्रियाभिर्विलेखनादाभ्यन्तरविलोमाख्यम् आभ्यन्तरव्याकीर्णबाह्यसंपुटाख्यम् आभ्यन्तरव्याकीर्णाभ्यन्तरसंपुटाख्यम् आभ्यन्तरव्याकीर्णबाह्यपरावृत्ताख्यम् आभ्यन्तरव्याकीर्णाभ्यन्तरपरावृत्ताख्यम् आभ्यन्तरव्याकीर्णबाह्यव्याकीर्णाख्यम् आभ्यन्तरव्याकीर्णाभ्यन्तरव्याकीर्णाख्यं च तद्युगाष्टपञ्चाशद्वत्सरादिचतुःषष्टितमवत्सरान्तं यथाक्रममेकैकवत्सरात्मकं चक्रं भवति। एवं सम्भूय तस्मिन्नेव वृत्तात्मके चक्रे तद्युगप्रथमचतुःषष्टिवत्सरात्मकानि चतुःषष्टिचक्राणि भवन्ति। एवं षट्त्रिंशदस्रादीनां त्र्यस्रान्तानां अष्टानां चक्राणां प्रोक्तप्रकारलेखनभेदैः प्रतिचक्रं यथाक्रमं तद्युगचतुःषष्टिवत्सरात्मकान्येवं सम्भूय पूर्णमण्डलाख्यतद्युगवत्सरात्मकानि षट्सप्तत्यधिकपञ्चशतसंख्यानि चक्राणि भवन्ति। तत्राष्टास्रचक्रे तु षोडशसु वीथिषु प्रतिवीथिकं षट्त्रिंशत्कोष्ठात्मिकासु अग्रवीथ्यां बाह्यादाभ्यन्तरप्रवेशगत्या अकखादीनां चान्तानां षट्त्रिंशत्तत्त्वात्मकानामक्षराणां प्रत्यक्षरं षोडशस्वरूपेष्वाद्यस्वरभिन्नानि रूपाणि विलिख्य प्रदक्षिणक्रमायाततदनन्तरवीथ्यादिषु पञ्चदशसु वीथिषु शेषपञ्चदशस्वरभिन्नानि तेषां रूपाणि षट्त्रिंशत्संख्यानि प्रागुक्तक्रमप्रवेशगत्या विलिखेत्। एतदष्टास्रे चक्रे प्रथमं चक्रं भवति। एवं व्यञ्जनाक्षरस्वराक्षरविलेखनस्थानविनिमयेन पूर्वोक्तप्रकारभेदैरेवावशिष्टानि त्रिषष्टिचक्राणि परिकल्पयेदिति। कर्णिकायां प्रोक्तानां पूर्णमण्डलचक्राणामिति शेषः। मरुद्वह्नी आकारईकारावक्तसन्धिकाविति शेषः। नाम्ना सहितं साधकसाध्यकर्मणामिति शेषः। तल्लिखनन्तु ईकारस्योदरे प्राग्वत्त्रिपंक्तिकं लिखेदिति सम्प्र-

एतत् पटे समालिख्य वहिरष्टच्छदाम्बुजम् ।
कृत्वा दलेषु क्रमशो वाग्देव्यष्टकमालिखेत् ॥ ३८ ॥
प्रोक्तरूपं ततस्तस्य प्रतिष्ठा सम्यगीरिता ।
विधाय पूजयेन्नित्यं पुस्तपूजोक्तसिद्धये ॥ ३९ ॥
उभयं यः प्रकुरुते तस्य वंशे स्थिरा रमा ।
न कदाचिच्छ्रियो हानिर्भविष्यति च तत्कुले ॥ ४० ॥

---

दायार्थः । सर्वतः सर्वचक्रसर्ववीथिषु योजयेत् । मरुद्वह्नी इत्यन्वयः । वाह्य-कोष्ठस्थैः षट्त्रिंशत्तत्स्थाक्षरैरिति शेषः । प्रागुक्तविधिना क्रमात् प्रोक्तचतुःषष्टिभेदविधिना अग्रादिप्रादक्षिण्यक्रमात् । एतदुक्तं भवति प्रोक्तेषु चक्रेषु कर्णिकामध्ये साधकादिसहितम् आ ई इत्यक्षरद्वयम् कृतसन्धिकं विलिख्य तत्तच्चक्राग्रवीथिवाह्यकोष्ठस्थाक्षरादिभिः सर्ववीथिवाह्यकोष्ठस्थैरक्षरैः प्रागुक्तचतुःषष्टिभेदभिन्नैः कर्णिकागताक्षरद्वयं क्रमाद्योजयेदिति । अष्टास्रे तु अग्रवीथिकोष्ठानि वाह्यानि कल्पयेदित्यानुश्रविकोऽर्थः । अन्यवत् यथा अन्य चक्रेषु चतुःषष्टिभेदभिन्नाः पारायणमन्त्रयोजनक्रमस्तथेत्यर्थः । अस्मिन् श्लोके अन्यत् सर्वं पूर्वमेवास्माभिर्व्याख्यातम् ॥ ३७ ॥

एतदित्यादिभिः कुल इत्यन्तैस्त्रिभिः श्लोकैस्तेषां प्रोक्तानां चक्राणां साधारणं शेषरूपं तद्विनियोगांस्तत्फलानि चोपदिशति । तत्र एतदिति प्रति चक्र-विषयं । वहिस्तच्चक्राणां प्रत्येकं प्रोक्तरूपाद्बहिरित्यर्थः । अष्टच्छदाम्बुजं अष्टपत्रमम्बुजमिति यावत् । अम्बुजमित्युक्त्या तदम्बुजस्य कर्णिकामध्ये प्रोक्त-चक्राणां विनिर्माणात्तच्चक्रवाह्ये कर्णिकार्थमेकवृत्तं विलिख्य तद्बहिरष्टपत्राणि विलिखेदित्यर्थः । क्रमशः अग्रादिप्रादक्षिण्यक्रमतः । वाग्देव्यष्टकं वशिन्या-दीनां मन्त्राष्टकं प्रोक्तरूपं विलिखेदिति पूर्वत्रान्वयः । ललितार्चनायामिति शेषः । वीजद्वयतत्तद्वर्गवीजनाम सप्ताक्षरीयुक्तमित्यर्थः । तस्य इति प्राग्वत् प्रतिचक्रविषयः । ईरितं द्वितीयपटल इति शेषः । एतदुक्तं भवति प्रतिष्ठायां द्वितीये पटले प्रोक्तरूपे प्रोक्तचक्रेषु सर्वमध्ये कर्णिकामध्ये देवतामावाह्य गन्धादिभिरभ्यर्च्य देवतापृष्ठभागे श्रीनाथशक्तीः प्रोक्तप्रक्रियया पञ्चदश नित्याश्च समभ्यर्च्य परितो द्वैतीश्च वहिर्वशिन्यादीः समभ्यर्च्य षट्त्रिंशदधिक-

वर्णौषधिक्वाथजलैरापूर्य्य कलशं महत् ।
तत्र देवीं समावाह्य संपूज्य विधिवन्निशि ॥ ४१ ॥
नित्यानां तत्त्वविद्याश्च जपित्वाऽन्येद्युरासने ।
संपूज्य शिष्यं संस्थाप्य शक्त्या तमभिषिचयेत् ॥ ४२ ॥
एवं जन्मानुजन्मादि पौर्णमासीषु साधकः ।
कुर्य्यात् कर्षसुवर्णस्य मुद्रिकां गाश्च दक्षिणाम् ॥ ४३ ॥
एवं निरन्तरं वर्षं योऽभिषिक्तः स साधकः ।
पार्थिवस्तस्य वन्द्यो वा भविष्यति न संशयः ॥ ४४ ॥
वर्षद्वयाभिषेकेन तस्य वंशे स्थिरा रमा ।
वर्षत्रयाभिषेकेण सिद्धिर्वैद्याधरी भवेत् ॥ ४५ ॥

---

सप्तशतोत्तरविंशतिसहस्रसंख्यान् (२०७३६) मन्त्रांस्तच्चक्रोद्धृतक्रमादर्चयेदिति। नित्यं प्रतिदिवसं एतदनुलोमादिमङ्गलप्रदचक्रविषयम्। इतरेषां चक्राणां तत्तत्कार्य्यकाले प्रतिष्ठार्चनादि कृत्वा तत्कार्य्यपरिसमाप्तौ देवतां सपरिवारामुद्वास्य पटगतं तच्चक्रं मार्जयित्वा प्रोक्तप्रायश्चित्तादि कुर्य्यात्। पुस्तकपूजोक्तसिद्धये पूर्वोक्तपुस्तकलेखनपूजाफलसिद्धये। उभयं मातृकाचक्रार्चनं पुस्तकार्चनञ्च ॥ ४० ॥

वर्णौषधीत्यादिभिराप्नुयादित्यन्तैरष्टभिः श्लोकैस्ताभिर्विद्यादिभिरभिषेकप्रकारं तत्फलावाप्तिञ्चोपदिशति। तत्र वर्णौषधिक्वाथजलैः पञ्चत्रिंशे पटले वक्ष्यमाणाक्षरौषधिक्वथितजलैः। महत् खारीमानतोयपूरणीयम्। तत्र जले विधिवत् पूर्वोक्तचक्रविधानप्रक्रियया। निशि पूर्व्वेद्युरिति शेषः। नित्यानां तत्त्वविद्याः स्वराणां षट्त्रिंशत्तत्त्वाक्षरयोगजातविद्याः। आसने संस्थाप्येत्युत्तरत्रान्वयः। शक्त्या देवतात्वेन वृतया योषिता सहेति शेषः। तं शिष्यं। जन्मानुजन्मादि पौर्णमासीषु आदिशब्दो विषुवायनयुगादिविशेषदिवसविषयः। पौर्णमासीशब्दः शेषपर्वविषयः। कर्षः निष्कत्रयं। मुद्रिकां अङ्गुलीयकं। दक्षिणां अभिषेक्तुरिति शेषः। एवं प्रोक्तप्रकारेण। निरन्तरं उक्तकालानतिलङ्घनेन। वर्षं अत्यन्तसंयोगे

चतुर्व्वर्षाभिषेकेण खेचरीमेलनं भवेत् ।
पञ्चवर्षाभिषेकेण पञ्चत्वं नाधिगच्छति ॥ ४६ ॥
षड् वर्षमभिषेकेण लोकपालसमो भवेत् ।
सप्तवर्षाभिषेकेण दिवाकरसमो भवेत् ॥ ४७ ॥
अष्टवर्षाभिषेकेण चन्द्रमःसदृशो भवेत् ।
नववर्षाभिषेकेण देवीसारूप्यमाप्नुयात् ॥ ४८ ॥
जयाय विद्याः षट्त्रिंशदेकपञ्चाशदेव वा ।
आवृत्तीर्जपहोमार्च्चातर्पणैः साधु साधयेत् ॥ ४९ ॥
तेन जित्वा रिपून् सर्व्वानेधते तपनो यथा ।
तथोत्पातेषु सर्व्वेषु तथा रोगाद्युपद्रवे ॥ ५० ॥

---

द्वितीया । तस्य वन्धः पार्थिवस्य वन्धः । एतद्ब्राह्मणजातिविषयं । तस्य अभिषेचस्य खेचरीमेलनं आकाशचरयोगिनीसंलापादि पञ्चत्वं स्वस्वरूपापरिज्ञानं । षड्वर्षं प्राग्वद्द्वितीया । लोकपालसमः तत्तद्गुणवैभवेन । दिवाकरसमः प्रतापादितः । चन्द्रमःसदृशः आह्लादकरत्वादिना । देवीसारूप्यं पराहन्तात्मताम् ॥ ४८ ॥ ॐ ॥

जयायेत्यादिभिः सम्प्रदायत इत्यन्तैः पञ्चभिः श्लोकैश्चतुर्विधोपास्तिभेदेन फलावाप्तिं प्रपञ्चस्य तत्तच्चक्ररूपत्वं तज्ज्ञानसिद्धौ सर्वाणि फलानीष्टानि सिध्यन्तीति चोपदिशति । तत्र विद्याः प्रोक्तसंख्याः कालनित्याः । षट्त्रिंशत् एकपञ्चाशदिति तासामावृत्तिविशेषणं । वा विकल्पे । साधु अनन्यगतचित्तं यथा तेन साधनेन सर्वान् सहजप्राकृतकृत्रिमान् एधते दीप्यते यथा इवेत्यर्थः । अस्मिन् प्रकरणे तथाशब्दः पूर्वोक्तप्रकारजपादिविषयः । सर्वेषु भौमान्तरीक्षदिव्येषु । रोगादीत्यत्रादिशब्दो भूतवेतालप्रेतपिशाचापस्मारादिविषयः । कृत्यानिवारणे परोत्थापितकृत्याप्रतिनिवर्त्तने । कृत्यासमुत्पत्तौ स्वात्मरक्षार्थमिति शेषः । इत्थमिति प्रोक्तविषयः । एतच्चक्रमास्थाय ग्रहचारादि प्रवर्त्तते आदिशब्दो राश्यादिविषयः । एतदुक्तं भवति ज्योतिश्चक्रं प्रत्येकतत्तद्रेक्काणात्मकद्वादशराशिमयं भवति तेन तत्तच्चक्राणि च प्रत्येकमारत्रयात्मकद्वादशराशिमयानि भवन्ति । तस्माद् यथा द्वादशराश्यात्मके ज्योतिश्चक्रे ग्रहचारादि काले काले प्रवर्त्तते तथा

तथा वाञ्छितसिद्ध्यर्थं तथा कृत्यानिवारणे ।
तथा कृत्यासमुत्पत्तावित्थं सर्व्वार्थसिद्धिदम् ॥ ५१ ॥
एतच्चक्रारमास्थाय ग्रहर्क्षादि प्रवर्त्तते ।
एतच्चक्रारविन्यासरूपा भूमिश्च दृश्यते ॥ ५२ ॥
तस्मादेतन्मयं सर्व्वमेतस्य भजनेन च ।
सर्व्वे मनोरथाः सिद्धा भजनं सम्प्रदायतः ॥ ५३ ॥
कालप्राप्तक्रमं पूर्व्वमावर्त्त्यान्यक्रमं भजेत् ।
कृष्णपक्षेषु शुक्लेषु केवलोक्तक्रमं भजेत् ॥ ५४ ॥
जपतर्पणहोमार्चास्नापनेष्वप्ययं क्रमः ।
अमुं ज्ञात्वा विधातव्यमन्यथानर्थमावहेत् । ॥ ५५ ॥

---

एतेषां ज्योतिश्चक्रमयत्वादेतेषु चक्रेष्वेकस्मिन्नेकस्मिन्नेव प्रत्यरं ग्रहनक्षत्रादीनि मातृकाक्षरमयानि तत्तद्युगवर्षभेदक्रमेण प्रवर्त्तत इति भूमिः। भूचक्रस्य द्वादशराश्यात्मकत्वात् प्राक् प्रतिपादितक्रमतस्तदपि तत्तच्चक्रात्मकं भवतीति यावत्। एतन्मयं मातृकाचक्रमयं सर्वं दृश्यं। एतस्य प्रोक्तचक्रान्यतमस्य भजनेनेति पूर्व्वमेवोक्तं। भजनं सम्प्रदायतः कर्त्तव्यमिति पुनरुक्तिदोषो न भवतीत्यर्थः॥ ५३॥

कालप्राप्तेत्यादिना आवहेदित्यन्तेन श्लोकद्वयेन तासां विद्यानां चन्द्रक्षयवृद्धि-कालभेदेन भजनविशेषं तदवश्यकर्त्तव्यतां तदकरणे प्रत्यवायञ्चोपदिशति। तत्र कालप्राप्तक्रमं प्रागुक्तसम्वत्सरचक्रदर्शितानुलोमानुलोमादिप्रकारभेदेषु तत्तत्सम्वत्सरप्राप्तप्रकारभेदक्रमं। अन्यक्रमं तत्तत्कर्मोक्तं केवलोक्तं क्रमं। तत्तत्कालप्राप्तक्रमवर्जतत्तत्कर्मानुगुणक्रमं। एतदुक्तं भवति कृष्णपक्षे काम्य-कर्म्मारम्भे नित्योपासनारम्भे च तत्तत्संवत्सरात्मकचक्रप्रदर्शितक्रमं पूर्व्वमावर्त्त्य पश्चात्तत्तत्कर्म्मोक्तक्रमं भजेत्। शुक्लपक्षे तु तत्तत्कर्म्मप्राप्तक्रममेव भजेदिति। अयं कृष्णपक्षशुक्लपक्षभेदः प्रदर्शितः। अमुं पक्षभेद-प्रदर्शितं क्रमं। विधातव्यं नित्यकर्म्म काम्यकर्म्म वेति शेषः। अन्यथा तत्प्रकाराकरणे॥ ५५॥

कृत्योत्पत्तौ शत्रुभङ्गे निग्रहे प्रतिलोमकम् ।
कालेन प्राप्तमन्यच्च सर्व्वत्र समुदीरितम् ॥ ५६ ॥
वशीकरणरक्षासु सम्पुटद्वितयं क्रमात् ।
रोगशत्रुजये प्रोक्ते परावृत्तक्रमेण वै ॥ ५७ ॥
गोभूहिरण्यवाहादिलाभेषु च समीरितः ।
उच्चाटनेषु व्याकीर्णं तेषु शान्त्यै क्रमं यजेत् ॥ ५८ ॥
एतद्विधाननिष्णातं प्रणमन्ति सुरासुराः ।
तस्मिन्नरिकृताः पीड़ाः कृत्याद्या नैव सम्मुखाः ॥ ५९ ॥
प्रत्युतैव परावृत्ताः कर्त्तारं नाशयन्ति वै ।
यत्रासौ निवसत्येष तत्त्वेवं तत्तपोवनम् ॥ ६० ॥

---

कृत्योत्पत्तावित्यादिभिर्यजेदित्यन्तैस्त्रिभिः श्लोकैः प्रतिलोमानुलोमजेषु कृत्योत्पत्तिशत्रुभङ्गादिरूपाणि फलानि तद्विधानप्रायश्चित्तञ्चोपदिशति । तत्र कालेन प्राप्तं प्रतिलोमाद्यमङ्गलयोग्यानि अनुलोमादिमङ्गलयोग्यानि च सर्व्वत्र सर्व्वकर्म्मसु वक्ष्यमाणेषु। एतदुक्तं भवति कृत्योत्पत्त्याद्यमङ्गलप्रद प्रतिलोमादिकक्रमभजनतो मङ्गलेषु कर्म्मसु क्रियमाणेषु तत्तत् कालप्राप्तक्रम इत्यवश्यकर्त्तव्यतया भजनात्तत्तदमङ्गलप्रदो न भवति । एवमनुलोमादिकमङ्गल फलप्रदक्रमभजनतः अमङ्गलकर्म्मसु क्रियमाणेषु कालप्राप्तक्रमभजनावश्यकर्त्तव्यतया भजनात्तत्तदमङ्गलफलविनाशको न भवति। संपुटद्वितयं स्वरव्यञ्जनयोर्वाह्याभ्यन्तरभेदतः। परावृत्तौ प्रागवद्भेदतः चकारः प्रागुक्तपरावृत्तक्रमद्वयसमुच्चयार्थः। समीरितः परावृत्तक्रमद्वितयक्रम इति शेषः। व्याकीर्णः प्रागवद्भेदतः। तेषु प्रोक्तेष्वमङ्गलेषु परप्रयुक्तेष्वपि क्रमं अनुलोमात्मकं नित्यभजनक्रमं एतेष्वनुलोमादिष्वष्टसु भेदेषु स्वरव्यञ्जनयोरेकप्रकारं अनुलोमानुलोमादिको भेदः। तत्तत्कर्म्मसु शीघ्रफलप्रदो निश्चितममोघश्च भवति। एतस्मिन् पटले उत्तरत्र सर्वव्याकीर्णत्यादिना व्याकीर्णव्याकीर्णचक्रस्यामोघत्वप्रतिपादनात् सम्प्रदायाच्च ॥ ५८ ॥

एतदित्यादिना तपोवनमित्यन्तेन श्लोकद्वयेन एतासु विद्यासु निष्णातस्य

श्मशाने पर्वते शून्ये विपिने क्षुद्रपीड़ने ।
प्रतिष्ठिते यन्त्रराजे तत् स्याज्जनपदं महत् ॥ ६१ ॥
सर्वव्याकीर्णचक्रेण स्थापितेनामरावती ।
उच्चाटिता पुनर्द्दैवि मयापि च न रक्ष्यते ॥ ६२ ॥
शिलायां ताम्रपट्टे वा राजते हैमनिर्म्मिते ।
विलिख्य भूमौ निखनेद् ग्रामराष्ट्रपुरादिषु ॥ ६३ ॥
कृत्वा देवालयं तत्र चक्रं संस्थाप्य तस्य वै ।
कर्णिकामध्यगे वेरं कुर्य्यात् सान्निध्यसिद्धये ॥ ६४ ॥

---

वैभवमुपदिशति । तत्र निष्णातं साधकं । तस्मिन् साधके । कर्त्तारं प्रयोक्तारं । असौ साधकः । एष इत्यस्य असावित्यत्रान्वयः । चैत्रं पुण्यक्षेत्रम् ॥ ६० ॥

श्मशाने इत्यादिना श्लोकेन श्मशानादिशून्यभूमिषु ग्रामनगरपत्तनादिकरणोपायमुपदिशति । तत्र क्षुद्रपीड़ने कालभस्मादिक्षुद्रोपद्रवभूयिष्ठे देशे यन्त्रराजे अनुलोमानुलोमाख्ये चक्रे, तस्य सर्व्वयन्त्रकारणत्वाद्यन्त्रराजत्वं । तदिति जनपदविशेषणम् । स देशो जनपदं भवतीत्यर्थः ॥ ६१ ॥

सर्वव्याकीर्णेत्यादिना श्लोकेनोच्चाटनचक्रवैभवमुपदिशति । तत्र सर्वव्याकीर्णचक्रेण स्वरव्यञ्जनाभ्यां वाह्याभ्यन्तरभेदजातानि चत्वारि चक्राणि सर्व्वशब्दविषयाणि । उच्चाटिता उन्मूलयितसकलदेवजातिः । मया ईश्वरेण अपिशब्देन किंपुनरल्पसामर्थ्यैरित्यर्थः ॥ ६२ ॥

शिलायामित्यादिभिः सिद्धिदायकमित्यन्तैः पञ्चभिः श्लोकैर्ग्रामादिषु रक्षार्थं तच्चक्रस्थापनविधानं तच्चक्रस्थापनेन सर्व्वदेवतासान्निध्यसिद्धगादिकञ्चोपदिशति । तत्र वा विकल्पे । विलिख्य अनुलोमानुलोमाख्यचक्रमिति शेषः । निखनेत् अस्मिन् पटले ग्रामादौत्यादिपञ्चषष्टितमश्लोकादिभिस्त्रिभिः श्लोकैर्वक्ष्यमाणप्रकारेण रक्षार्थमिति शेषः । पुरादिष्वित्यत्रादिशब्दो नगरखर्वटपत्तनादिविषयः । तत्र देवालये । चक्रं अनुलोमानुलोमात्मकं मातृकाचक्रमित्यर्थः । संस्थाप्य देवतास्थापनस्थाने एकस्मिन्नेव वक्ष्यमाणप्रकारेण तस्य चक्रस्य कर्णिकामध्यगे स्थान इति शेषः । वेरं अभीष्टदेवतायाः कुर्य्यात् प्रतिष्ठापयेदित्यर्थः । सान्निध्य-

ग्रामादिरचणे तत्र मध्ये चाष्टसु दिक्ष्वपि ।
खात्वावटं पुनस्तेषु पाषाणैर्घटितं दृढम् ॥ ६५ ॥
समावाह्याभिपूज्याथ स्थापयेन्मूलविद्यया ।
पाषाणेन तदाच्छाद्य पीठं कृत्वोपरि स्थिरम् ॥ ६६ ॥
नित्यशः पूजयेद् गन्धपुष्पधूपादिभिः समम् ।
त्रिसन्ध्यमेवं कुर्व्वीत नान्यथा सिद्धिदायकम् ॥ ६७ ॥

---

सिद्धये देवताया इति शेषः। एतदुक्तं भवति प्रोक्तेषु वास्तुष्वभोष्टदेशे अभीष्टदेवतालयं कृत्वा तत्र देवतास्थापनस्थानमध्ये एकमवटं खात्वा तं वक्ष्यमाणप्रकारेण शिलाभिरावध्य तत्र प्रोक्तमनुलोमानुलोमात्मकचक्रं शिलादिषूक्तेष्वधिकरणेषूत्कीर्णं प्राग्वत् कृतप्राणप्रतिष्ठादिकं संस्थाप्याभ्यर्च्य तत्पाषाणेनाच्छाद्य तत्र कर्णिकामध्यस्थानोपरि तत्तद्देवतावेरप्रतिष्ठापनात् तस्मिन् वेरे तत्तद्देवतासान्निध्यसिद्धिरिति। ग्रामादिरचणे पूर्व्वप्रस्तुते आदिशब्दः प्राग्वत्। तत्र तस्मिन् (तस्मिन्) मध्ये सर्व्वमध्ये अवटं गर्त्तम्। मध्ये च प्रतिदिशञ्चेति शेषः। तेषु अवटेषु घटितं तत्तदन्तस्थले इति शेषः। समावाह्य प्रोक्तचक्रकर्णिकामध्ये अभीष्टनित्यामिति शेषः। अभिपूज्य तन्नित्यार्चनक्रमेण तच्चक्रगतविद्याक्रमेण चेत्यर्थः। अन्तः शिलाघटितावटानामिति शेषः। स्थापयेत् प्रतिष्ठितं चक्रं मूलविद्यया अभीष्टनित्यायाः तत् अवटगतं चक्रं पीठं शिलादिभिर्घटितं धिष्ण्याकारं। उपरि आच्छादिततलोपरि। स्थिरं शिलादिभिर्घटितत्वात्। पूजयेत्तस्मिन् धिष्ण्ये चक्रसमावाहितां नित्यां। एवं उक्तप्रकारं गन्धादिभिः। अन्यथा प्रोक्तप्रक्रियाव्यतिरेकेण। एतदुक्तं भवति ग्रामपुरनगरखेटखर्व्वटपत्तनादिवास्तुरचणे तस्मिंस्तस्मिन् वास्तुप्रदेशे सर्व्वमध्येऽष्टसु दिक्ष्वपि एवं नवसु स्थानेसु नवावटान् खात्वा तेषामन्तःस्थलानि पाषाणैरावध्य प्रोक्ताधिकरणेष्वन्यतमे रूपे अधिकरणनवके उभयानुलोमात्मकं उभयसम्पुटं वा चक्रनवकमुत्कीर्य्य कृतप्राणप्रतिष्ठादिके तस्मिन् अभीष्टां नित्यामावाह्य तत्तन्नित्याक्रमेणाभ्यर्च्य तत्तत् चक्रभेदादिभिः कालनित्याभिश्चाभ्यर्च्य एवं दिनत्रयादहोनं सम्पूज्य तत्तच्चक्रनवकमेकमेकमेकस्मिन्नेकस्मिन्नवटे संस्थाप्यावटोपरि तच्छिलाभिराच्छाद्य तत्तलोपरि शिलादिभिर्दृढतराणि पीठरूपाणि नव

तत्कालोक्तानि कुण्डानि नव होमेषु सर्वतः ।
होतॄणां दक्षिणा वस्त्रभूषादासगोधनैः ॥ ६८ ॥
यद्यदिच्छेप्सितं तत्तद्दुष्करं सुकरन्तु वा ।
जपतर्पणहोमैर्व्वा सेकैः संसाधयेत् स्थिरः ॥ ६९ ॥
नैताभिः सदृशी कापि विद्या लोकेषु विद्यते ।
तस्मात्तदाभिरुपायैः साधयेत् सर्वमीप्सितम् ॥ ७० ॥
पञ्चाशद्वारमावर्त्त्य विद्याभक्तिसमन्वितः ।
मुच्यते निगडैः क्रूरैर्वैरिरोधैः सुदारुणैः ॥ ७१ ॥
शतवारं समावर्त्त्य विद्याविविधवैभवाः ।
लभन्ते तनयान् वन्ध्या अपि सर्वगुणान्वितान् ॥ ७२ ॥

---

धिष्ण्यानि कृत्वा तत्र तत्र धिष्ण्ये प्रतिदिनं प्रोक्तक्रमाच्चिसन्ध्यार्चनात् प्रोक्तग्रामादिरक्षासिद्धिः। एतत्समं चक्रान्तरं न विद्यत इति ॥ ६७ ॥

तत्कालेत्यादिना श्लोकेन प्रागुक्ते चक्रे व्याप्तिक्रमप्राप्तकालदर्शितनवविधकुण्डेषु होमविधानं होतृदक्षिणाञ्चोपदिशति। तत्र तत्कालोक्तानि कुण्डानि नव। तत्तत्संवत्सरोक्तानि वृत्तादीनि नव चक्राणि कुण्डाकाराणि कुर्य्यादित्यर्थः। सर्व्वतः नित्यनैमित्तिककाम्यकर्म्मसु। गोधनैर्गोभिर्धनैश्च। एतदुक्तं भवति पूर्णमण्डलसंख्येषु युगवत्सरेषु चतुःषष्टिवत्सरेषु प्रोक्तवृत्तादिषट्त्रिंशदस्रादिचक्रनवकाकाराणि नवकुण्डानि कुण्डपटलवक्ष्यमाणक्रमात् द्वितीयवृत्तादिवृत्तान्तराक्षरन्यासवर्जं कल्पयित्वा तत्तत्सम्वत्सरप्राप्ते कुण्डे सर्व्वकर्म्मसु होमं कारयित्वा होतृणामुक्तानि द्रव्याणि दक्षिणां दद्यादिति ॥ ६८ ॥

यद्यदित्यादिना ईप्सितमित्यन्तेन श्लोकद्वयेण ताभिरुक्ताभिर्विद्याभिः पञ्चविधोपासनेन समीहितसिद्धिं विद्यावैभवादिकञ्चोपदिशति। तत्र तत्तत् समीहितं दुष्करं अति महता यत्नेन साध्यमपि। तुरवधारणे। वा समुच्चये। स्थिरः फलत्येवेति निश्चितबुद्धिः। एताभिर्विद्याभिः। आभिः विद्याभिः। उपायैस्तैः प्रोक्त पञ्चविधसाधनैः ॥ ७१ ॥

पञ्चाशदित्यादिभिरवाप्नुयादित्यन्तैरध्यर्द्धैः सप्तभिः श्लोकैस्तासां विद्यानां

अध्यर्द्धशतवारन्तु विद्या आवर्त्त्य भक्तितः ।
गुणरूपादिसम्पन्नां भार्य्यां विन्दन्त्ययत्नतः ॥ ७३ ॥
तावदावर्त्त्य कन्या वा पतिं सर्व्वगुणान्वितम् ।
लभन्ते पुत्रपौत्राद्यैरेधन्ते सम्पदन्विताः ॥ ७४ ॥
द्विशतं ताः समावर्त्त्य दारिद्र्यान्मुच्यते ध्रुवम् ।
त्रिशतैर्भूमिशस्त्वाढ्यश्चतुर्भिस्तु शतैर्धनी ॥ ७५ ॥
पञ्चभिस्तु शतैर्भूपो भवेत् षड्भिः शतैर्नृपः ।
सप्तभिस्तु शतैरस्य न मुञ्चत्यन्वयं रमा ॥ ७६ ॥
अष्टभिस्तु शतैरासां नृपाः सर्व्वेऽस्य किङ्कराः ।
नवभिस्तु शतैरेष कन्दर्पो वनिताजने ॥ ७७ ॥
एवं नवशतं जप्त्वा सर्व्वान् कामानवाप्नुयात् ।
आसान्तु विद्यानित्यानामङ्गानि शृणु सुन्दरि ॥ ७८ ॥

---

पञ्चाशद्वारादिनवशतवारान्तमावृत्त्याधिक्येन फलाधिक्यमुपदिशति । तत्र विद्या इति पदच्छेदः । कृच्छ्रै र्व्यसनैः । विद्याः प्राग्वद्विविधवैभवाः फलवैविध्यात् । अध्यर्द्धं शतवारं पञ्चाशदुत्तरशतवारमित्यर्थः । गुणरूपादीत्यत्रादिशब्देनाभिजनादि प्रोच्यते । विन्दन्ति लभन्ते साधका इति शेषः । तावत् पञ्चाशदुत्तरं शतवारं । कन्या इति प्रथमाबहुवचनम् । वा समुच्चये । एधन्ते वर्द्धन्ते । सम्पदन्विता इत्येतत् कन्या इत्यस्य विशेषणं । ताः विद्याः । दारिद्र्यादकिञ्चनत्वादसन्तोषादित्यर्थः । त्रिशतैर्वारैः । चतुर्भिस्तु शतैश्चतुर्भिःशतैरित्यन्वयः । तुः समुच्चये प्राग्वत् शेषः । पञ्चभिस्तु शतैः प्राग्वदन्वयशेषावित्यर्थः । भूपः भूमीशः षट्शतैः प्राग्वत् शेषः । नृपः दासदासीभृत्यादिभिराढ्यः । तुः प्राग्वत् शेषश्च । अस्य साधकस्य । तुः प्राग्वत् शेषश्च । आसां विद्यानां । नृपाः प्रागुक्ताः । अस्य साधकस्य । एष साधकः । एवमित्यादिनैतदुक्तम्भवति नवशतवारावृत्त्यास्मिन् प्रकरणे उक्तान्यन्यानि दुर्लभान्यभीष्टानि सिध्यन्तीति ॥ ७८ ॥

द्विरुक्त्या तैः षड़ङ्गानि कुर्य्यादर्णैः कराङ्गयोः ।
विन्यस्य मातृकायुक्तां जपेद्विद्यान्तमेकशः ॥ ७९ ॥
रक्ता रक्ताम्बरा रक्तभूषणस्रग्विलेपनाः ।
पाशाङ्कुशेक्षुकोदण्डप्रसूनविशिखाः स्मरेत् ॥ ८० ॥
तदा वृत्तानां पद्मानां शक्तीस्तत्सदृशाः स्मरेत् ।
चतुरस्रद्वयं कृत्वा द्वारद्वयविभूषितम् ॥ ८१ ॥

---

आसामित्यादिना एकश इत्यन्तेनार्द्धाद्येनैकेन श्लोकेन प्रोक्तानां तासां सर्व्वासाञ्च विद्यानां प्रत्येकं भजने त्रिविधन्यासादिकमुपदिशति। तत्र सुन्दरीति देवीसम्बुद्धिः। द्विरुक्त्या द्विवारोच्चारणेन। तैः अर्णैः इत्यस्य विशेषणम्। मातृकायुक्तां कुलसुन्दरीपटलोक्तक्रमेण सषड़ङ्गमातृकां न्यसेदित्यर्थः। एकशः एकामेकां विद्यामित्यर्थः। एतदुक्तं भवति प्रोक्तानामासां कालनित्याविद्यानामन्यतमविद्याभजने कुलसुन्दरीपटलोक्तप्रकारेण पूर्वं सषड़ङ्गां मातृकां विन्यस्यानन्तरं तत्तद्विद्याक्षरत्रयेष्वाद्येनाक्षरेण हृदयं द्वितीयेनाक्षरेण शिरः। तृतीयेन शिखा। पुनरपि तत्तद्विद्याद्येनाक्षरेण कवचं। द्वितीयेनाक्षरेण नेत्रं। तृतीयेनास्त्रञ्च एतद्विद्याक्षरत्रयद्विरावृत्त्या जातियुक्तषड़ङ्गानि करन्यासपुरःसरं विन्यस्य तथा व्यापकं कृत्वा तां विद्यां जपेदिति। तन्मन्त्रा यथा—अं हृदयाय नमः। आं शिरसे स्वाहा। ईं शिखायै वषट्। अं कवचाय हुँ। आं नेत्रत्रयाय वौषट्। ईं अस्त्राय फट्। इति एवमन्यास्वपि विद्यासु योजयेत्। आसां विद्यानां समुदायभजने प्रागवत् मातृकां निजषड़ङ्गपुरःसरं विन्यस्य जपेदिति सम्प्रदायः। षोड़शनित्याविद्यास्वन्यतमविद्यया सह भजने तत्तन्नित्याविद्योक्तन्यासजातपुरःसरं जपेदिति च सम्प्रदायः ॥ ७९ ॥

रक्ता इत्यादिना स्मरेदित्यन्तेनाध्यर्द्धेन श्लोकेन तासां सर्व्वासां विद्यादेवतानां सावरणशक्तीनां ध्यानमुपदिशति। तत्र आयुधक्रमस्तूर्द्ध्वादिवामदक्षिणक्रमेण बोद्धव्यः। षोड़शनित्यात्मकललिताध्यानसमानरूपादिध्यानादासां तादात्म्यं सम्पादयतीति सम्प्रदायः! तत्सदृशा मूलदेवतासदृशाः वर्णादिभिरिति शेषः ॥ ८० ॥

अष्टपत्राम्बुजं मध्ये नवयोनौ च तां यजेत् ।
अङ्गावृत्तिं मध्ययोनावन्तरे त्वायुधावृतिम् ॥ ८२ ॥
पृष्ठतो गुरुपंक्तिञ्च कोणेष्वष्टसु च क्रमात् ।
बहिर्द्दलेष्वपि तथा यजेद्वर्णैर्विलोमतः ॥ ८३ ॥
रूपिणीशक्तिसहितैर्म्मायासप्ताक्षरीयुतैः ।
ब्राह्म्यादिशक्तीस्तद्वाह्ये चतुरस्रद्वये यजेत् ॥ ८४ ॥

---

चतुरस्रद्वयमित्यादिभिः स्मरन् धियेत्यन्तैरष्टाद्यैश्चतुर्भिः श्लोकैस्तासां देवतानां नित्यपूजाचक्रस्य सर्व्वसाधारणरेखारूपविन्यासरूपमनन्तरवक्ष्यमाणविशेषविभिन्ने तस्मिन् तस्मिन्नित्यपूजाचक्रे तत्तद्देवतापूजाक्रमविधानञ्चोपदिशति। तत्र चतुरस्रद्वयमन्तर्वहिर्विभागेन द्वारद्वयविभूषितम् पूर्व्वपश्चिमयोर्द्दिशोरिति शेषः। मध्ये अन्तर्गतचतुरस्रस्येति शेषः। नवयोनौ च चकारेण पूर्व्वगते मध्ये इतिशब्दमाकर्षयति। तेन तदष्टदलाम्बुजमध्यकर्णिकायां लिखितनवयोनौ। ताः तद्देवताः। मध्ययोनौ नवयोनिचक्रमध्यत्रिकोणमध्ये प्रागुक्तवाम्यादिक्रमेण। अन्तरे प्राग्वन्मध्ययोनेर्वहिरभितः। पृष्ठतः मध्यदेवतायाः। चकारः समुच्चये। क्रमाद्वक्ष्यमाणाक्षरलेखनक्रमात्। तथा वक्ष्यमाणप्रकारेण। विलोमतः अग्रायप्रादक्षिण्येन। रूपिणीशक्तिसहितैः रूपिणीशक्ति इति पञ्चाक्षरसहितैः माया हृल्लेखा सप्ताक्षरी प्राग्वत्। एतदुक्तं भवति हृल्लेखां प्रथममुच्चार्य्य ततस्तद्विद्यामध्याक्षरस्य षोड़शस्वरभिन्नेषु रूपेष्वेकमेकं यथाक्रममुच्चार्य्य तदनु रूपिणीशक्ति इति पञ्चाक्षराण्युच्चार्य्य ततः सप्ताक्षरीं योजयेत्। सर्वे मन्त्राश्चतुर्द्दशाक्षरात्मका भवन्तीति। मन्त्रा यथा—ह्रीं अरूपिणीशक्तिपादुकां पूजयामि ह्रीं आरूपिणीशक्तिपादुकां पूजयामीत्यादय इति। तथा प्राग्वत्। तन्मन्त्रा यथा—ह्रीं ब्रह्माणीपादुकां पूजयामीत्यादय इति। अत्र पूजाचक्रे सर्व्वसाधारणे रेखारूपविन्यासप्रकारो यथा—अन्तर्वहिर्विभागेन प्राग्वत् चतुरस्रद्वयमुत्पाद्य तन्मध्येऽष्टपत्रमम्बुजं कर्णिकायां नवयोनिं कुलसुन्दरीपटलोक्तप्रकारेण कृत्वा तत्रास्मिन् पटले अनन्तरश्लोकादिभिर्वक्ष्यमाणक्रमाद्वर्णान् विलिख्य तत्र ताः प्रत्येकं प्रोक्तक्रमादभ्यर्चयेदिति। वलिप्रदानञ्च करोतु पूजान्त इति शेषः। चकारेणास्मिंस्तन्त्रे सर्व्वसाधारणेन षोड़शाक्षरेण पूजादौ वलिं प्रदद्यादित्य-

आसां वलिप्रदानञ्च करोतु कुरुकुल्लया ।
सम्राज्ञ्यां केवलया प्रोक्तरूपां स्मरन् धिया ॥ ८५ ॥
विलिख्य नाम्ना विद्यान्तु मध्ये वाह्येऽष्टयुग्मके ।
तन्मध्यार्णं स्वरैर्भिन्नं लिखित्वाश्रिषु मायया ॥ ८६ ॥
हंसेलाग्रासमालिख्य निरृत्यादिविलोमतः ।
वातादार्णं हृदन्तं स्याद्द्वादश द्वादश क्रमात् ॥ ८७ ॥

---

मुमर्थं समुच्चयति । कुरुकुल्लया सम्राज्ञ्या आद्यया विद्यया । केवलया द्वितीयतृतीयवैधुर्य्येण । प्रोक्तरूपां तत्पटलध्यानोक्तरूपां । अत्रासां कालनित्यानां षोड़शनित्यासाधारणवलिद्वयविधानात् ताभिस्तादात्म्यं दर्शयतीत्याराध्यपादमुखादवगतोऽर्थः ॥ ८५ ॥

विलिख्येत्यादिभिः समुद्वसेदित्यन्तैस्त्रिभिः श्लोकैस्तासां विद्यानां पूर्वोक्तसाधारणरेखारूपे पूजाचक्रे पूर्व्वप्रस्तुतविशेषभूतेन विद्याक्षरन्यासेन रूपभेदं तत्तद्विनियोगं पूजापरिसमाप्तिञ्चोपदिशति । तत्र नाम्ना विद्यान्तु साध्यादित्रिकस्य सहेति शेषः । नित्यपूजाचक्रे विद्यां कालनित्यास्वन्यतमां । विद्यालेखनमेव नित्यपूजाचक्रे कर्त्तव्यमित्युक्तं भवति । मध्ये नवयोनिमध्यगतयोन्यां वाह्ये । अष्टयुग्मके सर्व्वमध्ययोन्या वहिर्भूताष्टकोणेषु तद्वहिर्भूताष्टदलेषु च । तन्मध्यार्णं तत्तन्मध्ययोनिगतविद्यामध्यमाक्षरं । स्वरैर्भिन्नं प्राग्वत् षोड़शस्वरविकृतं लिखित्वा अग्राद्यप्रादक्षिण्येन । अश्रिषु वृत्तचतुरस्रान्तरालगतास्त्रिषु मायया हंसेन ग्रासं हकारं लकारं चकारं क्षकारं स्वाञ्च । निरृत्यादिविलोमत इत्येतत् पूर्वापरयोः काकाक्षिन्यायेनान्वेति । तत्र पूर्व्वत्रान्वये निरृतिवह्नीशवायुकोणे यथाक्रमं हकारादि प्रोक्तं चतुष्टयं विलिखेदिति । परत्रान्वये वक्ष्यमाणान्यक्षराणि वक्ष्यमाणप्रकारेण चतुरस्रवीथ्यां निरृत्यादितदन्तविलोमतो लिखेदिति । वातादार्णं हृदन्तं स्यात् । वातादि अकारादि अर्णं अर्णा इत्यर्थः । हृदन्तं सकारान्तं स्यात् स्युरित्यर्थः । मातृकायां पूर्व्वलिखितहंसाद्यक्षरत्रयशिष्टानीति शेषः । तत्रार्णमिति नपुंसकोक्तिर्वचनव्यत्यासश्च दिव्यत्वात् । द्वादशद्वादशक्रमात् अकारादिसकारान्तान् वर्णान् अष्टचत्वारिंशतं चतुरस्रवीथ्यां प्रतिवीथिकं द्वादश द्वादश वर्णान् विलिखेदित्यर्थः । तैर्द्वितीयपटलोक्त-

साधयेदीप्सितं सर्व्वं षट्कर्म्मात्मकमीश्वरि।
स्तुत्वा द्वादशभिः श्लोकैस्तैः स्वान्ते ताः समुद्वसेत्॥ ८८॥
एतासां चक्रमध्यस्थो जपेद्विद्यां यदा वशी।
तदैव देवताचक्रसाम्यमस्य भविष्यति॥ ८९॥
महाचक्रस्य मध्यस्थं कृत्वा श्रीचक्रमुज्ज्वलम्।
तत्रैव देवीमावाह्य पूजयेत् सर्वसिद्धये॥ ९०॥

---

गणेशेत्यादिभिः। स्वान्ते हृदये। ताः मूलदेवताः परिवारदेवताश्च। एतदुक्तं भवति पूर्वोक्तसर्व्वसाधारणे रेखारूपे नित्यपूजाचक्रे नवयोनिमध्यस्थयोनिमध्ये कालनित्याविद्यास्वन्यतमामित्र नित्यपूजासु विलिख्य काम्यकर्म्मसु चैतां साध्यादित्रिकनामसंयुतां विलिख्य तद्विद्यामध्यमाचरस्य षोड़शस्वरविकृतानि रूपाणि तन्नवयोनिचक्राष्टकोणेष्वष्टदलेषु चाग्राद्यप्रादक्षिण्येन यथाक्रमं विलिख्य तद्वहिश्चतुरस्रद्वयान्तरालवीथ्यां परितो निर्ऋत्यादितदन्तःप्रादक्षिण्येन अकारादिसकारान्तान्यष्टचत्वारिंशदक्षराणि प्रतिदिशं द्वादशद्वादशक्रममालिख्य तदन्तः पञ्चवाह्यप्राकारचतुरस्रान्तरालानि निर्ऋत्यादीशान्तं हकारादिशेष वर्णत्रयं विलिख्य वायुकोणे हृल्लेखाञ्चालिख्य पूर्वोक्तप्रकारेणावाह्य ध्यात्वाभ्यर्च्य द्वादशश्लोक्या स्तुत्वा सपरिवारां तां स्वान्ते समुद्वसेत्। एवं काम्यकर्मस्वपुप्रासनेन तत्तत्फलसिद्धिः। तत्र विशेषो विद्यया सह मध्ये नामत्रयलेखनं तेन चण्डी मुनित्रेति पञ्चाक्षरवाक्यजनितसंख्यानि चक्राणि भवन्तीति॥ ८८॥

एतासामित्यादिना श्लोकेन प्रोक्तसंख्येषु कालनित्याचक्रेषु भजनविशेषेण फलविशेषमुपदिशति। तत्र विद्यां षोड़शनित्यानां कालनित्यानाञ्च। अस्य साधकस्य। एतदुक्तं भवति षोड़शनित्याविद्याभजने तत्तद्दिनप्राप्तनित्याभजने च तत्तद्दिनप्राप्तकालनित्याचक्रस्थो जपेत्। कालनित्याविद्यास्वन्यतमभजने तच्चक्रमध्यस्थ एव नित्यशः २०७३६ जपेत्। कालनित्याविद्यासमुदायभजने षोड़शनित्याभजने च तत्तत्सम्वत्सरकालप्राप्तान्यतमचक्रेऽनुलोमानुलोमेषु चक्रेषु सर्व्वकालचक्रकारणे वृत्ताकारानुलोमानुलोमचक्रे वा स्थित्वा जपेत्। तेन प्रोक्तफलसिद्धिरिति॥ ८९॥

एवं कृत्वा प्रतिष्ठाप्य विधानेनार्च्चयेद्यतः ।
तत्राज्ञासिद्धयो लोके प्रकाशन्ते महाद्भुताः ॥ ६१ ॥
तथा च कृत्वा तन्मध्ये लोहितां लोहिताम्बराम् ।
सुन्दरीं युवतीं तत्र संस्थाप्याभ्यर्च्चयेत् क्रमैः ॥ ६२ ॥
प्रत्यब्दमेवं कुर्वीत मीनस्थे भास्करे विधौ ।
पूर्णे तु दिवसे तेन देवी तुष्टेष्टदा भवेत् ॥ ६३ ॥

---

महाचक्रस्येत्यादिभिर्भवेदित्यन्तैश्चतुर्भिः श्लोकैः प्रागुक्तेषु महाचक्रमध्ये ललितार्च्चाचक्रं तत्र तत्पूजां तत्फलं तत्रैव कालविशेषे पूजाविशेषेण फलविशेषञ्चोपदिशति। तत्र महाचक्रस्य प्रागुक्तपूर्णमण्डलयुगवत्सरात्मकानाञ्चक्राणां प्रथमरूपस्य वृत्ताकारानुलोमानुलोमात्मकस्य तत्तत्संवसरप्राप्तस्य वा। श्रीचक्रं ललितार्च्चाचक्रम् त्रयस्त्रिंशे पटले वच्यमाणं। उज्ज्वलं सुव्यक्ताकारं तेन महाचक्रस्य कर्णिकाव्यासविकाशमुपपन्नमिति सम्प्रदायः। तत्र महाचक्रस्य मध्यस्थश्रीचक्रमध्ये। एतदुक्तं भवति प्रागुक्तचक्रेषु तत्तत्सम्वत्सरप्राप्तं वा केवलानुलोमानुलोमात्मकवृत्ताकारं चक्रं वा ललिताचक्रनिर्म्माणयोग्यकर्णिकाविकाशं कृत्वा तत्कर्णिकायां वच्यमाणलच्चणोपेतं ललितार्च्चनश्रीचक्रं विधाय तत्र देव्यर्चनात् सर्वाभीष्टसिद्धिरिति। एवम् उक्तरूपमध्यस्थश्रीचक्रं महाचक्रमित्यर्थः। कृत्वा रत्नत्रिलोहदृशत्स्वन्यतमेऽधिकरणे विधानेन द्वितीयपटलोक्तप्रक्रियया। अभ्यर्च्चयेत् सपरिवारां देवीमिति शेषः। यतः यत्र देशे इत्यर्थः। तत्र देशे आज्ञासिद्धयः चराचरस्य जगतो निदेशवर्त्तित्वं। तथा च कृत्वा पूर्ववत् महाचक्रस्य मध्यस्थं श्रीचक्रं कृत्वेत्यर्थः। तन्मध्ये महाचक्रस्थश्रीचक्रमध्ययोनिमध्ये। क्रमैः ललितानित्यार्चनक्रमैः। मीनस्थे भास्करे सौरे फाल्गुने मासि विधौ पूर्णे पौर्णमास्यामित्यर्थः। तुरवधारणे। तेन पूजनेन। देवी ललिता। एतदुक्तं भवति प्रोक्ते सौरफाल्गुनमासे पूर्णायां सिन्दूरादिविरचित प्रोक्तमहाचक्रमध्यस्थश्रीचक्रमध्ययोनिमध्ये प्रोक्तवर्णाम्बरविभूषणां सुन्दरीं युवतीं निवेश्य तस्यां परदेवतामावाह्य नित्यार्चनक्रमेण प्रतिवत्सरमर्चयेत् ततो ललिता देवी तुष्टाभीष्टप्रदा भवेदिति ॥ ६३ ॥

नखरं छुरिकां खड्गं चापशूलगदाशरान् ।
अन्यद्वा शस्त्रमखिलं महाचक्रस्य मध्यगम् ॥ ८४ ॥
कृत्वाभिपूज्य विद्याभिः साध्ययोनिवलिं पुरः ।
दत्त्वा तैः समरे शत्रून् हत्वा विजयमाप्नुयात् ॥ ८५ ॥
दिनतो वारतः पक्षान्मासात् षट्त्रिंशता दिनैः ।
जपन्तो वारमेकन्तु विद्या नित्यात्मिकास्तु ताः ॥ ८६ ॥

---

नखरमित्यादिना आप्नुयादित्यन्तेन श्लोकद्वयेन तन्महाचक्रमध्येष्वायुध पूजनात् समरविजयमुपदिशति । तत्र नखरं असि धेनुं अन्यत् कुन्तप्राशल-गुड़ादि । महाचक्रस्य श्रीचक्र विरचितेषु प्रोक्तसम्वत्सरात्मकेषु चक्रेषु तत्तत्-सम्वत्सरप्राप्तस्य परावृत्तपरावृत्तात्मकचतुष्टयस्य । कृत्वा मध्यगमिति पूर्व्व-श्लोकान्त्यपादेनान्वयः । विद्याभिः तच्चक्रक्रमप्राप्ताभिः कालनित्याभिरिति शेषः । साध्ययोनिं पूर्व्वत्र साध्यनक्षत्रप्रोक्तयोनिं । पुरः अग्रे समावाहितदेवतायाः । दत्त्वा प्राग्वत् छिनत्तीति शेषः । तैः देवतात्मभिः चक्रगास्त्रैः । एतदुक्तं भवति प्रोक्तेषु सम्वत्सरमातृकाचक्रेषु तत्तत्सम्वत्सरप्राप्ते वा जयप्रोक्तपरावृत्त-परावृत्तात्मकषट्त्रिंशच्चक्रेष्वन्यतमे केवलानुलोमानुलोमात्मकवृत्तरूपचक्रे वा । नखरादीनि सर्व्वाणि शस्त्राणि निवेश्य तेष्वभीष्टां नित्यामावाह्य तां सपरिवारां तत्तत्क्रमैरभ्यर्च्य तत्तच्चक्रप्राप्तक्रमरूपाः कालनित्याश्चाभ्यर्च्य साध्यशत्रुनक्षत्रप्रोक्त-योनिं प्रोक्तलक्षणां प्रोक्तप्रकारेण तच्छस्त्ररूपदेवताग्रे छिन्दन् प्रोक्तवलिमन्त्रेण वलिं निवेद्यैवं साध्यशत्रुवलगुरुलघुतापेक्षया सप्तदिनादर्व्वाचीनं कृत्वा तैस्तैर्देव-तात्मभिः युद्धे सर्व्वशत्रून् हत्वा विजयं प्राप्नोतीति । ८५ ॥

दिनत इत्यादिभिः कल्पत इत्यन्तैस्त्रिभिः श्लोकैः प्रागुक्तविद्याराशेरावृत्ति कालविशेषेण फलविशेषं ललिताया विद्याया आभिः सर्व्वविद्याभिः सत्सम्प्रदाय वस्त्वादिकञ्चोपदिशति । तत्र दिनतः वारमेकमित्यत्रान्वयः । प्रागुक्तविद्याः प्रतिदिनमेकवारं जपेदित्यर्थः । एवं वारपक्षमासषट्त्रिंशद्दिवसैः प्रत्येकमेकैकं वारमित्यर्थः । वारेत्त्वरावृत्तौ प्रथमं भास्करवारे वशिनीकामेश्वरीवर्गीया विद्याः । अन्येषु षट्सु प्रतिवारं मोदिन्यादिमातृकावर्गषट्कोत्थविद्याश्च

आयुरारोग्यमैश्वर्य्यं विजयं वाञ्छितं क्रमात् ।
लभन्ते ललिता याभिः सम्प्रदायवती भवेत् ॥ ९७ ॥
अन्यथासम्प्रदायत्वाज्जपहोमार्च्चनादिकम् ।
कृतं जन्मान्तरे सम्यक् सम्प्रदायाय कल्पते ॥ ९८ ॥
जपतर्पणहोमार्च्चाक्रमे विद्या भजेदिमाः ।
तेनाक्षराणां सिद्धत्वान्मन्त्राः सिध्यन्त्यशेषतः ॥ ९९ ॥

---

यथाक्रमं जपेत्। पक्षे त्वेकवारावृत्तौ पूर्णात्रयरूपासु पञ्चमीदशमीपञ्चदशीषु तिथिषु पंक्तिचतुष्टयचतुष्टयोत्थाः अन्यासु पंक्तिद्वयपंक्तिद्वयोत्था विद्या जपेदिति। पक्षद्वयरूपे मासे एकवारावृत्तौ पूर्वोक्तरूपासु पूर्णासु षट्सु द्वि द्वि पङ्क्त्युत्था विद्याः। अन्यासु चतुर्विंशतितिथिषु एकैकपङ्क्त्युत्थाश्च विद्या जपेदिति सम्प्रदायः। नित्यात्मिकाः अनुलोमानुलोमात्मिकाः। आयुरादि फलपञ्चकं पूर्वोक्तजपप्रकारपञ्चके एकैकस्य प्रकारस्य विषयः। क्रमात् कालाद्रौत्याविलम्बनक्रमात्। लभन्ते इत्यस्य पूर्वार्द्धेनान्वयः। ललिता आद्या नित्या याभिः कालनित्याविद्याभिः। सम्प्रदायवती युगपर्य्यायदिनघटिकारूप-पारम्पर्य्यभजनेनाविच्छिन्नत्वात्। आसां विद्यानां नवनाथरूपव्याप्त्या तत्तत्-पारम्पर्य्यभजनादविच्छिन्नरूपतया एतत् सर्वं सर्व्वनित्याविद्योपलक्षणम्। अन्यथा-सम्प्रदायत्वात् असम्प्रदायत्वादिति पदच्छेदः। अन्यथा आभिर्विधुरभजने असम्प्रदायत्वात् युगादिरूपव्याप्तरूपभजनासम्भवान्नाथव्याप्तरूपपारम्पर्य्य-भजनासम्भवाच्च। कृतम् असम्प्रदायेनेति शेषः। जन्मान्तरे कालान्तरे पुत्रपौत्रादिषु वा। एतदुक्तं भवति आभिर्विद्याभिः ललिताद्यानां षोड़शनित्या-विद्यानां पूर्वोक्तव्याप्तिरूपज्ञानेनोपास्यमानतया अविच्छिन्नत्वात् सत्सम्प्रदाया भवन्ति। प्रोक्तरूपभजनवैधुर्य्ये भजनस्य विच्छिन्नत्वादेतत् क्रमविधुरमक्षर-क्रमरहितं कृतभजनस्य साधकस्य कालान्तरे पुत्रपौत्रादिषु वा सत्सम्प्रदाया भवन्तीति ॥ ९८ ॥

जप इत्यादिना शिव इत्यन्तेन श्लोकद्वयेन तद्विद्याराशेरुपासनतः सकलमन्त्र सिद्धिमुपासितुर्वैभवं फलञ्चोपदिशति। तत्र तेन भजनेन कालनित्याविद्या-

तासामुपासितुर्लोके नास्ति साधनदुष्करम् ।
नृपाणामङ्गनानाञ्च वल्लभो जायते शिवः ॥ १०० ॥
पुरुषात्ममयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निभालनाच्चित्ते तत्तत्त्वं स्वात्मसात् कृतम् ॥

इति षोड़शनित्यातन्त्रे श्रीकादिमते मातृकाव्याप्तिर्नाम पञ्चविंशतिपटलम् ॥ २५ ॥

---

मिति शेषः। सिद्धत्वात् तादात्म्येन सिध्यन्ति भजनवैधुर्य्येणापि। अशेषतः सर्वे। आसां कालनित्याविद्यानां। उपासितुः साधकस्य। असाध्यं अशक्यं। दुष्करं कर्त्तुमशक्यं। शिवः परिपूर्णाहन्तात्मा ॥ १०० ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसार-सिंहराजप्रकाशाभिधानेन सुभगानन्दनाथेन विरचितायां मनोरमाख्यायां व्याख्यायां षोड़शनित्यामातृकाकाल-व्याप्तिप्रकाशनपरं पञ्चविंशपटलं परिपूर्णं परामृष्टम् ॥ २५ ॥

यन्त्रसंख्या—यन्त्राणि रम्यगमशार्थनामसूक्तिविधिस्थितेः ।
८४६७५०७१३१२ ।
रुद्रार्णवाक्यसंख्यानि विना श्रीचक्रयोगतः ॥
व्याख्याग्रन्थाः पञ्चशतनवत्या सप्तयुक्तया ।
सार्द्धमेवं समुद्दिष्टाः पटले पञ्चविंशके ॥

---

## षड्विंशपटलम् ।

अथ षोड़शनित्यानां विद्याव्याप्तिस्वरूपतः ।
मन्त्राणां वैभवं वक्ष्ये शृणु देवि यथाविधि ॥ १ ॥
नादोत्पत्तिश्च तद्रूपं स्थानाप्त्या तस्य वर्णताम् ।
ततः पदानि वाक्यानि मन्त्ररूपाणि कानिचित् ॥ २ ॥
तत्संख्यां विद्यया स्वात्मसंस्कारस्य क्रमं तथा ।
अमृतेश्वरिदेव्यास्तु वर्णैस्तैर्म्मिथुनैरपि ॥ ३ ॥

---

पूर्व्वस्मिन् पञ्चविंशे पटले षोड़शनित्यानां मातृकाकालव्याप्तिमुपदिश्यानन्तरं षोड़शनित्यानां व्याप्तिवैभवप्रकाशिकां मन्त्रव्याप्तिं तन्मयामृतेश्वरीविद्यादिकं चोपदिशत्यथ षोड़शेत्यादिना सचराचरमित्यन्तेन श्लोकशतरूपेण षड्विंशेन पटलेन। तत्र अथ षोड़शेत्यादिभिरशेषत इत्यन्तैश्चतुर्भिः श्लोकैः पटलार्थानुपदिशति। तत्र षोड़शनित्यानामित्यस्य द्विरन्वयो भवति। यथा विद्याव्याप्तिस्वरूपतः इत्यत्र वैभवमित्यत्र च। विद्याव्याप्तिस्वरूपतः मन्त्राणां सर्व्वमन्त्राणां आभिर्विद्याभिर्व्याप्तिस्वरूपत इत्यर्थः। वैभवं षोड़शनित्यानाम्। एतदुक्तं भवति षोड़शनित्यानां विद्याभिः सर्व्वमन्त्राणां व्याप्तिस्वरूपतः तासां नित्यानां व्याप्तिस्वरूपतो वैभवं वक्ष्ये इति। तत्र मन्त्रवैभवं नादोत्पत्तिं अत्रैव पटले वक्ष्यमाणां। तद्रूपं नादस्य पश्यन्त्यादिरूपं स्थानाप्त्या कण्ठादिस्थानयोगेन। तस्य नादस्य। ततः वर्णैरित्यर्थः। वाक्यानि पदैरिति शेषः। मन्त्ररूपाणि मन्त्राणां रूपाणि तानि तु वर्णैः पदैश्च वाक्यैश्च भवन्ति। कानिचित् तेषु वर्णजानि मन्त्ररूपाणि षट्सप्तत्युत्तरपञ्चशतकोटिः कानिचिदित्युक्तिर्वर्णादिजातानां मन्त्राणामसंख्यातत्वात् प्रोक्तसंख्याया एकदेशत्वात्। तत्संख्ययन्त्राणां तत्सम-कोटिसंख्याविद्यया स्वात्मसंस्कारस्य क्रमं स्वाभिलषितया विद्यया अभिषेकादिभि रात्मसंस्कारस्य क्रमममृतेश्वरिदेव्या अमृतेश्वरीदेव्या इत्यर्थः। क्रममित्यत्रान्वयः। वर्णैस्तैरमृतवर्णैः। मिथुनैः नित्यानित्यापटलप्रोक्तैः सार्द्धमिति

व्याप्तिं प्रयोगांस्तैः सम्यगभीष्टप्राप्तिहेतवे।
समुद्दिष्टक्रमेणैव सर्व्वमेतदशेषतः॥ ४॥
स्वात्मेच्छाशक्तिघातेन प्राणवायुस्वरूपतः।
मूलाधारे समुत्पन्नः पराख्यो नादसम्भवः॥ ५॥
स एव चोर्द्ध्वतां नीतः स्वाधिष्ठाने विजृम्भितः।
पश्यन्त्याख्यामवाप्नोति तथैवोर्द्ध्वं शनैः शनैः॥ ६॥

---

शेषः। व्याप्तिं नित्यानां। तैः प्रणवादिसर्व्वमन्त्रैः ५७६०००००० संख्यातैर्मन्त्रैः प्रयोगानित्यन्वयः॥ ४॥

स्वात्मेत्यादिना श्लोकेन नादोत्पत्तिमुपदिशति। तत्र स्वात्मेच्छाशक्तिघातेन आत्मनः पररूपस्य स्वेच्छाशक्त्या कालमय्या घातेन प्रेरणेन। प्राणवायुस्वरूपतः प्राणाख्यस्य षट्त्रिंशत्पटलवक्ष्यमाणवायोरेकाकारतः। मूलाधारे नित्यानित्यापटले प्रोक्तरूपे प्राणिनामिति शेषः। नादसम्भवः नादस्योत्पत्तिः प्रथमावस्थेत्यर्थः। नादरूपमाराध्यपादमुखादवगन्तव्यम्। एतदुक्तं भवति सर्व्वप्राणिनां नित्यानित्यापटलप्रोक्तरूपे मूलाधारे परायाश्चिन्मात्रायाः शक्तेः स्वेच्छारूपया कालशक्त्या प्रेरितप्राणवायुस्वरूपा परासंज्ञा नादविन्दुप्रथमावस्था सञ्जायत इति॥ ५॥

सएवेत्यादिभिः चकावधीत्यन्तैश्चतुर्भिःश्लोकैः प्रोक्तसंज्ञस्य नादस्य पश्यन्त्यादिवैखर्य्यन्तावशिष्टावस्थात्रयकथनपूर्व्वकमकारादिचकारान्तानामेकपञ्चाशद्वर्णानामुत्पत्तिस्थानान्युपदिशति। तत्र स परावस्थो नादः। तया इच्छाशक्त्या। स्वाधिष्ठाने मेढ्रमूले। तथैव यथा स्वेच्छाशक्त्या ऊर्द्ध्वं नीतो नादः स्वाधिष्ठाने जृम्भितः पश्यन्त्याख्यो भवति। अनाहते हृदयदेशे। वुद्धितत्त्वसमेतः तस्मिन् स्थाने वुद्धेरुपलब्धिः। तथा यथा अनाहते। तया प्राग्वच्छक्त्या। विशुद्धौ कण्ठदेशतः विशुद्धिसंज्ञे कण्ठदेशे इत्यर्थः। ततः वैखर्य्यवस्थानन्तरं। जिह्वामूलाग्रपृष्ठस्थः जिह्वामूलस्थो जिह्वाग्रस्थो जिह्वापृष्ठस्थश्चेत्यर्थः। जिह्वापृष्ठस्थस्तु लकाराक्षरो भवति। क्रमात् प्रोक्तात् कण्ठताल्वोश्च स्थित इति शेषः। कण्ठौष्ठात् व्यवलोपे पञ्चमो कण्ठौष्ठमात्रस्थित इत्यर्थः। दन्तौष्ठद्वयतः दन्तौष्ठद्वये स्थित इत्यर्थः।

अनाहते वह्नितत्त्वसमेतो मध्यमाभिधः ।
तथा तयोर्द्वनुन्नः स विशुद्धौ कण्ठदेशतः ॥ ७ ॥
वैखर्य्याख्यस्ततः शीर्षकण्ठताल्वोष्ठदन्ततः ।
जिह्वामूलाग्रपृष्ठस्थस्तथा नासाग्रतः क्रमात् ॥ ८ ॥
कण्ठताल्वोष्ठकण्ठौष्ठाद्दन्तौष्ठद्वयतस्तथा ।
समुत्पन्नान्यक्षराणि क्रमादादिक्षकावधि ॥ ९ ॥
आदिक्षान्तरतेत्येषामक्षरत्वमुदीरितम् ।
तेषु स्वराः स्वतन्त्राः स्युस्तैर्व्यंज्याद्व्यञ्जनं भवेत् ॥ १० ॥

---

एतदुक्तं भवति प्रोक्तस्थानेषु पराद्यवस्थाचतुष्टयात्मको नादः स्वेच्छावशाच्छीर्षादि प्रोक्तस्थानयुक्तोऽकारादिक्षकारावध्येकपञ्चाशदक्षरात्मा भवतीति ॥ ८ ॥

आदिक्षान्तेत्यादिभिस्तद्दिशा इत्यन्तैरध्यर्द्धैः षड्भिः श्लोकैरक्षरशब्दनिर्वचनपुरःसरं मातृकायाः स्वरव्यञ्जनात्मनावस्थानं तयोरन्योन्यसंश्लेषजनितरूपविशेषांस्तैः शब्दप्रपञ्चस्यानन्त्यादिकञ्चोपदिशति । तत्र आदिक्षान्तरता प्रागुक्तपरारूपा मातृका । एषामक्षराणां । तेषु अक्षरेषु । स्वतन्त्रा व्यञ्जनवैधुर्य्येणाप्यक्षरस्वरूपनिष्पत्तेः । तैः स्वरैः । व्यज्यात् अक्षरत्वपूर्त्तेः प्रकाश्यमानत्वात् । तद्रूपाणि मातृकापटलोक्तपूर्णमण्डलाक्षररूपाणि । तुरवधारणे । संख्यया उत्तरत्रान्वयः । तैः उक्तसंख्यैरक्षरैस्तैः पदैः मन्त्राश्च वर्णपदवाक्यैरिति शेषः । वेदभाषान्यभेदतः अन्यशब्द आर्षादिविषयः अस्य वाचका इत्यत्रान्वयः । व्याकरणादीनां नियमादियुताः । अत्र प्रथमादिशब्दो निरुक्तादिविषयः । द्वितीयादिशब्दो व्याकरणाद्यनियतसंज्ञाशब्दकूटमन्त्रादिविषयः । तेषामक्षराणामेकयुग्मतः त्रिभिः एकेन जाता भेदाः पूर्णमण्डलसंख्या एव ५७६ द्वाभ्यां जाता भेदा एतानेव पूर्णमण्डलसंख्यया संगुणय्य तस्थौ साका वाला इति ३३१७७६ षड़क्षरवाक्यजनितसंख्या भवतीति । त्रिभिरक्षरैर्जाता भेदा एतानेव पूर्णमण्डलसंख्यया संगुणय्य तस्थौ धीरो नित्याकलङ्क इति १९११०२९७६ नवाक्षरवाक्यजनितसंख्या भवन्तीति । एवमुत्तरत्रापि तत्तद्भेदान् पूर्णमण्डलसंख्यया संगुणय्य एवं पूर्णमण्डलसंख्यावधि संगुणनादनन्ता भेदा भवन्ति । तद्रूपाणां

षोड़शानां स्वराणाञ्च षट्त्रिंशद्व्यञ्जनैः क्रमात् ।
संयोगेनैव जायन्ते तद्रूपाणि तु संख्यया ॥ ११ ॥
षट्सप्ततियुतं पञ्चशतं तैः स्युः पदानि वै ।
तैर्व्वाक्यानि च मन्त्राश्च वेदभाषान्यभेदतः ॥ १२ ॥
वाचका विश्वरूपस्य प्रपञ्चस्यात्मनस्तथा ।
शब्दव्याकरणादीनां नियमादियुतास्तथा ॥ १३ ॥
तेषामन्योन्यसम्भेदजातानामेकयुग्मतः ।
त्रिभिरित्यादिरूपाणां संख्या कर्त्तुं न शक्यते ॥ १४ ॥
अनन्तत्वादचिन्त्यत्वात्तद्रूपाणां न कीर्त्तनम् ।
एवं शब्दस्य माहात्म्यं वक्तुं कस्यापि नास्ति हि ॥ १५ ॥
शक्तिस्तथापि ते किञ्चिद्वदामि शृणु तद्दिशा ।
ललिताचक्रनवके प्रत्येकं शक्तयः प्रिये ॥ १६ ॥
चतुःषष्टिमिताः कोट्यस्ताः सम्भूय पुरोदिताः ।
कोट्यः स्युस्तत्क्रमात्तासां विद्या वक्ष्यामि ताः क्रमात् ॥१७॥

---

प्रागुक्तप्रकारयोगवर्णयोगजनितसिद्धयोगिनीमन्त्रशब्दादिरूपाणां । शक्तिः सामर्थ्यं अस्य पूर्वश्लोकेनान्वयः । दिशा उपायेन ॥ १५ ॥

ललितेत्यादिना क्रमादित्यन्तेनार्द्धाद्येन श्लोकेन ललिताचक्रस्य देवतावृन्द-संख्यां तासां तत्संख्या विद्या उपदेष्टुं प्रस्तौति। तत्र ललिताचक्रनवके वक्ष्यमाणरूपस्य श्रीचक्रस्य त्रैलोक्यमोहनचक्रादिसर्वानन्दमयचक्रान्तचतुरस्रादि सर्व्वमध्यान्तचक्रनवके । प्रत्येकं प्रतिचक्रं । शक्तयः गुप्तसंज्ञाः । ता गुप्तसंज्ञाः शक्तयः पुरोदिताः कोट्यः स्युः षट्सप्ततिकोट्यधिकपञ्चशतकोट्यः ( ५७६००००००० )। तत्क्रमाच्चक्रनवकक्रमात् । तासां उक्तकोटिसंख्यानां शक्तीनां । क्रमात् यथा-क्रमम् ॥ १७ ॥

षट्सप्तत्या पञ्चशतं प्रथमान्यक्षराणि वै ।
द्वितीयानि च तान्येव क्रमेण स्युरथादितः ॥ १८ ॥
तृतीयानि च तान्येव योजयेदादितः क्रमात् ।
क्षान्तैः षट्त्रिंशदर्णैस्तैः समायैरुक्तसंख्यकाः ॥ १९ ॥

---

षट्सप्तत्येत्यादिभिस्त्रिचतुरर्णका इत्यन्तैस्त्रिभिः श्लोकैस्त्रिचतुरक्षरा विद्या उपदिश्य ताश्चैकाकाराभिर्विद्याभिर्विना षट्सप्ततिकोट्यधिकपञ्चशतकोटिसंख्याता विद्या उपदिशति । तत्र षट्सप्तत्या पञ्चशतं प्रथमान्यक्षराणि वै । एतदुक्तं भवति अ आ इत्यादि क्षं क्षः इत्यन्तानि षट्सप्तत्यधिकपञ्चशतान्यक्षराणि वक्ष्यमाणक्रमाज्जनितसंख्याविद्यानां प्रत्येकमाद्यक्षराणि भवन्तीति । द्वितीयानि च तान्येव क्रमेण स्युरथादितः । एतदुक्तं भवति तान्येव षट्सप्तत्यधिकपञ्चशत संख्यान्यक्षराणि वक्ष्यमाणसंख्यानां गुप्तयोगिनीविद्यानां प्रत्येकं द्वितीयाक्षराणि भवन्तीति । तृतीयानि च तान्येव तान्येव प्रोक्तसंख्यान्यक्षराणि प्रत्येकं वक्ष्यमाणसंख्यानां तासां विद्यातृतीयाक्षराणि भवन्तीति । योजयेदादितः क्रमात् क्षान्तैः षट्त्रिंशदर्णैः । एतदुक्तं भवति अकारादिक्षकारान्तैः षट्त्रिंशताक्षरैः प्रोक्तसंख्यानि द्वितीयाक्षराणि तेषामादितो योजयेदिति । तैः समायैरुक्तसंख्यका विद्या भवन्ति । एतदुक्तं भवति प्रोक्तप्रकारोद्धृतैस्तैर्विद्यारूपैरन्ते विसर्जनीयसहितैः प्रोक्तकोटिसंख्या एकाकारवर्णा विद्या भवन्तीति । शिष्टाः स्युरेकाकारास्तु तैः । एतदुक्तं भवति प्रोक्तप्रकारप्रोद्धृतासु विद्यासु शिष्टा विद्यास्तैरक्षरैरेकाकारा भवन्तीति । विना ताभिरेकाकाराभिर्विनेत्यर्थः । तत्कोटिसंख्याकाः प्रोक्तकोटिसंख्यास्त्रिचतुरर्णकाः चतुरक्षररूपास्त्रैपुरा भवन्तीत्यर्थः । तासु मध्यस्थाभ्यां मध्यस्थाभ्यामक्षराभ्यां एकमेकं कूटं परिकल्पयेत् । आसां प्रागुक्तगुप्तयोगिनीविद्यानां अत्र मन्त्रप्रोद्धारप्रकारः । अकारादीनां पूर्णमण्डलाक्षराणामिव प्रथमद्वितीयतृतीयाक्षरात्मनावस्थितत्वात्तेषु प्रथमाक्षरत्वेन स्थितानामक्षराणामेकैकस्य कोटिकोटिसंख्याविद्यानामाद्यक्षरत्वं भवति । तत्तत्कोटिषु तृतीयाक्षरत्वेनावस्थितानामक्षराणां प्रत्येकं विसर्जनीययोजनात्तेषु सविसर्जनीयानि तानि षट्त्रिंशदक्षराणि सर्व्वासां विद्यानां विसर्जनीयान्तत्वविधानात् चतुर्णां विन्द्वन्तानि षटत्रिंशदक्षराणि विसर्गान्तानि षट्त्रिंश-

विद्या भवन्ति शिष्टाः स्युरेकाकारास्तु तैर्विना ।
ताभिस्तत्कोटिसंख्याका विद्यास्त्रिचतुरर्णकाः ॥ २० ॥

दक्षराणि च षण्डाक्षराणां विसर्जनीयोजनात् रेफे लकारान्तर्भूतत्वात् पुनरुक्ततया तानि चत्वारि च सम्भूय षट्सप्ततिसंख्यान्यक्षराख्येकत्वावशिष्टानि पञ्चशतान्य क्षराणि एकैकं विंशतिविंशतिसहस्रसंख्यातानां विद्याक्षराणां तृतीयाक्षराणि भवन्ति। तेषु द्वितीयाक्षरत्वेन स्थितानां तेषामक्षराणामन्ते एकैकस्य षट्त्रिंश-त्तत्त्वाक्षरसंयोजनविधानात् षट्त्रिंशदधिकसप्तशतोत्तरविंशतिसहस्रसंख्यानि भेद-रूपाणि भवन्ति। तेषूक्तसंख्येषु रूपेषु तत्त्वाक्षरयोगे कर्त्तव्ये तेषां स्वरयोगेन विनातिसिद्धरूपमन्त्रकरणरूपान्तरासम्भवात् तत्तत्स्वरयोग इति। तानि षट्सप्तत्यधिकपञ्चशतरूपाणि पुनः प्रतिवर्गषण्डाक्षरेषु पूर्व्वद्वये रेफयोगेन अपरद्वये लकारयोगेनापि समानरूपत्वात् तच्चतुष्टयाक्षरजनितानि चतुश्चत्वा-रिंशदधिकशतरूपाणि। किञ्च चकारवर्गस्य चकारेण योगकर्त्तव्यतया तानि षोड़शरूपाणि च सम्भूय प्रतिविंशति सहस्राणि रूपाणि भवन्ति। * षट्त्रिंशदधिकसप्तशतसंख्यानि रूपाणि परित्यज्य शिष्टानि विंशतिसहस्राणि रूपाणि भवन्ति। तानि विंशतिसहस्ररूपाणि तृतीया-क्षरत्वेन स्थितैः प्रागुक्तप्रकारपञ्चशतसंख्यैरक्षरैः संगुणनात् कोटिसंख्यानि विद्यारूपाणि प्रथमाक्षरत्वेन स्थितैः षट्सप्तत्युत्तरपञ्चशतैरक्षरैः संगुणनात् पूर्णमण्डलकोटिसंख्यानि भिन्नाकाराणि चतुरक्षररूपत्रैपुरात्मकानि विद्या-रूपाणि भवन्तीति। अत्र एकाकारत्वेन त्यक्तव्यानां विद्यानां संख्या तद्गुणित-प्रकारश्च लिख्यते। यथा मध्यस्थाक्षरजनितभेदेषु रूपेषु पूर्वोक्तप्रकारेणैका-कारत्वेन परित्यक्तरूपाणि षट्त्रिंशदधिकसप्तशतानि तृतीयाक्षरत्वेन प्रोक्त-पूर्णमण्डलसंख्याक्षरसंगुणनात् तुङ्गधीगुरुर्वः इति ४२३९३६ षड़क्षरवाक्य-जनितसंख्यानि रूपाणि। मध्यस्थानि भिन्नाकाराणि विंशतिसहस्राणि रूपाणि तृतीयाक्षरैश्चैकाकारेण परित्यक्तैः षट्सप्तत्यक्षरसंख्यैः संगु-णनात् नानाज्ञानाश्रमोयम् इति १५२०००० सप्ताक्षरवाक्यजनितसंख्यानि रूपाणि च सम्भूय तुङ्गधीगर्भधन्य इति १९४३९३६ सप्ताक्षरवाक्यजनितसंख्यानि रूपाणि भवन्ति। तेषां रूपाणां प्रथमाक्षरत्वेन स्थितपूर्णमण्डलसंख्या-

* तानि विंशतिविंशतिसहस्ररूपाणि तृतीयाक्षरत्वेन स्थितैः प्रागुक्तप्रकारपञ्चशतसहस्रमित्यधिकः।

तासामपि तु सर्व्वासां ध्यानार्च्चायन्त्रपूजनैः ।
पुरुषार्थास्तु सिध्यन्ति तदुक्तं मातृकायुधैः ॥ २१ ॥
संस्कारान् शृणु देवेशि गुरुणा शिष्यरक्षणे ।
समानत्वेऽपि देहादेर्व्यापारे गुरुशिष्ययोः ॥ २२ ॥
पूज्यपूजकभावत्वकारणैः प्रत्ययं तथा ।
प्रत्यक्षं यैस्तु दृष्टान्तैराशु ते दर्शयाम्यहम् ॥ २३ ॥

---

क्षरसंगुणनात् चण्डिकापूर्व्वत्र तस्थौ धीरो नित्याकलङ्क इति वाक्यजनितसंख्यां तत्त्वाक्षरैः संगुणय्य तुङ्गः पथ्यः साधुः सदोक्षे इति ६८७८७०७१३६ दशाक्षरवाक्यजनितसंख्यासु विद्यासु एकाकारविद्यात्यागात् प्रोक्तास‌ंख्या भवन्तीति। चण्डिका सनाथाईकायोयमिति १११८७०७१३६ दशाक्षर-वाक्यजनित स‌ंख्यानि रूपाणि एकाकारत्वेन त्यक्तव्यानि भवन्तीति। अत्र भेद-विद्यास्वरूपं किञ्चित् प्रदर्श्यतेऽस्माभिः। यथा—स्वरतत्त्व योगपरित्यागात् प्रथम-विद्यापञ्चविंशत्कस्य अअकअः अअखअः इत्यादीनि अअक्षअः इत्यन्तानि तद्द्वितीयपञ्चविंशतिकविद्यारूपाणि अआकअः अआखअः अआगअः इत्यादीनि अआक्षअः इत्यन्तानि भवन्तीति ॥ २० ॥

तासामपीत्यादिना श्लोकेनासामुक्तसंख्याविशिष्टानां विद्यानां तद्देवतानां च ध्यानं सावरणं पूजनं प्रत्येकं यन्त्रादिप्रयोगांश्च प्रागुक्तानेवातिदिशति। तत्र तासां विद्यानाञ्च तद्देवतानाञ्च ध्यानार्च्चायन्त्रपूजनैः ध्यानेनार्च्चया यन्त्रैश्च तत्पूजनेन च। तत्र यन्त्राणि तत्तद्विद्यायां तत्त्वाक्षरैः स्वरभिन्नैः। तत्र ध्यानादि मातृकापटले। एतदुक्तं भवति प्रोक्तसंख्यानां विद्यानामेकैकस्या विद्याया भजने आसां चतुरक्षरविद्यानां मध्याक्षरमध्याक्षरद्वयमेकाक्षररूपं परिकल्प्य प्राग्वत् द्विरुक्त्या षड्ङ्गानि च विन्यस्य तत्तत् पूजायन्त्रनिर्म्माणे मातृका-पटले कालनित्याप्रोक्तानि चतुरस्रद्वयाष्टपत्राम्भुजनवयोनिरूपाणि चक्राणि विधाय तत्तन्नवयोनिमध्ययोनिमध्ये तत्तद्विद्यां प्राग्वत् ससाध्यां विन्यस्यतद्बहिः-कोणाष्टके तद्बहिर्दलाष्टके मध्याक्षरोपेततत्त्वाक्षरस्य स्वरभिन्नानि प्राग्वद्विन्यस्य शेषं प्राग्वत् कृत्वा तन्मध्ये प्राग्वदावाह्य प्राग्वत् ध्यात्वा प्राग्वत् समभ्यर्च्य प्राग्वत् वलिद्वयं दत्त्वा प्रागुक्तान् प्रयोगांश्च कृत्वा प्रागुक्तानि फलान्याप्नोतीति ॥ २१ ॥

संस्कारो मन्त्रयन्त्रार्चाभिषेकाद्यैस्तनोर्यदि ।
सा जरारोगमरणक्लेशैर्न स्पृश्यतेऽन्यथा ॥ २४ ॥
प्राणस्य वै तदारभ्य नित्यता स्यात्तु देहिनाम् ।
आत्मनश्चेदरूपस्य संस्कारो नैव युज्यते ॥ २५ ॥
इन्द्रियाणां यदि भवेत्तदा प्राणसमानता ।
वुद्धेश्चेदात्मना साम्यात् कस्य स्याद् गुरुवीक्षणम् ॥ २६ ॥
इत्यादिसंशयैः खिन्नचित्तानां क्षीणपाप्मनाम् ।
सेकेक्षणोपदेशैस्तु गुरुणा क्रियते तु यत् ॥ २७ ॥

---

संस्कारानित्यादिभिर्वीक्षणमित्यन्तैः पञ्चभिः श्लोकैः देशिकेन शिष्यस्य क्रियमाणं मन्त्रसंस्कारं तत्तत् कर्म्मादि प्रस्तावपुरःसरमाक्षिपति। तत्र संस्कारान् अभिषेककटाक्षोपदेशान् अस्मिन् पटले वर्णान्तरवक्ष्यमाणान्। गुरुणा शिष्यस्य रक्षणे शिष्यानुग्रहे गुरुणा क्रियमाणान्। संस्कारानित्यत्रान्वयः। देहादेर्व्यापारे आदिशब्दः प्राणेन्द्रियवुद्ध्यादिविषयः। व्यापारः षडूर्म्मिरूपवुभुक्षापिपासाशोकमोहजरामरणानि वृद्धिक्रमेण प्राणवुद्धिदेहधर्म्मादिरूपे तस्मिन् पूज्यपूजकभावत्वकारणैः दृष्टान्तैरित्यत्रान्वयः। प्रत्ययं विश्वासं। एतदुक्तं भवति गुरुशिष्ययोर्देहेन्द्रियप्राणवुद्ध्यादिधर्म्मस्य समानत्वेऽपि गुरोः प्रणामादिभिः पूज्यत्वे शिष्यस्य तैः पूजकत्वे चोपपत्तिकारणभूतैः निदर्शनैः प्रत्यक्षं प्रत्ययमुत्पत्तिनिश्चयं दर्शयामि इत्युपदिशतीति। संस्कारः वस्तुनः कस्यचित् स्वाभाविकासद्गुणापनयनेन क्रियाविशेषेण सद्गुणविशेषाधिक्यकरणः। तेन शिष्यसंस्कारो दुर्वासनापनयनेन परमार्थज्ञानप्रतिष्ठा। मन्त्रयन्त्रार्चाभिषेकाद्यैः। आद्यशब्दः कटाक्षोपदेशादिविषयः। तनोः शरीरस्य शिष्यस्येति शेषः। सा शिष्यतनुः। अन्यथा स्पृश्यत एवेत्यर्थः। प्राणस्य शिष्यस्येति शेषः। चेत् संस्कार इत्याकृष्यते। नित्यता स्यात्तु देहिनां कृतसंस्काराणामिति शेषः। आत्मनः जीवरूपस्य। प्राणसमानता नित्यता आत्मना साम्यात् अरूपत्वसाम्यात्। कस्य प्रोक्तव्यतिरेकेण ॥ २६ ॥

इतीत्यादिभिर्भवेदित्यन्तैर्नवभिः श्लोकैः स्वयमाक्षिप्तं अर्थं सनिदर्शनं समा-

तदहं सुस्फुटं सम्यग्वक्ष्ये गुह्यतरं परम् ।
यदवाप्य त्यजत्याशु संशयाख्यं महामलम् ॥ २८ ॥
देहेन्द्रियमनःप्राणसाक्षिणस्त्वात्मनः प्रिये ।
संस्कारः क्रियते सम्यग् गुरुणा तत्त्ववेदिना ॥ २९ ॥
सेकेन देहे यत्किञ्चिदशुभं तन्निरस्यते ।
वीक्षणादात्मनो बुद्धेरयथार्थनिकृन्तनम् ॥ ३० ॥
उपदेशेन या तस्य चिरारूढा तु वासना ।
दुस्तरां तां धिया स्वात्मविमर्शेन विनाशयेत् ॥ ३१ ॥

---

धत्ते । तत्र इत्यादिसंशयैः आदिशब्दस्त्रैगुण्यादिजपपूजादिफलभोक्तृत्वविषयः । क्षीणपाप्मनां प्रोक्तप्रकारेण संशयेन देहेन्द्रियबुद्ध्यात्मादिविवेकस्य परमार्थलाभपर्यन्तत्वात् । तेषां वक्ष्ये इत्यन्वयः । यद्विशेषापादनः । यदवाप्य यद्विशेषापादनं ज्ञात्वा महामलं स्वात्मविनाशकत्वात् । देहेन्द्रियमनःप्राणसाक्षिणः आत्मनः देहेन्द्रियमनःप्राणेषूपाधिरूपेषु उपलभ्यमानस्यानादिवासनया तदौपाधिकानां गुणानां स्वगुणेन जाग्रत्स्वप्नसुषुप्त्यवस्थासु सुखदुःखरूपाणां अनुसन्धानावस्थायां जीवाख्यस्य चितः संस्कारो वक्ष्यमाणरूपः । तत्त्ववेदिना तत्त्वयोरुपाध्यात्मनोः परमार्थविदा सेकेन प्रोक्तविधानेनाभिषेकेण देहे उपाधिभूते । अशुभं रोगादिपीडा । वीक्षणात् ज्वालामालिनीपटलवेधोक्तक्रमात् गुरोरिति शेषः । आत्मनो बुद्धेः स्वबुद्धेरित्यर्थः । अयथार्थनिकृन्तनं अतस्मिंस्तद्बुद्धिविनाशनं । उपदेशेन श्रीविद्यादीनां विद्यानां तदर्थानाञ्च वासनापटलवक्ष्यमाणेन त्रैगुण्यानामिति शेषः । तस्य शिष्यस्य । चिरारूढा जन्मतः प्रभृति मनोलग्ना । वासना परिचयः । दुस्तरां तां दुस्त्यजां वासनामित्यर्थः । धिया बुद्ध्या स्वात्मविमर्शेन गुरूपदिष्टेन रूपेण पराहन्तारूपपरामर्शेन । एवं कृते प्रोक्तरूपसंस्कारकरणे । बुद्धिवृत्तेः संसाराज्ञानरूपिता विनाशः संसाराज्ञानस्वभावाया बुद्धिवृत्तेर्मायाद्यपोहेन संसाराज्ञानाभावरूपो विनाशो भवतीत्यर्थः । स्वरूपालम्भः स्वरूपस्याग्राह्यत्वात् प्रवृत्तिहान्या तन्मयता विश्रान्तिः । उभे उभावित्यर्थः । भवत उभे इति पूर्वेणान्वयः । एतदुक्तं

एवं कृते बुद्धिवृत्तेः संसाराज्ञानरूपिता ।
विनाशो नित्यशुद्धात्मस्वरूपालम्भ इत्युभे ॥ ३२ ॥
भवतस्तत्र दृष्टान्तं प्रत्यक्षं पश्य पार्वति ।
शस्यानां वीजरूपस्य वह्निस्पर्शात् प्ररोहिता ॥ ३३ ॥
न भवत्येव तत्रास्य शक्तिरेव तु दह्यते ।
तथास्याज्ञानजन्मादि कारणं यत्तथैव तत् ॥ ३४ ॥

---

भवति देहेन्द्रियमनःप्राणसंघातात्मकोपाधिषूपलब्धरा जलचन्द्रवत्तत्तदौपाधिकान्यगुणानस्वगुणत्वेनानुभवविमोहितस्य जीवात्मनश्चिद्रूपस्य तत्वविदा गुरुणा गुणसंस्कारकरणं नाम प्रोक्तरूपेणाभिषेकेण प्राक्तनजन्मादिप्राप्तौपाधिकाशुभनिराकरणं तत्कटाक्षेण बुद्धेः स्वभावप्रवृत्तिरूपान्यथाज्ञाननाशमुपदेशेन पुनः पुनरुपदिष्टप्रकारस्वात्मविमर्शेन च सुचिरारूढदुर्वासनाविनाशनञ्च भवेत्। एवं कृते स्वभावतो वहिर्विषयप्रवृत्ताया बुद्धिवृत्तेस्तद्विषयवृत्त्यभावरूपो विनाशः। तेनास्याः प्रत्यङ्मुखप्रवृत्तौ स्वरूपस्य विषयभूतत्वात्तस्मिन्नेव तादात्म्येन विश्रान्तिरूपो विनाशश्च इत्युभौ भवत इति। तत्र प्रतिपादितरूपतो गुरुकृतसंस्कारादिभिर्बुद्धेर्दुर्वासनाविनाशे स्वानुभवसिद्धौ च तत्र प्ररोहणाभावे अस्य वीजरूपस्य शक्तिः प्ररोहणशक्तिः न वीजरूपमित्यर्थः। तथास्याज्ञानजन्मादि अत्रादिशब्दो जरामरणादिविषयः। अन्यथाज्ञानसंसिद्धजन्मजरामरणादि। यथा वह्निस्पर्शात् शस्यानां वीजरूपस्याप्ररोहिता तथा शिष्यस्याज्ञानजन्मादि न भवतीत्यर्थः। कारणं यत्तथैवतत् यथा वह्निस्पर्शाद्वीजरूपे पूर्व्वस्थितेऽपि तत्प्ररोहस्य कारणभूता शक्तिर्दह्यते तथा अज्ञानजन्मादीनां दुर्वासनारूपं कारणं यत्तदपि दह्यत इत्यर्थः। किञ्च संस्कारादिना स्वात्मप्रकाशकारणं निदर्शनान्तरात् दृश्यत इत्यर्थः। तत्प्ररोहः कार्पासवीजप्ररोहः। पुष्पादि आदिशब्दः फलमूलादिविषयः। तथा लाक्षारागारुणवर्णं भवतीत्यर्थः। एतदुक्तं भवति यथा शस्यानां वीजस्य वह्निस्पर्शमात्रेण तत्प्ररोहकारणभूतशक्तिविनाशात् कार्य्यरूपः प्ररोहश्च न भवति तथा तस्य शिष्यस्य संसारादिप्रवृत्तिजन्मभूतस्य मनसो गुरुकृतसंस्कारात्तस्य मनसः संसृतिप्रवृत्तिवीजकारणभूतदुर्वासनानाशात्तत्कार्य्यभूतसंसृत्यादिप्रवृत्तिरपि च न भवति। यथा च कार्पास

किञ्च कार्पासबीजानि लाक्षया रञ्जितानि तु ।
दृश्यते तत्प्ररोहश्च पुष्पादि च तथा भवेत् ॥ ३५ ॥
रहस्यं परमं सर्व्वसिद्धिचिन्तामणिस्थिरम् ।
सुसाध्यं सद्गुरुप्राप्तमघानां सङ्गवर्ज्जितम् ॥ ३६ ॥
पुरश्चरणहोमार्च्चातर्पणस्तुतियन्त्रकैः ।
रहितं ते वदाम्यद्य मन्त्रविद्यास्त्वनन्तकाः ॥ ३७ ॥
ताः शृणु त्वं महेशानि सर्व्वाभीष्टाप्तयेऽनिशम् ।
साधकानाञ्च सिद्धानां नेतरेषां कथञ्चन ॥ ३८ ॥
वेदभाषेतरात्मत्वविभेदानामशेषतः ।
सदासनां साध्वसाधुचिन्ताविरहितं सदा ॥ ३९ ॥

---

बीजस्य लाक्षया कृतसंस्कारस्य प्ररोहपुष्पादि तत् लाक्षारागरूपवत् दृश्यते तथा तस्य शिष्यस्य मनसो गुरुकृतसंस्कारादिना संस्कृतस्य प्रवृत्तिर्गुरूक्तिरूप स्वानुभूतिस्वरूपिणी भवतीति ॥ ३५ ॥

रहस्यमित्यादिभिः सदा इत्यन्तैरष्टाभिः श्लोकैः सकलाक्षरपदवाक्यादीनां मन्त्रस्वरूपत्वमुपदिशति। अत्र परममित्यादीनां रहितमित्यन्तानां षण्णां द्वितीयान्तानां पदानां रहस्यमित्येतद्विशेष्यं वदामीत्यत्रान्वयः। मन्त्रविद्यास्त्वनन्तकाः मन्त्राश्च विद्याश्च प्रागुक्तप्रकारेणैकद्वयादियोगादनन्ता विद्यन्ते इत्यर्थः। ता मन्त्रविद्याः। साधकानाञ्च सिद्धानां इत्यस्याभीष्टाप्तये इत्यत्रान्वयः। नेतरेषां न साध्यानामित्यर्थः। कथञ्चन केनापि प्रकारेण तेषां तत्त्वज्ञानाभावात्। इतरात्मकत्वमार्षात्मकत्वं। सदासनां साध्वसाधुचिन्ताविरहितं सदा शब्दानां साधुत्वासाधुत्वयोः सांकल्पिकत्वात्। त्वदात्मकं शक्तिरूपमित्यर्थः। समुदयं नादस्य प्रागुक्तपरापश्यन्त्यादिस्वरूपाणां। विश्रान्तिः पूर्व्वोक्तानामेव। मदात्मकं शिवरूपम्। उभयात्मकम् उदयविश्रान्तिरूपशिवशक्त्यात्मकम्। आत्मस्वरूपं प्रागुक्तमहमितिरूपं। तैरक्षरैः सहेति शेषः। कालेन क्रमेण अन्यत्वदुःखार्त्तिवासनानाशतः भेदात्मकदुःखोत्पन्नार्त्तिवासनाविलयनात् पराहन्तामयं परिपूर्णाहन्तात्मकम्। सर्वस्वरूपस्वात्मविग्रहं सर्वपदार्थस्वरूपाणि

त्वदात्मकं समुदयं विश्रान्तिश्च मदात्मकम् ।
उभयात्मकमात्मस्वरूपं नादस्य तस्य तैः ॥ ४० ॥
कालेनान्यत्वदुःखार्त्तिवासनानाशतो ध्रुवम् ।
पराहन्तामयं सर्वस्वरूपस्वात्मविग्रहम् ॥ ४१ ॥
सदात्मकं स्फुरत्ताख्यमशेषोपाधिवर्जितम् ।
प्रकाशरूपमात्मत्वे वस्तु तद्भासते परम् ॥ ४२ ॥
यत एवमतो लोके नास्त्यमन्त्रं यदक्षरम् ।
वति मन्दि न्वीधेहिस दासतः वं सथावस ॥ ४३ ॥
षडष्टद्वादशार्णानां वैष्णवानामशेषतः ।
मन्त्राणां परतत्त्वार्थवाचकत्वादभेदता ॥ ४४ ॥

---

निजं रूपं विग्रहं यस्य तत्। इदंरूपाणि सकलवस्तूनि रहस्यनादरूपस्य तादात्म्येन सह भवन्तीत्यर्थः। सदात्मकं सद्भावरूपं स्फुरत्ताख्यं स्फुरणाख्यं चिदाख्यमित्यर्थः। अशेषोपाधिवर्जितं औपाधिकसर्वविकाररहितं प्रकाशरूपं पदार्थानां प्रत्येकं तादात्म्यत्वेनेति शेषः। आत्मत्वे स्वरूपत्वे वस्तु यदिति शेषः। तद्भासते परं तत् परं भवतीत्यर्थः। यतएवं एवं भवतीति यस्मादित्यर्थः। अतः अस्मात् अमन्त्रम् मन्त्रान्यभूतं यत् अक्षरं। एतदुक्तं भवति अक्षरपदवाक्यादिरूपाणां सर्वेषां मन्त्राणां उदयविश्रान्तिरूपशक्तिशिवपरमार्थरूपत्वादक्षराणामुदयविश्रान्तिपरत्वादुभयात्मकस्य चिद्रूपपरमार्थस्य स्वात्मनस्तैर्मन्त्रैरपृथग्भावेन भावनावैशद्येन क्रमेण प्रोक्तरूपपराहन्तात्मकपरवस्तुस्वरूपत्वात् सर्व्वे वर्णा मन्त्रा भवन्तीति ॥ ४३ ॥

षडित्यादिभिराप्नुयुरित्यन्तैः पञ्चभिः श्लोकैर्वैष्णवशैववैदिकमन्त्रैः प्रधानभूतैरेकादशभिर्ललिताविद्यया व्याप्तिमुपदिशति। तत्र षडष्टद्वादशार्णानां षडक्षरस्याष्टाक्षरस्य द्वादशाक्षरस्य च वैष्णवानाम् उक्तत्रयाणां मन्त्राणामित्यन्वयः। अशेषतः पदपदार्थरूपेणापि। परतत्त्वार्थवाचकत्वात् परस्वरूपवाचकत्वात्। अभेदता व्याप्तिः ललिताविद्यया अभेदतेत्यत्रान्वयः। एतदुक्तं भवति षडक्षरमन्त्रेण ॐ नमो विष्णवे इतिरूपेण स्ववाच्यदेवतारूपस्य व्याप्त्यर्थं विष्णुस्वरूप-

ललिताविद्यया तद्वत् प्रासादस्य त्रयात्मनः ।
तथैव च परायाश्च गायत्र्याश्चोक्तरूपतः ॥ ४५ ॥
व्याहृतीनां महावाक्यपरमात्माजपात्मनाम् ।
प्रणवस्य च तद्रूपयोगात् स्यात्तत्तदात्मता ॥ ४६ ॥

---

प्रतिपादनात्। अष्टाक्षरेण व्याप्तिं स्ववाच्यदेवतारूपस्य नारायणस्य नरसमुदायवाचकनारशब्दप्रतिपादितसकलविश्वस्यायतनत्वात् स्थानत्वात् अस्या देवताया नारवाच्यविश्वान्तर्यामित्वेन स्थितत्वप्रतिपादनाच्च। द्वादशाक्षरमन्त्रेण स्ववाच्यदेवतारूपस्य भगवतो वासुदेवस्य सर्व्वशक्तिकारणत्ववाचकभगवच्छब्देन सर्व्वपदार्थेषु तादात्म्यनिवासवाचकवासुदेवशब्देन विभुत्वप्रतिपादनात् एवञ्च परस्वरूपवाचकत्वादेतेषां परस्वरूपपरमार्थया ललिताविद्यया व्याप्तिरिति। तद्वत् परतत्त्वार्थवाचकत्वात् प्रासादस्य शैवतन्त्रमूलभूतस्य मन्त्रस्य त्रयात्मनः त्रयात्मकत्वादित्यर्थः। त्रयात्मकत्वं नाम ज्ञातृज्ञानज्ञेयात्मकत्वं। तस्य मन्त्रस्य ज्ञातृरूपो विन्दुः ज्ञानरूपश्चतुर्द्दशस्वरः ज्ञेयरूपो हकारः। एतदुक्तं भवति प्रासादमन्त्रेण स्ववाच्यदेवताया ज्ञातृज्ञानज्ञेयरूपाविकल्पपरमार्थस्वरूपत्वकथनात्तस्य ललिताविद्यया व्याप्तिर्भवतीति। तथैव पररूपवाचकत्वादित्यर्थः। परायाः कुलसुन्दरीविद्यातार्त्तीयवीजरूपायाः तस्याः परमार्थवाचकत्वं पूर्वोक्तत्रैविध्यात्। एतदुक्तं भवति श्रीपराविद्यया प्रोक्तरूपया स्ववाच्यदेवताया ज्ञातृज्ञानज्ञेयात्मभिः विसर्ज्जनीयचतुर्द्दशस्वरसकारैरपृथग्भूतानुत्तरपरमार्थस्वरूपकथनेन ललिताविद्यया व्याप्तिरिति। गायत्र्याः सावित्र्याः उक्तरूपवत्। वैष्णवमन्त्रत्रये अशेषत इति शब्देन प्रोक्तपदपदार्थरूपेणापीत्यर्थः। एतदुक्तं भवति अनया गायत्र्या स्ववाच्यदेवतायाः सकलप्रपञ्चसवितृत्वं स्फुरत्तामात्रप्रवृत्तिरूपत्वं समस्तभेदज्ञानापोहनक्षमशक्तित्वं विश्वात्मत्वं चोच्यत इति। व्याहृतीनां गायत्र्याः पादत्रयस्य कारणभूतानां तिसृणां। एतदुक्तं भवति ताभिः स्ववाच्यदेवतायाः सन्मात्रत्वं सकलप्रपञ्चकारणत्वं तत्कारणाभेदश्चोच्यत इति। महावाक्यपरमात्माजपात्मनां महावाक्यस्य परमात्ममन्त्रस्याजपामन्त्रस्य च। एतदुक्तं भवति महावाक्येन स्ववाच्यदेवतायाः सद्रूपपरमार्थत्वपृथग्वस्त्वभावरूपपरमार्थस्वरूपमजपामन्त्रे परमात्ममन्त्रेण स्ववाच्यदेवतायाः सकलप्रपञ्च-

विन्दुभ्यां तां तथा मायामुभयोरैक्यविग्रहम् ।
हंसरूपां प्राणशक्तिं तद्वैलोम्यसमुद्भवम् ॥ ४७ ॥
प्रणवञ्च विजानाति योऽसौ नित्याविदीरितः ।
इतरे भक्तिमन्तश्चेत् कालात्तज्ज्ञानमाप्नुयुः ॥ ४८ ॥
अभक्तिभजनं लोके नित्यानां क्लेशदायकम् ।
भक्तिभेदे च कथय ययाप्नोत्यखिलं ध्रुवम् ॥ ४९ ॥
देवतामन्त्रयन्त्राणां ध्यानादीनामशेषतः ।
यदन्वयात् फलावाप्तिर्यद्वियोगे श्रमो वृथा ॥ ५० ॥

---

कारणभूतेन चिद्रूपेण परमात्मना तत्तत्कार्य्यभूतप्रपञ्चात्मिकायाः स्वेच्छाशक्तेरपृथग्भूतरूपपरमार्थस्वरूपमजपामन्त्रेण स्ववाच्यदेवतायाः प्रोक्तरूपस्वेच्छाशक्त्युल्लासरूपप्रपञ्चात्मना पररूपस्य भासनं परमार्थरूपं चोच्यत इति । प्रणवस्य अनन्तरश्लोकवक्ष्यमाणरूपस्य । तद्रूपयोगात् पररूपतादात्म्यार्थसम्बन्धात् तत्तदात्मता ललिताविद्यया इति शेषः । एतदुक्तं भवति वैष्णवशैववैदिकेषु मन्त्रेषु मूलभूतानामेतेषामेकादशानां मन्त्राणां सकलकारणभूतस्य चिन्मात्रस्वरूपस्य स्वेच्छाशक्त्युल्लासविजृम्भितेन प्रपञ्चेन तादात्म्येन तादात्म्यप्रतिपादनात् ललितायाश्च तदर्थप्रतिपादकं भवतीत्यर्थः । तद्वैलोम्यसमुद्भवं प्रणवं तदात्मकयोर्बिन्दुविसर्जनीयमुक्तयोर्हकारसकारयोर्वैलोम्यकृतसन्धिसमुद्भवं प्रणवं । एतदुक्तं भवति शिवशक्तिसामरस्यविग्रहपरमार्थायाः श्रीमहात्रिपुरसुन्दरीनित्यायाः परमार्थस्वरूपकामकलायां शिवरूपस्य विन्दोः शक्तिरूपस्य विसर्जनीयस्य चानुलोम्ययोगे परमार्थजपात्मिकां प्राणशक्तिं तद्वैलोम्ययोगात् प्रणवञ्च विजानानस्तत्त्वतो नित्याविद्भवतीति । इतरे एतत्सामरस्यविज्ञानरहिताः । भक्तिमन्तः नित्यासु । कालात् क्रमेण । तज्ज्ञानं सामरस्यज्ञानम् । एतदुक्तं भवति एतत्सामरस्यरूपज्ञानमन्तरेणापि तासां नित्यानां केवलं सुदृढ़या भक्त्या भजनेन क्रमेण तद्भक्तिभजनं तत्सामरस्यरूपपरमार्थज्ञानं ददातीति ॥ ४८ ॥

अभक्तीत्यादिभिर्दुःखिनः इत्यन्तैः पञ्चभिः श्लोकैः भक्तिप्रशंसां भक्तिस्वरूपमभक्तिभजनप्रत्यवायञ्चोपदिशति । तत्र अभक्तिभजनं नित्यानामित्यत्रान्वयः ।

तां भक्तिं तव वक्ष्यामि रहस्यामद्भुताद्भुताम्।
सम्यक् फलमयीं सिद्धिमलभ्यामल्पपुण्यतः॥ ५१॥
उक्तलक्षणसम्पन्ने गुरौ तत्प्रोक्तयोस्तथा।
विद्यानुष्ठानयोः स्थैर्य्यं धियः संशयनाशतः॥ ५२॥
तारकत्वाप्रमत्तत्वे भक्तिरुक्ताखिलार्थदा।
यया विहीना नियतमिहामुत्र च दुःखिनः॥ ५३॥
सर्व्वक्लेशापदम्भोधिपोतरूपां महाद्युतिम्।
आधिव्याधिमहादावप्रावृषञ्चामृतेश्वरीम्॥ ५४॥
शृणु वक्ष्ये समस्तानां प्राणिनां जीवविग्रहाम्।
षड्विधां जपहोमार्च्चातर्पणध्यानयन्त्रकैः॥ ५५॥
दावाम्बुखैर्भवेदाद्या त्वन्या हृद्वंसमायया।
ज्याकं दाहवनस्थैः स्यात्तृतीया सामृतेश्वरी॥ ५६॥

---

क्लेशदायकं साधकस्येति शेषः। यया भक्त्या। अखिलमिष्टफलं यदन्वयात् भक्तियोगेन। यद्वियोगे भक्तिराहित्ये। श्रमः अभ्यासः। पूर्वोक्तदेवतामन्त्रादीनां समग्रक् फलमयीं सिद्धिं सर्व्वफलसिद्धिकारणत्वात्। उक्तलक्षणसम्पन्ने प्रथम पटलोक्तसुन्दरः सुमुख इत्यादि लक्षणसम्पूर्णे। तत्प्रोक्तयोः सद्गुरुप्रोक्तयोः धियः संशयनाशत इत्येतत् काकाक्षिवत् पूर्व्वापरयोरन्वेति। अखिलार्थदा स्वरूपसिद्धिदा। यया विहीना जना इति शेषः॥ ५३॥

सर्व्वक्लेशेत्यादिना यन्त्रकैरित्यन्तेन श्लोकद्वयेनामृतेश्वरीविद्यास्तवनपुरःसरं प्रस्तौति। तत्र सर्व्वक्लेशापदम्भोधिपोतरूपां सर्व्वक्लेशापदां भौतिकदिव्यादीनां पीड़ानां समुद्ररूपाणां पोतरूपां तारिकामित्यर्थः। महाद्युतिं निरतिशय वैभवाम् अमृतेश्वरीं विद्यामिति शेषः। जीवानां प्राणिनां प्राणविग्रहां अमृतमयत्वात्। जपहोमार्च्चातर्पणध्यानयन्त्रकैः सहेति शेषः॥ ५५॥

दावेत्यादिना श्लोकेनामृतेश्वरीविद्यामुपदिशति। तत्र दावाम्बुखैर्भवेदाद्या ठकारवकारविन्दुभिराद्या विद्येत्यर्थः। अन्या द्वितीया विद्येति शेषः।

**वासनोक्तप्रकारेण षड्विधा सा समीरिता ।**
**अङ्गानि तासामाद्याया दीर्घस्वरनियोजनात् ॥ ५७ ॥**
**कृत्वा कराङ्गयोः पश्चात्त्त्रयं षोड़शस्वरैः ।**
**संयोज्यामृतसंस्थानान्न्यसेदन्यत्तु तद्गतम् ॥ ५८ ॥**

---

हृद्वंसमायया सकारहकारहल्लेखाभिर्द्वितीया विद्येत्यर्थः। ज्याकं दाहवन-स्वैः स्यात्तृतीया जकारहकाररेफओकारविन्दुभिस्तृतीया विद्येत्यर्थः। एतेषां वीजानां त्रयाणामेकैकस्य विद्यात्वं त्रियते। सामृतेश्वरी पूर्व्वप्रस्तुतामृतेश्वरी विद्या इत्यमुक्तेत्यर्थः ॥ ५६ ॥

वासनेत्यादिभिः चीणकल्मष इत्यन्तैः षड्भिः श्लोकैरस्याः षड्विधरूपभेदांस्तदङ्गानि शरीरे अमृतकलाः शरीरेषु तन्न्यासविधानक्रमञ्चोपदिशति। तत्र वासनोक्तप्रकारेण वासनापटलवच्यमाणसर्व्वविद्यारूपभेदोक्तप्रकारेण षड्-विधा सा सामृतेश्वरी विद्या षड्रूपभेदा भवन्तीत्यर्थः। तद्रूपाणि यथा तत्र प्रथमं रूपं प्रोद्धारक्रमं द्वितीयं रूपन्तु प्रथमतृतीयद्वितीय-कूटयोजनक्रमेण भवति। तृतीयरूपन्तु द्वितीयतृतीयप्रथमकूटयोजनक्रमेण भवति। चतुर्थरूपन्तु द्वितीयप्रथमतृतीयकूटयोजनक्रमेण भवति। पञ्चम रूपन्तु तृतीयप्रथमद्वितीयकूटयोजनक्रमेण भवति। षष्ठरूपन्तु तृतीयद्वितीय-प्रथमकूटयोजनक्रमेण भवति। प्रथमरूपस्य प्रतिलोमरूपं भवतीति। तासां षण्णां विद्यानां आद्यायाः तत्तद्भेदेषु प्रथमप्रथमकूटरूपायाः दीर्घस्वर-योजनं प्राग्वत् कराङ्गयोः प्राग्वत्। एतदुक्तं भवति अमृतेश्वरीविद्यारूप-भेदेषु षट्सु प्रथमद्वितीयरूपयोर्द्वयोः प्रथमकूटस्यैवाद्यत्वात् तस्मिन् दीर्घस्वर-योजनात् ह्रां ह्रीं इत्यादिभिर्जातियुक्तै रूपैस्तद्रूपभेदद्वयभजने कराङ्ग-न्यासादिकं कुर्य्यात्। तेषु तृतीयचतुर्थयोर्द्वितीयकूटस्यैवाद्यत्वात् तस्मिन् दीर्घस्वरयोजनात् स्ह्रां स्ह्रीं इत्यादिभिर्जातियुक्तै रूपैस्तद्रूपभेदद्वयभजने षड़ङ्गन्यासादिकं कुर्य्यात्। तेषु पञ्चमषष्ठयोस्तृतीयकूटस्यैवाद्यत्वात् तस्मिन् दीर्घस्वरयोजनात् ज्फ्रां ज्फ्रीं इत्यादिभिर्जातियुक्तै रूपैस्तद्रूपभेदद्वयभजने षड़ङ्गन्यासादिकं कुर्य्यादिति। तत्त्रयं कूटत्रयं षोड़षस्वरैः संयोज्य प्रतिकूटमिति शेषः। अमृतसंस्थानात् अनन्तरवच्यमाणक्रमादमृतकलास्थितस्थानसारभ्ये

अङ्गुष्ठपृष्ठतत्सन्धिलिङ्गनाभिषु हृत्स्तने ।
गलनासाक्षिकर्णभ्रू शङ्खमूर्द्धसु वै क्रमात् ॥ ५९ ॥
दक्षवामसमारम्भात् पुंस्त्रियोरप्ययं क्रमः ।
शुक्ले पूर्णान्तमितरे मूर्द्धादिप्रतिलोमतः ॥ ६० ॥
भागद्वयस्य व्यत्यासाद्दर्शान्तेऽङ्गुष्ठगा क्रमात् ।
नित्यशो मृतगस्थानसमारम्भावसानकम् ॥ ६१ ॥

---

त्यर्थः । अन्यत् विसर्जनीयस्वरसंयुक्तस्वरूपं तद्गतं न्यासस्थानारम्भभूतामृतस्थाने न्यसेदित्यर्थः । एतदुक्तं भवति अमृतेश्वरीविद्यायाः प्रथमद्वितीयतृतीयकूटानां प्रतिकूटं षोड़शस्वरयोजनादेकैकस्य कूटस्य षोड़शरूपाणि भवन्ति । तानि षोड़शरूपाणि वक्ष्यमाणक्रमामृतस्थानमारभ्य वक्ष्यमाणामृतकला गत्या पञ्चदशरूपाणि विन्यस्य षोड़शं रूपं पुनरप्यमृतस्थाने न्यसेदिति । पृष्ठे प्रपदे । तत्सन्धिः गुल्फजानुसन्ध्योः शङ्खे भालपार्श्वास्थिनि । दक्षवामसमारम्भात् पुंस्त्रियोरप्ययं क्रमः । शुक्ले पूर्णान्तं । एतदुक्तं भवति शुक्लपक्षे पूर्वदक्षिण पादाङ्गुष्ठमारभ्य मूर्द्धान्तं तत्तत्पार्श्वस्थेषु पञ्चदशसु प्रोक्तेषु स्थानेषु तत्प्रथमादि -पूर्णान्तं पञ्चदशसु तिथिषु प्रतितिथि यथाक्रममारोहक्रमादमृतकलायाः स्थिति र्भवतीति । स्त्रियास्तु वामपादाङ्गुष्ठमारभ्य मूर्द्धान्तं तत्पार्श्वस्थेषु प्रोक्तेषु पञ्चदशसु स्थानेषु तत्प्रथमादिपूर्णान्तं पञ्चदशसु तिथिषु प्रतितिथि यथाक्रम मारोहक्रमादमृतकलायाः स्थितिर्भवतीति । एवं पुंस्त्रियोः शुक्लपक्षे समारम्भ-पार्श्वक्रमव्यत्यासेऽपि स्थानक्रमव्यत्यासो न भवतीति । इतरे कृष्णपक्षे मूर्द्धादि अङ्गुष्ठान्तं प्रतिलोमतः अवरोहणक्रमेणेत्यर्थः । भागद्वयस्य व्यत्यासात् पुंस्त्रियोरिति शेषः । अङ्गुष्ठगा अमृतकलेति शेषः । एतदुक्तं भवति कृष्णपक्षे पुंसो वामपार्श्वमूर्द्धादिवामाङ्गुष्ठान्तं प्रोक्तेषु पञ्चदशसु स्थानेषु पूर्णान्तप्रतिपद-मारभ्य दर्शान्तं पञ्चदशसु तिथिषु प्रतितिथि यथाक्रममवरोहक्रमेणामृतकला-स्थितिर्भवतीति । स्त्रियास्तु दक्षिणपार्श्वमूर्द्धादि दक्षिणाङ्गुष्ठान्तं प्रोक्तेषु पञ्चदशसु स्थानेषु पूर्णान्तप्रतिपदमारभ्य दर्शान्तं पञ्चदशसु तिथिषु प्रतितिथि यथाक्रम-मवरोहक्रमेणामृतकलायाः स्थितिर्भवतीति । नित्यश इत्यादिना कल्मष इत्यन्तेनार्द्धाद्येनैकेन श्लोकेनैतदुक्तं भवति । अमृतेश्वरीविद्याभेदेषु षट्सु स्वभजनीयस्वै-

न्यसेत्ताः षड् विधाः प्रोक्तक्रमान्ते न तु नित्यशः ।
न्यासेनामृतरूपी स्यात् साधकः क्षीणकल्मषः ॥ ६२ ॥
ध्यानं तासां प्रवक्ष्यामि शृणु प्रोक्तक्रमेण वै ।
यासां स्मरणमात्रेण क्लेशा नश्यन्त्यशेषतः ॥ ६३ ॥
शुद्धस्फटिकसङ्काशां मौलिबद्धेन्दुनिर्गतैः ।
अमृतैरार्द्रदेहास्तास्त्वमलाभरणान्विताः ॥ ६४ ॥
कुमुदं पुण्डरीकञ्च राकेन्दुममृतं करैः ।
दधानाः स्मेरवदना मुक्ताभरणभूषिताः ॥ ६५ ॥

---

कैकस्य भेदस्यैव कूटत्रयवतः प्रतिकूटञ्च षोड़शस्वरयोजनात् जातानि षोड़श षोड़शरूपाणि एवं सम्भूयाष्टचत्वारिंशद्रूपाणि प्रोक्तक्रमेणामृतकलास्थितिस्थान मारभ्य पञ्चदशसु स्थानेषु पञ्चदश रूपाणि पुनरप्यारम्भस्थाने षोड़शरूपमेवं षोड़शषोड़शविभागेन त्रिशस्त्रिशः न्यसेत्। तेन साधकः प्रोक्तरूपी भवतीति ॥ ६२ ॥

ध्यानमित्यादिभिः परिवारिता इत्यन्तैश्चतुर्भिः श्लोकैरमृतेश्वरीध्यानं तत्पूजां तदावरणशक्तिनिवहञ्चोपदिशति। तत्र तासां अमृतेश्वरीमूर्त्तिविद्याभेदषट्कानां। यासां मूर्त्तीनां। क्लेशाः तापत्रयरूपाः। शुद्धस्फटिकसङ्काशां मूर्त्तिमिति शेषः। दधाना इत्युपरितनश्लोकोत्तरार्द्धस्य प्रथमपादेनान्वयः। मूर्त्तेरेकवचनत्वं तासां षण्णां ऐक्यपरमार्थत्वात्। अन्विता इति बहुवचनं भेदरूपाङ्गीकारेण। अत्रायुधानि ऊर्द्धादिदक्षिणवामदक्षिणवामक्रमेण। स्मेरवदनाः प्राग्वत् मूर्त्तिविशेषणं प्राग्वद्दधाना इत्यत्रान्वयः। मुक्ताभरणभूषिताः मौक्तिकमयैराभरणैरलङ्कृताः। दलमध्यगाः ताभिः षष्टिशतार्णात्मशक्तिभिः पूर्वोक्तामृताक्षरषष्ट्युत्तरशतिकाभिः शक्तिभिरित्यर्थः। एतदुक्तं भवति अभीष्टमानभ्रमेण वृत्तं निष्पाद्य बहिरेकाङ्गुलमानेन वृत्तं कृत्वा तद्बहिः पञ्चाङ्गुलमानेन वृत्तं विधाय तद्बहिः पुनरप्येकाङ्गुलमानेन वृत्तं विधाय एवमन्तर्बहिर्विभागेन प्रोक्तचतुष्टयेन सार्द्धं विंशतिवृत्तानि विधाय तासु पञ्चाङ्गुलान्तरालासु दशसु वीथिषु एकस्यामेकस्यां वीथ्यां षोड़श षोड़श दलानि कृत्वा तत्र सर्व्वमध्यकर्णिकायां प्रधान-

षोड़शच्छदयुक्तानां पद्मानां दलमध्यगाः ।
ताभिः षष्टिशतार्णात्मशक्तिभिः परिवारिताः ॥ ६६ ॥
तत्तद्विद्याक्षरोपेतं तदर्णं रूपिणीपदम् ।
शक्तीतिद्व्यक्षरं प्रोक्तसप्ताक्षर्य्या च संयुतम् ॥ ६७ ॥
चतुर्दशाक्षरी विद्या कृत्वैवं ताभिरर्च्चयेत् ।
वाह्यात् प्रवेशगत्यैव प्रादक्षिण्यात् सुगन्धिभिः ॥ ६८ ॥
सितैः प्रसूनैः श्रीखण्डकर्पूरद्रवलोलितैः ।
पूजयेद्वहिरासान्तु विदध्याद्वलियुग्मकम् ॥ ६९ ॥
निवेद्य पायसं दुग्धकदलीफलशर्कराः ।
होमञ्च तैस्तर्पणान्तु जलैः कर्पूरवासितैः ॥ ७० ॥

---

देवताममृतेश्वरीं वहिर्दलेषु भगमालिनीपटलोक्तषष्ट्युत्तरशताभृताक्षरात्मिकाभिः शक्तिभिः परिवारितां पूजयेत् । एतदन्यासां पद्मानामपि साधारणम् ॥ ६६ ॥

तत्तद्विद्येत्यादिभिर्वासितैरित्यन्तैश्चतुर्भिः श्लोकैरावरणशक्तीनां पूजाविद्याः देव्याः पूजाद्रव्याणि वलिहोमतर्पणानि चोपदिशति । तत्र तत्तद्विद्याक्षरोपेतं पूर्वोक्तसंख्यानां प्रत्येकमाद्याक्षरत्वेन योजनीयमित्यर्थः । तदर्णं प्रोक्तसंख्येष्वमृतार्णेषु एकैकं प्रोक्तसप्ताक्षर्य्या द्वितीयपटल इतिशेषः । चतुर्दशाक्षरी प्रतिविद्यमिति शेषः । कृत्वैवं एवं प्रोद्धृत्येत्यर्थः । ताभिर्विद्याभिः । प्रादक्षिण्यात् अग्रादारभ्येति शेषः । एतदुक्तं भवति अमृतेश्वरीविद्यारूपभेदषट्कभजनीयस्य रूपस्य प्रथमकूटं पूर्व्वमुच्चार्य्यानन्तरममृताक्षरेषु विन्दुयुक्ताशीतिषु चैवं सम्भूय षष्ट्युत्तरशतेषु प्रोक्तक्रमेणैकैकमक्षरमुच्चार्य्यानन्तरं रूपिणीशक्तिपादुकां पूजयामीति द्वादशाक्षराण्युच्चार्य्य एवं सम्भूय प्रतिविद्यं चतुर्दशाक्षरात्मिकाभि र्विद्याभि र्वाह्याभ्यन्तरप्रवेशगत्याग्रादिप्रादक्षिण्येनार्च्चयेदिति । सुगन्धिभिः प्रसूनैरित्यत्रान्वयः । श्रीखण्डं चन्दनं । वहिर्नित्यपूजामण्डलतः । आसां षड्विधानाममृतेश्वरीणां । तुना आसामपि ललितात्मकत्वमुच्यते । वलियुग्मकं आद्यन्तयोर्यथाक्रमं षोड़शाक्षरमन्त्रेण कुरुकुल्लासप्ताक्षर्य्या च । तैः पायसादिभिश्चतुर्भिः ॥७०॥

दशलक्षं जपेद्विद्यां पयोभक्ष्यः समाहितः ।
एवं जपादिसंसिद्धविद्यो मन्त्री यदा जलम् ॥ ७१ ॥
समुद्रजं स्पृशन् हस्ततलेन प्रजपेच्च ताः ।
एकैकशः शतादेवं तत्तोयं दुग्धसन्निभम् ॥ ७२ ॥
तेष्वेव तत्तद्विद्यार्णसमेतान् षष्टिसंयुतान् ।
शतार्णानालिखेन्मध्ये तदाद्यं मध्यतो लिखेत् ॥ ७३ ॥

---

दशलक्षमित्यादिना सन्निभमित्यन्तेन श्लोकद्वयेन विद्यासाधनविधानं सिद्धविद्यस्य लक्षणञ्चोपदिशति । तत्र दशलक्षं प्रतिविद्यमिति शेषः । अत्र तर्पणहोमौ प्रतिविद्यं तद्दशांशाविति सम्प्रदायः । एवमुक्तप्रकारेण जपादीत्यत्रादिशब्दस्तर्पणहोमपूजादिविषयः । समुद्रजं जलमिति पूर्व्वश्लोकोक्तपदेनान्वयः । ताः षड्विधा विद्याः । एकैकशः शतात् षड्विद्यासु तासु स्वसिद्धां स्वसिद्धामिकैकां विद्यां शतवारं जपेदित्यर्थः । एवमुक्तप्रकारजापेन तत्तोयं समुद्रजलं दुग्धसन्निभम् रसादिभिः ॥ ७२ ॥

तेष्वित्यादिना अनन्तका इत्यन्तेन श्लोकद्वयेन पञ्चयन्त्रविधानं तस्यानन्तसंख्यात्मकत्वञ्चोपदिशति । तत्र तेषु नित्यसपर्य्यामण्डलत्वेन प्रोक्तेष्वन्तर्वहिर्विभागस्थितेषु प्रत्येकं षोड़शदलरूपेषु दशसु पद्मेषु । तत्तद्विद्यार्णसमेतान् षड्विधामृतेश्वरोविद्यासु स्वाभिमतविद्यायामेकैककूटसमेतान् । षष्टिसंयुतान् शतार्णान् पूर्व्वोक्तामृतार्णानित्यर्थः । मध्ये कर्णिकाया इति शेषः । तदाद्यं मध्यतो लिखेत् साध्याक्षरसमोपेतं स्वमध्यतः साध्याक्षरसमोपेतं तत्तद्बाह्यलिखितेष्वाद्यस्वरूपं लिखेदित्यर्थः । तेषां उक्तसंख्यानामक्षरस्वरूपाणां । अन्योन्यसम्भेदालेखनात् वासनापटलवक्ष्यमाणभेदक्रमालेखनात् । अनन्तकाः अनन्तानीत्यर्थः यन्त्राणीति शेषः । अयमत्र यन्त्ररचनाक्रमः । प्रागुक्तक्रमादन्तर्वहिर्विभागस्थितानि प्रत्येकं षोड़शदलानि पद्मानि कृत्वा तेषु षष्ट्युत्तरशतसंख्येषु दलेषु वाह्यात् प्रवेशगत्या अग्रादग्रादिप्रादक्षिण्येनामृतेश्वरीविद्यासु षड्विधास्वाद्यविद्याप्रथमकूटसहितानमृतार्णान् षष्ट्युत्तरशतसंख्याकान् विलिख्य तन्मध्यकर्णिकायाञ्च तेषां वाह्यदललिखिताक्षररूपेष्वाद्यदललिखिताक्षरस्वरूपं विद्याक्षरप्रथमकूटमध्यमध्यगसाध्याक्षरोपेतं लिखेत् । एतत् प्रथमं यन्त्रं । अस्मिन्नेव यन्त्रे प्रोक्तेषु दशसु

साध्याक्षरसमोपेतं यन्त्रं स्यादिष्टसिद्धिकृत् ।
तेषामन्योन्यसम्भेदाल्लिखनात् स्युरनन्तकाः ॥ ७४ ॥
प्राक्प्रत्यग्दक्षिणोदक्क कृत्वा विंशतिसूत्रकम् ।
कोष्ठान्युत्पाद्य सुसमान्येकषष्ट्या शतत्रयम् ॥ ७५ ॥
तत्कोणतो मार्जयीत चत्वारिंशत् सपञ्चकम् ।
शेषं वज्रं भवेत् कोष्ठैरेकाशीतिशतेन वै ॥ ७६ ॥
तत्र दिक्षु यथा पूर्वं चतुर्भिः स्यात्त्रिकोणकम् ।
तेषु तास्ता लिखेद्विद्यां षट्साध्याख्यासमायुताम् ॥ ७७ ॥

---

पद्मेषु प्रतिपद्ममृताक्षरेषु दशसु वासनापटलवक्ष्यमाणभेदक्रमात् । षोड़शस्वरयोजनभेदेन जाता यन्त्रसंख्या चतुर्दशाक्षरवाक्येनोच्यते ज्ञानानन्दोदधौ धीदसारराट् धनराट् २०८२२३८८८८८८००० इत्येतेषु एकमेकं यन्त्रं वासनापटलवक्ष्यमाणभेदक्रमादेतद्दशपद्मान्तर्बहिर्विभागस्थितदशामृतव्यञ्जनार्णभेदेन ज्ञानदो हरन्मृग ३६२८८०० इति सप्ताक्षरवाक्यजनितसंख्यं भवति । सम्भूय एककूटजनितयन्त्रसंख्या विंशत्यक्षरवाक्येनोच्यते अनूनज्ञानभावः सोमशम्भुधीर्धन्यश्चिद्दरो धर्मस्थ ७५६८२१८८४५५७४४०००० इत्येवमन्यकूटद्वयस्यापि प्रति-कूटमेतत्संख्यानि यन्त्राणि भवन्तीति । तस्मादेकैककूटोद्भवानां यन्त्राणामिव परार्द्धसंख्याधिकत्वादनन्तत्वं । अन्यासामेतत्कूटयन्त्रयोर्वैपर्य्यजनितानां पञ्चानां विद्यानां कूटान्तराभावादेतान्येव यन्त्राणि भवन्ति । तेन चासां परमार्थतो न भेदो विद्यत इति ॥ ७४ ॥

प्राक्प्रत्यगित्यादिभिः सम्पद इत्यन्तैरष्टभिः श्लोकैः कोष्ठवज्रयन्त्रषट्कं तद्विनियोगांश्चोपदिशति । तत्र सुसमानि प्रत्येकं परस्परं समचतुरस्राणि । तत्कोणतः तस्य प्रोक्तसंख्यकोष्ठस्य यन्त्रस्य चतसृषु कोणदिक्षु । चत्वारिंशत् सपञ्चकं पञ्चचत्वारिंशत् कोष्ठानीति शेषः । चतुर्भिः प्रतिदिशमिति शेषः । तेषु चतुर्षु कोणेषु । तास्ताः स्वसिद्धाः । साध्याख्यासमायुताम् साधकसाध्यकर्म्माख्यायुतामित्यर्थः । प्राङ्मध्यमारम्भात् सर्व्वप्राचीनपंक्तिस्थ कोष्ठपञ्चकमध्यमकोष्ठारम्भादित्यर्थः । कोणमध्यस्थपञ्चकेत्युक्त्या कोष्ठाष्टकरूपे सप्तमावरणे चतुर्दिग्गत-

प्राग्वत् प्राङ्मध्यमारभ्यात् प्रादक्षिण्यप्रवेशतः ।
विलिखेदमृतार्णांस्तु क्रमात् षष्टिशतं प्रिये ॥ ७८ ॥
शेषेषु कोणमध्यस्थपञ्चकेऽभिहितक्रमात् ।
वाह्यादिमध्यमान्तन्तु लिखेदन्यास्तु पञ्च वै ॥ ७९ ॥
साध्याक्षरयुतान्येव षड्भिः षड्वज्रकाणि तु ।
यन्त्राणि तेषां सर्वत्र गदादिपरिरक्षणम् ॥ ८० ॥
उत्पातशान्तिमन्यानि मङ्गलानि च कारयेत् ।
यस्मिन् देशे त्विदं यन्त्रषट्कं त्वेवं सुपूजितम् ॥ ८१ ॥

---

कोणे लिखेत् । वाह्यादिवह्निकोणस्थकोष्ठादि अन्यास्तु पञ्चत्रिकोणलिखितस्वसिद्धविद्याव्यतिरिक्ताः । साध्याक्षरयुतानि तत्तद्विद्याकूटाक्षराणि षड्भिर्विद्याभिः । तेषां यन्त्राणां गदादिपरिरक्षणं फलमिति शेषः । अन्यानि मङ्गलानि आयुःश्रीपुत्रधनलाभादीनि । तत्र देशे । मारी यावन्मण्डलमेकव्याधिना नाशकरो शक्तिः । अयमत्र यन्त्रविलेखनक्रमः प्राक्प्रत्यगुदक्षिणोदक्समान्तरालानि विंशतिसूत्राण्यास्फाल्य तेनैकषष्ट्यधिकत्रिशतकोष्ठान्युत्पाद्य तेषु चतुर्षु कोणेषु प्रतिकोणं पञ्चचत्वारिंशत्पञ्चचत्वारिंशत् कोष्ठानि सम्भूयाशीत्यधिकशतकोष्ठानि प्राग्वद्वज्राकारं मार्जयित्वा शिष्टेष्वेकाशीत्यधिकशतकोष्ठेषु चतसृषु दिक्षु प्रतिदिशं प्राग्वत् कोष्ठचतुष्टयं सम्भूय षोड़श कोष्ठानि मार्जयित्वा तत्र तत्र प्राग्वत्त्रिकोणानि कृत्वा तेषु त्रिकोणेष्वमृतेश्वरीविद्यासु षट्सु प्रथमं स्वाभिमतविद्यां साध्यादिसंयुक्तकूटत्रयगर्भामालिख्य शिष्टकोष्ठपञ्चषष्ट्याधिकशतैः प्राग्वत् सर्वप्राचीनपंक्तिस्थकोष्ठपञ्चकमध्यकोष्ठमारभ्य प्रादक्षिण्यप्रवेशगत्या प्राग्वदमृतार्णषष्ट्यधिकशतके षट्पञ्चाशदधिकशताक्षराणि यावत् षष्ठावरणान्तं विलिख्य शिष्टाक्षरचतुष्टयं सप्तमावरणकोष्ठाष्टके प्रागादि चतुर्दिग्गत कोष्ठचतुष्टये कोणकोष्ठचतुष्टयवर्जं विलिख्य वर्जिततत्कोणगतकोष्ठचतुष्टये मध्यकोष्ठे च सम्भूय पञ्चकोष्ठेषु वह्निकोष्ठादारभ्य मध्यकोष्ठान्तं प्रादक्षिण्येन दिगन्तत्रिकोणलिखितामृतेश्वरीविद्याशिष्टविद्यापञ्चकं प्राग्वत् ससाध्यं समालिखेत् । एतत् प्रथमं यन्त्रम् । एवं अमृतेश्वरीद्वितीयादिविद्यापञ्चके स्वाभिमतां विद्यां प्रत्येकं

तत्र चौरग्रहव्याधिमारीदुर्भिक्षशत्रवः ।
सदा न सम्भवन्त्येव भवन्त्येव च सम्पदः ॥ ८२ ॥
प्राक्प्रत्यग्दक्षिणोदक्क कृत्वा द्वादशसूत्रकम् ।
सैकविंशच्छतं कोष्ठान्यभितो मार्जयेत् क्रमात् ॥ ८३ ॥
दशपञ्चसमोपेतं शिष्टे वज्रैकषष्टिके ।
मध्ये तद्दिनजां विद्यां आलिख्याख्यासमन्विताम् ॥ ८४ ॥
तद्दिक्ष्वेकैकतः कृत्वा त्रिकोणानि यथाविधि ।
प्राग्वदग्रत्रिकोणात्तु विलिखेदुदयाच्चरात् ॥ ८५ ॥

---

वह्निस्त्रिकोणेषु प्रागवद्विलिख्य तदनन्तरादि तदन्यपञ्चकस्य तदन्यपञ्चकस्य प्राङ्मध्यकोष्ठपञ्चकविलेखनात् पञ्चयन्त्राणि सम्भूय पूर्वोक्तेन सह षड्-यन्त्राणि निष्पाद्य तैः प्रोक्तान् विनियोगान् कुत्वा प्रोक्तानि फलान्यवाप्नुयादिति ॥ ८२ ॥

प्राक्प्रत्यगित्यादिभिः संयुत इत्यन्तैरष्टभिः श्लोकैरेकषष्टिकोष्ठात्मकवज्र यन्त्रनिर्माणं तत्र मिथुनपूजनं तत्सामान्ये फलं द्रव्यविशेषपूजनात् फल -विशेषावाप्तिं कालविशेष पूजनात् फलविशेषं चोपदिशति । तत्र अभितः प्राग् वत् कोणचतुष्टये प्रतिकोणमित्यर्थः । दशपञ्चसमोपेतं क्रियाविशेषणमेतत् । पञ्चदशकोष्ठाणि मार्जयेदित्यर्थः । वज्रैकषष्टिके वज्ररूपयन्त्रकोष्ठैकषष्टिके इत्यर्थः । मध्ये सर्व्वमध्यकोष्ठे । तद्दिनजां विद्यां पञ्चदशपटले प्रोक्तासु काल-नित्याविद्यासु तत्तद्दिननित्यात्वेन प्राप्तां विद्याम् । आख्यासमन्वितां प्रागवत् साधकादित्रयगर्भाम् । एकैकतः कोष्ठत इत्यर्थः । प्रतिदिशमिति शेषः । यथाविधि समत्रिरेखमित्यर्थः । प्रागवत् हृल्लेखोदरे । अग्रत्रिकोणात् पश्चिमादग्रतः त्रिकोणमारभ्येत्यर्थ । उदयाच्चरात् पञ्चविंशपटलोक्तक्रमात्तत्तद्दिनेष्वर्कोदय-घटिकाप्राप्ताच्चरमारभ्येत्यर्थः । क्रमतः दिवसपञ्चकषड़ावृत्ति क्रमतः । मिथुनानि नित्यानित्यापटलोक्तानि । अत्र यन्त्रे । घटिकाक्रमयोगेन तत्तद्घटिकासु प्रति-घटिकं तत्तद्घटिकाप्राप्तमिथुनक्रमादित्यर्थः । तथा नित्यानित्यापटलोक्ता-दिभिरित्यर्थः । अन्यजासु भूतप्रेतग्रहाद्युत्थास्वित्यर्थः । सप्तमी वहुवचनान्यन्यानि

षष्ट्यक्षराणि क्रमतो मिथुनान्यत्र पूजयेत् ।
घटिकाक्रमयोगेन गन्धपुष्पादिभिस्तथा ॥ ८६ ॥
तीव्रार्त्तिषु रणोत्थासु गदोत्थास्वन्यजासु च ।
शीघ्रं शमं प्रयान्त्येव क्लेशास्तत्र प्रपूजनात् ॥ ८७ ॥
सम्पदे चार्च्चयेदेवमरुणैर्गन्धपुष्पकैः ।
सितैर्व्वा सौरभोपेतैर्मण्डलाच्छ्रियमाप्नुयात् ॥ ८८ ॥
पूर्णास्वेवं समाराध्य मिथुनानि यथाविधि ।
समस्तवाञ्छितं वर्षादवाप्नोत्येव निश्चितम् ॥ ८९ ॥
एवं त्रिजन्मस्वर्च्चातो जीवेद्वर्षशतं सुखी ।
नीरोगो निर्गताधिश्च निवृत्तिनीतिसंयुतः ॥ ९० ॥
क्रूरेषु चाभिचारेषु पूजयेन्मिथुनानि वै ।
मध्ये साध्यसमोपेते वज्रयन्त्रे दिवानिशम् ॥ ९१ ॥

---

पदानि त्रीणि तीव्रार्त्तिषु पदविशेषणानि । तत्र यन्त्रे । मण्डलात् प्रागवहिनैः । पूर्णासु त्रिविधासु त्रिजन्मसु प्रागवत् । एतदुक्तं भवति प्राक्प्रत्यग्दक्षिणोदक् च समान्तरालानि द्वादशसूत्राण्यास्फाल्य एकविंशत्यधिकशतकोष्ठानि निष्पाद्य तेषु चतुर्षु कोणेषु प्रतिकोणं पञ्चदश पञ्चदश कोष्ठानि सम्भूय षष्टिकोष्ठानि प्रागवद्वज्राकारं मार्जयित्वा शिष्टेष्वेकषष्टिकोष्ठेषु चतसृषु दिक्षु प्रतिदिशमेकमेकं कोष्ठं मार्जयित्वा तत्र तत्र समत्रिरेखानि त्रिकोणानि विधाय तत्र पश्चिमदिग्गतत्रिकोणमारभ्य त्रिकोणसहितबाह्यावरणविंशतिकोष्ठेषु द्वितीयावरणषोड़शकोष्ठेषु तृतीयावरणद्वादशकोष्ठेषु चतुर्थावरणाष्टकोष्ठेषु पञ्चमावरणचतुष्कोष्ठेषु एवं सम्भूय षष्टिकोष्ठेषु घटिकाक्रमात्तत्तद्दिनोदयप्राप्तघटिकाक्षरात् प्रवृत्तषष्टिघटिकाक्षराणि ह्रक्लेखोदरे प्रादक्षिण्यप्रवेशगत्या विलिख्य सर्व्वमध्यकोष्ठे ह्रक्लेखोदरे तत्तद्दिननित्याविद्यां साधकादिनामत्रयगर्भामालिख्य तत्तद्दिनादिप्रतिघटिकं तत्तद्घटिकाप्राप्तमिथुनानि नित्यानित्यापटलोक्तमन्त्रादिभिः प्रोक्तकालेषु प्रोक्तकालावधिपूजनात् प्रोक्तफलसिद्धिरिति ॥ ९० ॥

मान्त्रिकैर्यामतो वारकल्पितैः स्वगृहे नृपः ।
नित्याभक्तैः समीचीनैः स्निग्धैः संप्राप्तदक्षिणैः ॥ ९२ ॥
सुदक्षिणैर्दिनैः कैश्चित् प्रयोक्तारं निहन्ति सः ।
तथा विलोहाश्मतले कृत्वा वज्रं सुविस्तृतम् ॥ ९३ ॥
सर्वतो विलिखेच्छक्तीस्तत्पुटे तानि संलिखेत् ।
मध्ये साध्यं समालिख्य तत् खनेद्भवनादिषु ॥ ९४ ॥
तत्रानिशं सम्पदः स्युरीप्सिताश्च निराकुलाः ।
निःसपत्ना निरुपमा नीतियुक्ता निरन्तराः ॥ ९५ ॥
पूर्णाभिषेके यास्त्वक्ते पूज्याः प्रोक्तास्तु शक्तयः ।
तासां विद्यां शृणु प्राज्ञे याभिः स्यात् सिद्धविग्रहः ॥९६॥

---

क्रूरेष्वित्यादिभिर्निरन्तरा इत्यन्तैः पञ्चभिः श्लोकैः तेनैवाभिचारप्रतीकार-विधानं तत्स्थापनेन गृहरक्षादिविधानञ्चोपदिशति । तत्र पूजयेत् प्रागुक्त नैवेद्यमन्त्रक्रमादिभिरिति शेषः । वज्रयन्त्रे पूर्व्वप्रोक्ते । यामतो वारकल्पितैः अहोरात्रस्य यामाष्टके एकैकयामरूपैकैकवारैर्वृत्तैरष्टभिरित्यर्थः । सुदक्षिणैः नित्यातन्त्रप्रोक्तप्रयोगनिपुणैः । दिनैः कैश्चित् कार्य्यगौरवलाघवापेक्षया एकद्व्यादि-मण्डलादिभिः । प्रयोक्तारं अभिचारकर्त्तारं । सः अभिचारः । वज्रं मिथुनवज्रयन्त्रं । सर्व्वतः तस्य यन्त्रस्यैकषष्टिपदेषु । शक्तिं ह्लसें खां । तत्पुटे ह्लसें खारेफांशे । तानि घटिकाक्षराणि । मध्ये घटिकाक्षरमध्ये । तद्यन्त्रं प्राग्वत् प्राणप्रतिष्ठा पूजादिसहितं खनेत् मातृकापटले प्रोक्तक्रमतः । तत्र प्रदेशे । निरन्तराः सन्तन्यमानाः ॥ ९५ ॥

पूर्णाभिषेकेत्यादिभिश्चराचरमित्यन्तैः पञ्चभिः श्लोकैः द्वितीयपटलप्रोक्त पूर्णाभिषेकचक्रे पूज्यदेवतानां सचत्वारिंशच्चतुःशताधिकसहस्रसंख्यानां तासां प्रत्येकं षोड़शाक्षरमन्त्रस्वरूपञ्चोपदिशति । तत्र चक्रे द्वितीयपटल प्रोक्तरूपे । तासां शक्तीनां । याभिः शक्तिविद्याभिः । सिद्धविग्रहः देव्यात्मा भवति ।

स्वरोत्थाभिः सहोत्थाभिर्नित्याविद्याभिरेव तु ।
समीरिता विषोढ़ाभिः स्वरवर्जमशेषतः ॥ ९७ ॥
सहस्रेण समायुक्तश्चत्वारिंशच्चतुःशतम् ।
ललिताशक्तिपूजोक्तबीजद्वयसमन्वितम् ॥ ९८ ॥
रूपशक्तीति सहितं सप्ताक्षर्य्यन्तमर्चयेत् ।
प्रत्येकं षोड़शार्णाभिर्विद्याभिस्ताभिरम्बिके ॥ ९९ ॥
एवं ते गदितं सर्वं विद्याया व्याप्तिवैभवम् ।
यन्मयं विश्वमखिलं दृश्यते सचराचरम् ॥ १०० ॥

---

स्वरोत्थाभिः पञ्चविंशपटलोक्तकालनित्याविद्यासु वशिनीवर्गजनितनित्याविद्याभिः षट्सप्तत्यधिकपञ्चशतसंख्याभिः । सहोत्थाभिः तासु सकारहकारजनितनित्याभिस्तत्संख्याभिः नित्याविद्याभिरिति विशेष्यं । समीरिताः विद्याः विषोढ़ाभिः स्वरवर्जं वशिनीवर्गवर्जं सकारहकारयोः षण्डाक्षरचतुष्टय चतुष्टयजनितचतुश्चत्वारिंशदधिकशतसंख्यनित्याविद्यारहिताभिरित्यर्थः । चत्वारिंशच्चतुःशतं चत्वारिंशदधिकचतुःशतं । एतदुक्तं भवति पञ्चविंशपटलोक्त २०७२६ कालनित्याविद्यावशिनीवर्गजनितषट्सप्तत्यधिक पञ्चशतसंख्या विद्यास्तासु सकारोत्थासु प्रोक्तसंख्यासु विद्यासु षण्डाक्षरजनितचतुश्चत्वारिंशदधिकशतसंख्या विद्यारहिताः शिष्टद्वात्रिंशदुत्तरचतुःशतसंख्या विद्यास्तत्संख्यविषण्डहकाराक्षरविद्याश्च [ चतुःशतोत्तरसहस्र संख्यानित्याविद्याः ] तच्छ्रीचक्राङ्गत्वेनोक्तानां विद्यानामसाधारणत्वाक्षररूपा भवन्तीति । बीजद्वयसमन्वितं मायाश्रीबीजसमन्वितं सर्व्वादाविति शेषः । रूपशक्तीति सहितं रूपशक्ति इति चतुरक्षरोपेतं । पूर्वोक्तासाधारणरूपत्वाक्षर कालनित्याविद्यानामन्त इत्यर्थः । सप्ताक्षर्य्यन्तं सर्व्वचरमे द्वितीयपटलोक्तसप्ताक्षरीविद्यासहितमित्यर्थः । एतत् सर्व्वमसाधारणत्वाक्षरनित्याविद्यारूपस्य विशेषणं । ताभिः पूर्व्वसंप्रस्तुताभिः । ता विद्या यथा—ह्रीं श्रीं अ आ इरूपशक्तिपादुकां पूजयामीत्यादि ह्रीं श्रीं हः क्ष ई रूपशक्तिपादुकां पूजयामीत्यन्ताः । ताः प्रोक्तसंख्याः शक्तयो ललिताश्रीचक्रस्थशक्तीनामणिमादिमहात्रिपुरसुन्दर्य्यन्तानां षण्णवतिसंख्यानां प्रत्येकं पञ्चदशपञ्चदशसंख्याविभागेनावरणशक्तयो भवन्तीति ।

नियमात्ममयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निष्कालनाच्चित्ते तत्तत्त्वं स्वात्मसात् कृतम् ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमते मन्त्रवैभवं नाम
षड्विंशं पटलं परिपूर्णं परामृष्टम् ॥२६॥ ॐ ॥

---

तेन तासामणिमादीनामपि प्रत्येकं मूलदेवतावत् षोड़शनित्यात्मकत्वं। तस्मात्ताः सम्भूय षट्त्रिंशदधिकपञ्चशतोत्तरसहस्रसंख्याः प्रकटयोगिन्यो भवन्तीति यावत्। विद्यायाः ललिताविद्यायाः यत्त्रयं विद्यामयम् ॥ १०० ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसार-
सिंहराजप्रकाशाभिधानेन सुभगानन्दनाथेन विरचितायां
मनोरमाख्यायां व्याख्यायां षोड़शनित्याव्याप्तिवैभव-
प्रकाशक मन्त्रस्य व्याप्तिप्रकाशनपरं षड्विंशपटलं परिपूर्णं
परामृष्टम् ॥ २६ ॥ ॐतत्सत् ॥

यन्त्रसंख्या—२२७७७३८५८८३६७२३२०००००० ।
ज्ञानेन निम्ना श्रीगौरीसिताङ्गा दुग्धशब्दगा ।
स्वात्मसुरश्रीरित्येकविंशार्णयन्त्रसंख्यका: ॥
ग्रन्थसंख्याः—षड्विंशे पटले प्रोक्ता व्याख्याग्रन्थाश्चतुःशतात् ।
परमष्टयुतं त्रिंशदधिकं संख्यया स्फुटम् ॥

## सप्तविंशपटलम् ।

अथ षोड़शनित्यानां कालेन प्राणतोच्यते ।
मातृकाभूतनाथाद्यैः श्रीचक्रेण च शक्तिभिः ॥ १ ॥
लवादीनान्तु कालस्य दुर्लक्ष्यत्वात्तदीरितम् ।
एकश्वासं समारभ्य तत्संख्याभिः क्रमेण वै ॥ २ ॥
अहोरात्रस्य तद्व्याप्तिमुक्त्वा तेनान्यदूहयेत् ।
विशेषांश्चान्तराद्वाह्यात्तत्तत्सिद्ध्युपपादकान् ॥ ३ ॥

---

पूर्व्वस्मिन् षड्विंशे पटले षोड़शनित्यानां व्याप्तिवैभवप्रकाशनपरं मन्त्रव्याप्तिं तन्मयामृतेश्वरोविद्यादिकञ्चोपदिश्यानन्तरं षोड़शनित्यानां मातृकाभूतनाथाद्यैः श्रीचक्रेण शक्तिभिश्च कालेन प्राणात्मतादिकमुपदिशत्यथषोड़शेत्यादिभिर्भवेदित्यन्तेन श्लोकशतरूपेण सप्तविंशेन पटलेन। तत्र अथ षोड़शेत्यादिभिरुपपादकानित्यन्तैस्त्रिभिः श्लोकैः पटलार्थमुपदिशति। तत्र कालेन प्राणता प्राणात्मककालत्वेण तदात्मता। मातृकाभूतनाथाद्यैः आदिक्षान्तैर्विसर्जनीयरहितैः पञ्चाशद्भिर्मातृकाक्षरैः पञ्चभिर्भूतैः नवभिर्नाथैः आद्यशब्देन षट्त्रिंशत्तत्वादिभिश्च। श्रीचक्रेण नवचक्रात्मकेन शक्तिभिः तत्रस्थषत्रवतिभिरेकनवतिभिश्च। लवादीनान्तु कालस्य लवादितुव्यन्तानां मात्रायादुर्लक्ष्यत्वात् ज्ञातुमशक्यत्वात्तदीरितं स्वरूपमिति शेषः। तत्संख्याभिः श्वाससंख्याभिः घटिकाहोरात्रादिरूपसंजाताभिः। क्रमेण वक्ष्यमाणक्रमेण अहोरात्रस्येत्यस्य तत्संख्याभिरिति पूर्व्वेणान्वयः। तद्व्याप्तिं श्वासात्मकत्वं उक्त्वा तेनान्यदूहयेदिति। भिन्न कर्त्तृत्वं स्वातन्त्र्यात्। अन्यन्मासवर्षादिकालरूपं विशेषात् गतिवृत्ती श्वासानामिति शेषः। आन्तरात् भूतोदयाद्यात्मकात् वाह्यात् दक्षवामपार्श्वाद्युद्देशात् तत्तत्सिद्ध्युपपादकान् शुभाशुभसिद्धिकरान्। एतदुक्तं भवति षोड़शनित्यानां तदात्मकानां मातृकादीनां स्वरूपेण श्वासात्मकेन कालरूपेण सवाह्याभ्यन्तर-

मूलाधारोद्भवो वायुः प्राणाद्याख्यां समश्नुते ।
स तु पञ्चविधो भूतभेदादुद्भवदेशतः ॥ ४ ॥
नासायाः पुटयोः पार्श्वतुङ्गमध्याधरन्ध्रगाः ।
प्राणाग्नीलाम्बुखात्मानः पवनाः स्युर्यथाक्रमम् ॥ ५ ॥
गुरुकेतू भृगुकुजौ बुधार्कौ चन्द्रसूर्य्यजौ ।
क्रमाच्चतुर्षु भूतेषु व्योम सर्व्वात्मकं भवेत् ॥ ६॥
उभयस्थो भवेद्राहुश्चन्द्रसूर्य्यौ पुटक्रमात् ।
वामदक्षौ तयोस्तस्य प्रवेशो निर्गमस्तथा ॥ ७ ॥
जीवश्चन्द्रो रविः शून्यो भागः स्त्रीपुरुषौ तथा ।
पृथिवी सलिलं चन्द्रो रविरन्यत्त्रयं भवेत् ॥ ८ ॥

---

व्याप्तिद्वयं तेषां श्वासानां शुभाशुभफलप्रदानाद्वक्ष्यमाणात् बाह्याभ्यन्तरान् विशेषान् वक्ष्यीत्युक्तं भवतीति ॥ ३ ॥

मूलाधारेत्यादिना यथाक्रममित्यन्तेन श्लोकद्वयेन श्वासानामुदयं तद्वृत्तिभेदात्तत्तत्संज्ञाप्राप्तिं तस्य भूतात्मकत्वेनोदयविशेषक्रमञ्चोपदिशति। तत्र मूलाधारोद्भवः नित्यानित्यापटलोक्तरूपमूलाधारप्रदेशसमुद्भवः। प्राणाद्याख्यां आदिशब्दस्त्वपानव्यानादीतरभेदविषयः। स प्रोक्तरूपो वायुरुद्भवदेशतः उपलब्धिस्थानेष्वनन्तरवक्ष्यमाणनासापुटद्वयगतेषु। पुटयोः रन्ध्रयोः। पार्श्वतुङ्गमध्याधोरन्ध्रगाः तिर्य्यगूर्द्ध्वदण्डाधरमध्यगतप्रवाहाः। विसर्गलोपः स्वातन्त्र्यात् ॥ ५ ॥

गुर्वित्यादिभिरीरिताविंत्यन्तैः सप्तभिः श्लोकैः श्वासानामुदयविशेषैः इष्टस्थानपञ्चकालविशेषैश्चैकादशविधचन्द्रसूर्य्यात्मकत्वं राह्वात्मकत्वसहितमुपदिशति। तत्र गुरुकेत्वित्यादिना श्लोकेनैतदुक्तं भवति। उभयोरपि नासापुटयोः प्राणाग्नीलाम्बुरूपेषु चतुर्षु भूतोदयेषु वामदक्षिणपुटक्रमेण प्रवाहे प्रोक्तक्रमग्रहद्वन्द्वात्मकत्वं व्योमोदये राहुविधुग्रहाष्टकात्मकत्वं च भवतीति। उभयस्थः उभयपुटस्थः श्वासानामेवमेवं प्रकारप्रवाहकारणं गुरुमुखादवगन्तव्यम्। वामदक्षावित्यस्य पुटाविति पूर्व्वेणान्वयः। तयोः पुटयोरेकैकस्मिन्नपि। तथा चन्द्रसूर्य्यौ जीवः

ग्रहेषु चन्द्रो गुर्व्विन्दुगुरुत्वा भास्करः परे ।
मातृकाश्च तथा विद्या स्वरव्यञ्जनभेदतः ॥ ९ ॥
अधः पृष्ठश्च चन्द्रः स्यादूर्द्ध्वाग्रे दिनकृद्भवेत् ।
शरीरेऽपि घटेरूर्द्ध्वं चन्द्राधो रविरीरितः ॥ १० ॥
अस्तीति वाक्यं चन्द्रः स्यान्नास्तीत्युक्तो रविः स्मृतः ।
शुक्लकृष्णौ तथा पक्षाविति चन्द्रा दशान्तराः ॥ ११ ॥
एवं सूर्य्या दश प्रोक्ता वाह्याभ्याञ्च यशस्विनि ।
एकादशविधौ चन्द्रभास्करौ सम्यगीरितौ ॥ १२ ॥
तयोश्चन्द्राः प्रीतिकरा भास्कराः क्लेशकारिणः ।
राहुः शून्यश्च सर्व्वत्र नाशाय भवति क्षणात् ॥ १३ ॥
सूर्य्येषु शस्तः सर्व्वत्र मृधभोजनमैथुनैः ।
संग्रहश्चान्यदखिलं चन्द्रे सिध्यत्ययत्नतः ॥ १४ ॥

---

भाग इत्युत्तरत्रान्वयः । तथा चन्द्रसूर्य्यावित्यर्थः । अन्यत्त्रयं अम्नोरव्योमात्मकं परे कुजसौरिकेत्वर्काः । तथा चन्द्रसूर्य्यौ ऊर्द्ध्वाग्रे प्रथमाद्विवचनमेतत् । तथा चन्द्रसूर्य्यौ आन्तराः पञ्चात्मकत्वविधुराः । एवमुक्तप्रकारेण । दशेत्यस्य आन्तरा इति पूर्व्वत्रान्वयः । वाह्याभ्यां शुक्लकृष्णरूपाभ्यां चन्द्रसूर्य्याभ्यां । चकारः समाहारे ॥ १२ ॥

तयोरित्यादिना श्लोकेन प्रोक्तचन्द्रसूर्य्यराहुशून्यानां सामान्यं फलमुपदिशति । तत्र भास्कराः शून्यरूपविधुराः ॥ १३ ॥

सूर्य्येष्वित्यादिभिः परमेश्वरीत्यन्तैश्चतुर्भिः श्लोकैः चन्द्रसूर्य्यराहुशून्येषु कर्त्तव्यानि कर्म्माणि प्रश्नप्रकारविशेषे फलविशेषादिकञ्चोपदिशति । तत्र सूर्य्येषु एकादशविधेषु । मृधभोजनमैथुनैः युद्धभोजनमैथुनैः सहेति शेषः । संग्रह इत्यस्य शस्त इति पूर्व्वत्रान्वयः । अन्यदखिलं शिष्टमङ्गलरूपकर्म्मजातं । चन्द्रे एकादशविधे । तथ्यं इष्टं वानिष्टं वा निश्चित्य भवतीत्युक्तं अस्तीति निश्चित्य नास्तीति निश्चित्य

जीवे तु कथितं तथ्यं मेध्यदर्शश्च [1] सिध्यति ।
निश्चित्य भवतीत्युक्तमन्यथा चेत्तदन्यथा ॥ १५ ॥
अनिश्चिते विधौ कन्या गर्भप्रश्नेऽन्यतः पुमान् ।
शून्ये गर्भविपत्तिः स्यादित्याद्यूह्य वदेद्दृढम् ॥ १६ ॥
शून्ये नभसि राहौ च शुभान्येवाशुभान्यपि ।
शुभानि तत्र सर्व्वाणि नश्यन्ति परमेश्वरि ॥ १७ ॥
वामे वहति वायौ तु वदेद्देशिकशिष्ययोः ।
तत्स्थाने स्थापयित्वा तं तत्कर्णे कथयेन्मनुम् ॥ १८ ॥
अथवा जीवगस्थाने तत्कर्णे मन्त्रमादिशेत् ।
अन्यथा शून्यराहोस्तु नाशाय गुरुशिष्ययोः ॥ १९ ॥

---

चोक्तं कार्य्यं भवतीति यावत्। अन्यथा चेत्तदन्यथा शून्ये कथितं चेच्छून्यं भवति। अनिश्चये निश्चयरहिते गर्भप्रश्न इत्यस्य विशेषणं गर्भप्रश्न इति पदच्छेदः। अन्यतः सूर्य्ये शून्यव्यतिरिक्ते शून्ये शून्यरूपसूर्य्ये इत्यादीत्यत्रादिशब्दः निश्चितकार्य्यप्रश्नविषयः। एतदुक्तं भवति अनिश्चिते कार्य्यप्रश्ने चन्द्रश्चेद्यद्यदभिमतं तद्भवति। सूर्य्यश्चेद्यदनभिमतं तच्च भवतीति। तत्र शून्यनभोराहुषु नश्यन्ति अशुभानि भवन्तीत्यर्थः ॥ १७ ॥

वामे इत्यादिना शिष्ययोरित्यन्तेन श्लोकद्वयेन गुरुणा शिष्यस्य मन्त्रोपदेशकालविशेषं तदकरणे प्रत्यवायञ्चोपदिशति। तत्र देशिकशिष्ययारित्यस्य वामे इति पूर्व्वत्रान्वयः। तत्स्थाने वामभागे। तं शिष्यं तत्कर्णे वामकर्णे। अथवा पक्षान्तरे जीवगस्थाने वामदक्षिणभेदतः। तत्कर्णे जीवकर्णे। अन्यथा उक्तप्रकारद्वयवैपरीत्येन। एतद्वामभागजीवस्थापनं नित्याविद्याविधुरसमस्तमन्त्रोपदेशे नित्यानान्तु सवाराहीकुरुकुल्लानां तत्तत्पूजाचक्रे स्वपुरस्थापनमस्माभिः पूर्वोक्तमेव। अत्र श्वासानां भूतादिस्वरूपोदयावगमनोपायान्तरमाराध्यमुखादवगन्तव्यम् ॥ १९ ॥

---

(१) मेष्येदर्थश्च।

षष्ट्या युतैस्तु विंशत्यैर्निश्वासैर्नाड़िका मता ।
तासां षष्ट्या दिनं पूर्णं तद्दिनं स्यात् पुनः पुनः ॥ २० ॥
एकस्मिंस्तु दिने श्वासाः सहस्राण्येकविंशतिः ।
षट्शतञ्च ततस्तेषां स्वरूपं शृणु सुन्दरि ॥ २१ ॥
आरभ्यार्कोदयं प्रातः सप्तत्या द्विशतं क्रमात् ।
प्राणाग्नीलाम्बुखानि स्युर्नवत्यानात्र संक्रमः ॥ २२ ॥
तत्राप्येवमतोनात्राप्येवञ्च दशमक्रमात् ।
दिनमेवं व्रजेदादौ दर्शप्रतिपदं प्रति ॥ २३ ॥

---

षष्टेत्यादिना सुन्दरीत्यन्तेन श्लोकद्वयेन घटिकादिनरूपेण श्वासानां संख्याविशेषैः कालात्मकत्वोपदेशं तत्श्वासरूपप्रस्तावञ्च करोति। तत्र तासां नाड़िकानां। तद्दिनं नाड़िकाषष्ट्यात्मकं। पुनः पुनः परिवृत्तितः। तेषां श्वासानां। सुन्दरीति देवीसम्बुद्धिः ॥ २१ ॥

आरभ्येत्यादिभिर्भवन्ति हीत्यन्तैस्त्रिभिः श्लोकैः श्वासानां पुटयोः पूर्व्वपक्षप्रतिपदादिभूतेषूदयकालं पुटान्तरसंक्रमणकालक्रमं प्रोक्तनिगमनविपर्य्यासे फलञ्चोपदिशति। तत्र सप्तत्या द्विशतं प्रतिभूतं श्वासा इति। नवत्या श्वासैरन्यत्र पुटान्तरे संक्रमः पुटात् पुटसंक्रान्तकालः तदुभयपुटप्रवाहितया स वायुर्भवतीति यावत्। तत्रापि संक्रान्तपुटान्तरेपि। एवं प्रोक्तकालावधि। अतोन्यत्र संक्रान्तपुटान्तरसंक्रम इति पूर्वोक्तकालावधि। एवं प्रोक्तप्रकारपरिवृत्त्या पञ्चदशपरिवृत्तयः। आदौ युगानामिति शेषः। दर्शप्रतिपदं प्रति प्रतिदर्शं प्रतिप्रतिपदमित्यन्वयः प्रतिशुक्लप्रतिपदमित्यर्थः। सर्वेषां जीवानां। एतदुक्तं भवति युगादिषु शुक्लप्रतिपदि सूर्य्योदयमारभ्य एकस्मिन् पुटे पञ्चाशदधिकत्रयोदशशत ॥ १३५० ॥ श्वासैः पञ्चानां भूतानामुदयः। ततो नवत्या श्वासैः नाड्यन्तरे संक्रमः। एवञ्च चत्वारिंशदधिकचतुर्द्दशशत ॥ १४४० ॥ श्वासै रेकावृत्तिः। एवं पञ्चदशावृत्तिषु षट्शताधिकान्येकविंशतिसहस्राणि श्वासा भवन्तीति पर्य्यवसितोऽर्थः। युगादिषु शुक्लप्रतिपदि प्रातरर्कोदयं प्रारभ्य पुटयोर्व्वामदक्षिण-

एवं क्रमेण सर्व्वेषां प्राणोदय उदीरितः ।
एतत्क्रमविपर्य्यासादभव्यानि भवन्ति हि ॥ २४ ॥
बलाधिकाश्चरा वामे बलिनो दक्षिणे स्थिराः ।
उभयत्रोभयात्मानः शुभाशुभपरीक्षणे ॥ २५ ॥
सार्द्धद्वाविंशतिश्वासक्रमाद्द्वादशराशयः ।
तत्र सार्द्धचतुष्केण भूतानि स्युरिति क्रमात् ॥ २६ ॥
घटिकार्णेषु सर्वत्र वाय्वाद्यक्षान्तरोदये ।
तत्तदर्णभवाः श्वासाः षष्ट्या त्रिशतमीरितम् ॥ २७ ॥

---

क्रमेण पञ्चभूतेषु प्रतिभूतं प्रोक्तकालावधि श्वासानां प्रवाहसंक्रमौ। प्रवाहसंक्रमाभ्यामेवं पञ्चदशपरिवृत्तितो दिनमेकं भवति। अनन्तरदिने दक्षिणपुटमारभ्यैवं क्रमाद्भवति। एवं क्रमेण दर्शान्तं प्रतिदिनं पुटव्यत्यासारम्भक्रमेण सर्वेषां प्राणोदयो भवत्येतत् क्रमविपर्य्यासे तु महान्त्यमङ्गलानि च भवन्तीति ॥ २४ ॥

बलाधिका इत्यादिना श्लोकेन श्वासानां वामदक्षिणोभयप्रवाहकाले चरादीनां वस्तूनां बलाधिक्यमुपदिशति। तत्र वामे वायौ प्रवहति दक्षिणे इत्यत्र प्राग्वत्। उभयत्रेति च प्राग्वत् शुभाशुभपरीक्षणे। चरस्थिरोभयात्मकानां कर्म्मणामिति शेषः ॥ २५ ॥

सार्द्धेत्यादिना श्लोकेन भूतानां राशीनाञ्च श्वासक्रमादन्योन्यव्याप्याकारत्वमुपदिशति। तत्र सार्द्धद्वाविंशतिश्वासक्रमाद्द्वादशराशयः प्रतिराश्युक्तसंख्य-(२२) श्वासक्रमात् सम्भूय राशिद्वादशकं (२७०) प्रागुक्तसंख्यश्वासात्मकं एकैकं भूतं भवतीत्यर्थः। तत्र राशिषु एकस्मिन्नेकस्मिन्निति शेषः। सार्द्धचतुष्केण श्वासानामिति शेषः। एतदुक्तं भवति प्रत्येकं प्रोक्तसंख्यश्वासात्मकेषु द्वादशसु राशिष्वेकस्मिन्नेकस्मिन् राशौ प्रतिभूतं प्रोक्तसंख्यश्वासात्मकानि च भूत्वा भूतानि समुद्यन्तीति ॥ २६ ॥

घटिकेत्यादिना अक्षरैरित्यन्तेन श्लोकद्वयेन प्रतिदिनमुदयघटिकाक्षराणि तद्घटिकाक्षराणां श्वासात्मकत्वं तेषु श्वासेषु भूताक्षरोदयक्रमञ्चोपदिशति। तत्र

तेषु तद्भूतवर्णानां दशानामादितो दश ।
सप्तावृत्त्या ततः शेषाः प्राणाग्नीलाम्बुखाक्षरैः ॥ २८ ॥
संख्याभिर्व्वासनाव्याप्तिं श्वासानां शृणु सुन्दरि ।
यया विहितया मन्त्री सदा दर्शनवान् (१) भवेत् ॥ २९ ॥

सर्व्वत्र सर्वेषु दिनेषु वाय्वादि एकान्तरा उदये इति पदच्छेदः । एतदुक्तं भवति सर्वेषु युगदिनेषु घटिकार्णेषु विषये एकैकान्तरितं । अतएव य इति वायव्याक्षरपञ्चकं दिवसपञ्चकक्रमादुदयघटिकाक्षरत्वं प्रतिपद्यत इति । तत्तद्वर्णभवाःतत्तद्घटिकार्णात्मकाः । एतदुक्तं भवति पूर्वोक्तप्रकारा घटिकात्मकाः श्वासास्तत्तद्घटिकात्मका वर्णरूपाश्च भवन्तीति । तेषु श्वासेषु प्रोक्तषष्ट्युत्तरत्रिशतसंख्येषु तद्भूतवर्णानां घटिकाक्षरेषु प्रत्यक्षरं तत्तत्प्रासभूतवर्णानां दश श्वासा इति शेषः । शेषाः पञ्चाशदधिकशतत्रयसंख्याः । एतदुक्तं भवति पूर्वोक्तोदयाक्षरादि षष्ट्यात्मकाक्षरात्मिकासु घटिकासु प्रतिघटिकं षष्ट्युत्तरत्रिशतसंख्येषु श्वासेष्वादितो दशश्वासास्तत्तद्घटिकाप्रासाक्षरप्रासभूताक्षरवर्णानां दशानां तदादितत्पूर्व्वान्तानां स्वरूपेण समुद्यन्ति । शेषास्तु पञ्चाशदुत्तरत्रिशतसंख्याः श्वासा एवं दशदशक्रमेण तदनन्तरभूतादितद्भूतान्तानां पञ्चानां प्रतिभूतं दशदशाक्षररूपाणां स्वरूपेण सप्तावृत्त्योद्यन्ति । एवंभूते सति प्रतिघटिकं तत्तदक्षरप्रासभूताक्षराणां दशानामष्टावावृत्तयः शेषभूत चतुष्टयाक्षराणां सप्तावृत्तयश्चैवं क्रमेणैकैकघटिकाक्रमेण पञ्चभूतात्मकवर्णात्मिका भवतीति ॥ २८ ॥

संख्याभिरित्यादिभिरीश्वरीत्यन्तैश्चतुर्भिः श्लोकैः प्रस्तावादिपुरःसरमहोरात्रादि श्वासानां प्रोक्तसंख्यानां कालनित्यादिश्रीचक्रस्थशक्त्यन्तानामेकादशविधानामप्यवान्तरव्याप्तिं समव्याप्तिं तदनुसन्धानवैभवञ्चोपदिशति । तत्र संख्याभिः श्वासानामित्युत्तरत्रान्वयः । वासनाव्याप्तिं वासनाञ्च व्याप्तिं च वासनात्मिकाव्याप्तिमित्यर्थः । वक्ष्यमाणानामेकादशविधानामिति शेषः । सुन्दरीति देवीसम्बुद्धिः । यया व्याप्त्या नित्यातद्दशाप्तिविद्यानां पञ्चविंशपटलप्रोक्तसंख्यानां पूर्व्वमहोरात्र-श्वाससंख्यानां मध्ये एकशः प्रतिविद्यमेकैकश्वास इत्यर्थः । ततः पूर्वोक्तश्वास-

(१) भजनवान् ।

नित्याविद्याप्तितत्त्वानां संख्याः स्युः पूर्वमेकशः ।
ततो दिनार्णाः सन्ध्याः स्युस्ततश्च घटिकार्णकाः ॥ ३० ॥
राशयो द्वादश ततो ग्रहा भूतानि पञ्च वै ।
मातृकाश्चापि पञ्चाशच्छ्रीचक्रस्याश्च शक्तयः ॥ ३१ ॥

संख्यायाः परमित्यर्थः । दिनार्णाः पूर्णमण्डलार्णाः । सन्ध्याः सन्ध्यात्रयप्राप्तैकषष्टिसंख्याः । पूर्णमण्डलश्वाससंख्यायाः परमिति शेषः । ततस्तत्संख्यायाः परं । घटिकार्णकाः षष्टिसंख्या इति शेषः । द्वादशराशयो घटिकार्णसंख्यायाः परमिति शेषः । ततः राशिसंख्यातः । ग्रहाः नव भूतानि पञ्चसंख्यातः । मातृका भूतसंख्यातः परमिति शेषः । पञ्चाशद्विसर्जनीयविधुरा वर्णा इति शेषः । शक्तयः मातृकासंख्यातः परमिति शेषः । सैका नवतयः आयुधाष्टकस्य मिथुनचतुष्टयत्वेन गृह्यमाणत्वान्मध्यदेवताविधुरत्वाच्च । देवी ललिता सर्वात्मना श्वाससमष्टिरूपेण । एतदुक्तं भवति अहोरात्रात्मकानां षट्शतोत्तरैकविंशतिसहस्रसंख्यानामादितः कालनित्यारूपाः षट्त्रिंशदधिकसप्तशतोत्तरविंशतिसहस्रसंख्याः श्वासा भवन्ति । तच्छिष्टेषु चतुःषष्ट्यधिकाष्टशतसंख्येषु श्वासेषु षट्सप्तत्यधिकपञ्चशतसंख्यश्वासाः पूर्णमण्डलवर्णरूपा भवन्ति । तच्छिष्टेष्वष्टाशीत्यधिकद्विशतसंख्येषु श्वासेषु सन्ध्यात्रयरूपनाथतत्त्वनित्यात्मकरूपा एकषष्टिश्वासा भवन्ति । तच्छिष्टसप्तविंशत्यधिकद्विशतश्वासेषु षष्टिश्वासा अहोरात्रषष्टिकाक्षररूपा भवन्ति । तच्छिष्टेषु सप्तषष्ट्यधिकशतश्वासेषु द्वादश श्वासा द्वादश राश्यात्मका भवन्ति । तच्छिष्टेषु पञ्चपञ्चाशदुत्तरशतश्वासेषु नवश्वासा नवग्रहात्मका भवन्ति । तच्छिष्टेषु षट्चत्वारिंशदधिकशतश्वासेषु पञ्चश्वासाः पञ्चभूतात्मका भवन्ति । तच्छिष्टेष्वेकचत्वारिंशदुत्तरशतश्वासेषु पञ्चाशच्छ्वासाः विसर्जनीयरहिता मातृकाक्षरात्मका भवन्ति । तच्छिष्टा एकनवतिसंख्य श्वासाः प्रोक्तक्रमसंख्यश्रीचक्रस्य शक्तिरूपा भवन्ति । एवं क्रमेणाहोरात्रात्मकश्वासाः समष्टिरूपा (१) परिच्छिन्नविग्रहविश्वरूपा ललितात्मका भवन्ति । अत्र पूज्यपादमुखादवगतोऽर्थस्तदाज्ञया लिख्यते यथा—अहोरात्रोक्तसंख्याः श्वासाः पञ्चाशदक्षरात्मिकाया मातृकाया द्वात्रिंशदधिकचतुःशतावृत्त्या तदात्मका भवन्ति । ते

(१) सप्तषष्टिरूपा ।

सैका नवतयः प्रोक्ता देवी सर्व्वात्मना स्थिता ।
एवं विद्यां वासनां यो भावयेत् परमेश्वरि ॥ ३२ ॥
नाड़ीचक्रञ्च मर्म्माणि देहान्तर्म्मरुतां क्रियाम् ।
योगाभ्यासं तदङ्गैश्च स्वेच्छोत्क्रान्तिविधानकम् ॥ ३३ ॥
परकायप्रवेशञ्च योगसिद्धस्य लक्षणम् ।
आसन्नमृत्युचिह्नानि कथयामि यथाक्रमम् ॥ ३४ ॥
प्राक्प्रोक्तमूलाधारस्य मध्यगा त्वास्यमध्यतः ।
सुषुम्ना पृष्ठवंशाख्यवीणादण्डस्य मध्यगा ॥ ३५ ॥
मूलाद्विब्रह्मरन्ध्रान्ता नासाग्राद्द्वादशाङ्गुले
तदग्रात् पायुगा प्रोक्तालम्बुषाख्या तु नाड़िका ॥ ३६ ॥

---

पुनरपि विंशत्युत्तरशतत्रयाधिकचतुःसहस्रपरिवृत्तितः पञ्चभूतात्मका भवन्ति। पुनरपि ते नवनाथश्रीचक्रग्रहाणां चतुःशतोत्तरद्विसहस्रावृत्त्या तत्तदात्मका भवन्ति। ते पुनरपि षट्त्रिंशत्तत्त्वानां षट्शतावृत्त्या तदात्मका भवन्ति। ते पुनरपि षोड़शनित्यात्मकस्वराणां पञ्चाशदुत्तरशतत्रयाधिकसहस्रसंख्यावृत्त्या तदात्मका भवन्ति। ते पुनरपि षष्टिघटिकाक्षराणां षष्ट्युत्तरत्रिशतावृत्त्या तदात्मका भवन्ति। ते पुनरपि द्वादशराशीनां अष्टशतोत्तरसहस्रावृत्त्या तदात्मका भवन्ति। ते पुनरपि श्रीचक्रस्थानां षण्णवतिशक्तीनां पञ्चविंशत्युत्तरशतद्वयावृत्त्या तदात्मका भवन्तीति। अत्रान्यद्रहस्यं पूज्यपादमुखादवगन्तव्यम् ॥ ३२ ॥

नाड़ीत्यादिना यथाक्रममित्यन्तेन श्लोकद्वयेन पटलशेषार्थानुपदिशति। तत्र मर्माणि स्थानानीति शेषः। स्वेच्छोत्क्रान्तिर्नाम स्वेच्छया प्राणपरित्यागः। परकायप्रवेशं मृतशरीरे स्वजीवप्रवेशनं तस्मात् स्वशरीरे तत्प्रवेशनं वा ॥ ३४ ॥

प्रागित्यादिभिः परैत्यन्तैर्दशभिः श्लोकैर्नाड़ीचक्रस्वरूपं तत्र कुण्डलिनीस्थितिश्चोपदिशति। तत्र प्राक्प्रोक्तमूलाधारस्य नित्यानित्यापटलप्रोक्तस्य। मध्यगा मणौ सूत्रवन्मध्यरन्ध्रस्यूतेत्यर्थः। ब्रह्मरन्ध्रान्ता ब्रह्मरन्ध्रावसाना सुषुम्नेति पूर्व्व-

त्र्यस्राग्रादुत्थिता नाड़ी कुहूर्नाम ध्वजान्तिका ।
तद्वामदक्षपार्श्वाभ्यां सविश्वोदरवारणे ॥ ३७ ॥
जठरान्ता सर्वगा च प्रोक्ते तद्वदनन्तरे ।
हस्तिजिह्वायशस्विन्यौ तत्तदङ्गुष्ठगे पदोः ॥ ३८ ॥
तथैवेड़ापिङ्गले च नासारन्ध्रद्वयान्तगे ।
गान्धारी च तथा पूषा नेत्रद्वयगते क्रमात् ॥ ३९ ॥
तथा कर्णगते शङ्खपयस्विन्यौ क्रमेण वै ।
सरस्वती तु या नाड़ी सा तु जिह्वाग्रगामिनी ॥ ४० ॥
एवं चतुर्द्दश प्रोक्ता नाड्यो देहे प्रधानकाः ।
तासां सन्धिषु तत्सन्धिष्वेवं नाड्यः स्थितास्ततौ ॥ ४१ ॥

---

त्वान्वयः । नासाग्रात् द्वादशाङ्गुले नासाग्रमारभ्य द्वादशाङ्गुलमानावधिके स्थाने ब्रह्मरन्ध्रमित्यर्थः । तदग्रात् सुषुम्नारम्भपुरोभागस्थानमारभ्य पायुगा गुदरन्ध्रावसाना । त्र्यस्राग्रात् मूलाधाररूपत्र्यस्राग्रकोणात् ध्वजान्तिका मेहनपर्य्यवसाना । तद्वामदक्षपार्श्वाभ्यां कुहूसंज्ञिकाया नाड्या इति शेषः । जठरान्ता विश्वोदरा जठरमध्यान्ता सर्व्वगा अधश्चोर्द्ध्वप्रसृता सर्व्वगा वारणा । प्रोक्ते इत्यस्य विश्वोदरवारणेति पूर्व्वत्वान्वय । तद्वदनन्तरे तदनन्तरवामदक्षस्थिते । तत्तदङ्गुष्ठगे पदोः वामदक्षयोः पादयोस्तत्तदङ्गुष्ठावसानके भवत इत्यर्थः । तथैव तदनन्तर वामदक्षपार्श्वारम्भतः नासारन्ध्रद्वयान्तगे । एतदुक्तं भवति मूलाधारत्र्यस्रमध्यस्थसुषुम्नाया वामपार्श्वमारभ्य प्रोत्थितवक्राकारा ध्वजमूले सुषुम्नाश्लेषतो दक्षिणभागं गत्वा पुनस्तत्रापि वक्रगत्या नाभिप्रदेशे पुनरपि सुषुम्नाश्लेषतो वामभागवक्रगत्या हृदये भूयोऽपि सुषुम्नाश्लेषदक्षिणभागाष्टकाश्रयवक्रगत्या कण्ठदेशे पुनरपि सुषुम्नाश्लेषतो वामांशजत्रुमध्योर्द्ध्ववक्रगत्या ब्रह्मरन्ध्रप्रदेशे पुनरपि सुषुम्नाग्राश्लेषतो दक्षिणवक्रगत्याधोमुखा सुषुम्ना भ्रूमध्यप्रदेशे सुषुम्नाश्लेषतो वामनासारन्ध्रपर्य्यवशायिनी इड़ासंज्ञा नाड़ी भवति । पिङ्गला तु प्राग्वद्दक्षिणभागारम्भा दक्षिणवामदक्षिणवामविनिमयक्रमवक्रगत्या सुषुम्नोर्द्ध्वाश्लेषपर्व्व-

तासां प्रधाननाड़ीनां संख्या सार्द्धत्रिलक्षकम् ।
अप्रधानाः शिरा देहे त्वसंख्या याभिरेव वै ॥ ४२ ॥
वेष्टितैर्य्यैर्नरः सर्वैः स्वकीयैरक्षया निशम् ।
नाड्यः सुषिरा रक्तमरुत्पूर्णाश्च सर्व्वगाः ॥ ४३ ॥
सुषुम्नामध्यगा वज्रा नाड़ी तन्मध्यगा परा ।
चित्राभिधाना तन्मध्ये स्थिता सा कुण्डली परा ॥ ४४ ॥

मर्म्ममध्यगा दक्षिणनासिकान्ता च भवतीति। तथा अनन्तरवामदक्षिणारम्भतः नेत्रद्वयगते तत्तन्नेत्रद्वयपर्य्यवसिते तथा तदनन्तरवामारम्भतः कर्णगते तत्तत् कर्णपर्य्यवसिते। सरस्वती पूर्वोक्तनाड़ीद्वयावशिष्टमध्यस्था नासारम्भतः जिह्वाग्रगामिनी जिह्वाग्रपर्य्यवसिता॥ तासां चतुर्द्दशानां तत्सन्धिषु प्रधाननाड़ीनां सन्धिषु। तासां प्रधानचतुर्द्दशनाड़ीसन्ध्यारम्भानां (१) तत्सन्ध्याख्यानाञ्च सार्द्धत्रिलक्षकं पञ्चाशत्सहस्राधिकत्रिलक्षमित्यर्थः। याभिः प्रधानाभिः अप्रधानाभिश्च। नाड्यो नाड़िकाः प्रोक्तास्ताः सर्व्वाः सुषिराः रन्ध्रवत्यः। सुषुम्नामध्यगा सुषुम्नामध्यरन्ध्रान्तरालगता। तन्मध्यगा वज्रानाड़ीरन्ध्रान्तरालगता। तन्मध्ये स्थिता चित्रानाड्यन्तःस्थिता सा त्रिंशे पटले चतुःषष्टितमश्लोकादिभिः षड्भिः श्लोकैर्वक्ष्यमाणरूपा। भूमौ त्रिकोणमालिख्य तद्बहिस्त्र्यङ्गुले च त्रिकोणं लिखित्वा तयोर्मध्ये तिर्य्यक् द्वादशरेखा विलिख्य सर्व्वमध्ये सुषुम्नाया आद्यक्षरं तस्याधोभागे अलम्बुषाया आद्यक्षरं तत्पूर्व्वभागे त्र्यस्रयोर्मध्यकोष्ठे कुह्वा आद्यक्षरं एवं प्रादक्षिण्येन कोष्ठान्तरालेषु च नाड़ीनामाद्यक्षराणि वायुपो पूषशं संज्ञां द्वहयि वापपि पूयसाशङ्गं पूर्वोक्तैः सह चतुर्दशाक्षराणि लिखित्वा प्रदर्शयेदिति सम्प्रदायः। अत्र संग्रहश्लोकास्त्रयो लिख्यन्ते।

सुषुम्नालम्बुषामध्ये कुहू चारणसंज्ञिका।
पयस्विनी पिङ्गला तु सुषुम्ना सुयशस्विनी॥
सरस्वती शङ्खिनी च गान्धारीड़ा द्विपास्यगा।
विश्वोदरेति नाद्यः स्युरयं तासां स्थितिक्रमः॥
रन्ध्रपायुध्वजाग्रेषपन्नासानेत्रकर्णगाः।
जिह्वाकर्णाक्षिनासाङ्घ्रि जठरान्ताः प्रदक्षिणात्॥ इति॥ ४४॥

(१) नाड़ीसंख्यारम्भाणा इति, नाड़ी सन्ध्यवस्थानाम् इति च पाठान्तरम्॥

मर्म्माण्यङ्गुष्ठगुल्फाङ्घ्रिपृष्ठजङ्घाख्यजानुषु ।
ऊरुसीवनिकामुष्कमेढ्रनाभिषु पार्श्वयोः ॥ ४५ ॥
हृदयस्तनकण्ठांसकृकाटीकर्णमूर्द्धसु ।
शङ्खयोः फालगुनासादिमध्यान्तास्यकपोलतः ॥ ४६ ॥
अष्टत्रिंशदिति प्रोक्तान्येषु वायोस्तु धारणात् ।
परकायप्रवेशश्च स्वेच्छोत्क्रान्तिश्च सिध्यति ॥ ४७ ॥
दशानामपि वायूनां देहस्थानां क्रियाः शृणु ।
ऊर्द्ध्वाधोगमनासक्तौ प्राणापानौ सदा तनौ ॥ ४८ ॥
नाग उद्गारकृत् प्रोक्तः क्षुत्कृत् कृकरकस्तथा ।
देवदत्तो जृम्भणकृत् रवकृच्च धनञ्जयः ॥ ४९ ॥
कूर्म्म उन्मेषकृत् प्रोक्त उदानोऽपि तथा हिक्कृत् ।
समानवायुः कायाग्निं सन्धुक्षयति पाचितुम् ॥ ५० ॥
व्यानाख्यो रसमादाय व्यापयेदखिलां तनुम् ।
एषां दशानामंशास्तु मरुतां स्युरनन्तकाः ॥ ५१ ॥

---

मर्माणीत्यादिभिः सिध्यतीत्यन्तैस्त्रिभिः श्लोकैरष्टत्रिंशत्मर्मस्थानानि तेषु वायुधारणफलं चोपदिशति। तत्र सीवनिका मुष्कपायुरन्ध्रयोर्मध्यगता नाड़ी कृकाटी कर्णोपरिभागस्थोन्नतास्थिपार्श्वप्रदेशः। शङ्खयोः भालपार्श्वोन्नतास्थ्नोः। कपोलतः कपोलेषु अष्टत्रिंशत् एतेष्वष्टत्रिंशन्मर्मसु द्वन्द्वस्थानानि षड़्विंशति। शेषस्थानानि द्वादश सम्भूयाष्टत्रिंशन्मर्माणि। एषु मर्मसु ॥ ४७॥

दशानामित्यादिभिः कल्प्यते इत्यन्तैः पञ्चभिः श्लोकैस्तत्प्रस्तावपुरःसरं देहस्थानां दशानां वायूनां नामानि तत्क्रियास्तदनुभावश्चोपदिशति। तत्र ऊर्द्ध्वाधोगमनासक्तौ परस्परं शृङ्खलावत् बद्धस्वरूपाविककाले ईर्षयेति शेषः। प्राणापानौ प्राणापानाख्यौ। नाग इति वायुनाम कृकर इति च देवदत्तो धनञ्जयश्चेति। कूर्म्म इति वायुनाम। उदान इति हिक्कृत् उन्मेषनिमेषकृत्। समान-

तेषां प्रसाराद्देहस्य समीचीना स्थितिर्भवेत् ।
वैलोम्ये विकृताङ्गत्वाल्लोकैर्नाशाय कल्पते ॥ ५२ ॥
जीवात्माभेदरूपेण मनसा परमात्मनः ।
योगो योगस्तु विज्ञेयस्तस्याङ्गानि तथाष्ट वै ॥ ५३ ॥
यमोथ नियमः पश्चादासनं तदनन्तरम् ।
प्राणायामस्तथा प्रत्याहारस्तदनु धारणम् ॥ ५४ ॥
ध्यानं समाधिरित्युक्तान्यष्टाङ्गानि यथाक्रमात् ।
कथयामि शृणु प्राज्ञे यैर्मर्त्त्यो मत्समो भवेत् ॥ ५५ ॥
तत्प्रत्यूहाः षडाख्याताः कामक्रोधौ ततस्तथा ।
लोभमोहौ मानमदौ वह्निवत् सर्वनाशकाः ॥ ५६ ॥

---

वायुः समानाख्योवायुः । कायाग्निं जठराग्निं ग्रहण्यधःस्थं इत्यर्थः । पाचितुं भुक्ताहारं । व्यानाख्यः वायुरिति शेषः । रसं भुक्ताहारस्येति शेषः । अंशाः सम्भवाः । प्रसारात् यथावत् संचारानुकूल्येन । वैलोम्ये अयथातथा सञ्चारप्रातिकूल्ये: विकृताङ्गत्वात् अहितादिभिः ॥ ५२ ॥

जीवात्मेत्यादिना श्लोकेन योगनिर्वचनोपदेशं तदङ्गप्रस्तावञ्च करोति। तत्र जीवात्माभेदरूपेण एतदेकं पदं मनसा सहेति शेषः। परमात्मनः सद्भावस्फुरत्तारूपस्य चित इत्यर्थः। योगः तादात्म्यसम्बन्धः। तस्य योगस्य। एतदुक्तं भवति भेदरूपवत् प्रतीयमानानां जीवमनःपरमात्मनां इदन्ताविलयनरूपमैक्यं योग इति ॥ ५३ ॥

यमेत्यादिना भवेदित्यन्तेन श्लोकद्वयेन योगस्याष्टाङ्गनामानि तत्स्वरूपप्रस्तावं तदनुभावञ्चोपदिशति। तत्र तथा समुच्चये। अष्टाङ्गानीत्यस्य काकाक्षिवदुक्तानीति पूर्व्वेत्र कथयामीत्युत्तरत्रान्वयः। कथयामि स्वरूपत इति शेषः। यैः अष्टाङ्गस्वरूपैः। मत्समः मन्मयः शिवरूपः ॥ ५५ ॥

तत्प्रत्यूहेत्यादिना यमइत्यन्तेनाध्यर्द्धेन श्लोकेन प्रत्यूहान् यमस्वरूपञ्चोपदिशति। तत्र तत्प्रत्यूहाः योगप्रत्यूहाः। सर्व्वनाशकाः स्वरूपलाभप्रत्यूहरूपत्वात्। आत्मापरोक्षप्रत्यूहकर्मणस्तु यमो यमः। स्वरूपापरोक्षप्रत्यूहभूतानां प्रोक्तानां कामादीनां षण्णां उद्योगेभ्य उपरमणं यमः यमाख्यमङ्गम् ॥ ५६ ॥

आत्मापरोक्षप्रत्यूहकर्म्मणस्तु यमो यमः ।
तथैकादशरूपः स्यान्नियमः परिकीर्त्तितः ॥ ५७ ॥
अहिंसा सत्यमास्तिक्यमार्जवं समता धृतिः ।
क्षमा दया त्रिधाशौचं सन्तोषो गुरुसेवनम् ॥ ५८ ॥
पद्मस्वस्तिकवीराख्यभद्राण्युक्तानि वै क्रमात् ।
आसनानि मनःस्थैर्य्यकरणे साधकानि वै ॥ ५९ ॥
ऊर्वोरुपरि विन्यस्य व्यत्यासात् पादयोस्तले ।
बाह्यपार्श्वद्वयस्पर्शात्तत् पद्मासनमीरितम् ॥ ६० ॥
तथा तयोरधोभागतदन्तः पार्श्वसङ्गमात् ।
स्वस्तिकाकारतः प्रोक्तं तद्भद्रासनमीश्वरि ॥ ६१ ॥

---

तथैकादशेत्यादिना सेवनमित्यन्तेनार्द्धाद्येन एकश्लोकेनैकादशविधनियमस्वरूपमुपदिशति। तत्र तथा यथा यमः तथा नियमः नियमाख्यमङ्गं। समता लाभहान्योः। त्रिधा शौचं मनोवाक्कायरूपतः। सन्तोषः पूर्णता ॥५८॥

पद्मेत्यादिभिः स्मृतमित्यन्तैश्चतुर्भिः श्लोकैर्नामपुरःसरमष्टविधान्यासनस्वरूपाण्युपदिशति। तत्र मनस्थैर्य्यकरणे योगाभ्यास इति शेषः। साधकानि उपकारकानि। ऊर्वोरुपरीत्यादिना श्लोकेनैतदुक्तं भवति वामपादतलकनिष्ठासम्बन्धिपार्श्वस्य दक्षिणोरुमध्योपरि दक्षिणपादतलकनिष्ठासम्बन्धिपार्श्वस्य वामजङ्घोपर्य्याक्रमणेन वामोरुमध्योपरि चैवं व्यत्यासक्रमात् विन्यासेन वामजङ्घाया दक्षिणजङ्घोपर्य्याक्रमणेन च पूर्व्ववद्विन्यासाद्द्विविधं पद्मासनं भवतीति। तथा द्विविधव्यत्यासक्रमात्। तयोरूर्वोः तदन्तःपार्श्वसङ्गमात्। एतदुक्तं भवति वामपादतलाङ्गुष्ठसम्बन्धिदक्षिणोरोरधोभागस्य दक्षिणपादतलाङ्गुष्ठसम्बन्धिपार्श्वोपरि वामोरोरधोभागस्य च प्राग्वत् व्यत्यासविन्यासात् पुनः पूर्व्ववत् जङ्घाद्वयोपर्य्यन्योन्याक्रमणविन्यासात् च पादतलद्वयाङ्गुष्ठसम्बन्धिपार्श्वान्योन्याक्रमेण विन्यासाच्च द्विविधं स्वस्तिकासनं भवतीति। तलान्त इत्यादिना श्लोकेनै-तदुक्तं भवति एकं पादमूर्वोरन्यतमस्याधोभागे स्वतलाङ्गुष्ठसम्बन्धिपार्श्वेन सङ्गतं कुर्य्यात्। पुनश्च वामदक्षिणव्यत्यासेनैव कुर्य्यात्। तेनैतद्द्विविधं भद्रासनं

तलान्तः पार्श्वगं कुर्य्यादेकमन्यन्तु वाह्यगम् ।
ऊर्वोरधस्तयोर्द्धे च द्विधा भद्रासनं स्मृतम् ॥ ६२ ॥
व्यत्यस्ततलयोरूर्द्धसंस्पर्शादुच्चजङ्घयोः ।
पादयोर्जानुदेशे वै वीराख्यं योगपट्टतः ॥ ६३ ॥
प्राणायामस्त्रिधा प्रोक्त उत्तमाधममध्यमाः ।
लाघवो भूतलत्याग उत्तमे चित्तनिर्वृतिः ॥ ६४ ॥
सर्व्वाङ्गे स्वेदसंवृद्धिरधमे मध्यमे तथा ।
सर्व्वाङ्गकम्पनं प्रोक्तमभ्यासात् कालसंयुतात् ॥ ६५ ॥
तेप्युत्तमगुणा भूयुरभ्यासात् कालयोगतः ।
तस्मात् समभ्यसेत् प्रातः सायञ्च नियमेन वै ॥ ६६ ॥
वामेन नासारन्ध्रेण पूरयेदमृतात्मना ।
स्मरन्नम्बु मरुत् पश्चाद्दक्षिणेनापसारयेत् ॥ ६७ ॥

---

भवतीति। सम्भूयाष्टावासनानि। अत्र ·द्विधेत्युक्त्या सर्वासनद्वैविध्यमिति सम्प्रदायः ॥ ६२ ॥

व्यत्यस्तेत्यादिना श्लोकेनैतदुक्तं भवति जङ्घोर्द्धसंस्पर्शादूर्द्धभूतं जङ्घयोर्व्यत्यस्ततलकनिष्ठासम्बन्धिपार्श्वाक्रान्तभूतलयोः पादयोर्जानुदेशे स्वान्तराधिमध्ये च योगपट्टवन्धनाज्जान्वोरुपरि प्रसारितवाहुदण्डप्रकोष्ठविन्यासात् पुनःप्राग्वज्जङ्घाद्वयवाह्याभ्यन्तरस्पर्शविन्यासभेदाच्च द्विविधं वीरासनं भवतीति ॥ ६३ ॥

प्राणायामेत्यादिभिस्तुरीयत इत्यन्तैः पञ्चभिः श्लोकैः प्राणायामभेदांस्तद्ध्यानं तस्य स्वरूपञ्चोपदिशति। तत्र लाघवः देहस्येति शेषः। भूतलत्यागः तूलाघटयोरेकैकस्यां पूर्वतः स्वसमानप्रमाणानि वस्तूनि निक्षिप्यान्यस्यां स्थित्वा प्राणायामेण स्वघटोन्नतिरिति सम्प्रदायार्थः। उत्तमे प्राणायामे इति शेषः। अधमे प्राणायामे मध्यमे प्राणायामे इति शेषः। अभ्यासात् कालसंयुतात् चिरकालकृतादभ्यासादित्यर्थः। उत्तममध्यमाधमाः, भूयुरिति

एवं सुसाधिते पश्चाद्द्वाविंशन्मात्रयाहरेत् ।
धारयेत्तच्चतुःषष्ठ्या रेचयेत्तत्तुरीयतः ॥ ६८ ॥
कम्पश्च पुलकानन्दौ वैमल्यस्थैर्य्यलाघवाः ।
तद्वत् कान्तिप्रकाशौ च योगसिद्धस्य लक्षणम् ॥ ६९ ॥
मूलाधारे मनः कृत्वा वायुनापूर्य्य मूलतः ।
नाड़ीचक्रान्तरं नीत्वा सर्व्वाङ्गानि च चारयेत् ॥ ७० ॥
एवं संसाधिते वायावष्टविंशत्सु मर्म्मसु ।
धारयन् वारयेदिच्छावशेनाङ्गानि सर्वतः ॥ ७१ ॥
तथाधारगतं कृत्वा मनः पवनसंयुतम् ।
रसाम्बुदाहव्याप्तस्वैः सहंसैर्व्यापयेत्तनुम् ॥ ७२ ॥

---

दिव्यत्वात् भूयासुरित्यर्थः । समभ्यसेत् प्राणायामान् । अम्बु वकारं मरुद्दिव्यत्वान्मरुतमित्यर्थः । अस्यार्थद्वयं विद्यते एकदा यकाराक्षरं स्वरन्निति पूर्व्वेणान्वयः । अन्यदा श्वासं अपसारयेदित्युत्तरेणान्वयः । रेचयेदित्यर्थः । मात्रा नाम स्वाङ्गुलीस्फोटाष्टककालः । चतुःषष्ठ्या मात्राभिरिति शेषः । तुरीयतः षोड़शमात्राभिः ॥ ६८ ॥

कम्प इत्यादिना श्लोकेन योगसिद्धलक्षणमुपदिशति । वैमल्यस्थैर्य्यलाघवाः वैमल्यं मनोविषयं स्थैर्य्यलाघवे देहविषये । प्रकाश इति स्वतेजसो वहिः प्रकाशनं वीजादिवत् ॥ ६९ ॥

मूलाधारेत्यादिना श्लोकेन प्रत्याहारस्वरूपमुपदिशति । तत्र मूलतः मूलाधारात् ॥ ७० ॥

एवमित्यादिना श्लोकेन धारणस्वरूपमुपदिशति । तत्र चारयेत् वायुमिति शेषः । इच्छावशेन स्वाभिमताङ्गधारणवशेन ॥ ७१ ॥

तथेत्यादिभिर्व्रजेदित्यन्तैर्नवभिः श्लोकैर्धारणासिद्धिफलानि समाधिस्वरूपसहितान्युपदिशति । तत्र तथेत्यादिना भुवीत्यन्तेन श्लोकद्वयेन समाधिना त्रिकालज्ञानादिसिद्ध्युपायमुपदिशति । तथा प्राग्वत् । रसाम्बुदाहव्याप्तस्वैः सहंसैः लकारवकाररेफयकारहकारैः प्रत्यक्षरं विन्दुसहितैः सहेति शेषः ।

एवं तैरचरैर्देहे वायुना तन्मयीकृते ।
त्रिकालज्ञो विशुद्धात्मा सुखी जीवेच्चिरं भुवि ॥ ७३ ॥
स्वेच्छाचारी व्योमगश्च व्रजेद्देवैश्च सङ्गमम् ।
स्वेच्छया देहमध्यस्थः कुड्मगृहगतो यथा ॥ ७४ ॥
एवं संसिद्धयोगस्तु स्वेच्छया देहमात्मनः ।
प्राणानाकृष्य मध्यस्थसुषुम्नारन्ध्रतस्तथा ॥ ७५ ॥
ब्रह्मरन्ध्राद्विनिर्गत्य भूयात् सर्व्वात्मनात्मवान् ।
अथवोत्तरसंप्रोक्तचूर्णास्वादनतो वशी ॥ ७६ ॥
विरक्तचित्तः स्वं देहं तेनोपायेन सन्त्यजेत् ।
स्वेच्छोत्क्रान्तिरिति प्रोक्ता योगयुक्तात्मनां प्रिये ॥ ७७ ॥

---

व्यापयेत् पवनमिति शेषः। तन्मयीकृते ध्यातृध्यानध्येयविभेदसमाधिना तत्तद्भूतमयीकृते। एतदुक्तं भवति प्रागुक्तमूलाधारे मनः संयोज्य तत्र वायुं सन्धार्य्य प्रोक्तैर्भूताचरैः पञ्चभिः सह तं पवनं सर्व्वदेहव्यापनेन स्वदेहे तत्तद्भूतमयीकृते प्रोक्तफलसिद्धिरिति ॥ ७३ ॥

स्वेच्छेत्यादिना श्लोकेनाकाशगमनादिसिद्ध्युपायमुपदिशति। तत्र स्वेच्छाचारी अव्याहतगतिर्गृहगतो यथा गृहगतपुरुषवत् शरीरव्यासङ्गरहितः ॥७४॥

एवमित्यादिभिः प्रिये इत्यन्तैस्त्रिभिः श्लोकैः स्वेच्छोत्क्रान्त्युपायद्वयमुपदिशति। तत्र देहं संत्यजेदिति शेषः। प्राणान् श्वासान् मध्यस्थसुषुम्नारन्ध्रतः नाड़ीचक्रस्येति शेषः। तथा प्रागुक्तवत्। सर्वात्मनात्मवान् देहपरिच्छेदं संत्यज्यापरिच्छिन्नबहुरूपवान्। अथवा पक्षान्तरे। उत्तरसंप्रोक्तचूर्णास्वादनतः उत्तरत्र चतुस्त्रिंशपटले उग्रेत्याद्यात्मवानित्यन्तश्लोकत्रयप्रोक्तचूर्णास्वादनतः तेन चूर्णास्वादनरूपेण। एतदुक्तं भवति पूर्वावस्थानचारितान् प्राणान् मनसा सुषुम्नारन्ध्रमार्गेण निःशेषमाकृष्य ब्रह्मरन्ध्रात् विनिर्गमय्य वक्ष्यमाणचूर्णास्वादनसंजातानुसन्धानेन वानवच्छिन्नस्वरूपो भवतीति ॥ ७७ ॥

परकायप्रवेशन्तु वक्ष्ये देवि महाद्भुतम् ।
कलौ दुःशाटकं प्रायो मर्त्त्यै सिद्धिरपीश्वरि ॥ ७८ ॥
अक्लेशतः परित्यज्य प्राणान् स्वकतनुं तथा ।
परिपूर्णाङ्गसंयुक्तामग्रतो वीक्ष्य योगतः ॥ ७९ ॥
प्रविशेत्तत्तनुं प्राणप्रतिष्ठोक्तविधानतः ।
स्वां तनुं गोपयेत् स्वीयैस्ततस्ताञ्च तथा व्रजेत् ॥ ८० ॥
सिद्धस्य लक्षणान्यष्टौ योगाभ्यासेन सर्वदा ।
शृणु तानि महादेवि यैरन्यैर्जायते गुणैः ॥ ८१ ॥
द्वन्द्वहानिः सुखावाप्तिरारोग्यं वश्यवृत्तिता ।
जितेन्द्रियत्वमक्रोधः कृपया जनगोपिता ॥ ८२ ॥
आसन्नमृत्योश्चिह्नानि कथयामि शृणु प्रिये ।
यैः साध्यसाधकौ ज्ञात्वा देहत्यागमतन्द्रितौ ॥ ८३ ॥
देवतास्वात्मभजनपरौ स्यातां ततस्तु तौ ।
सुगतिं प्राप्य सिद्धौ तु भवतो जातमात्रतः ॥ ८४ ॥

---

परकायेत्यादिभिर्व्रजेदित्यन्तैस्त्रिभिः श्लोकैः प्रस्तावपुरःसरं परकायप्रवेशनं तस्माद्भूयोऽपि स्वकायप्रवेशञ्चोपदिशति । तत्र दुःशाटकं दुष्करं परकायप्रवेशमिति पूर्व्वत्रान्वयः । अक्लेशतः क्रूरव्याध्यादिभिः कृतक्लेशाभावेन । योगतः प्रविशेदित्युत्तरत्रान्वयः । प्राणप्रतिष्ठोक्तविधानतः दूतीनित्यापटले इति शेषः । स्वीयैः स्निग्धैः पुरुषैरिति शेषः । ततः तस्मात् प्रतिष्ठान्यशरीरात्तां स्वतनुं । तथा प्राग्वत् प्राणप्रतिष्ठाविधिना ॥ ८० ॥

सिद्धस्येत्यादिना शोचितेत्यन्तेन श्लोकद्वयेन प्रस्तावसंख्यापुरःसरं योगसिद्धलक्षणान्युपदिशति । तत्र तानि लक्षणानि । गुणैः लक्षणैरित्यर्थः । द्वन्द्वहानिः शीतोष्णसुखदुःखादिविकारहानिः । सुखावाप्तिः स्वरूपानुसन्धानेन ॥८२॥

आसन्नेत्यादिभिर्भवेदित्यन्तैरष्टादशभिः श्लोकैः प्रस्तावज्ञानफलपुरःसरमासन्नमृत्युचिह्नान्युपदिशति । तत्र आसन्नमृत्योः पुरुषस्य । यैः चिह्नैः । तौ साध्य-

अकारणं निजां पूर्वां विमुच्य प्रकृतिं नरः।
समाश्रयेत्ततस्त्वब्दान्मृतिस्तस्य सुनिश्चितम्॥ ८५॥
अरुन्धतीं ध्रुवं व्योम्नि नेक्षते च तदर्द्धतः।
दृशौ नासान्तिकाक्रान्त्या चन्द्रके योङ्गयोर्न चेत्॥ ८६॥
विलोकयति तस्यार्द्धान्मृतिमेति सुनिश्चितम्।
गुल्फाधः स्फुरणं नाड्योः पादयोश्चेन्न जायते॥ ८७॥
तस्याशु नाशो गदितो भानौ रुण्डं च पश्यतः।
निरुद्धकर्णरन्ध्रस्य न चेत् कुण्डलिनीध्वनिः॥ ८८॥
धूमो वा दृश्यते मूर्द्ध्नि गृहच्छेत्रादितोऽपि वा।
मूर्द्ध्निगा विहगा लीनाः परासुं तं न को वदेत्॥ ८९॥
पश्चात्कृतार्को गण्डूषे न पश्येच्छक्रचापकम्।
सद्यः परासुमात्मानं जानीयात् सर्वथा नरः॥ ९०॥
स्वमस्तककरः पश्येत् प्रकोष्ठं स्थूलमात्मनः।
आगुल्फोरन्तराष्टभ्या पश्यन्नातो विनश्यति। ९१॥

---

साधकौ। सुगतिमित्यस्य जातमात्रत इत्यस्य चार्थौ गुरुमुखादवगन्तव्यः। पूर्वां सौम्यां क्रूरां वा समाश्रयेत् पूर्व्वविपरीतामिति शेषः। ततः समाश्रयतः। ध्रुवं नक्षत्ररूपं। तदर्द्धतः षण्मासतः। नासान्तिकाक्रान्त्या नासान्तिकयोरङ्गुलिद्वयाक्रान्त्या। चन्द्रके मयूरविम्बमध्यस्थचन्द्रकरूपे ज्योतिषी। न चेदित्यस्य विलोकयति इत्युत्तरत्रान्वयः विलोकयतीत्यस्य चन्द्रके इति पूर्व्वत्रान्वयः। तस्यार्द्धात् मासत्रयात्। तस्य गुल्फाधोनाड़ीद्वयस्फुरणहीनस्य। रुण्डं कवन्धं। चकारो भिन्नक्रमः। पश्यतश्चेति पक्षान्तरे। गृहच्छेत्रादिषु आदिशब्दः पुरपत्तनादिविषयः। अपि धूमो दृश्यत इत्याकृष्यते। वा विकल्पे। तं पुरुषं। पश्चात्कृतार्कः पृष्ठीकृतार्कः गण्डूषे पूरितविनिर्गमितमुखजले। चापकं शक्रचापसदृशं ज्योतिः। प्रकोष्ठं कूर्परं। कूर्परमणिवन्धयोर्मध्यप्रदेशं। तौ

श्लेष्मशुक्रमलानि सुप्रनिमग्नानि जले यदा।
तस्मिन् पक्षे प्रयात्येव यमं सन्त्यज्य जीवितम् ॥ ९२ ॥
हाटकां प्रतिमां पश्यन् ध्रुवं याति यमालयम्।
भास्करं भगणैः पश्यन्नपि याति यमालयम् ॥ ९३ ॥
जलादिषु तनुच्छायां विकृतां वीक्ष्य मासतः।
प्रयाति निधनं छिद्रं पश्यन् भानोश्च मण्डले ॥ ९४ ॥
स्नातानुलिप्तगात्रस्य पुरः शुष्यति चेदुरः।
स पश्चाद्याति निधनं सर्वैरपि सुरक्षितः ॥ ९५ ॥
गुरुमातृगणान् विप्रान् चन्द्रसूर्य्यौ च देवताः।
आस्तिकान् सततं निन्दन्नकारणत एव च ॥ ९६ ॥
श्वाश्ववैरस्य दलने परित्यागे स्वरोषतः।
गुरुमन्त्रपरित्यागेऽप्यचिराज्जायते मृतिः ॥ ९७ ॥
गुरुं विद्याञ्च जनकं जननीं सर्वदेवताः।
सदाधिक्षेपशापाभ्यां न्यक्कुर्वन्नाशु नश्यति ॥ ९८ ॥
पुस्तकं निजगेहं वा विष्टरं शयनन्तु वा।
निष्कारणे निराकुर्वन्नाशु नश्यति मानवः ॥ ९९ ॥

---

जनौ। तस्मिन् पक्षे अर्द्धमासादर्वाक्। भगणैः सहेति शेषः। विकृतां कुत्सिताकारां निरोजस्कां। भानौ छिद्रं रन्ध्रं। सर्वैरपि ब्रह्मादिभिः। अकारणत इत्यस्य श्वाश्ववैरस्य दलने इत्युत्तरत्रान्वयः। परित्यागे श्वाश्ववैरस्य। अधिक्षेपशापाभ्यां

दृष्टे दृक्चक्रवालानां वैवर्ण्ये मासतो मृतिः ।
ध्याते स्वदेववैरूप्ये मासतो निधनं भवेत् ॥ १०० ॥
कालतत्त्वमयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निष्कालनाच्चित्ते तत्तत्त्वं स्वात्मसात् कृतम् ॥

इति षोड्शनित्यातन्त्रे श्रीकादिमते श्वासरूपं
नाम सप्तविंशं पटलम् ॥ २७ ॥

---

निन्दाप्रियवचनाभ्यां । निराकुर्वन् परित्यजन् । वैवर्ण्यं रूक्षता । स्वदेववैरूप्यं वर्णविग्रहप्रसादादिभिरिति शेषः ॥ १०० ॥

इति षोड्शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य
प्रपञ्चसारसिंहराजप्रकाशाभिधानेन श्रीसुभगानन्दनाथेन
विरचितायां मनोरमाख्यायां व्याख्यायां षोड्श-
नित्यानां कालात्मकप्राणव्याप्त्यादिविधान-
प्रकाशनपरं सप्तविंशं पटलम् परिपूर्णं
परामृष्टम् ॥२७॥ ॐ तत्सत् ॥

ग्रन्थसंख्या—सप्तविंशे यन्त्रमेकं व्याख्याग्रन्थाश्च संख्यया ।
पादार्द्धं पञ्चपञ्चाशदधिकं द्विशतं स्मृताः ॥

---

# अष्टविंशपटलम् ।

अथ षोड़शनित्यानां लोकात्मत्वं वदामि ते ।
यन्मयं विश्वमखिलं वर्त्तते सचराचरम् ॥ १ ॥
कालमातृकयोर्व्याप्तिः प्रागेवोक्ता मया तव ।
वाच्यवाचकयोगेन मातृकालोकयोरपि ॥ २ ॥
व्याप्तिमद्य प्रवक्ष्यामि सम्यक् ते काललोकयोः ।
यदायत्तमिदं विश्वं नित्यास्तत्कालविग्रहाः ॥ ३ ॥
कालस्य षोड़शाकारो रूपो दृश्यत एव हि ।
वृद्धिक्षयाभ्यां चन्द्रस्य आद्यया कलया तथा ॥ ४ ॥

---

पूर्व्वस्मिन् सप्तविंशे पटले षोड़शनित्यानां कालेन प्राणात्मकतादिकमुपदिश्यानन्तरं षोड़शनित्यानां लोकात्मकत्वमुपदिशति अथ षोड़शेत्यादिना विग्रहेत्यन्तेन श्लोकशतरूपेणाष्टाविंशेन पटलेन। तत्र अथ षोड़शेत्यादिना श्लोकेन षोड़शनित्यादीनां लोकात्मत्वकथनप्रस्तावपुरःसरं सचराचरस्य विश्वस्य तन्मयत्वेन वर्त्तनमुपदिशति। तत्र लोकात्मत्वं लोकतादात्म्यं। यन्मयं नित्यात्मकलोकमयं। वर्त्तते प्रतीयते ॥ १ ॥

कालेत्यादिना श्लोकेन पञ्चविंशपटलप्रोक्तकालमातृकयोः षड्विंशपटलप्रोक्तमातृकालोकयोश्च व्याप्तिं स्मारयति। तत्र प्रागेव पञ्चविंशे पटले। वाच्यवाचकयोगेन मातृकालोकयोरपि शब्दरूपमातृकातदर्थरूपलोकयोरपृथग्भावेन मातृकालोकयोर्व्याप्तिरपि षड्विंशे पटले मया तवोक्तेत्यर्थः ॥ २ ॥

व्याप्तिमित्यादिना श्लोकेन काललोकयोर्व्याप्तिकथनादिप्रस्तावपुरःसरं नित्यानां कालविग्रहत्वमुपदिशति। तत्र अद्य अस्मिम् पटले यदायत्तमिदं विश्वं तादात्म्येन विश्वस्य कालपराधीनत्वात्। नित्यास्तत्कालविग्रहाः सकलविश्वकारणभूतः काल एव नित्यानां विग्रह इत्यर्थः ॥ ३ ॥

कालस्येत्यादिना श्लोकेन महानित्याया अपरिच्छिन्नकालात्मकत्वमन्यासां तद-

लोकरूपं तत्प्रमाणं कालचक्रञ्च तादृशम् ।
तयोरन्योन्यनित्यात्वव्याप्तिं तद्वत् स्थितिं तयोः ॥ ५ ॥
नित्यालोकस्थितिं मानं तासां कवचविग्रहम् ।
ग्रहाणां मातृकारूपं शृणु प्रोक्तं क्रमेण वै ॥ ६ ॥
हैमरूपो भुवो मध्ये मेरुस्तिष्ठति पर्व्वतः ।
तस्याभितो महीपार्श्वं पञ्चाशच्छतयोजनाः ॥ ७ ॥

---

वयवभूतकालात्मकत्वञ्चोपदिशति । तत्र कालस्य षट्त्रिंशे पटले वक्ष्यमाणरूपस्य । दृश्यत एव हि अपरमार्थोपि प्रकाशत इत्यर्थः । वृद्धिक्षयाभ्यां पञ्चदशानां कलानामिति शेषः । तथा समुच्चये । एतदुक्तं भवति षोड़शकलामयस्य चन्द्रविम्बस्याक्षर कलारूपापरिच्छिन्नकालात्मिकायां महानित्यायामितरकलापञ्चदशकरूपावान्तर कालात्मिकानां च नित्यानां शुक्लप्रतिपदादि पौर्णमास्यन्तं कृष्णप्रतिपदादि दर्शान्तञ्च प्रतितिथ्येकैकक्रमेणोदयविश्रान्तिप्रतीतिर्भवतीति ॥ ४ ॥

लोकेत्यादिना क्रमेण वै इत्यन्तेन श्लोकद्वयेन पटलशेषार्थानुपदिशति । तत्र लोकरूपं द्वीपाब्धिक्रमतः । तत्प्रमाणं द्वीपाब्ध्यादीनां । तादृशं मानोपेतमित्यर्थः । तयोरन्योन्यनित्यात्वव्याप्तिं लोकस्य नित्यात्वव्याप्तिं कालस्य नित्यात्वव्याप्तिञ्च । तद्वत् स्थितिं तयोः लोकस्य कालचक्रस्य च षोड़शषोड़शाकारतयान्योन्यव्याप्तिं । नित्यालोकस्य स्थितिं वक्ष्यमाणनित्यालोकस्थितिं । मानं नित्यालोकस्येति शेषः । तासां कवचविग्रहं नित्यानां कवचात्मना स्थितिं साधकानामिति शेषः । ग्रहाणां सूर्य्यादीनां नवानामिति शेषः । मातृकारूपं मातृकात्मत्वम् ॥ ६ ॥

हैमेत्यादिना आवृतेत्यन्तेनाक्षरत्रयोत्तरेण श्लोकद्वयेन लोकरूपं तन्मानञ्चोपदिशति । तत्र तस्य मेरोः । पञ्चाशच्छतयोजनाः पञ्चसहस्रयोजनानि । एतदुक्तं भवति वृत्ताकाररूपिण्या भूमेर्मध्ये हैमरूपो मेरुः पद्मस्य कर्णिकेव तिष्ठति । तस्य मेरोः परितो भूमिः प्रतिपार्श्वं पञ्चसहस्रपञ्चसहस्रयोजनात्मिका स्थिता भवति । तस्या विष्कम्भयोजना सर्व्वत्र दशसहस्रदशसहस्रयोजना भवतीति । सिन्धुभिः समुद्रैः । द्वीपैस्तत्तत्समुद्रान्तरालभूप्रदेशैर्वक्ष्यमाणनामभिः । तत्संख्यैर्द्विगुणोत्तरैः मेरुपार्श्वमहीमानात् प्रत्येकमुत्तरोत्तरं द्विगुणमानैः । एत-

लवणेक्षुसुरासर्पिर्दधिक्षीरजलात्मभिः ।
सिन्धुभिः सप्तभिर्द्वीपैस्तत्संख्यैर्द्विगुणोत्तरैः ॥ ८ ॥
आवृता वाह्यसलिलजलधेर्व्वाह्यपार्श्वयोः ।
मध्ये विस्तारमानात्तु वहिरावृत्य तत् पुनः ॥ ९ ॥
कालचक्रं पराशक्तिमारुतेन सदैव तु ।
नूनं परिभ्रमत्येव पश्चिमाद्योपसव्यतः ॥ १० ॥

---

वृत्तं भवति। महामेरोः परितः प्रतिपार्श्वं पञ्चसहस्रपञ्चसहस्रयोजनमिताया भूमेर्वहिरपि परितः प्रतिपार्श्वं दशसहस्रदशसहस्रयोजनात्मको लवणसमुद्रः। तद्वहिः प्राग्वत् विंशतिसहस्रविंशतिसहस्रयोजनात्मकः प्लक्षद्वीपः। तद्वहिः प्राग्वच्चत्वारिंशत्सहस्रचत्वारिंशत्सहस्रयोनात्मकं इक्षुरससमुद्रः। तद्वहिरपि प्राग्वदशीतिसहस्राशीतिसहस्रयोजनात्मकः शाल्मलीद्वीपः। तद्वहिः प्राग्वत् षष्टिसहस्रोत्तरशतसहस्रयोजनात्मकः सुरासमुद्रः। तद्वहिः प्राग्वद्विंशति-सहस्रोत्तरशतत्रयसहस्रयोजनात्मकः कुशद्वीपः। तद्वहिः प्राग्वच्चत्वारिंशत् सहस्राधिक षट्शतसहस्रयोजनात्मको घृतसमुद्रः। तद्वहिः प्राग्वन्नूननन्दिदारश्येति सप्ताक्षरवाक्यजनितसंख्ययोजनात्मकः क्रौञ्चद्वीपः। तद्वहिः प्राग्वन्न ग्निनानीतः शौरिरिति ( १२८०००० ) सप्ताक्षरवाक्यजनितसंख्ययोजनात्मको दधिसमुद्रः। तद्वहिः प्राग्वत् ज्ञानीणूनं क्रियात्मादिति सप्ताक्षरवाक्यजनितसंख्ययोजनात्मकः शाकद्वीपः। तद्वहिरपि प्राग्वन्नानाज्ञानभरोनित्यमित्यष्टाक्षरवाक्यजनित-संख्ययोजनात्मकः क्षीरसमुद्रः। तद्वहिः प्राग्वत् ननंज्ञानदोविन्नर इत्यष्टाक्षर-वाक्यजनितसंख्ययोजनात्मकः पुष्करद्वीपः। तद्वहिरपि प्राग्वत् ज्ञानिना नोता धुन भूरित्यष्टाक्षरवाक्यजनितसंख्ययोजनात्मकः सलिलसमुद्र इति। आवृते त्यस्य महीति पूर्व्वेणान्वयः॥ ८॥

वाह्यसलिलमित्यादिना विग्रहैरित्यन्तेन सपञ्चाक्षरत्रिपादाद्येन श्लोकद्वयेन वाह्यसलिलाम्बुधिकालचक्रयोर्मध्यस्थदेशमार्गं कालचक्रपरिवृत्तिकारणं तत् परि-भ्रमण प्रकारं तत्कक्षाभेदान् तन्मानं राशिस्वरूपञ्चोपदिशति। तत्र वाह्यसलिल-जलधेः सर्ववाह्यसलिलसमुद्रात् मध्यविस्तारमानाद्वहिरावृत्य ततपुनः पुनरपि

तच्च तन्मानवीथिभिर्युतमष्टभिरद्भुतैः ।
तेजोमयैर्द्वादशारैर्युक्तं मेषादिविग्रहैः ॥ ११ ॥
तेषु वीथिषु पूर्व्वाशामुखाः सप्तग्रहाः स्थिताः ।
राशियुक्तेन कालेन प्रोक्तेनोपर्य्यधस्तथा १ ॥ १२ ॥

---

तत्सप्तद्वीपसप्तसमुद्रसमवायमध्यविष्कम्भमानात् (१६३८३७००) द्वीपाद्यात्मकं भूरूपं कालचक्रं कालात्मकं चक्रं तस्य कालात्मकत्वं तत्परिभ्रमणस्य विश्वविकारकारणत्वात्। पराशक्तिमारुतेन महानित्याया इच्छाशक्तिरूपेण मारुतेनानुप्रेरितं। एवकारेण कारणान्तरं न भवतीत्यर्थः। पश्चिमाधोपसव्यतः पश्चिमाभिमुखमूर्द्ध्वाधःक्रमात् प्रादक्षिण्येन। तत् कालचक्रं। तन्मानवीथिभिरुत्तरोत्तरं प्रतिपार्श्वं तत्तद्द्विगुणद्विगुणमानवीथिभिः। अद्भुतैः सर्वाश्चर्य्यमयत्वात् केनापि अकृतत्वाच्च। तेजोमयैः ज्योतीरूपैः। द्वादशारैः भूमध्यादिपरव्योमान्त मूर्द्ध्वाद्ध्वविकाशरूपैः समान्तरालैरिति शेषः। मेषादिविग्रहैः मेषादिमीनान्तराशिस्वरूपैः। एतदुक्तं भवति सर्ववाह्यसलिलजलधिवाह्यपार्श्वद्वयमध्यविष्कम्भमानं तद्वाह्यगतं तत्सर्वं क्रोडीकृत्य पराशक्तिरूपमारुतप्रेरितं पूर्वोक्तवाह्यसलिलजलधिवाह्यपार्श्ववहिर्मानात् प्रतिपार्श्वं प्राग्वद्द्विगुणोत्तरमानवीथ्यष्टकं तदन्तरालाष्टकोपेतं ज्योतीरूपमेषादिराशिद्वादशारयुक्तं कालचक्रं पश्चिमाभिमुखमूर्द्ध्वाधः प्रादक्षिण्यक्रमात् परिभ्रमतीति ॥ ११ ॥

तेष्वित्यादिना स्थितिरित्यन्तेनार्द्धाधिकेनैकेन श्लोकेन तत्कालचक्रवीथिषु सप्तग्रहावस्थानं तेषां स्वोक्तकालेन तच्चक्रगतराशिषु चारेण लोकस्थितिञ्चोपदिशति। तत्र तेषु वीथिषु तासु वीथिषु तेषु राशिष्वित्यर्थः। स्थिताः चन्द्रवुधशुक्रार्कभौमगुरुमन्दानां अधरोत्तरवीथिस्थितिक्रमाल्लङ्घनेन। राशिषु तद्वीथिगतेषु। प्रोक्तेन ज्योतिःशास्त्रे। तथा पूर्वाशामुखा एव। प्रयान्ति चरन्ति। तेषां ग्रहाणां स्थितिः जननसत्ताविपरिणामवृद्ध्यपचयनाशात्मिका। एतदुक्तं भवति प्रोक्तकालचक्रगतवीथ्यष्टकं प्रोक्तक्रमाल्लङ्घनस्थित्या स्थिताः पूर्वाभिमुखास्तत्तद्ग्रहास्तत्तद्गतराशिषु स्वोक्त चारेण लोकानामुत्पत्त्यादिरूपां स्थितिं कुर्व्वन्तीति ॥ १२॥

---

१। राशियुक्तेन कालेन स्वोक्तेन परिधिस्तथा-इति वा।

प्रयान्ति तेषां चारेण लोकानां भवति स्थितिः ।
मध्यस्थमेरौ ललिता सदैवास्ते महाद्युतिः ॥ १३ ॥
तस्याभितो जलान्तस्थाः शेषास्ताः सुरश्चतुर्द्दश ।
तद्वहिः परमे व्योम्नि त्वेता चित्रा तु संस्थिता ॥ १४ ॥
कृतादिवर्षादारभ्य प्रतिवर्षमिति स्थिता ।
द्वितीयादिषु वर्षेषु क्रमात्ताः परिवृत्तिभिः ॥ १५ ॥
षोड़शाब्दे परे व्योम्नि ललिता सलिलाम्बुधौ ।
चित्रा च भवतीत्थं हि भजन्ते परिवर्त्तनम् ॥ १६ ॥

---

मध्यस्थेत्यादिभिः रूपतः इत्यन्तैरर्द्धाधिकैस्त्रिभिः श्लोकैः षोड़शनित्यानां मेरुद्वीपादिपरमव्योमान्तषोड़शविधेषु देशेषु कृतयुगादिवर्षादारभ्य प्रतियुगं चतुर्युगवर्षेषु परिवृत्तिक्रममुपदिशति। तत्र सदैवास्ते सर्व्वदा सकलात्मकेन प्रधानरूपेण तिष्ठतीत्यर्थः। महाद्युतिः देशकालादिभिरनवच्छिन्नप्रकाशरूपत्वात्। तस्य मेरोः। अभितः सर्व्वतः। जलान्तस्था मेरोरनन्तरजम्बुद्वीपाद्यादिसर्व्ववाह्यस्थजलसमुद्रपर्य्यन्तं चतुर्द्दशस्थानस्थिताः। शेषाः कामेश्वर्य्यादयश्चतुर्द्दश ज्वालामालिन्यन्ताः। तद्वहिः सर्व्ववाह्यसलिलजलधेर्व्वहिः। अत्र षोड़शो प्रतिवर्षं प्रतिकृतयुगादिवर्षं। ता नित्या ललिता भवतीत्युत्तरत्रान्वयः। चकारः समुच्चये। इत्थं उक्तप्रकारेण। एवमित्यस्य प्रोक्तरूपत इत्यत्रान्वयः। अन्येषु त्रेतादिषु। एतदुक्तं भवति मेरुजम्बूद्वीपलवणसमुद्रप्लक्षद्वीपेक्षुरससागरशाल्मलीद्वीपसुरासमुद्र कुशद्वीपघृतसागर क्रौञ्चद्वीपदधिसमुद्र शाकद्वीपक्षीरसागरपुष्करद्वीपसलिलसमुद्र परव्योमसंज्ञकेषु षोड़शसु स्थानेषु कृतयुगादिचतुर्युगप्रथमवर्षेषु ललितादिचित्रान्ताः षोड़शनित्यास्तदात्मकत्वेन स्थित्वा तत्तद्युगद्वितीयद्वितीयवर्षेषु जम्बूद्वीपादिमेरुपर्य्यन्तेषु षोड़शसु षोड़शसु स्थानेषु ललितादिचित्रान्ताः षोड़श नित्यास्तिष्ठन्ति। एवं तत्तद्युगतृतीयादितृतीयादि षोड़शषोड़शवर्षान्तेषु चतुर्द्दशसु चतुर्द्दशसु वर्षेषु लवणसमुद्रादि परमव्योमान्तेषु विशिष्टेषु चतुर्द्दशसु वर्षेषु क्रमात् प्रतिवर्षं ललिता तिष्ठति। ललितास्थितस्थानान्तरालमारभ्य तत्तत्पूर्व्वपूर्व्वस्थानान्तमन्याः कामेश्वर्य्यादि चित्रान्ताः पञ्चदशनित्यास्तिष्ठन्ति। एवं वर्षषोड़शकवर्षषोड़शकेनैकामेकां परिवृत्तिं भजन्तीति ॥ १६ ॥

एवं युगेषु चान्येषु वर्त्तते प्रोक्तरूपतः ।
कालेष्वपि च मध्यादि परव्योमान्तमीश्वरि ॥ १७ ॥
परिवृत्तिं भजन्ते ता मध्यस्था स्वांशतश्चरेत् ।
अन्याः सर्व्वास्तत्र तत्र चरन्ति स्वयमेव वै ॥ १८ ॥
तथा कालक्रमात्तास्तु भजन्ते परिवर्त्तनम् ।
कालतो देशतश्चक्रादैक्यं संजायते यदा ॥ १९ ॥
तदा भवन्ति भूपाला धार्म्मिकाः कालवर्षतः ।
प्रजाश्च सुखिनो भूयुररोगाः कालमृत्यवः ॥ २० ॥

---

कालेष्वित्यादिभिः समुदीरितमित्यन्तैरर्द्धाधैः पञ्चभिः श्लोकैः षोड़शनित्यानां कालचक्रमयत्वप्रकारं कालदेशैकाधिपत्यफलं कालचक्रस्य वाह्यवीथिरूपपरव्योमस्थितिं प्रोक्तनिगमनञ्चोपदिशति । तत्र कालेषु कालचक्रस्य चन्द्रस्य कचा भूम्योरन्तरान्तरालदेशादिताराकचान्तेषु षोड़शसु स्थानेषु मध्यादि चन्द्रकचान्तर्भूतमध्यव्योमादि । ताः षोड़शनित्याः । मध्यस्था ललिता । स्वांशतः स्वसमानमूर्त्त्यन्तरेण । अन्याः पञ्चदशनित्याः । तत्र तत्र देशे देशे काले काले च । तथा कालक्रमात् पूर्वोक्तयुगादि वर्षादि षोड़शषोड़शवर्षपरिवृत्तिक्रमेण तुर्विशेषे । कालतः परिवृत्तिकालक्रमात् । देशतः देशस्य चक्रात् कालचक्रेण । भूयुः प्राग्वत् । कालमृत्यवः हिताय मृत्यव इत्यर्थः । वाह्यस्थवीथ्यां शनैश्चरकचावहिर्भूतवीथ्यां । तारकाः नचत्राणि । तद्वहिः नचत्रकचावहिः । स्थितिः कालचक्रस्येति पूर्व्वत्रान्वयः । तत्र कालचक्रे । तदन्तिका तदवधिका परव्योमान्तभूता । अपिचेत्यनेन पूर्व्वश्लोकात् स्थितिरित्येतदाकृष्यते । तत्क्रमात् पूर्वोक्तपूर्वोक्तयुगवर्षषोड़शक्रमात् । तन्मयं नित्यामयं । एतदुक्तं भवति कृतादिचतुर्युग प्रथम प्रथमवर्षादिवर्षषोड़शषोड़शकक्रमाल्ललितादयश्चित्रान्ताः षोड़शनित्याः क्रमेण कालचक्रे चन्द्रकचाभूम्यन्तरालप्रदेश चन्द्रकचा तदन्तरालवुधकचा तदन्तरालशुक्रकचा तदन्तरालरविकचा तदन्तरालभौमकचा तदन्तराल गुरुकचा तदान्तराल शनिकचा तदन्तरालनचत्र कचाविभागेन षोड़शसु स्थानेषु देशपरिवृत्तिपरितः परिवृत्तिक्रमतः परिवर्त्तन्ते । तेन क्रमेण या या नित्या चन्द्रकचास्थिता सा सा नित्यैव तत्काल-

कालचक्रस्य बाह्यस्थवीथ्यां तिष्ठन्ति तारकाः ।
तद्बहिः परमव्योम स्थितिस्तत्र तदन्तिका ॥ २१ ॥
तासामपि च नित्यानां षोड़शानाञ्च तत् क्रमात् ।
एवं देशे च काले च तन्मयं समुदीरितम् ॥ २२ ॥
देशवर्षतिथीनाञ्च सम्पातादैक्यमागताम् ।
पूजयेत् सविशेषं तां प्रजपेच्चाखिलाप्तये ॥ २३ ॥
तेषु विद्योपदेशात्तु तस्यास्तत् सन्निधिर्भवेत् ।
महाशक्तिश्च जायेत त्रयाणामैक्यवैभवात् ॥ २४ ॥
कालप्राप्तां यजेत् स्वाब्दजन्मवासरके तु तां ।
देशप्राप्तान्तु तन्मासपूर्णायां पूजयेच्छिवे ॥ २५ ॥
प्रत्यब्दमेवं कुर्व्वाणं न मुञ्चति रमा यशः ।
कदाचिदपि दीर्घायुररोगो ज्ञानवान् सुखी ॥ २६ ॥

---

चक्रस्याधिपा भवति। तस्मादेवं देशकालपरिवृत्तिभेदतो जम्बुद्वीपादीनां परव्योमान्तानामष्टानां स्थानानां एकैकवर्षक्रमेण वर्षाष्टकेनैकनित्याधिपत्यं सिध्यति। यथा जम्बुद्वीपस्य कामेश्वरीकुलसुन्दर्य्यौ क्रमात् प्रथमनवमयोर्वर्षयोः प्लक्षद्वीपस्य द्वितीयदशमवर्षयोर्भगमालिनीनित्यानित्ये शाल्मलीद्वीपस्य तृतीयैकादशयोर्वर्षयोर्नित्यक्लिन्नानीलपताके कुशद्वीपस्य चतुर्थद्वादशयोर्वर्षयोर्भेरुण्डाविजये क्रौञ्चद्वीपस्य पञ्चमत्रयोदशयोर्वर्षयोर्वह्निवासिनीसर्व्वमङ्गले शाकद्वीपस्य षष्ठचतुर्दशयोर्वर्षयोर्वज्रेश्वरीज्वालामालिन्यौ पुष्करद्वीपस्य सप्तमपञ्चदशयोर्वर्षयोर्दूतीचित्रे परव्योमाष्टमषोड़शयोर्वर्षयोस्त्वरितालालिते एवं देशकालौ नित्यात्मकौ भवत इत्युक्तमिति ॥ २२ ॥

देशेत्यादिभिः पूजनादित्यन्तैः पञ्चभिः श्लोकैः देशकालतिथिप्राप्तनित्यापूजनं तत्कालविशेषं तत्फलञ्चोपदिशति। तत्र देशवर्षतिथीनां देशकालचक्रतिथीनां त्रयाणां वा द्वयोर्वा तां तिथिनित्याविद्यां। तेषु देशवर्षतिथिषु। तस्याः तद्देशाद्यधिपायाः। महाशक्तिः साधकस्येति शेषः। त्रयाणां देशादीनाम् ॥२४॥ कालप्राप्तां कालचक्राधिपां। तन्मासपूर्णायां स्वजन्ममासपूर्णायां। एवं कुर्व्वाणम्

राजभिर्म्मनुजैस्त्रीभिरन्यैः प्राणिभिरप्यसौ ।
मान्यते सर्वमन्त्राश्च सिद्धाः सुरस्तत्र पूजनात् ॥ २७ ॥
जम्बूः प्लक्षः शाल्मली च कुशक्रौञ्चौ यथाक्रमम् ।
शाकश्च पुष्करश्चेति सप्तद्वीपेषु भूरुहाः ॥ २८ ॥
तेषां नामभिरेव सुरस्तत्तन्नामानि तन्मुखात् ।
तत्तन्नामभिरभ्यर्च्य तद्वीपं तत्र पूजयेत् ॥ २९ ॥
तां तां नित्यां तत्र तत्र काले काले तु साधकः ।
एवं पूजयितुर्लोके न समोस्ति न चाधिकः ॥ ३० ॥
मध्ये भूमिं तामभितः कालचक्रं ततो बहिः ।
महाव्योम च निःसीमं तत्रैतद्द्वयसंस्थितिः ॥ ३१ ॥

---

पूजाजपहोमादिकं अन्यैः तिर्य्यगादिभिः । असौ साधकः । तत्र देशादिसम्पातकाले । एतदुक्तं भवति सप्तद्वीपेषु तत्तद्वीपेश्वरीनित्यां द्वीपपूजापूर्वकं स्वजन्ममासपूर्णायां कालचक्रेश्वरीनित्यां स्वाब्दजन्मदिवसे उभे अपि प्रतिपच्चतत्तत्प्राप्ततिथीश्च पूजयन् प्रोक्तफलसिद्धिभागिति ॥ २७ ॥

जम्बित्यादिभिरधिक इत्यन्तैस्त्रिभिः श्लोकैः सप्तद्वीपगतभूरुहसप्तकनामभिः प्राप्तानि तत्तद्वीपनामानि तत्तत्पूजनं तत्र तत्राधिगतनित्यापूजनं तत्फलञ्चोपदिशति । तत्र भूरुहाः पादपाः । तेषां पादपानां । तत्तन्नामानि द्वीपनामानि । तन्मुखात् तत्तद्भूरुहप्रावीण्यद्वारा तत्तन्नामभिः मेरुद्वीपादिपरमव्योमान्तनामभिः प्रणवादिभिश्चतुर्थीनमोऽन्तैः । यथा ॐ मेरवे नमः इत्यादि । तत्र मेरुप्रमुखेषु षोड़शसु स्थानेषु यत्र स्थितस्तत्र तत्र काले काले पुनः स्थितं तत्र पूर्व्वं पूजयित्वा तद्वर्षे तस्मिंस्तस्मिन् वर्षे । एतदुक्तं भवति षोड़शसु नित्यासु स्वभजनीया नित्या षोड़शसु स्थानेषु यत्र स्थिता तत्र पूर्वं पूजयित्वा तत्तद्वर्षे तत्तत्स्थानगतां भावयन् तत्तन्नित्यार्च्चनक्रमात् पूजयन् प्रोक्तरूपप्रभावो भवेदिति ॥ ३० ॥

मध्ये इत्यादिभिर्विद्यत इत्यन्तैस्त्रिभिः श्लोकैर्भूमिकालचक्रमहाव्योमस्थितिक्रमं कालचक्रे ग्रहाणां स्थितिं तत्कारणञ्चोपदिशति । तत्र मध्ये महाव्योम्नः

सुस्थिरायाः भुवो मध्ये चक्रस्य भ्रमतोऽनिशम् ।
ग्रहाणां तत्र संवासप्रचारनियतात्मनाम् ॥ ३२ ॥
कारणं परमेशानि तवेच्छैव तु केवलम् ।
न त्वन्यदवलम्बाय तयोः कुत्रापि विद्यते ॥ ३३ ॥
तयोर्बहिः परे व्योम्नि क्वचिदब्धिचतुष्टयम् ।
प्रागुक्तरूपां तत्तीरे कोलवक्त्रां तु पञ्चमीं ॥ ३४ ॥
सलिले कुरुकुल्लाञ्च पोतारूढां शुचिस्मिताम् ।
तन्मध्ये नवरत्नानि महाद्वीपञ्च तत्र वै ॥ ३५ ॥
कल्पकोद्यानमृतुभिः षड्भिः सेवितविग्रहम् ।
तन्मध्येऽसंख्यरूपाभिर्वृतां सङ्गीतशक्तिभिः ॥ ३६ ॥
गीतवादित्रनृत्यादिसंसक्ताभिरनारतम् ।
विनोद्यमानां विलसन्मदमन्थरवीक्षणाम् ॥ ३७ ॥
रत्नमण्डपमध्यस्थरत्नसिंहासनोपरि ।
शुचिस्मितां शक्तिवृन्दगीताकर्णनन्दिताम् ॥ ३८ ॥

---

भूमिं तां स्थितामिति शेषः । ततः कालचक्रतः । निःसीमं निः सीमेत्यर्थः । तत्र महाव्योम्नि । एतद्द्वयसंस्थितिः भूमिकालयोरवस्थानं । मध्ये महाव्योम्नः । तत्र कालचक्रे संवासप्रचारनियतात्मनां स्वस्ववीथिसंवासतत्तद्गतराशिषु प्रचारनियमवतां । तवेच्छा परायाः शक्तेराज्ञा । तयोर्भूमिकालचक्रयोः । एतदुक्तं भवति महाव्योममध्यस्थभूमिकालचक्रतद्गतभूतग्रहाणां यथाक्रमं सुस्थिरावस्था भ्रमणे सन्ततैकाकारप्रमाणं प्रोक्तसंवासप्रचारकारणात् तदवलम्बनञ्च केवलं परायाः शक्तेरिच्छेति ॥ ३३ ॥

तयोरित्यादिभिः सुनिश्चितमित्यन्तैः नवभिः श्लोकैः नित्यालोकावस्थानं तत्र देव्याः सपरिवारायाः स्थितिं तत्तत्पूजयितुः फलञ्चोपदिशति । तत्र तयोः महीकालचक्रयोः क्वचित् प्रदेशे अब्धिचतुष्टयं इक्षुसागरादि । प्रागुक्तरूपां अङ्गपूजोक्तललितामदृशविग्रहां । कोलवक्त्रां वाराहीं चतुर्विशेषे पोत्रीस्वरूपेणेत्यर्थः ।

सहजासवसम्भोगैः संजातानन्दविग्रहाम् ।
दयामदारुणापाङ्गविलोकितसुसाधकाम् ॥ ३९ ॥
परितो भूषणैश्चित्रैः स्वर्णचामरकादिभिः ।
विराजमानान्दिरदानश्वानपि तथाविधान् । ४० ॥
शक्तिभिर्दर्शितानग्रे पश्यन्तीमभितोत्सवाम् ।
स्वसमानाभिरभितो नित्याभिः सेवितान्तथा ॥ ४१ ॥
याति तासां पूजयिता तत्समाकारतां शनैः ।
तद्विनोदस्तत्समीपनिवासी स्यात् सुनिश्चितम् ॥ ४२ ॥
कोटियोजनविस्तीर्णसमायामं महाद्भुतम् ।
नवरत्नमयं द्वीपं तन्मानाब्धिभिरावृतम् ॥ ४३ ॥
तत्तृतीयांशमानस्य सहस्रादित्यतेजसम् ।
रत्नद्वीपस्य मध्यस्थतृतीयांशे तु मण्डपे ॥ ४४ ॥
कोट्यादित्यद्युतिप्रान्तेष्वभितोऽसंख्यशक्तिभिः ।
तथा समन्वितां ध्यायन्नरो भवति मत्समः ॥ ४५ ॥

---

पञ्चमीं श्रीचक्रस्थब्राह्म्यादिमातृष्टकं अत्र पञ्चमीग्रहणं ललिताविग्रहसाम्यार्थं। सलिले इक्षुसागरस्य तन्मध्ये चतुरब्धिमध्ये। तन्मध्ये कल्पकोद्यानमध्यस्थ-सर्व्वमध्यगपद्मरागखण्डमध्यस्थरत्नमण्डपमध्ये इति यावत्। असंख्यरूपाभि-रिति पदच्छेदः। मदमन्थरवीक्षणां अनन्तरतृतीयश्लोकवक्ष्यमाणानन्दत्रयेण सङ्गीतानन्देन च उपरि स्थितामित्यर्थः। सुसाधकां सत्सम्प्रदायिसाधकां। तथा-विधान् भूषितान्। तथा समुच्चये। अत्र प्रकरणे द्वितीयैकवचनान्तानां पदानां ललितामिति विशेष्यमध्याहार्य्यम् तां ध्यात्वेत्यर्थः। तासां सपरिवारनित्यानां तद्विनोदः सङ्गीतादिविशेषविनोदः ॥ ४२ ॥

कोटीत्यादिभिस्त इत्यन्तैर्नवभिः श्लोकैर्नित्यालोकादिमानं तत्र देवी पूज-नात् फलं परमव्योमस्वरूपनित्यावैभवविदामनुभावञ्चोपदिशति। तत्र समायामं कोट्यायामं। तन्मानाब्धिभिः प्रत्येकं कोटियोजनविस्तीर्णैरब्धिभिस्तृतीयांश मानस्य योजनतृतीयांशसहितत्रयस्त्रिंशदधिकशतत्रयोत्तरत्रयस्त्रिंशत्सहस्रा-

एवं ध्यात्वार्च्चयेद्देवीं भक्त्या परमयोक्तया ।
नरो निरस्तसंसारमूलाज्ञानो जितेन्द्रियः ॥ ४६ ॥
निपुणश्च कलादक्षः सुखिभिः समवित्तवान् ।
अपापः पुण्यशीलश्च सत्यार्जवसमन्वितः ॥ ४७ ॥
देशिकः स्वकुलोत्तुङ्गः सर्व्वसम्भावितात्मवान् ।
जायते तस्य परितो योजनं पावनं भवेत् ॥ ४८ ॥
तदालोकनसंलापसंस्पर्शादिकृतां नृणाम् ।
पापकर्म्मक्षयात्तेन रहिताः स्युश्च तत्समाः ॥ ४९ ॥
कालचक्रस्य नित्याया लोकस्य च बहिःस्थितिः ॥
व्योमरूपमनाद्यन्तं यत्तच्चिन्मयमावयोः ॥ ५० ॥
यो वेत्त्येवमशेषन्तु नित्यावैभवमीरितम् ।
स जीवन्मुक्त एवेति प्रोक्तं तल्लक्षणञ्च ते ॥ ५१ ॥
समस्तापद्विमुक्त्यर्थं सर्वसम्पदवाप्तये ।
भूतप्रेतपिशाचादिपीड़ाशान्त्यै सुखाप्तये ॥ ५२ ॥

---

धिकत्रयस्त्रिंशल्लक्षयोजनमानविस्तारायामसहितस्य रत्नद्वीपस्य मध्यगस्य मध्यस्य रत्नद्वीपमध्यगतपद्मरागखण्डस्य तृतीयांशे योजननवांशसहितैकादशोत्तरशताधिकैकादशसहस्रोत्तरैकादशलक्षयोजनमानविस्तारायामसहिते मण्डपे माणिक्यमण्डपे। प्रान्तेषु पार्श्वेषु मण्डपस्येति शेषः। तथा प्राग्वत्। मत्समः शिवभूतः। उक्तया षड़्विंशत्पटलोक्तया। अज्ञानं नाम दुर्वासना। आर्जवं नाम मनोवाक्कायकर्म्मणामेकाकारता। तस्य परितः साधकस्य निवासस्थानस्य परितः। स्युर्नरा इति शेषः। नित्यायाः सकलनित्यात्मिकाया महानित्यायाः। तद्व्योमरूपं चिन्मयं निर्विषयज्ञानमयं। आवयोः शक्तिशिवयोः। एवं उक्तप्रकारेण। प्रोक्तं पञ्चविंशत् पटले वक्ष्यत इत्यर्थः ॥ ५१ ॥

समस्तेत्यादिभिर्मत्सम इत्यन्तैः विंशत्या श्लोकैस्तदनुभावप्रस्ताव पुरःसरं

समस्तरोगनाशाय समरे विजयाय च ।
चोरसिंहद्वीपिगजगवयादिभयानके ॥ ५३ ॥
अरण्ये शैलगहने मार्गे दुर्भिक्षके तथा ।
सलिलादिमनःपीड़ास्वब्धौ पोतादिसङ्कटे ॥ ५४ ॥
प्रजप्य नित्याकवचं सकृत् सर्व्वं न्तरत्यसौ ।
सुखी जीवति निर्द्वन्द्वो निःसपत्नो जितेन्द्रियः ॥ ५५ ॥
शृणु तत् कवचं देवि वक्ष्ये तव तदात्मकम् ।
येनाहमपि युद्धेषु देवासुरजयी सदा ॥ ५६ ॥
सर्वतः सर्वदात्मानं ललिता पातु सर्वगा ।
कामेशी पुरतः पातु भगमाला त्वनन्तरम् ॥ ५७ ॥
दिशं पातु तथा दक्षपार्श्वं मे पातु सर्वदा ।
नित्यक्लिन्ना च भेरुण्डा दिशं पातु सदा मम ॥ ५८ ॥
तथैव पश्चिमं भागं रक्षेत् सा वह्निवासिनी ।
महावज्रेश्वरी रक्षेदनन्तरदिशं सदा ॥ ५९ ॥
वामपार्श्वं सदा पातु दूती मे त्वरिता ततः ।
पालयेत्तु दिशं चान्यां रक्षेन्मां कुलसुन्दरी ॥ ६० ॥

---

नित्याकवचं तत्फलञ्चोपदिशति । तत्र पिशाचादीत्यत्रादिशब्देनापस्मारादय उच्यन्ते । सुखाप्तये स्वरूपलाभात् । गवयादीत्यत्रादिशब्दः शरभादिविषयः । भयानको भयङ्करः । अस्य मार्गे इत्युत्तरत्रान्वयः । दुर्भिक्षके मर्य्यादाप्राप्ताद्यपकर्षे । तथा समुच्चये । पोतादीत्यत्रादिशब्दो नावादिविषयः । असौ जपिता । निर्द्वन्द्वः शीतोष्णादिद्वन्द्वपीड़ादिरहितः अथवा निरुपमः । तदात्मकं त्वदात्मकमित्यर्थः । येन कवचेन अहमपि शिवोऽपि । सर्व्वतः वक्ष्यमाणसकलस्थानेषु । सर्व्वगा विश्वमयत्वात् । पुरतः पूर्व्वस्यां दिशि । तुः समुच्चये । अनन्तरं आग्नेयीं दिशमित्युत्तरत्रान्वयः । तथा समुच्चये । नित्यक्लिन्ना दक्षिणपार्श्वं मे पात्विति पूर्व्वत्रा-

नित्या माममूर्द्ध्वतः पातु साधो मे पातु सर्व्वदा ।
नित्या नीलपताकाख्या विजया सर्व्वतश्च माम् ॥ ६१ ॥
करोतु मे मङ्गलानि सर्व्वदा सर्व्वमङ्गला ।
देहेन्द्रियमनःप्राणान् ज्वालामालिनिविग्रहा ॥ ६२ ॥
पालयेदनिशं चित्ता चित्तं मे पातु सर्व्वदा ।
कामात् क्रोधात्तथा लोभान्मोहान्मानान्मदादपि ॥ ६३ ॥
पापान्मत्सरतः शोकात् संशयात् सर्व्वतः सदा ।
स्तैमित्याच्च समुद्योगादशुभेषु तु कर्म्मसु ॥ ६४ ॥
असत्यक्रूरचिन्तातो हिंसातश्चौर्य्यतस्तथा ।
रक्षन्तु मां सर्व्वदा ताः कुर्वन्त्विच्छां शुभेषु च ॥ ६५ ॥
नित्याः षोड़श मां पान्तु गजारूढ़ाः स्वशक्तिभिः ।
तथा हयसमारूढ़ाः पान्तु मां सर्वतः सदा ॥ ६६ ॥
सिंहारूढ़ा स्तथा पान्तु मान्तरक्षगता अपि ।
रथारूढ़ाश्च मां पान्तु सर्वतः सर्वदा रणे ॥ ६७ ॥

---

न्वयः । अथ अनन्तरं नैऋतिमित्यर्थः । तथा समुच्चये । सा प्रागुक्तवैभवा । अनन्तरदिशं वायवीं दिशं । वामपार्श्वं उत्तरां दिशं त्वरितेत्यस्य पालयेदित्युत्तरत्रान्वयः । तुः समुच्चये । अन्यां ऐशानीं मामित्यूर्द्ध्वाधरान्तरालस्थदिगुपलक्षणार्थं । नित्यानाम दशमी नित्या नित्येत्यर्थः । सेति नीलपताकाख्येत्युत्तरत्रान्वयः । नित्यानीलपताकाख्या नीलपताकानित्येत्यर्थः । अस्य अधो मे पात्विति पूर्व्वत्रान्वयः । सर्व्वतः प्रोक्तैकादशदिक्षु चकारेण पूर्व्वत्र पात्वित्येतदाकृष्यते । ज्वालामालिनिविग्रहा ज्वालामालिनी नित्येत्यर्थः । पालयेदित्यस्य पूर्व्वत्रान्वयः । तथा समुच्चये । अपिशब्दः समुच्चये । पापात् अविवेकात् संशयात् अनध्यवसायरूपात् अज्ञानात् सर्व्वतः सर्व्वत्र । सदा असंशयरूपेण स्तैमित्यात् शुभकर्म्मस्विति शेषः । तुः समुच्चये अशुभेषु कर्म्मसु समुद्योगादिति सम्बन्धः । तथा समुच्चये । पूर्वोक्त-

ताच्र्यारूढ़ाश्च मां पान्तु तथा व्योमगता स्तथा ।
भूगता: सर्व्वदा पान्तु माञ्च सर्व्वत्र सर्व्वदा ॥ ६८ ॥
भूतप्रेतपिशाचापस्मारकृत्यादिकान् गदान् ।
द्रावयन्तु स्वशक्तीनां भीषणैरायुधैर्म्मम ॥ ६९ ॥
गजाश्वद्वीपिपञ्चास्यताच्र्यरूढ़ाखिलायुधा: ।
असंख्या: शक्तयो देव्या: पान्तु मां सर्व्वत: सदा ॥ ७० ॥
सायं प्रातर्जपन्नित्याकवचं सर्व्वरक्षकम् ।
कदाचिन्नाशुभं पश्येन्न शृणोति च मत्समः ॥ ७१ ॥
ग्रहाणां मातृकाविद्याविग्रहं विग्रहं यत: ।
तेन तेषान्तु पूजार्थं वक्ष्ये तद्धाममण्डलम् ॥ ७२ ॥
सुधास्वरैर्भवेदिन्दोर्म्मण्डलं भास्करस्य तु ।
सुधाव्यञ्जनरूपं स्यादितरे तन्मया यत: ॥ ७३ ॥

---

कामादिपञ्चम्यन्तपदषोड़शकस्य रक्षन्तु मामित्यत्रान्वय: । ता: नित्या: । स्वशक्तिभि: सहेति शेष: । तथा प्राग्वत् स्वशक्तिभि: सहेत्यर्थ: । तरक्षगता: व्याघ्ररूढ़ा अपि स्वशक्तिभि: सहेत्यर्थ: । चकारात् स्वशक्तिभि! सहेत्यर्थ: चकारात् स्वशक्तिभि: सहेत्यर्थ: । तथा व्योमगता: स्वशक्तिभि: सहेत्यर्थ: । तथा व्योमगता: स्वशक्तिभि: सह व्योमस्था इत्यर्थ: । कृत्यादिकान्-इत्यत्रादिशब्दो डाकिन्यादिविषय: । गदान् पीड़ात: । मत्सम: शिवभूत: ॥ ७१ ॥

ग्रहाणामित्यादिभि: श्रेयस्करात्मकमित्यन्तैश्चतुर्भि: श्लोकैर्नवग्रहाणां मातृकात्मकत्वं तेषां तन्मयमण्डलसामान्यनिर्म्माणोपदेशं चन्द्रार्कात्मकत्वं इतरेषां ग्रहाणाञ्च चन्द्रार्कयोर्विशेषमण्डलप्रस्तावादिके च करोति । तत्र मातृकाविद्याविग्रहं अकारादिक्षकारान्तमातृकाख्यविद्यास्वरूपं विग्रहं ग्रहाणामित्यर्थ: । विग्रहमिति दिव्यत्वात् विग्रह इत्यर्थ: । तेन कारणेन तद्धाम-मण्डलं तेषामावासभूतं स्वरूपं सुधास्वरै: अमृतात्मकै: षोड़शस्वरैर्मण्डलं वक्ष्यमाणरूपं । तुर्विशेषे सुधाव्यञ्जनरूपं प्राग्वत् सुधास्वरूपव्यञ्जनरूपमित्यर्थ: ।

तेन तेषां मण्डलानि तैस्तैर्व्वर्णैर्व्वदामि ते ।
तेषां नवानां पूजासु तन्मयं नवमण्डलम् ॥ ७४ ॥
चन्द्रार्कयोः पृथक् पूजास्वभ्यर्च्यं मण्डलं तयोः ।
क्रमेण शृणु देवेशि सर्वश्रेयस्करात्मकम् ॥ ७५ ॥
प्राक्प्रत्यग्दक्षिणोदक्चतुःसूत्रनिपातनात् ।
त्रिहस्तमात्रे जनयेन्नव कोष्ठानि तेषु वै ॥ ७६ ॥
मध्ये प्रकोष्ठयोः कृत्वा वृत्तत्रयमतिस्फुटम् ।
तन्मध्ये तिर्य्यगूर्द्धञ्च सूत्रद्वयनिपातनात् ॥ ७७ ॥
विधाय नवधा मध्यमीशादि विलिखेत् क्रमात् ।
वाताद्यष्टस्वरान्मध्ये प्रणवं नभसा युतम् ॥ ७८ ॥

---

अस्य मण्डलमित्यस्येति पूर्व्वत्रान्वयः । इतरे भौमादयः । तन्मयाः चन्द्रादित्यमयाः । तेन हेतुना । तैस्तैश्चन्द्रसूर्य्यात्मकैः । नवानां पूजासु समुदायपूजासु तन्मयं मातृकात्मकं पृथक् पूजासु स्वतन्त्रपूजासु तयोश्चन्द्रार्कयोः ॥७५॥

प्रागित्यादिभिरनुग्रहमित्यन्तैश्चतुर्दशभिः श्लोकैर्नवग्रहाणां समुदायपूजासु मण्डलविशेषनिर्माणं तत्र तेषां पूजादिकञ्चोपदिशति । तत्र त्रिहस्तमात्रे आयामविस्ताराभ्यां । तेषु कोष्ठनवके मध्यप्रकोष्टसर्व्वमध्यकोष्ठे तद्वाह्यप्राग्दिग्गतान्तकोष्ठत्रयमध्यकोष्ठे च तन्मध्ये वृत्तत्रये सर्व्वमध्यवृत्तमध्ये ईशादि ईशादिनवकोष्ठाद्युत्तरकोष्ठान्तं । क्रमात् प्रादक्षिण्यक्रमाच्च वाताद्यष्टस्वरान् अकारादि ऋकारान्तानष्टौ स्वरान्मध्ये सर्व्वमध्यस्थकोष्ठमध्ये नभसा मकारेण वृत्तवीथ्योः वृत्तत्रयान्तरालवीथिद्वयस्वरोपेतं नभः षोड़शस्वरप्रसारितमकाराक्षरं । तत्र मण्डले द्वादशोदितैः एकोनविंशपटले धाता इत्यादिनार्द्धाद्येन षड्विंशेन श्लोकेन द्वादशधा प्रोक्तैः । नमोन्तैरित्यनेन चतुर्थी विभक्त्यन्तत्वं तन्नाम्नां सूचितमेव । ते मन्त्रा यथा ॐ धात्रे नमः इत्यादि ॐ विष्णवे नमः इत्यन्ताः । सोमस्याद्यं सोमशब्दस्याद्यमक्षरं सो इत्येतत् । खसंयुक्तं विन्दुसंयुक्तं । तेन अस्य तन्नाम्ना इत्युत्तरत्रान्वयः । तेन चतुर्थीनमोन्तेन तन्नाम्ना तस्य प्रोक्तनाममन्त्रेण तत्र प्राचीनपंक्तिस्थकोष्ठत्रयमध्यकोष्ठगतवृत्तमध्यगतकोष्ठनवके । विलिखेत् प्राग्वदीशादि-

वृत्तवीथ्योः स्वरोपेतं नभसा मातृकां लिखेत् ।
तत्रार्कमर्च्चयेत्तस्य नामभिर्द्वादशोदितैः ॥ ७९ ॥
प्रणवाद्यैर्नमोन्तैश्च भानोः सर्व्वं च सर्व्वदा ।
सोमस्याद्यं स्वसंयुक्तं कृत्वा तेन तथार्च्चयेत् ॥ ८० ॥
तन्नाम्ना तत्र विलिखेद्विन्द्वाद्यञ्च स्वराष्टकम् ।
षोड़शस्वरयुक्तञ्च * मातृकाञ्च स्वयोगतः ॥ ८१ ॥
विलिखेद् तयोर्म्मध्ये मध्यकोष्ठेऽपि तं लिखेत् ।
दाहवह्निस्वसहितमर्च्चयेत्तत्र मण्डले ॥ ८२ ॥
सोममुक्तक्रमेणैव प्रोक्तकालेषु सर्व्वदा ।
निवेद्य शर्करादुग्धपायसैश्चोपचारकैः ॥ ८३ ॥
सप्तस्वन्येषु कोष्ठेषु कृत्वा वृत्तत्रयं तथा ।
तत्तद्वर्गादिवर्णैश्च स्वरैस्तां मातृकामपि ॥ ८४ ॥
विलिख्य मध्यञ्च तथा कृत्वा तेषु च तत्क्रमात् ।
तत्तद्वर्गाक्षराण्याख्यात्राक्षरैरालिखेदपि ॥ ८५ ॥

---

विन्द्वाद्यं ऋकारान्तं हकारं षोड़शस्वरयुक्तं षोड़शस्वरप्रसारितं । स्वयोगतः विन्दुयुतं । मध्यकोष्ठे सर्व्वमध्यस्थकोष्ठमध्ये । तं हकारं । दाहवह्निस्वसहितं रेफ ईकार विन्दुसहितं ह्रीं इत्यक्षरं । प्रोक्तकालेषु ग्रहप्रातिकूल्यादिषु । उपचारैः पञ्चभिः षोड़शभिर्वा । अन्येषु आग्नेयादीशान्तेषु शिष्टेषु । तथा यथा मध्यप्राक्कोष्ठयोः । तत्तद्वर्गादिवर्णं भौमादिकोष्ठेषु तत्सप्तग्रहात्मकव्यञ्जनवर्गसप्तकस्य कचटतपयश इत्याद्यक्षरसप्तकं स्वरैः प्राग्वत् प्रत्येकं प्रसारितमिति शेषः । विलिख्य प्राग्वत् वृत्तवीथ्योर्मध्यं सर्व्ववृत्तमध्यस्तवृत्तमध्यं । तथा कृत्वा प्राग्वन्नवधा कृत्वेत्यर्थः । तेषु प्रतिमण्डलजनितकोष्ठनवके । तत्क्रमात् प्राग्वदीशाद्युत्तरान्तप्रादक्षिण्यक्रमात् । तत्तद्वर्गाक्षराण्याख्यात्राक्षरैः तत्तद्वर्गाक्षरपञ्चकं अस्मिन्नुत्तरत्र सप्ताशोतितमश्लोकवक्ष्यमाणचतुर्थीविभक्त्यन्तग्रहनामाक्षरत्रयमेवं सम्भूयाष्टावष्टावक्षराणीत्यर्थः । मध्ये तत्तत्कोष्ठनवकसर्व्वमध्यस्थकोष्ठमध्ये । वर्गाद्यक्षरं तत्तद्वर्गा-

---

* हकारञ्च ।

मध्ये प्रणवगर्भस्थवर्गाद्यक्षरमालिखेत् ।
एवं कृतेषु नवसु पूजयेच्च नवग्रहान् ॥ ८६ ॥
अग्न्यादीशान्तमभितो लिखेन्नामान्यनुक्रमात् ।
वाक्षराणि चतुर्थ्यन्तान्यर्चयेत्तैश्च तानिति ॥ ८७ ॥

---

दिभूतपूर्वोक्ताक्षरसप्तकं । नवसु मण्डलेष्विति शेषः । अग्न्यादीशान्तमित्यस्य काकाक्षिवत् पूर्व्वपरयोरन्वयः । एकदा पूजयेदिति पूर्व्वत्र अन्यदा लिखेदित्युत्तरत्र । अनुक्रमात् वक्ष्यमाणक्रमात् । तैः प्रणवादिनमोन्तैर्नाममन्त्रैः । तान् ग्रहान् । इति उक्तप्रकारतः । एतैर्नाममन्त्रैः । एवं उक्तप्रकारात् । तेषु मण्डलेषु । तेषां ग्रहाणां । ते ग्रहाः । तदनुग्रहं पूजकानुग्रहं । एतदुक्तं भवति प्राक्प्रत्यग्दक्षिणोदक् प्रत्येकमेकहस्तमानान्तरालं सूत्रचतुष्टयमास्फाल्य नव कोष्ठानि निष्पाद्य तेषु कोष्ठेषु प्रत्येकं वृत्तं कोष्ठरेखाचतुष्टयस्पृष्टास्पृष्टं कृत्वा तदन्तरेकैकाङ्गुलमानेन वृत्तद्वयं निष्पाद्य सर्व्वमध्यस्थवृत्तमध्यकर्णिकायां समान्तरालं सूत्रद्वयं प्राक्प्रत्यग्दक्षिणोदगास्फालनेन नवकोष्ठानि कृत्वा तत्र सर्व्वमध्यस्थकोष्ठमध्यगतवृत्तत्रयकर्णिकास्थकोष्ठनवकमध्यकोष्ठे सों इत्यक्षरं साध्ययुतं विलिख्य शिष्टकोष्ठाष्टके ईशादुत्तरान्तं अं आं इं ईं उं ऊं ऋं ॠं इत्यष्टावक्षराण्यालिख्य वाह्यवृत्तवीथिद्वयान्तःवीथ्यां प्राग्वत् षोड़शस्वरप्रसारितविन्दुयुतातां मकारपंक्तिं प्रादक्षिण्यात् समालिख्य वाह्यवीथ्यां सविन्दुकां मातृकां प्राग्वत् लिखित्वा ततस्तत्प्राक्पंक्तिस्थकोष्ठवृत्तत्रयसर्वमध्यकर्णिकास्थकोष्ठनवकसर्वमध्ये कोष्ठे क्रौं इत्यक्षरं साध्यादियुतं विलिख्य शिष्टकोष्ठाष्टके प्रागवदीशादुत्तरान्तं ऌं ॡं एं ऐं ओं औं अं अः इत्यष्टाक्षराणि लिखित्वा तत्र वाह्यवृत्तवीथिद्वयेन्तर्वीथ्यां स्वरविकृतां विन्दुयुक्तां डकारपंक्तिं प्रादक्षिण्यक्रमाल्लिखित्वा तद्वाह्यवीथ्यां मातृकाञ्च विन्दुयुतां प्राग्वद्विलिख्य ततश्चाग्नेयादीशान्तकोष्ठसप्तकगतवृत्तत्रयमध्यकर्णिकास्थकोष्ठनवकमध्यकोष्ठे प्रणवं लिखित्वा तत् प्रणवमध्ये यथाक्रमं कं चं टं तं पं यं शं इति तत्तद्वर्गाक्षराण्येकमेकं लिखित्वा तद्वहिरीशकोष्ठाद्युत्तरकोष्ठान्तं कवर्गं चवर्गं टवर्गं तवर्गं पवर्गं यवर्गं शवर्गं सप्ताक्षरपञ्चकपञ्चकं भौमाय बुधाय सौरये गुरवे राहवे शुक्राय केतवे इत्येतानि प्रत्येकं अक्षराणि सप्तनामानि यथाक्रममेकैकं संयोज्य एवं सम्भूयाष्टावष्टाक्षराणि लिखित्वा तत्तद्वाह्यवृत्तवीथिद्वये प्राग्वदन्तरन्तर्वीथ्यां तत्तद्वर्गाद्यक्षराणि स्वर-

भौमं बुधं तथा सौरिं गुरुं राहुञ्च शुक्रकम् ।
केतुमेतैस्तु सर्वत्र मन्त्रानुक्तौ च पूजनम् ॥ ८८ ॥
एवं नवग्रहाणान्तु मण्डलान्युदितानि वै ।
तेष्वेव तेषामर्चातस्ते कुर्य्युस्तदनुग्रहम् ॥ ८९ ॥
भास्करेन्द्वोश्च तद्वारद्वये दर्शे च पूर्णिके ।
स्वोच्चयोः स्थितपूजाञ्च मण्डलं शृणु पार्वति ॥ ९० ॥
विलिख्य वृत्तयुगलं तन्मध्ये तिर्य्यगूर्द्ध्वतः ।
रेखाभिरष्टभिर्म्मध्ये त्वेकाशीतिपदे लिखेत् ॥ ९१ ॥
ईशकोष्ठादिपरितः प्रवेशेनामृतार्णकान् ।
मायान्ताशीतिसंख्यातान्मध्ये द्रावगतञ्च तत् ॥ ९२ ॥

---

विकृतानि यथाक्रममेकैकपंक्तिक्रमादालिख्य तत्तद्बाह्यवाह्यवीथ्यां प्राग्वन्मातृकां लिखित्वा एवं नवमण्डलानि निष्पाद्य प्रोक्तक्रमाणां ग्रहाणां प्रोक्ततत्तत्प्रातिकूल्यादिषु प्रणवादिचतुर्थीनमोन्तैर्नाममन्त्रैरर्कस्योक्तद्वादशभिः चन्द्रस्य सों सोमाय नमः भौमादीनान्तु ऊं भौमाय नमः इत्यादिभिः ऊं केतवे नमः इत्यन्तैश्च प्रोक्तद्रव्यादिभिरर्चनात् प्रोक्तफलसिद्धिः । एवं क्रमेण शुभग्रहा महादिक्षु अशुभग्रहा विदिक्षु च भवन्तीति ॥ ८८ ॥

भास्करेत्यादिभिरीश्वरीत्यन्तैर्नवभिः श्लोकैः पूजाकालं तत्प्रस्तावपुरःसरं चन्द्रार्कयोः पृथक् पूजामण्डलं तन्निर्माणद्रव्याणि तत्र पूजनञ्चोपदिशति । तत्र तद्वारद्वये यथाक्रमं रविवारे सोमवारे च । पूर्णिके पूर्णायामित्यर्थः । स्वोच्चयोः स्थितयोः आदित्ये मेषराशौ दशमभागस्थे मध्याह्नगते ऋषभराशौ तृतीयभागगते चन्द्रे नभोमध्यं गते । तन्मध्ये वृत्तयुगलान्तर्वृत्तमध्ये रेखाभिरष्टभिः संजायेत इति शेषः । अस्य एकाशीतिपदे इत्यत्रान्वयः । मध्ये तत्तत्कोष्ठमध्ये इत्यर्थः । अमृतार्णान् अष्टमे पटले ज्याकमित्यादि षट्त्रिंशश्लोकोत्तरार्द्धप्रोक्तान् जकार झकार ठकार वकार सकारान् षोड़शस्वरविकृत्तान् । मायान्ताशीतिसंख्यातान् विसर्जनीयान्तान् अशीतिसंख्यातान् । मध्ये सर्व्वमध्यस्थकोष्ठ-

वृत्तयोरन्तरा कृत्वा मातृकां ग्रथिताञ्च तैः ।
पञ्चभिश्च लिखेत्तत्र बिम्बे सोमं समर्चयेत् ॥ ९३ ॥
कर्पूरचन्दनाभ्यान्तदालिखेदिन्दुबिम्बकम् ।
रक्तचन्दनसिन्दूरगैरिकैरेकतो रवेः ॥ ९४ ॥
कृत्वा बिम्बं तत्र तञ्च पूजयेत् प्रोक्तरूपतः ।
द्विवृत्तान्तस्तिर्य्यगूर्द्ध्वाः कृत्वा रेखाः समान्तरम् ॥ ९५ ॥
एकोनविंशं तन्मध्येष्वालिखेत् प्राग्वदीरितान् ।
प्राणादिकान्नभोऽन्तांस्तु खैरुपेतान् स्वरैर्युतान् ॥ ९६ ॥

---

मध्ये। दावगतं ठकारमध्यस्थं तत्पूर्व्वं चन्द्रमण्डलकोष्ठमध्यप्रोक्तक्लींकारं कृत्वेति भिन्नक्रमः ग्रथितं कृत्वेत्यर्थः। ग्रथितां एकान्तरितां। तैः विसर्जनीयान्तैरमृतार्णैः पञ्चभिः स्वरविकारविधुरैः एकतः अन्यतमेन रवेः कृत्वा बिम्बं रवेरिति पूर्व्वत्रान्वयः। तत्र बिम्बे तं रविं प्रोक्तरूपतः प्रोक्तमन्त्रोपचाराद्यैः। द्विवृत्तान्तः वृत्तद्वयं कृत्वा तदन्तरित्यर्थः। एकोनविंशं एकोनविंशतिरित्यर्थः। अस्य रेखा इति पूर्व्वत्रान्वयः। तन्मध्येषु तद्रेखाजनितकोष्ठचतुःशतकमध्येष्वित्यर्थः। प्राग्वत् ईशादिप्रादक्षिण्यप्रवेशगत्या। प्राणादिकान्नभोन्तान् ककारादिमकारान्तान् पञ्चविंशतिवर्णान्। खैर्बिन्दुभिः स्वरैर्युतान् एकैकं षोड़शस्वरविकृतान्। तैः ककारादिमकारान्तैः स्वरविकारभिन्नैः। स्वरैर्भान्तयुतैः स्वरविकृतमकारसहितैः। वह्निदशार्णैः अग्निभूताक्षरदशकेन। लिपिं मातृकां विलिखेदित्यस्य लिपिमिति पूर्व्वत्र विशदाकारमित्युत्तरत्र च काकाक्षिवदन्वयः। तन्मध्ये मण्डलमध्ये। प्राग्वन्नाममन्त्रोपचारादिभिः। एतदुक्तं भवति त्रिहस्तायामविस्तारमानेन वृत्तं निष्पाद्य तद्बहिरेकाङ्गुलमाने च वृत्तं निष्पाद्य सर्वमध्यवृत्तमध्ये कर्णिकायां प्राक्प्रत्यग्दक्षिणोदक् च अष्टाभिरष्टाभिः रेखाभिः समान्तरालाभिरेकाशीतिकोष्ठानि निष्पाद्य तेषु कोष्ठेष्वीशदिग्गतकोष्ठादिप्रादक्षिण्यप्रवेशगत्या प्रोक्तान्यमृताक्षराणि स्वरविकृत्या अशीतिसंख्यानि मायान्तानि विलिख्य शिष्टसर्व्वमध्यकोष्ठमध्ये ठकारमालिख्य तदन्तरे प्राग्वत् क्लीं इत्यक्षरं ससाध्यादिकञ्च विलिख्य तद्बहिर्वृत्तवीथ्यां स्वरविकारविधुरा-

वृत्तयोरन्तरा तैश्च पञ्चविंशतिवर्णकैः ।
स्वरैर्भान्तयुतैर्वह्निदशार्णैर्ग्रथितां लिपिम् ॥ ९७ ॥
विलिख्य विशदाकारं विहस्तायामविस्तरम् ।
तन्मध्ये भानुमावाह्य पूजयेत् प्राग्वदीश्वरि ॥ ९८ ॥
पीठे वा सुधया क्लिप्ते भूतले वा शिलातले ।
सुसमेनावृते कृत्वा बिम्बान्युक्तानि पूजयेत् ॥ ९९ ॥
एवं सर्वत्र तन्त्रेऽस्मिन् ग्रहपूजा समीरिता ।
विशेषादेशरहिते तत्र तत्क्रमतोऽर्च्चयेत् ॥ १०० ॥

---

मृताक्षरपञ्चकग्रथितां मातृकां विन्यस्य एवमेतन्मण्डलं कर्पूरचन्दनाभ्यां विरच्य प्रोक्तकालेषु प्रोक्तनाममन्त्रेण प्रोक्तोपचाराद्यैः सोममर्च्चयेत्। ततः प्राग्वन्मानेन वृत्तद्वयं निष्पाद्य प्राग्वत्तत्कर्णिकायां प्राक्प्रत्यक्‌दक्षिणोदक् च समान्तराला एकोनविंशत्येकोनविंशतिरेखाः समालिख्य चतुःशतकोष्ठानि निष्पाद्य तेषु कोष्ठेष्वीशादिप्रादक्षिण्यप्रवेशगत्या ककारादिमकारान्तानि पञ्चविंशतिमक्षराणि प्रत्येकं षोड़शस्वरविकृत्या षोड़शषोड़शसंख्यातानि सम्भूय चतुःशतसंख्यातानि सविन्दुकानि विलिख्य तद्बहिर्वृत्तवीथ्यां स्वरविकारविधुरककारादिमकारान्तैः पञ्चविंशत्यक्षरैः स्वरविकृतमकाररूपषोड़शकेन वह्निभूताक्षरदशकेन सम्भूयैकपञ्चाशदक्षरैः सविन्दुकैरेकान्तरा ग्रथितां मातृकां सविन्दुकां विलिख्य एवमेतन्मण्डलं प्रोक्तरक्तचन्दनादिना विलिख्य तत्र प्रोक्तकालेषु प्रोक्तनाममन्त्रैर्द्वादशभिः प्रोक्तोपचाराद्यैरर्कञ्चार्च्चयेत्। तेन प्रोक्तफलसिद्धिभागिति ॥ ९८ ॥

पीठे इत्यादिभिर्विगृह्य इत्यन्तैस्त्रिभिः श्लोकैस्तन्त्रसाधारणनवग्रहमण्डललेखनस्थानविशेषोपदेशं प्रोक्तपूजातिदेशं पटलार्थनिगमनं गृहाणां नित्यात्मकत्वोपदेशञ्च करोति। तत्र वा विकल्पे। अनावृते जनाद्यावरकरहिते। तत्र विशेषादेशरहिते तत्क्रमतः विशेषोपदेशक्रमतः विद्यायाः नित्यानामिति

एवं ते देवि विद्यायाः कालदेशात्मतोदिता ।
सर्व्वात्मना सर्वदा च सैवार्च्या सर्वविग्रहा ॥ १०१ ॥
रागतत्त्वमयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निफालनाच्चित्ते तत्तत्त्वं स्वात्मसात् कृतम् ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमते
लोकतादात्म्यादिकथनं नाम
अष्टाविंशं पटलम् ॥
॥ २८ ॥

---

शेषः। सैव ललितैव अर्च्चनीया सर्व्वविग्रहा सर्व्वदेवताविग्रहा इति ॥ १०१ ॥ ॐ ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसार-
सिंहराजप्रकाशाभिधानेन सुभगानन्दनाथेन विरचितायां
मनोरमाख्यायां व्याख्यायां षोड़शनित्यानां लोककाल-
तादात्म्यादिप्रकाशनपरं अष्टाविंशपटलं परिपूर्णं
परामृष्टम् ॥ २८ ॥ ॐतत्सत् ॥

ग्रन्थसंख्या—अष्टाविंशे तु यन्त्राणि प्रोक्तान्येकादशात्र तु ।
सपादाशीतिरधिका व्याख्याग्रन्थाः शतद्वयात् ॥

## एकोनत्रिंशपटलम् ।

अथ षोड़शनित्यानां होमाय विधिवच्छिवे ।
प्राच्यादिदिग्विभागञ्च मण्डपादेस्तु लक्षणम् ॥ १ ॥
कुण्डानां स्थाननिर्म्माणैर्नाभियोन्यादिलक्षणम् ।
मानानि तेषामग्नेस्तु ध्यानं जिह्वास्तदर्च्चनम् ॥ २ ॥
होमद्रव्याणि सामान्यविशेषाणि हुतक्रियाम् ।
उपक्रमोपसंहारौ फलानि च यथाक्रमम् ॥ ३ ॥
कथयामि शृणु प्राज्ञे यैर्म्मन्त्री सिद्धिमाप्नुयात् ।
यदि कुर्य्यात् यथादृष्टं विपन्नो निरयं व्रजेत् ॥ ४ ॥
भानोर्गत्या दिशो ज्ञात्वा कुर्य्यात् कर्म्माणि देशिकः ।
तद्गत्या दिक्परिज्ञानं शृणु वक्ष्ये यथाविधि ॥ ५ ॥

---

पूर्व्वस्मिन्नष्टाविंशे पटले षोड़शनित्यानां लोककालतादात्म्यादिकमुपदिश्यानन्तरं षोड़शनित्यानां नित्यहोमार्थं मण्डपकुण्डादिनिर्माणादिक्रममुपदिशति । अथ षोड़शनित्यानामित्यादिना वाञ्छितमित्यन्तेन श्लोकशतरूपेणैकोनत्रिंशेन पटलेन । तत्र अथ षोड़शेत्यादिभिर्व्रजेदित्यन्तैश्चतुर्भिः श्लोकैः षटलार्थोद्देशमुक्त्वान्यथा करणे प्रत्यवायोपदेशञ्च करोति । तत्र मण्डपादेरित्यत्रादिशब्दः कुण्डादिविषयः । योन्यादीत्यत्रादिशब्दो मेखलादिविषयः । तेषां मण्डपादीनां । तद्ध्यानं क्रूरसौम्यादिविभागात् तत्तद्ध्यानं । तदर्च्चनं अग्नेर्जिह्वानाञ्चार्च्चनं । उपक्रमोपसंहारौ पुरस्तात्तन्त्रे उपरिष्टात् तन्त्रे च यैः प्रोक्तमण्डपादिगुणविधानैः । यथादृष्टं प्रोक्तगुणविधानवर्ज्जं । निरयं नरकं देवताप्रातिकूल्यमित्यर्थः ॥ ४ ॥

भानोरित्यादिभिः कल्पयेदित्यन्तैः पञ्चभिः श्लोकैः शङ्कुच्छायया दिक्परिज्ञानक्रमं प्रस्तावसहितमुपदिशति । तत्र भानोर्गत्या आदित्यस्य दक्षिणोत्तरायणक्रमगतिभेदजातया छाययेति यावत् । कर्माणीति मण्डपकुण्डादीनीति शेषः । तद्गत्या भानुगत्या । सुसमे भूतले जलयन्त्रादिभिरिति शेषः । ज्ञात्वेति भिन्नक्रमः ।

सुसमे भूतले कृत्वा वृत्तं भ्रमणरूपतः ।
तन्मध्यं विन्दुमध्यन्तु शङ्कुं संस्थाप्य तस्य वै ॥ ६ ॥
अग्रच्छायान्वयवशाद्वृत्ते पूर्वापरद्वये ।
पूर्वापराह्णयोः कृत्वा चिह्नं तमभितस्तथा ॥ ७ ॥
खसमानपरिभ्रान्त्या कृत्वा वृत्तद्वयं पुनः ।
तयोः संश्लेषसञ्जातमध्यदक्षोत्तरस्थिते ॥ ८ ॥
सन्धिद्वये च प्राक्प्रत्यक्सूत्रमध्ये तु विन्यसेत् ।
सूत्रं दक्षोत्तरं तेषां अग्रैः प्रागादि कल्पयेत् ॥ ९ ॥

---

वृत्तं कृत्वेति यावत् । तन्मध्यं विन्दुमध्यं इत्येतत् क्रियाविशेषणं । वृत्तमध्यस्य मद्ये विन्दुमध्यं शङ्कुमध्यं यथा तथेत्यर्थः । तुरवधारणे । तस्य शङ्कोर्वृत्ते इत्येतत् पूर्वापरयोरन्वेति । पूर्वापरद्वये पूर्वापरात्मिकयोर्द्वयोर्दिशोः कृत्वा प्रागव-चिह्ने कृत्वेत्यन्वयः । तदभितः तच्चिह्नद्वयमभितः । तथा तद्द्वयमवष्टभ्य खसमान परिभ्रान्त्या तच्चिह्नद्वयान्तरालमानस्य खेष्टसार्द्धमानेनान्योन्यतुल्येन परिभ्रान्त्या कृत्वा वृत्तद्वयं वृत्तद्वयं कृत्वेत्यर्थः । तयोः पूर्वापरयोर्वृत्तयोः । संश्लेषसञ्जातमध्यदक्षो-त्तरस्थिते इत्यस्य उत्तरत्र सन्धिद्वये इत्येतद्विशेष्यं । प्राक्प्रत्यक्सूत्रमध्ये प्राक्-प्रत्यागात्मकसूत्रमध्ये । तुः समाहारे । दक्षोत्तरं दक्षिणोत्तरं तेषां मण्डपादीनां सूत्रैः अग्रैःसूत्राग्रैः । एतदुक्तं भवति जीमूतौघपरिवेष्टितभानौ दिवसे छदिरादिभिरना-वृते देशे जलयन्त्रादिभिः सुसमीकृतस्य दर्पणोदरसङ्काशस्य भूतलस्य मध्ये विन्दुं कृत्वा तदवष्टम्भतः प्रतिदिशं द्वादशाङ्गुलमानं वृत्तं निष्पाद्य तत्र षडङ्गुलमान-परिणाहमूलमुत्तरोत्तरपरिणाहापचयेन सूचीमात्रीकृताग्रपरिणाहमृज्वाकृति शङ्कुं द्वादशाङ्गुलमानच्छायासहितं वृत्ताकारं शिल्पिवरेण निर्म्मितं तद्वृत्तमध्यस्थ विन्दुमध्ये यथा शङ्कुमूलपरिणाहमधरं भवति तथा संस्थाप्य तच्छङ्कुच्छायाग्रस्य पूर्वाह्णे तद्वृत्तरेखापश्चिमभागे यत्र सम्पातस्तत्र च ततोऽपराह्णे तच्छङ्कुच्छायाग्रस्य तद्वृत्तरेखापूर्वभागे यत्र सम्पातस्तत्र च चिह्नं विधाय तत्चिह्नद्वयप्रापि यत् सूत्रं तत् पूर्वापरं परिकल्पितचिह्नद्वयावष्टम्भेन तच्चिह्नान्तरालमानस्य खेष्टाधिकेनार्द्ध-मानेनान्योन्यसमेन किञ्चिदन्योन्यसंश्लिष्टं पूर्वापरं वृत्तद्वयं विधाय तद्वृत्तरेखा-दक्षिणोत्तरसन्धिद्वयप्रापि प्राक्पश्चिमसूत्रमधागत्या तिर्य्यग्रूपेण यत्सूत्रं तद्-

राज्ञां होमाभिषेकादिप्रयोगार्थन्तु मण्डपम् ।
विदध्यान्नवहस्तेन विस्तारायामसंयुतम् ॥ १० ॥
षोड़शस्तम्भसंयुक्तं चतुर्द्वारं सुतोरणम ।
उदुम्बरवटाश्वत्थप्लक्षैश्छदनमालया ॥ ११ ॥
पिहिताशेषकोणञ्च तत्त्रिभागैकभागतः ।
विदध्यान्मध्यतो वेदीं करमात्रसमुन्नताम् ॥ १२ ॥
दर्पणोदरसङ्काशमध्यां तदभितस्तथा ।
प्रागादिदिक्षु कोणेषु वह्न्यादिषु च कल्पयेत् ॥ १३ ॥

---

क्षिणोत्तरं परिकल्प्य तत् प्राक्प्रत्यगदक्षिणोत्तरसूत्रद्वयसम्पातात् वक्ष्यमाणपरिकल्पितसूत्राग्रैस्तैस्तेषां मण्डपकुण्डादीनां प्राक्प्रत्यग्दक्षिणोत्तरात्मकदिक्चतुष्टयं कल्पयेदिति ॥ ८ ॥

राज्ञामित्यादिभिर्लक्षणमित्यन्तैर्दशभिः श्लोकैः मण्डपनिर्माणक्रमं तत्र वेदीकुण्डनिर्माणस्थानानि चोपदिशति। तत्र नवहस्तेन विस्तारायामसंयुतं नवहस्तमानविस्तारेण नवहस्तमानायामेन संयुतं। षोड़शस्तम्भसंयुक्तं प्राक्प्रत्यग्दक्षिणोदक् च प्रत्येकं समान्तरालं प्रसारितसूत्रचतुष्टयषोड़शसन्धिष्विति शेषः। चतुर्द्वारं दिक्ष्विति शेषः। छदनमालया दर्भमालया। पिहिताशेषकोणं पिहिताशेषकोणभक्तिं। तत्त्रिभागैकभागतः मण्डपस्य त्रिभागैकभागतः। मध्यतः मण्डपमध्यस्थस्तम्भचतुष्टयमध्यतः। तदभितः वेदीमभितः। तथा एकत्रिंशे पटले वक्ष्यमाणमेषादिमीनान्तद्वादशराशिस्थानात्मकेषु। चः समुच्चये। कल्पयेदित्यस्य कुण्डानीत्यनेनोत्तरत्रान्वयः। चतुष्कं कुण्डानामिति शेषः। एतदुक्तं भवति प्राक्प्रत्यगदक्षिणोदक् च नव नवहस्तमानविस्तारायामेन वाह्यकोणचतुष्टये चतुर्भिः प्रतिदिशं द्विद्विक्रमाद्दिक्चतुष्टयेऽष्टभिर्मध्यभक्तिमभितः कोणचतुष्टये चतुर्भिश्च सम्भूय षोड़शस्तम्भैः संयुतं निःशेषपिहितकोणचतुष्टयं प्रागादिषु मण्डपचतुर्द्वारेषु उदुम्बरवटाश्वत्थप्लक्षाख्यदुग्धतरुभिः क्रमात् कल्पितच्छदनमालयोपेतेन तोरणचतुष्टयेन युतं त्रिहस्तमानविस्तारायामात्मकभक्तिनवकोपेतं मण्डपं विधाय तन्मध्यचतुःस्तम्भमध्यस्थभक्तिमध्ये त्वेकहस्तमानोन्नतियुक्तां त्रिहस्तायाम-

कुण्डान्यष्टौ चतुष्कञ्च तेषां रूपञ्च नामकम् ।
निर्म्माणं सकलं वक्ष्ये यथाविधि तवानघे ॥ १४ ॥
तुलाकुलीरमेषाणां मकरस्य च देशतः ।
विदध्याद्वृत्तकुण्डानि चरराशिचतुष्टये ॥ १५ ॥
वृषे सिंहे वृश्चिके च कुम्भे च स्थिरराशिषु ।
विदध्याच्चतुरस्राणि ततः कुण्डान्यनुक्रमात् ॥ १६ ॥
मिथुने कन्यकायाञ्च चापे मीने क्रमेण वै ।
उभयात्मसु कुर्वीत योनिकुण्डानि मङ्गले ॥ १७ ॥

---

विस्तारां दर्पणोदरसङ्काशां वेदीं विधाय तत् परितो वाह्यभक्त्यष्टके द्वादशराशिस्थानेषु प्रतिदिशं द्विद्विक्रमेण कुण्डाष्टकं प्रतिकोणमेकैकक्रमेण कुण्डचतुष्टयञ्च सम्भूय द्वादशकुण्डानि वक्ष्यमाणक्रमेण नृपाणां होमाभिषेकादिमङ्गलप्रयोगार्थं विदध्यादिति। तेषां द्वादशानां कुण्डानां रूपं चतुरस्राद्यात्मकं। कुलीरशब्देन कर्कटराशिरुच्यते। चः समाहारे। देशतः देशे। वृत्तकुण्डानि वृत्ताकाराणि कुण्डानि। स्थिरराशिषु प्रोक्तवृषादिषु चतुर्षु। विदध्याच्चतुरस्राणि चतुरस्रचतुष्टयं विदध्यादित्यर्थः कुर्य्यात् कुण्डानि तानि चत्वारि चतुरस्राणि। अनुक्रमाद्वक्ष्यमाणक्रमात् कुण्डानि कुर्य्यादित्यर्थः। उभयात्मसु प्रोक्तमिथुनादिषु चतुर्षु राशिस्थानेषु योनिकुण्डानि योन्याकारवक्ष्यमाणलक्षणकुण्डानि। मङ्गले प्रयोगे इति शेषः। अमङ्गलेषु प्रयोगेष्विति शेषः। चरेषु चरराशिस्थानेषु अर्द्धशशाङ्कं अर्द्धचन्द्राकाराणि। स्थिरेषु स्थिरराशिषु। अपि शब्देन पूर्व्वकुण्डानीत्येतदाकृष्यते। त्रिकोणानि त्रिकोणाकाराणि। परेषु उभयराशिषु। तुर्विशेषे। चतुष्टये कोणानामिति शेषः। अष्टकोणं अष्टास्रे। एतदुक्तं भवति प्रोक्तमण्डपवाह्यस्थभक्त्यष्टके प्रागादिचतुर्दिग्गतासु चतसृषु भक्तिषु एकस्यामेकस्यां द्विद्विराशिक्रमेण कोणदिग्गतासु भक्तिष्वेकैकक्रमेण सम्भूय प्राक्पंक्तिगतस्थानद्वयेतूत्तरस्थानमारभ्य प्रादक्षिण्यक्रमेणेशानकोणभक्तिपर्य्यन्तं मेषादिद्वादशराशिस्थानानि परिकल्प्य तेषु स्थानेषु मङ्गलप्रयोगे मेषकर्कटतुलामकरराशिषु वृत्तकुण्डानि चत्वारि वृषसिंहवृश्चिककुम्भराशिषु चतुरस्रकुण्डानि चत्वारि मिथुन

अमङ्गलेषु कुर्वीत चरेष्वर्द्धशशाङ्ककम् ।
स्थिरेष्वपि त्रिकोणानि परेषु तु चतुष्टये ॥ १८ ॥
पञ्चास्रञ्च षड़स्रञ्च चाष्टकोणं सकर्णिकम् ।
एवं नवानां कुण्डानां शृणु मानादिलक्षणम् १८ ॥
मध्यमाङ्गुलिमध्यस्थपर्वणः परिणाहतः ।
तृतीयांशो भवेद्यच्च तन्त्रे सर्वत्र चाङ्गुलिः ॥ २० ॥
तैश्चतुर्भिर्भवेन्मुष्टिर्वितस्तिस्त्रिभिर्गुणैः ।
अरत्निस्तद्द्वयेन स्याद्धस्तस्तद्द्वयतः शिवे ॥ २१ ॥
तद्द्वयन्तु भवेद्व्यामः तन्मानं स्यान्नरोन्नतिः ।
षण्णवत्यङ्गुला सा स्यात्तन्मानैः कुण्डकल्पनम् ॥ २२ ॥

---

कन्याचापमीनराशिषु योन्याकाराणि चत्वारि कुण्डानि च पुनरमङ्गलप्रयोगे तन्मेषादिचरराशिचतुष्टये अर्द्धचन्द्राकारकुण्डचतुष्टयं स्थिरराशिचतुष्टये त्रिकोणाकारकुण्डचतुष्टयं उभयराशिचतुष्टये क्रमात् पञ्चास्रषड़स्रसप्तास्राष्टास्रात्मकान्येकैक कुण्डानि च कृत्वा सम्भूय वृत्तचतुरस्रयोन्यर्द्धचन्द्रत्रिकोणपञ्चास्रषड़स्रसप्तास्राष्टास्राणां नवविधानां कुण्डानां मानादिलक्षणं शृण्विति ॥१८॥

मध्यमेत्यादिभिः कल्पनमित्यन्तैस्त्रिभिः श्लोकैरङ्गुल्यादिमानक्रमं कुण्डमानवासनाञ्चोपदिशति । तत्र मध्यमाङ्गुलीत्यादिना श्लोकेनैतदुक्तं भवति यजमानदक्षिणहस्तस्य मध्यमाङ्गुलिमध्यपर्व्वप्रदेशपरिणाहमानं त्रिधा कृत्वा तेषां त्रयाणामंशानामेकोंशः सर्व्वत्रास्मिन् तन्त्रेऽङ्गुलिमानं भवेदिति । तैश्चतुरङ्गुलिमितांशैः मुष्टिरिति नाम वितस्तिः नाम तत्त्रिभिर्गुणैस्त्रिगुणितैर्मुष्टिमानांशैर्द्वादशाङ्गुलमानैरित्यर्थः । अरत्निः संज्ञा तद्द्वयेन वितस्तिद्वयेन । अङ्गुलिचतुर्विंशत्येति यावत् । हस्तः संज्ञा तद्द्वयतः अरत्निद्वयेन अष्टचत्वारिंशदङ्गुलिभिरिति यावत् । शिवे इति देवीसम्बुद्धिः । तद्द्वयं हस्तद्वयं व्यामः नाम तन्मानं व्याममानं । नरोन्नतिः नराणां मानमित्यर्थः । सा नरोन्नतिस्तन्मानैः षण्णवत्यङ्गुलमानैः अवयवैः प्रमाणैश्च । एतदुक्तं भवति सर्वेषां कुण्डानामायामविस्तारख्यातानां प्रत्येकं चतुर्विंशत्यङ्गुलविशिष्टत्वात् सम्भूय द्वासप्तत्यङ्गुलैश्च तैर्मेखलानामुत्सेधविस्तारयोः प्रत्येकं द्वादशाङ्गुलविशिष्टत्वलाभात् ताभ्यां सम्भूय षण्णवत्यङ्गुलात्म-

प्राक्प्रत्यक् सूत्रमास्फाल्य तन्मध्ये चिह्नकल्पनम् ।
कृत्वा तत्पूर्वतः पश्चाद्द्वादशाङ्गुलमानतः ॥ २३ ॥
परं प्रमृज्य तत्रापि विदध्याच्चिह्नयुग्मकम् ।
प्राक्प्रत्यक्चिह्नमानेन तयोरेवावलम्बतः ॥ २४ ॥
दक्षिणोत्तरतो हंसपदे कृत्वा ततस्तयोः ।
प्रसार्य्य सूत्रं तत्रापि मार्जयित्वोक्तमानतः ॥ २५ ॥
ततस्तदग्राण्यालम्ब्य मध्यचिह्नस्य मानतः ।
कुर्य्याद्धंसपदं कोष्ठान्यभितस्तेषु पातयेत् ॥ २६ ॥

---

कत्वाच्च परिणाहतः षण्णवत्यङ्गुलात्मकत्वाच्च तत्संख्याङ्गुलमितपुरुषदेहोन्नति समानानि कुण्डानीति ॥ २२ ॥

प्रागित्यादिभिर्मानत इत्यन्तैः पञ्चभिः श्लोकैः समचतुरस्रकुण्डनिर्माणक्रमं तच्चतुरस्रे कुण्डेऽन्यतरकुण्डनिर्म्माणं प्रस्तावसहितमुपदिशति । तत्र तन्मध्यप्राक्प्रत्यक्सूत्रमध्ये चिह्नकल्पनं कृत्वा चिह्नं कृत्वेत्यर्थः । तत्पूर्व्वतः पश्चिमाच्चिह्नात् पूर्व्वतः । पश्चाच्च द्वादशाङ्गुलमानतः प्रत्येकमिति शेषः । परं अधिकं तत्रापि उभयतः प्रोक्तद्वादशद्वादशाङ्गुलमानेपि । तयोः प्राक्प्रत्यक्चिह्नयोः अवलम्बतः अवष्टम्भतः भ्रमादित्यर्थः । तयोर्दक्षिणोत्तरहंसपदयोः तद्दक्षिणोत्तरतिर्य्यक्सूत्रमानतः द्वादशाङ्गुलद्वादशाङ्गुलमानतः अधिकमिति शेषः । तदग्राणि प्राक्प्रत्यग्दक्षिणोत्तरसूत्रचतुष्टयाग्राणि मध्यचिह्नस्य मानतः द्वादशाङ्गुलमानतः पातयेदित्यस्य चतुष्टयमित्यत्रान्वयः । एतदुक्तं भवति प्राक्कल्पितदिक्क्रमात् प्राक्प्रत्यगायतं सूत्रमास्फाल्य तन्मध्ये चिह्नं कृत्वा तच्चिह्नात् पूर्व्वतः पश्चिमतः च द्वादशाङ्गुलद्वादशाङ्गुलमाने चिह्ने कृत्वा तत्तदधिकांशं मार्जयित्वा तच्चिह्नद्वयावष्टम्भेन तत्सूत्रं तुल्यमानभ्रमेण पूर्वापरतः किञ्चिदन्योन्यसंश्लिष्टवृत्तद्वयं विधाय तयोर्दक्षिणोत्तरहंसपदप्रापि प्राक्प्रत्यग्व्यासूत्रमध्यस्थहंसपदसन्धेर्दा दक्षिणोत्तरं सूत्रमास्फाल्य तत्रापि मध्यचिह्नाद्द्वादशाङ्गुलद्वादशाङ्गुलमाने दक्षिणोत्तरतश्चिह्नद्वयं विधाय तत्तदधिकांशञ्च मार्जयित्वा तत्तत्सूत्राग्रचतुष्टयावलम्बनेन द्वादशद्वादशाङ्गुलमानेन चतुर्षु कोणेष्वपि हंसपदचतुष्टयं विधाय तत्तदग्रात्तत्तद्धंसपदप्रापि प्राक्प्रत्यक्सूत्रद्वयं दक्षिणोत्तरसूत्रद्वयञ्च सम्भूय सूत्रचतुष्टयमा-

चतुष्टयन्तु सूत्रं च चतुरस्रं भवेत् समम् ।
तस्मिन्नन्यानि कुण्डानि वदामि तव मानतः ॥ २७ ॥
तेषां प्रोक्तक्रमेणैव चरादिषु तु राशिषु ।
माननिर्म्माणयोर्वक्ष्ये विधानं सुस्फुटं शिवे ॥ २८ ॥
तन्मध्याष्टादशांशेन प्राक्सूत्राग्रं विकाशयेत् ।
तिर्य्यक्सूत्राद्बहिस्तेन मानेन भ्रमयेत्तथा ॥ २९ ॥
मध्यचिह्नावलम्बेन भवेत्तद्वृत्तकुण्डकम् ।
चतुरस्राभितः सा तु त्याज्या भूरन्यतस्तथा ॥ ३० ॥
लभ्यते सर्वकुण्डेषु तेन सर्वाणि सर्वतः ।
तत्समान्येव जायन्ते षस्नवत्यङ्गुलात्मना ॥ ३१ ॥
तन्मध्ये दशमांशं तु परित्यज्याधऊर्द्धतः ।
तेषां शशाङ्कमानेन तन्मध्याद्भ्रामयेत्तथा ॥ ३२ ॥

---

स्फाल्य समचतुरस्रं कुर्य्यादिति। तस्मिन् समचतुरस्रे अन्यानि वृत्तादीनि मानतः चतुरस्रकुण्डप्रोक्तषस्नवत्यङ्गुलमानान्न्यूनाधिकमानत इति यावत् ॥ २७ ॥

तेषामित्यादिभिरात्मना इ यन्तैश्चतुर्भिः श्लोकैः सप्रस्तावं वृत्तकुण्डनिर्माण-क्रमादिकमुपदिशति। तत्र तेषां कुण्डानां सुस्फुटं गमकं। शिवे इति सम्बुद्धिः। तन्मध्याष्टादशांशेन चतुरस्रमध्यसूत्रमानस्याष्टादशांशेन। तिर्य्यक्-सूत्राद्बहिर्दक्षिणोत्तरायततिर्य्यक्सूत्रत्रये प्राक्सूत्राद्बहिः। तथा अभितः परितः कोणेषु चतुर्षु। सा भूः। अन्यतः अन्यस्मिन् दिक्चतुष्टये इत्यर्थः। तेन वक्ष्य-माणविधानेन। सर्वाणि कुण्डानि। तत्समानि चतुरस्रपरिणाहमानसमानि। एतदुक्तं भवति प्राग्वत् समचतुरस्रं कृत्वा तन्मध्यविष्कम्भमानमष्टादशधा विभज्य तेष्वेकांशमानात् प्राग्गतदक्षिणो त्तरायाततिर्य्यक्सूत्राद्बहिः प्राक्-प्रत्यगायतसूत्रं प्रागग्रं निःसार्य्य तन्मानेन चतुरस्रमध्यस्थहंसपदमध्यावलम्बनेन भ्रमाद्वृत्ताकारं कुण्डमानं कल्पयेत्। एवं कृते कोणचतुष्टये वृत्ताद्बहिर्गतं भूमिमानं दिक्चतुष्टये लभ्यते तस्मात् सर्व्वकुण्डानि वक्ष्यमाणविधानेन षस्नव-त्यङ्गुल परिणाहतश्चतुरस्रचैत्रसमानि भवन्तीति ॥ ३१ ॥

अर्द्धचन्द्राकृतिर्येन भवेत् कुण्डं तदीरितम् ।
येन द्वयं चराणां स्याद्राशीनां क्रमतः शिवे ॥ ३३ ॥
तस्यैव षष्ठमंशन्तु पार्श्वयोस्तु विकाशयेत् ।
प्रत्येकं पश्चिमं सूत्रं तन्मानेनाथ सूत्रयोः ॥ ३४ ॥
विन्यासाद्ब्रह्मसूत्रान्तं तद्द्वयाग्रावलम्बनात् ।
कुण्डं त्रिकोणमुद्दिष्टं चतुर्षु स्थिरराशिषु ॥ ३५ ॥

---

तन्मध्ये इत्यादिना शिवे इत्यन्तेन श्लोकद्वयेनार्द्धचन्द्राकारकुण्डनिर्माण विधानोपदेशं तस्य वृत्तकुण्डस्योक्तचरराश्यात्मकत्वनिगमनञ्च करोति। तत्र तन्मध्ये दशमांशं चतुरस्रब्रह्मसूत्रमानस्य दशमांशं। तुः समाहारे। अधऊर्द्धं तः प्राक्पश्चिमतः। तन्मध्यात् पश्चिमदिग्गततिर्य्यक् सूत्रादधोऽष्टांशमाने कल्पित-दक्षिणोत्तरायततिर्य्यक्सूत्रमध्यात्तथा तत्सूत्रदक्षिणोत्तराग्रावधीति यावत्। येन विधानेन इत्यनेन दक्षिणोत्तरतिर्य्यक्सूत्राग्रद्वयं चतुरस्राद्बहिस्त्रीँस्त्रीनंशान् प्रसारयेदित्यर्थः। एतदुक्तं भवति चतुरस्रस्य मध्यविष्कम्भमानं दशधा विभज्य तेष्वेकैकांशं तत् प्राक् पश्चिमतः परित्यज्य चिह्नद्वयं कृत्वा तत्पश्चिमचिह्नाद्दक्षि-णोत्तरायततिर्य्यक्सूत्रं तच्चतुरस्राद्बहिरप्यंशत्रयचयाधिकमास्फाल्य तदग्रद्वया-वधि तत्कल्पितपश्चिमसूत्रब्रह्मसूत्रसन्धिमध्यावलम्बनेन कल्पिताग्रचिह्नावध्यष्टांश-मानेन भ्रमादर्द्धचन्द्राकृति कुण्डं भवेदिति। एतद्द्वयं वृत्ताकारकुण्डमर्द्धचन्द्रा कारकुण्डं च क्रमतः मङ्गलामङ्गलयोः। शिवे इति सम्बुद्धिः॥ ३३ ॥

तस्यैवेत्यादिना राशिष्वित्यन्तेन श्लोकद्वयेन त्रिकोणकुण्डनिर्माणक्रमसुपदि-शति। तत्र तस्यैव चतुरस्रस्यैव। पार्श्वयोर्दक्षिणोत्तरयोः। तन्मानेन प्रसारित-सूत्रमानेन। तद्द्वयाग्रावलम्बनात् प्रसारितपश्चिमसूत्रद्वयाग्रावलम्बनात्। एतदुक्तं भवति प्रागवच्चतुरस्रं कृत्वा तत् ब्रह्मसूत्रं प्रागग्रं वहिर्गत्या प्रसार्य्य तच्चतुरस्रविष्कम्भमानं षोढ़ा विभज्य तेष्वेकैकांशेन पश्चिमतिर्य्यक् सूत्राग्रद्वयं पार्श्वयोर्वहिः प्रसार्य्य तदग्रद्वयात् तत्सूत्रमानोपेतसूत्रद्वयस्य प्राक्प्रसारितब्रह्म-सूत्रस्य च यत्र सम्पातस्तदवध्यास्फाल्य त्र्यस्रं कुण्डं कल्पयेत्। एतदमङ्गलप्रयोगे स्थिरराशिषु चतुर्षूदितमिति॥ ३५ ॥

तन्मध्यपञ्चमांशेन विकाश्य ब्रह्मसूत्रकम् ।
पूर्वत: पश्चिमद्वन्द्वं कोष्ठयोर्मध्यदेशत: ॥ ३६ ॥
तत्कोणमानेन तथा भ्रामयेत् पश्चिमाग्रकान् ।
उत्तराग्रावधि तथा दक्षिणाग्रावधि प्रिये ॥ ३७ ॥
तन्मध्यतिर्य्यक्सूत्राग्रद्वयावष्टम्भतस्तथा ।
विकाशितब्रह्मसूत्रावधि सूत्रद्वयं भवेत् ॥ ३८ ॥
योनि कुण्डमिदं भद्रे स्याच्चतुर्ष्वभयात्मसु ।
राशिषु प्रोक्तकल्याणकर्म्मसूक्तार्थसिद्धिकृत् ॥ ३९ ॥
तन्मध्यसप्तमांशेन ब्रह्मसूत्रं विकाश्य तत् ।
मानेन परितो भ्रान्त्या कृत्वा वृत्तं तथा तत: ॥ ४० ॥

---

तन्मध्येत्यादिभि: सिद्धिकृदित्यन्तैश्चतुर्भि: श्लोकैर्योनिकुण्डनिर्माणसन्धानं तदुक्तनिगमनं तत्फलञ्चोपदिशति। तत्र तन्मध्यपञ्चमांशेन चतुरस्रस्य मध्यमानपञ्चमांशेन तत्कोणमानेन तन्मध्यकोणयोरन्तरमानेन पश्चिमाग्रकान् उत्तराग्रावधि ब्रह्मसूत्रपश्चिमाग्रादिमध्यस्थ तिर्य्यक्सूत्रोत्तराग्रावधि तथा दक्षिणाग्रावधि ब्रह्मसूत्रपश्चिमाग्रादि मध्यस्थतिर्य्यक्सूत्रदक्षिणाग्रावधि। प्रिये इति देवीसम्बुद्धि:। तन्मध्यतिर्य्यक्सूत्राग्रद्वयावष्टम्भत: चतुरस्रमध्यस्थदक्षिणोत्तर सूत्राग्रद्वयावष्टम्भेन। भद्रे इति देवीसम्बुद्धि:। एतदुक्तं भवति चतुरस्रमध्य-सूत्रमानपञ्चमांशेन ब्रह्मसूत्रस्य प्रागग्रं वह्निर्विकाश्य तत्कोष्ठचतुष्टयात्मक-चतुरस्रपश्चिमभागस्थदक्षिणोत्तरकोष्ठयोर्द्वयो: नैर्ऋत्यादीशान्तमाग्नेयादिवाय-व्यान्तं कोणसूत्रद्वयास्फालनेन लक्षिततत्सूत्रद्वयसम्पातविदितमध्यदेशावष्टम्भत स्तत्तत्कोणावधिमानेनोत्तरकोष्ठे प्राक् ब्रह्मसूत्रपश्चिमाग्रादिदक्षिणोत्तरमध्य तिर्य्यक्सूत्रोत्तराग्रावधि तद्दक्षिणकोष्ठे तत्सूत्रपश्चिमाग्रादि तद्दक्षिणाग्रावधि च भ्रमात्तन्मध्यतिर्य्यक्सूत्राग्रद्वयमारभ्य प्राक्प्रसारितब्रह्मसूत्राग्रावधि सूत्रद्वया-स्फालनेन च कल्पिततत्मङ्गलकर्मसूभयराश्यात्मकस्थानचतुष्टये प्रोक्तं योनि-कुण्डमुक्तफलसिद्धिकरमिति ॥ ३९ ॥

तन्मध्येत्यादिना कुण्डकमित्यन्तेन श्लोकद्वयेन पद्माख्यकुण्डनिर्म्माणविधान-मुपदिशति। तत्र तन्मध्यसप्तमांशेन चतुरस्रमध्यसूत्रमानस्य सप्तमांशेन तदिति ब्रह्मसूत्रमित्यस्य विशेषणम्। मानेन विकाशितमानेन कृत्वा वृत्तं कृत्वेत्यर्थ:।

तत्त्र्यंशमानात्तद्वृत्ते कृत्वा चिह्नानि तत्र वै ।
पातयेत् पञ्चसूत्राणि तत् स्यात् पञ्चास्रकुण्डकम् ॥ ४१ ॥
तन्मध्यषोडशांशेन विकाश्य ब्रह्मसूत्रकम् ।
तेन मानेन च तथा कृत्वा वृत्तमतिस्फुटम् ॥ ४२ ॥
तद्वृत्ते वृत्तमध्यस्य कुर्य्याद्दर्द्धेन चाङ्कनम् ।
तत्र षट्सूत्रपातेन भवेत् कुण्डं षडस्रकम् ॥ ४३ ॥
तन्मध्यदशमांशेन विकाश्य ब्रह्मसूत्रकम् ।
तेन मानेन सम्भ्रान्त्या कृत्वा वृत्तं तथा ततः ॥ ४४ ॥
तच्चतुःषष्टिभागेषु त्रयस्त्रिंशांशमानतः ।
वृत्ते विधाय चिह्नानि सप्तसूत्राणि पातयेत् ॥ ४५ ॥

---

तथा ततश्चतुरस्रमध्यस्थहंसपदमध्यावलम्बनत इत्यर्थः। तत्त्र्यंशमानात् तच्चतुरस्रमध्यसूत्रत्रिपादमानेन तत्र तेषु चिह्नेषु। एतदुक्तं भवति प्राग्वच्चतुरस्रं कृत्वा तन्मध्यमानस्य सप्तमांशेन ब्रह्मसूत्रप्रागग्रं वहिः विकाश्य तन्मानेन तच्चतुरस्रमध्यस्थहंसपदावलम्बनतो भ्रमाद्वृत्तं निष्पाद्य तच्चतुरस्रमध्यसूत्रं चतुर्द्धा कृत्वा तेष्वंशत्रयेणांशत्रयेण तद्वृत्ते ब्रह्मसूत्रप्रागग्रादिपरितः पञ्चचिह्नानि विधाय तत्तच्चिह्नाच्चिह्नं ज्यारूपाणि पञ्चसूत्राण्यास्फाल्य तत्तच्चापरूपवृत्तखण्डमार्जनात् पञ्चास्रं कुण्डं मङ्गलकर्म्मणि मिथुनराशिस्थानवह्निदिक् प्रोक्तं भवेदिति ॥४१॥

तन्मध्येत्यादिना षडस्रकमित्यन्तेन श्लोकद्वयेन षडस्रकुण्डनिर्माणविधानमुपदिशति। तत्र तन्मध्यषोडशांशेन चतुरस्रब्रह्मसूत्रमानस्य षोडशांशेन विकाश्य चतुरस्राद्वहिरिति शेषः। तथा प्राग्वत्। वृत्तमध्यस्य हंसपदमध्यात् ब्रह्मसूत्रमानस्य। अङ्कनं चिह्नं। एतदुक्तं भवति प्राग्वच्चतुरस्रं विधाय तन्मध्यमानं षोडशधा विभज्य तेष्वेकांशेन ब्रह्मसूत्राग्रं वहिर्विकाश्य तन्मानेन चतुरस्रमध्यस्थहंसपदमध्यावलम्बनेन भ्रमाद्वृत्तं निष्पाद्य तन्मध्यविष्कम्भमानार्द्धेन तन्मध्यतिर्य्यक्सूत्रदक्षिणाग्रादि परितो वृत्ते चिह्नषट्कं विधाय तत्तच्चिह्नाच्चिह्नं ज्यारूपं सूत्रषट्कमास्फाल्य तत्तच्चापरूपवृत्तखण्डमार्जनेनामङ्गले कर्मणि कन्याराशिस्थाननिरृतिदिक् प्रोक्तं षडस्रकुण्डं भवेदिति ॥ ४३ ॥

तन्मध्येत्यादिभिः शिवे इत्यन्तैस्त्रिभिः श्लोकैः सप्तास्रकुण्डनिर्माणविधानं तत्

तत् सप्तास्रं भवेत् कुण्डं चापगं वायुदिग्गतम् ।
समस्तवैरिनाशाय प्रोक्तं कुण्डमिदं शिवे ॥ ४६ ॥
तन्मध्यस्य चतुर्विंशमाने वाह्येऽपि पूर्ववत् ।
विधाय चतुरस्रन्तु पूर्वकोणार्द्धमानतः ॥ ४७ ॥
कोणादभित एवास्य कृत्वा चिह्नानि चाष्ट वै ।
तेषु चिह्नेषु कृत्वाष्ट सूत्राणि परितः शिवे ॥ ४८ ॥

---

फलञ्चोपदिशति । तत्र तन्मध्यदशमांशेन चतुरस्रमध्यसूत्रस्य दशमांशेन विकाश्य चतुरस्राद्बहिरिति शेषः । कृत्वा वृत्तं वृत्तं कृत्वेत्यर्थः । तथा प्राग्वत् । ततः अनन्तरमिति शेषः । तच्चतुःषष्टिभागेषु चतुरस्रमध्यसूत्रस्य चतुःषष्टिभागेषु त्रयस्त्रिंशांशमानतः त्रयस्त्रिंशदंशमानतः । चापगं चापराशिस्थानगतं । एतदुक्तं भवति प्राग्वत् समचतुरस्रं कृत्वा तन्मध्यमानं दशधा विभज्य तेष्वेकांशमानेन तद्ब्रह्मसूत्रं वहिः विकाश्य तन्मानेन तच्चतुरस्रमध्यस्थहंसपदमवष्टभ्य वृत्तं कृत्वा तच्चतुरस्रमध्यसूत्रमानं चतुःषष्टिभागीकृत्य तेषु त्रयस्त्रिंशदंशमानेन ब्रह्मसूत्रं प्रागग्रादारभ्य वृत्ते सप्तचिह्नानि कृत्वा तत्र चिह्नाच्चिह्नं ज्यारूपेण सप्तसूत्राण्यास्फाल्य तत्तच्चापरूपवृत्तखण्डमार्जनादेतत् सप्तास्रं वायुदिग्गतचापराशिस्थाने प्रोक्तं वैरिनाशकरं कुण्डं भवेदिति ॥ ४६ ॥

तन्मध्येत्यादिभिः क्रमेण वै इत्यन्तैस्त्रिभिः श्लोकैः अष्टास्रकुण्डनिर्माणविधानं प्रोक्तकुण्डानां मेखलादिनिर्माणविधानकथनप्रस्तावसहितमुपदिशति । तत्र तन्मध्यस्य चतुरस्रमध्यसूत्रस्य । चतुर्विंशमाने चतुर्विंशांशमाने । वाह्ये चतुरस्रादिति शेषः । पूर्व्वकोणार्द्धमानतः पूर्वलिखितचतुरस्रकोणसूत्रस्यार्द्धमानेन । कोणादभितः कोणचतुष्टयादुभयोः पार्श्वयोः । कृत्वा चिह्नानि चिह्नानि कृत्वेत्यर्थः । शिवे इति सम्बुद्धिः । एतदुक्तं भवति पूर्व्ववच्चतुरस्रं विधाय तन्मध्यसूत्रमानं चतुर्विंशतिधा विभज्य तेष्वेकैकांशमानात्तद्बहिः प्रतिदिशं प्रसारितसूत्राग्रे पूर्व्ववच्चतुरस्रं प्रोक्तक्रमेण विधाय तत्कोणसूत्रस्यार्द्धमानेन वाह्यचतुरस्रे कोणचतुष्टयव्यत्यासावष्टम्भादुभयतः प्रतिरेखं चिह्नद्वयं क्रमात् सम्भूयाष्टचिह्नानि कृत्वा तत्र चिह्नाच्चिह्नं प्राग्वत् सूत्रचतुष्कमास्फाल्य तद्बहिर्गतकोष्ठमार्जनादीशदिक्स्थमीनराशिप्रोक्तमष्टास्रं कुण्डं कल्पयेदिति । एतेषां

कुर्य्यादष्टास्रकं कुण्डमेतेषां मेखलादिकम् ।
प्रवक्ष्यामि शृणु प्राज्ञे समुद्दिष्टं क्रमेण वै ॥ ४९ ॥
वृत्तमध्यभुवो मानं त्रिगुणं विभजेत् क्रमात् ।
स्ववाञ्छितेन मानेन तदस्राणि भवन्ति हि ॥ ५० ॥
एवं यन्त्रादिषूक्तेषु षट्त्रिंशेषु विधिर्भवेत् ।
कुण्डेषु च तथा कोटिहोमादिषु समीरितम् ॥ ५१ ॥
प्रोक्तेष्वन्यतमे कुण्डे नवहस्तप्रमाणके ।
कारयेत् कोटिहोमन्तु पुरुषैरष्टभिस्तथा ॥ ५२ ॥
दिग्विदिक्स्थैः क्रमात् पञ्चवासरैः सर्वसिद्धये ।
तेषाञ्च दक्षिणां दद्यात् पूजाप्रणतिपूर्वकम् ॥ ५३ ॥

---

कुण्डानां। मेखलादिकमित्यत्रादिशब्दो योन्यादिविषयः। प्राज्ञे इति सम्बुद्धिः ॥ ४९ ॥

वृत्तेत्यादिना समीरितमित्यन्तेन श्लोकद्वयेनाष्टास्रयन्त्रकुण्डादिकल्पनोपायोपदेशं प्रोक्तनिगमनञ्च करोति। तत्र वृत्तमध्यभुवः वृत्तमध्यविष्कम्भस्य। त्रिगुणं त्रिगुणितं। स्ववाञ्छितेन स्ववाञ्छितास्रिमानेन। तदस्राणि अष्टास्रयन्त्रकुण्डानि। उक्तेषु पञ्चविंशे पटले। चकारः समुच्चये। कोटिहोमादिषु वक्ष्यमाणेषु अत्रादिशब्दो महासंख्यहोमादिविषयः। एतदुक्तं भवति प्रोक्तक्रमाद्वृत्तं कृत्वा तन्मध्यविष्कम्भमानं स्वाभीष्टास्रिसंख्यया विभज्य तेषु तत्तदंशमानेन वृत्ते परितश्चिह्नानि स्वेष्टास्रिसंख्यानि विधाय तत्तच्चिह्नाच्चिह्नं ज्यारूपाणि सूत्राणि स्वेष्टास्रिसंख्यान्यास्फाल्य तत्तच्चापरूपाणि वृत्तखण्डानि मार्जयित्वा एवं मातृकापटलोक्तषट्त्रिंशास्रादियन्त्रेषु तत्तत्कुण्डेषु च कोट्यादिमहासंख्यहोमप्रोक्तकुण्डेषु च विधानं समीरितमिति ॥ ५१ ॥

प्रोक्तेष्वित्यादिभिरास्तिकैरित्यन्तैः षड्भिः श्लोकैः कोटिहोमकुण्डप्रमाणं होतृसंख्यां तद्धोमप्रकारं होतृदक्षिणां गुरुदक्षिणां तत्कोटिहोमकर्त्तव्यकालविशेषांस्तद्विद्यां होतृलक्षणञ्चोपदिशति। तत्र प्रोक्तेषु मङ्गलामङ्गलत्वभेदतः अन्यतमे तत्तदनुगुणे। नवहस्तप्रमाणके आयामेन विस्तारेण च। तथा वक्ष्य-

गोचर्म्मद्वयमात्रन्तु भुवं गां प्रस्नुतस्तनीम् ।
महिषीं सप्रजामश्वदासदासीविभूषणाम् ॥ ५४ ॥
वासांसि हैमनिष्काणां शतं तेषामथैकशः ।
ततो गुरोश्च तान्येव तैः समानमुदीरितम् ॥ ५५ ॥
दिव्योत्पातेषु रोगार्त्तौ घोरे च रिपुनिग्रहे ।
तथा दिग्विजयेऽन्यस्य परकृत्यादिसम्भवे ॥ ५६ ॥
कारयेत् कोटिहोमन्तु विद्यया नित्ययाद्यया ।
सुरूपैश्च सुशीलैश्च नित्याभक्तैस्तथास्तिकैः ॥ ५७ ॥
प्रोक्तानां सर्वकुण्डानां अरत्निखातमात्रकम् ।
कोटिहोमस्य कुण्डस्य खातमूर्द्धन्तु तस्य वै ॥ ५८ ॥

---

माणलक्षणैर्विद्याविद्भिः । क्रमात् त्रिंशत्पटलवक्ष्यमाणहोमविधानक्रमात् । एतदुक्तं भवति वक्ष्यमाणेत्यादिना समुद्भवप्रोक्तकुण्डेषु तत्तदनुगुणं कुण्डं नवहस्तप्रमाणं वक्ष्यमाणमेखलादियुतं कृत्वा प्रतिदिवसं दिवसपञ्चकं दिग्विदिक्स्थैरष्टभिरष्टभिः पुरुषैर्वक्ष्यमाणलक्षणसम्पन्नैर्वक्ष्यमाणविद्यया स्वाभिमतसिद्धिपर्य्यन्तं होमं कारयेदिति । तेषां होतॄणां । दद्यादित्यस्य भुवमित्यादिभिरष्टभिः पदैर्हितोयान्तैः प्रत्येकमुत्तरत्रान्वयः । दद्यात् पञ्चसु पञ्चसु दिनेषु । गोचर्म्मद्वयमात्रं गोचर्म्ममात्राया भुवः प्रमाणं वृहस्पतिराह ।

सप्तहस्तप्रमाणेन त्रिंशद्दंशनिवर्त्तनम् ।
दश तान्येव गोचर्मेति ॥

तद्द्विगुणमेकशः एकैकहोत्रे । तान्येव वस्तूनि । तैर्होतृभिः । समानमुदीरितं प्रोक्तद्रव्यजातमिति । दिव्योत्पातेषु ग्रहनक्षत्रादिविकृतिषु । आद्यया ललितया । नित्याभक्तैः षोड़शनित्याभक्तैः । आस्तिकैः नित्यनैमित्तिकादिक्रमभजनपरैः ॥ ५७ ॥

प्रोक्तेत्यादिना श्लोकेन कुण्डानां खातमानमुपदिशति । तत्र अरत्निः चतुर्विंशत्यङ्गुलमानं । तस्य कोटिहोमप्रोक्तनवहस्तमानकुण्डस्य ॥५८॥

सर्वेषां मेखलामानं वितस्त्यष्टतदर्द्धकैः ।
विस्तारोत्सेधयोः कुर्य्याद्योनिं होत्रासनाग्रतः ॥ ५९ ॥
महाकुण्डस्य तु पुनर्मेखला हस्तमानतः ।
तिसृणामपि विस्ताराः प्रत्येकं षोड़शाङ्गुलाः ॥ ६० ॥
तेषामुत्सेधसंख्याश्च षोड़श स्युः क्रमेण वै ।
योनिनिर्म्माणमधुना वासनाञ्च शृणु प्रिये ॥ ६१ ॥
वहिष्ठमेखलामध्यादारभ्य निजनालकम् ।
वितस्तिमात्रकां कोष्ठामश्वत्थदलसन्निभाम् ॥ ६२ ॥

---

सर्वेषामित्यादिना श्लोकेन सर्व्वकुण्डमेखलामानं योनिनिर्माणञ्चोपदिशति। तत्र वितस्त्यष्टतदर्द्धकैः द्वादशाङ्गुलचतुरङ्गुलमानैः एष मानक्रमो विस्तारस्य चाधारादि उत्सेधोर्द्धादिश्च बोद्धव्यः। एतदुक्तं भवति महाकुण्डरहितानां सर्व्वकुण्डानां परितस्त्वेकैकाङ्गुलमानाद्बहिरधो मेखलां द्वादशाङ्गुलद्वादशाङ्गुलमानविस्तारेण चतुरङ्गुलमानोत्सेधेन च युतां कृत्वा तदुपरि बाह्ये परितश्चतुरङ्गुलमानं मुक्त्वा तदन्तरष्टाङ्गुलमानविस्तारेण चतुरङ्गुलमानोत्सेधेन च युतां द्वितीयमेखलां तदुपरि प्राग्वत् बाह्ये चतुरङ्गुलमानं मुक्त्वा तदन्तर्विस्तारोत्सेधाभ्यां चतुरङ्गुलमानमितां तृतीयां मेखलाञ्च कृत्वा तन्मेखलायां होतुरासनाग्रपार्श्वमध्ये वक्ष्यमाणलक्षणां योनिं कुर्य्यादिति ॥ ५९ ॥

महेत्यादिना प्रिये इत्यन्तेन श्लोकद्वयेन महाकुण्डस्य मेखलामानं योनिनिर्माणविधानञ्च तद्वासनाकथनप्रस्तावसहितमुपदिशति। तत्र तुर्विशेषे। हस्तमानतः अष्टचत्वारिंशदङ्गुलमानतः। तिसृणां मेखलानामिति शेषः। तेषां मेखलानां दिव्यत्वात् तासामित्यर्थः। षोड़शाङ्गुलानीति शेषः। एतदुक्तं भवति महाकुण्डस्य परितो विस्तारेणाष्टचत्वारिंशदङ्गुलमितामुत्सेधेन षोड़शाङ्गुलमानमितामधोमेखलां तदुपरि बाह्यतः षोड़शाङ्गुलमानं मुक्त्वा तदन्तर्द्वात्रिंशदङ्गुलमानविस्तारां षोड़शाङ्गुलोत्सेधां द्वितीयां मेखलां तदुपरि बाह्ये षोड़शाङ्गुलं मुक्त्वा तदन्तर्विस्तारोत्सेधाभ्यां षोड़शाङ्गुलमानां तृतीयां मेखलां कुर्य्यादिति। योनिस्वरूपतः निर्माणं तस्या वासनां योनिनिर्माणस्य। प्रिये इति देवीसम्बुद्धिः ॥ ६१ ॥

वहिष्ठेत्यादिभिः समूहत इत्यन्तैरर्द्धाधिकैश्चतुर्भिः श्लोकैर्योनिस्वरूपं तन्निर्माण-

वितस्त्यायामसंयुक्तां तदर्द्धेन तु विस्तृताम्।
एकाङ्गुलोत्सेधयुतां मेखलोपरि सर्व्वतः ॥ ६३ ॥
मूलान्निम्नाग्रकां स्तोकं कुर्य्याद्योनिञ्च सर्व्वतः।
योनिः कारणभूतस्य तत्त्वस्य स्यात् पदं महत् ॥ ६४ ॥*
तेन तत्रैव हव्यानां विधानं तन्मयत्वतः।
फलानि पूर्णान्यचिरादयत्नाद्वितरत्यसौ ॥ ६५ ॥

क्रमं तद्वासनां महाकुण्डस्य योनिरूहेन मानकृप्तिञ्चोपदिशति। तत्र वह्निष्ठ मेखलामध्यात् प्रथममेखलामध्यभूतभूप्रदेशाद्वितस्तिमात्रकां कोष्ठां द्वादशाङ्गुलोत्सेधकल्पितनालां अश्वत्थदलसन्निभां अश्वत्थपत्राकारां वितस्त्यायामसंयुक्तां द्वादशाङ्गुलायामसंयुक्तां तदर्द्धेन तु विस्तृतां षड़ङ्गुलविस्तारयुतां। सर्व्वतः सर्व्वेषु कुण्डेषु। स्तोकं किञ्चित्। सर्व्वतः सर्व्वस्य अस्य कारणभूतस्य इत्युत्तरत्रान्वयः। एतदुक्तं भवति सर्व्वकुण्डेषु होतुरासनप्रदेशे प्रथममेखलामध्यप्रदेशभूमौ द्व्यङ्गुलायामविस्तारमेकाङ्गुलोत्सेधं चतुरस्रं पीठं मृदा कृत्वा तदाद्युपरितनमेखलाग्रान्त-मध्यतनमेखलोपरिस्तरणार्थं कृतरन्ध्रान्तर्मेखलास्पर्शिवृत्ताकारं नालं कृत्वा तन्नालसम्बन्ध्युपरितनमेखलोपरि षड़ङ्गुलमानविस्तारमध्यां तत्प्रदेशादुभयपार्श्वक्रमसङ्कोचिताग्रद्वादशाङ्गुलमानायामामेकाङ्गुलोत्सेधामश्वत्थपत्राकारां मूलात् किञ्चित् क्रमान्निम्नाग्रां योनिं कुर्य्यादिति। वृत्तकुण्डव्यतिरिक्तकुण्डानां योनिं जानीयादेवेति सम्प्रदायः। कारणभूतस्य तत्त्वस्य विश्वकारणभूतस्य जातरूपतत्त्वस्य पदं उदयविश्रान्तिस्थानं महत् पूर्णत्वात्। तत्रं योन्यां असौ अपरिच्छिन्नात्मिका योनिः। महाकुण्डस्य कोटिहोमप्रोक्तकुण्डस्य। मान योनेरिति शेषः। समूहतः सम्यगूहेन। ऊहो यथा वितस्तिमात्रमेखलस्य कुण्डस्य नालोत्सेधमानं वितस्तिः तद्योनेर्विस्तारमानमङ्गुलषट्कं आयाममानं वितस्तिः उत्सेधमानमेकाङ्गुलं तदा हस्तमात्रमानमेखलस्य महाकुण्डस्य तत्तन्मानानि कियन्तीति तत्प्रकरणात्तन्मानानि लिख्यन्ते। नालमानमष्टचत्वारिंशदङ्गुलमानं। योनेः विस्तारमरत्निः। आयाममानं हस्तः। उत्सेधमानमङ्गुलचतुष्टयञ्च। योनिकुण्डस्य तन्मेखलोपरि योनिकृप्तिं विनैव तत्फलसिद्धिरुक्तादिति सम्प्रदायः ॥ ६६ ॥

* योनि, कारणभूतस्य तत्त्वं स्यात् परमं महत्।

महाकुण्डस्य चैवैतत् कुर्य्यान्मानं समूहतः ।
नाभिं कुर्य्यात्तु सर्व्वं च कुण्डमध्ये विधानतः ॥ ६६ ॥
अष्टच्छदं सरोजन्तु विदध्याच्चारुविग्रहम् ।
चतुर्भिरङ्गुलैः कुर्य्यात् कर्णिकां दलमेव च ॥ ६७ ॥
विस्तारादपि चोत्सेधं षड्भिः षड्भिरुदीरितम् ।
प्राग्वन्महति कुण्डे च कुर्य्याटूहेन तत्तथा ॥ ६८ ॥
ध्यानमग्नेर्द्विधा प्रोक्तं सौम्यक्रौर्य्यविभागतः ।
सौम्यं नित्यासमाकारं ध्यानमन्यच्छृणु प्रिये ॥ ६९ ॥

---

नाभिमित्यादिना तथेत्यन्तेनार्द्धाधिकेन श्लोकद्वयेन सर्व्वकुण्डमध्ये नाभिनिर्माण-विधानं तल्लक्षणं महाकुण्डस्य प्रोक्तवदूहकल्पनञ्चोपदिशति । तत्र विधानतः वक्ष्यमाणप्रकारेण । चारुविग्रहं अन्यूनाधिकमानं । चतुर्भिः प्रतिदिशमिति शेषः । चः समुच्चये । षड्भिः षड्भिः अपि चेत्यनेन अङ्गुलैरिति पूर्वश्लोकादाकृष्यते । एतदुक्तं भवति प्रोक्तानां सर्वकुण्डानां कुण्डमध्यस्थहंसपदावलम्बनेन प्रतिदिशं दशाङ्गुलमानपरिभ्रान्त्या वृत्तं निष्पाद्य तद्वृत्तान्तराले षडङ्गुलोत्सेधयुतं पीठं कृत्वा तन्मध्यस्थहंसपदावलम्बनेन प्रतिदिशं चतुरङ्गुलमानेन वृत्तं निष्पाद्य तद्बहिः षडङ्गुलमानेन च वृत्तं कृत्वा तदन्तर्वृत्तमध्यं कर्णिकां परिकल्प्य तद्बहिःस्थवृत्तान्तरालवीथ्यामष्टदलविधानेन च सम्भूय विंशत्यङ्गुलमध्यसंस्थं नाभिपद्मं कुर्य्यादिति । महति कुण्डे कोटिहोमप्रोक्ते कुण्डे ऊहेन यदा अरत्निमानविस्तारायामकुण्डे नाभिपद्मस्याधोदलविस्तारमञ्चे षडङ्गुलात्मके कर्णिकामानं चतुरङ्गुलात्मकं तदा नवहस्तविस्तारायाममहाकुण्डे । नाभिपद्मस्य तत्तन्मानानि कियन्तीत्यूहेन तन्मानसंख्या लिख्यते । यथा उत्सेधमानानि अष्टोत्तरशताङ्गुलसंख्यानि दलमानानि प्रतिदिशमष्टोत्तरशताङ्गुलानि कर्णिकार्द्धविस्तारमानानि द्विसप्तत्यङ्गुलानि सम्भूय पद्मविष्कम्भमानाङ्गुलानि षष्ट्यूत्तरत्रिशतसंख्यानि भवन्ति । तन्नाभिपद्मं तथा तन्मानेन ॥ ६८ ॥

ध्यानमित्यादिना श्लोकेन सौम्यक्रौर्य्यविभागेन अग्नेर्ध्यानद्वयप्रस्तावपुरःसरं सौम्यध्यानमतिदिश्य क्रूरध्यानं प्रस्तौति । तत्र नित्यासमाकारं ध्यानं तत्तन्नित्याप्रोक्तस्थूलरूपध्यानं । प्रिये इति देवीसम्बुद्धिः ॥ ६९ ॥

द्विशीर्षं सप्तहस्तञ्च त्रिपादसप्तजिह्वकम् ।
त्रिधारूपमतिक्रूरैररुणैः षड्भिरीत्त्वणैः ॥ ७० ॥
सव्यैश्चतुर्भिर्हस्तैस्तु शक्त्यन्नस्रुक्स्रुवौ तथा ।
इतरैस्तोमरं तालवृन्तं सर्पिःसुभाजनम् ॥ ७१ ॥
निहन्तुमनिशं व्यात्तवक्त्रं ध्यायेद्वविर्भुजम् ।
क्रूरेषु सर्व्वहोमेषु ध्यानवैभवमीरितम् ॥ ७२ ॥
वक्त्रैः शिरसि देहे वा श्रोत्रेष्वक्षिषु वा तथा ।
जुहुयाच्चेत्तदा क्षिप्रं तद्वैस्तं विनाशयेत् ॥ ७३ ॥
ततस्तद्वक्त्रयोर्जिह्वासप्तकं सम्यगर्च्चयेत् ।
जुहुयाच्च समाप्नोति वाञ्छितं सकलं क्षणात् ॥ ७४ ॥
हिरण्या कनका रक्ता कृष्णा जिह्वा यथार्थका ।
दक्षवक्त्रगता सर्व्वसिद्धिदा तु समर्च्चनात् ॥ ७५ ॥

---

द्विशीर्षेत्यादिभिरीरितमित्यन्तैस्त्रिभिः श्लोकैरग्नेः क्रूरध्यानमुपदिशति। तत्र त्रिधारूपं सत्त्वादिगुणभेदेनेति शेषः। सव्यैर्दक्षिणैः। इतरैर्वामैर्हस्तैः सर्पिःसुभाजनं सर्पिःपूर्णहैमपात्रं। अत्रायुधक्रमस्तूर्द्ध्वभुजाद्याधरभुजान्तमित्यवगन्तव्यः। व्यात्तवक्त्रं विस्तृतवक्त्रम् ॥ ७२ ॥

वक्त्रैरित्यादिना श्लोकेनाग्नेर्जिह्वाव्यतिरिक्ताङ्गेषु होमे प्रत्यवायमुपदिशति। तत्र वा समुच्चये। तं साधकम् ॥ ७३ ॥

तत इत्यादिना श्लोकेन जिह्वासप्तकार्च्चनं तत्र होमं तत् फलञ्चोपदिशति। तत्र तद्वक्त्रयोः अग्नेर्वक्त्रयोर्जुहुयात्। चकारात् जिह्वासप्तके इत्यर्थः। क्षणात् प्रोक्तमण्डलादिकालालङ्घनेन ॥ ७४ ॥

हिरण्येत्यादिना श्लोकेनाग्नेः दक्षिणवक्त्रजिह्वाचतुष्टयनामानुपदिशति। तत्र यथार्थका रूपादिभिरिति यावत्। सर्व्वसिद्धिदा वाञ्छितफलदायिनी ॥ ७५ ॥

सुप्रभेत्यादिना श्लोकेन वामवक्त्रजिह्वात्रयनामानि तदन्यजिह्वायाः सर्व्व-

सुप्रभा चातिरिक्ता च बहुरूपा च वामगा ।
बहुरूपायां जिह्वायां होमः सर्व्वार्थसाधकः ॥ ७६ ॥
इतरासु हुनेत् क्रूरकर्म्मस्वभिमतेषु तु ।
यस्यां जुहोति तामाद्यां समभ्यर्च्याथ सप्तशः ॥ ७७ ॥
ततो हुनेच्च जिह्वायामुक्तायां तत्र कर्म्मणि ।
सामान्यतो नित्यहोमे द्रव्याणि शृणु सुन्दरि ॥ ७८ ॥
आज्यमन्नं पायसञ्च तिलतण्डुलमप्यथ ।
तद्द्वयं चेति संप्रोक्तान्युक्तान्येतानि नित्यके ॥ ७९ ॥
शुभैर्दर्भैः परिस्तीर्य्य सर्व्वत्र शुभकर्मसु ।
अभिचारेषु वान्येषु क्रूरेष्वन्येष्वपि प्रिये ॥ ८० ॥
नक्षत्रवृक्षैस्तद्योनिरक्तोत्थचरुणा तथा ।
तन्मांसैस्तत्र तत्रोक्तैर्द्रव्यैः क्रूरेषु कर्मसु ॥ ८१ ॥

---

कर्म्मसु सिद्धिप्रदत्वञ्चोपदिशति । तत्र वामगा वामवक्त्रगता । सर्वार्थसाधकः सर्व्वहोमेषु तत्तत्सिद्धिकृत् । नित्यहोमं तस्यामेव कुर्य्यादिति सम्प्रदायः ॥ ७६ ॥

इतरास्वित्यादिना सुन्दरीत्यन्तेन श्लोकद्वयेन इतरजिह्वाषट्के क्रूरहोमस्य कर्त्तव्यतां तत्तत्कर्म्मणि तत्तज्जिह्वापुरःसरं तत्पूर्व्वजिह्वान्तं इतरजिह्वार्चनं तस्याः होमविधानं सामान्यतो नित्यहोमद्रव्यकथनप्रस्तावञ्च करोति । तत्र इतरासु बहुरूपाख्यजिह्वाव्यतिरिक्तासु षट्सु । यस्यां जिह्वायां । ततः जिह्वार्चनानन्तरं । उक्तायां तत्तत्कर्मानुरूपायां । सुन्दरीति देवीसम्बुद्धिः ॥ ७८ ॥

आज्यमित्यादिना श्लोकेन नित्यहोमद्रव्याण्युपदिशति । तत्र प्रथमार्द्धेन पञ्चद्रव्याणि कथितानि । तद्द्वयं तिलसहिततण्डुलं । नित्यके नित्यहोमे ॥७९॥

शुभैरित्यादिना श्लोकेन शुभकर्म्मस्वभिचारादिषु च परिस्तरणीयभेदमुपदिशति । तत्र सर्व्वत्र तन्त्रे । अन्येषूच्चाटनादिषु । प्रिये इति सम्बुद्धिः ॥८०॥

नक्षत्रेत्यादिना श्लोकेन क्रूरकर्म्मसु होमद्रव्याण्युपदिशति । तत्र सर्व्वत्र

प्रसूनान्येकमेकन्तु फलानि च तथा हुनेत् ।
अन्नाज्यादि समस्तन्तु निष्कमात्रं हुनेत् क्रमात् ॥ ८२ ॥
स्नातो विशुद्धवसनो धूपस्रग्गन्धवासितः ।
प्रसन्नचित्तवदनः कुर्य्याद्धोमन्तु साधकः ॥ ८३ ॥
प्राङ्मुखो विष्टरासीनः प्राणायामपुरःसरम् ।
न्यस्तगात्रोऽर्घतोयेन प्रोक्षयेत् कुण्डमध्यकम् ॥ ८४ ॥
द्रव्याण्यन्यानि तत्रस्थान्यशेषाणि विशुद्धये ।
दर्भेण विलिखेत् कुण्डमध्ये रेखाचतुष्टयम् ॥ ८५ ॥

---

नक्षत्रवृक्षैः एकविंशे पटले षट्सप्ततितमश्लोकादित्रिभिः श्लोकैरुक्तैः रिपोरिति शेषः । तद्योनिरक्तोत्यक्षरणा एकविंशे पटले त्वेकोनाशीतितमाशीतितम-श्लोकद्वयोक्तरिपुनक्षत्रयोनिरक्तपाचितचरुणा । तथा समुच्चये । तन्मांसैः रिपुनक्षत्रयोनिमांसैः । तत्र तत्र तत्तत्पटले ॥ ८१ ॥

प्रसूनानीत्यादिना श्लोकेनैकैकाहुतिद्रव्यपरिमाणमुपदिशति । तत्र तथा एकमेकं । अन्नाज्यादीत्यत्रादिशब्दः पायसतिलतण्डुलादिविषयः । निष्कमात्र-मित्यनेनाज्यादीनां प्रस्थमात्रेण षण्णवत्याहुतीः कुर्य्यादिति यावत् ॥८२॥

स्नात इत्यादिना श्लोकेन होतुस्तत्कालपरिकर्मोपदिशति । तत्र प्रसन्नचित्त-वदन इत्येतन्नित्यनैमित्तिकमङ्गलहोमविषयः ॥ ८३ ॥

प्राङ्मुख इत्यादिभिरुदोरित इत्यन्तैरध्यर्द्धदशभिः श्लोकैः सर्व्वमङ्गलहोमानां सामान्यपुरस्ताच्चोपरिष्टाच्च तत्तद्विधिं क्रूरहोमस्यापि तत्तत्साधारणताञ्चोपदि-शति । तत्र न्यस्तगात्रः तत्तन्नित्याप्रोक्तन्यासमन्त्रैरिति शेषः । तत्रस्थानि तद्यो-निस्थानि कुण्डपरिसरस्थानि च । तत्र नवकोष्ठे । प्रागादिषु कोष्ठेषु । सप्त इत्यस्य जिह्वा इत्येतद्विशेष्यं । मध्ये मध्यकोष्ठे । वह्निं तथा स्मरन् नित्यहोमोक्तप्रकारेण वह्निं तत्तन्नित्यारूपं स्मरन् । अस्य पदस्य अनन्तरश्लोके पूजयेदित्यनेनान्वयः । प्रोक्तैः वह्नेर्नाम्नेति शेषः । चः समुच्चये । द्व्यक्षरादिकं शक्तिबीजलक्ष्मीबीजद्वयादिकम् । अष्टानां अग्नेश्च सप्तजिह्वानां । तन्मन्त्रा यथा ह्रीं श्रीं अग्नये स्वाहा ह्रीं श्रीं

प्राक्प्रत्यग्दक्षिणोदक् च तत्र जिह्वाः समर्चयेत् ।
प्रागादिषु तु सप्तापि मध्ये वह्निं तथा स्मरन् ॥ ८६ ॥
पूजयेत् सर्पिषा होमं कुर्य्यात् सप्त क्रमेण वै ।
जिह्वानामभिरेकैकं वह्नेश्च द्वाक्षरादिकम् ॥ ८७ ॥
स्वाहान्तमन्त्रमुदितमष्टानां क्रमतः शिवे ।
वह्निं सभाजनं हस्ते गृहीत्वाङ्गारकञ्च तत् ॥ ८८ ॥
क्रव्यादेभ्यो नम इति प्रोक्त्वान्यत्तु सभाजनम् ।
विपरिभ्राम्य कुण्डन्तु तन्मध्ये विन्यसेत्ततः ॥ ८९ ॥
प्रज्वाल्य ललिताद्याभिर्विद्याभिः परिषेचनम् ।
कृत्वा दर्भैः परिस्तीर्य्य पलाशाश्वत्थपत्रकैः । ९० ॥

---

हिरण्यायै स्वाहा इत्यादयः । सभाजनं भाजनसहितं क्रव्यादेभ्यो नमः इति शेषः । अन्यत् त्यक्तशेषं अङ्गारं । तन्मध्ये कुण्डमध्ये । दर्भैः प्राक्पश्चिमयोरुत्तराग्रैः दक्षिणोत्तरयोः प्रागग्रैश्च मध्यस्थमेखलास्विति शेषः । पलाशाश्वत्थपत्रकैः पलाशाश्वत्थयोरन्यतरपत्रकैः । तथा घृताहुतीः पञ्चमे पटले एकोनषष्टितमश्लोकोत्तरार्द्धेन तदनन्तरश्लोकार्द्धपादेन चोक्तक्रमेण तत्तत् जिह्वानां स्मरणपूर्वं प्रतिजिह्वं नवनवाहुतीः परिवारशक्तीनामेकैकाहुतीश्च । मूलतः तत्तन्नित्याविद्यया । नाथनित्यात्मभूतजैः नवनाथपञ्चदशनित्यादिननित्यात्माष्टाक्षरपञ्चभूतात्मकैर्मन्त्रैरिति शेषः । स्वाज्ञास्थानगतां स्वभ्रूमध्यान्तर्गतद्विदलपद्माधारमध्यस्थशक्तिरूपमहावह्निस्वरूपतादात्म्यं गतां । परिस्तरणपूर्व्वकं परिस्तरणं पूर्वादित उत्तरान्तेषु । भस्मना दग्धपरिस्तरणदर्भाणाम् । एतदुक्तं भवति विष्टरे प्राङ्मुखस्थितः प्राणायामपुरःसरं न्यासं कृत्वा स्थापितार्घजलेन कुण्डं होमद्रव्यं संप्रोक्ष्य कुण्डमध्यस्थनाभिपद्मकर्णिकायां प्राक्प्रत्यग्दक्षिणोदक्च दर्भेण लिखितरेखाचतुष्टयेन नव कोष्ठानि निष्पाद्यार्घतोयेन संप्रोक्ष्य भाजननिहितमङ्गारं हस्ते गृहीत्वा क्रव्यादेभ्यो नमः इति मन्त्रेण तस्मादङ्गारसकलं दक्षिणस्यां

तथा घृताहुतीः कृत्वा नित्या षोड़श मूलतः ।
जुहुयादेकमेकन्तु नाथनित्यात्मभूतजैः ॥ ८१ ॥
ततश्च परिषिच्याग्निमात्मानं स्वात्मानं † विभाव्य ताम् ।
स्वाग्नास्थानगतां बुद्धा परिस्तरणपूर्वकम् ॥ ८२ ॥
दग्ध्वाग्नौ भस्मना कृत्वा तिलकं न्यस्तगात्रकः ।
पूजां समाप्य विचरेत् सुखी तद्रूपवान्नरः ॥ ८३ ॥

दिश्यपास्य सभाजनमङ्गारं कुण्डमभितः त्रिःप्रदक्षिणं परिभ्राम्य तन्मध्यस्थकोष्ठे तं वह्निं संस्थाप्य प्रज्वाल्य ललितादितत्तन्नित्याविद्यासु स्वभजनीयविद्यया परिषिच्य तत्कुण्डमध्यमेखलायाः परित उदगग्रैः प्रागग्रैश्च दर्भैः कुशैर्वा परिस्तीर्य पलाशाश्वत्थयोरन्यतरस्य पत्रैर्दर्वीं परिकल्प्य मध्ये वह्निं तदभितः प्रागादिकुण्डकोष्ठेषु स्वाभिमतादिसप्तजिह्वा ध्यात्वा क्लीं श्रीं अग्नये नमः इति मध्ये वह्निं समभ्यर्च्य क्लीं श्रीं हिरण्यायै नमः इत्यादिभिः स्वाभिमतादिभिः सप्तजिह्वामन्त्रैः समभ्यर्च्य ललिताहोमे तत्तज्जिह्वास्मरणपूर्व्वं श्रीविद्यातृतीयखण्डदिननित्याभ्यां प्रतिजिह्वं नवनवाहुतीर्हुत्वा तदन्यनित्याहोमे तत्तज्जिह्वामन्त्रैः स्वाहान्तैस्तासु प्रत्येकं नवनवाहुतीर्हुत्वा नित्यनैमित्तिकमङ्गलहोमेषु वह्निं तत्तन्नित्याविग्रहं मङ्गलकर्मसु तत्र प्रोक्तविग्रहं तत्पूजाक्रमेणैकैकाहुतिं स्वभजनोयविद्यया नित्यनैमित्तिकयोः षोड़शाहुतीश्च घृतेन हुत्वा काम्ये तत्तत्कर्म्मप्रोक्तद्रव्यैस्तत्तत्संख्याहुतीश्च हुत्वा ललिताहोमे नाथमन्त्रैस्तिथिनित्यया तद्दिननित्ययाप्यष्टाक्षरेण भूतमन्त्रैश्च तदितरनित्याहोमे नाथमन्त्रैरेव हुत्वा प्रागुवत् परिषिच्य वह्निं देवीं विभावयन् स्वाग्नाधारस्थशक्तिरूपमहावह्निना तादात्म्यं विभाव्य परिस्तरणदर्भादिकं तद्वह्नौ दग्ध्वा तद्भस्मना तिलकं कृत्वा तत्तन्नित्याविद्यां हुतसंख्यामावर्त्त्य प्रागुवन्न्यासं कुर्य्यादिति । क्रूरकर्मसु अभिचारादिषु ॥ ८४ ॥

† स्वात्मानं ।

क्रूरकर्म्मसु होमेषु विधिरेष उदीरितः ।
तेषु तद्धोमकरणं समाप्ते नित्यशस्तथा ॥ ९४ ॥
साभ्यङ्गं विद्ययात्मानं कुर्य्यात् सम्पूजयेत्तथा ।
नित्यक्रमं ततो नित्यं तत्तद्दिवसविद्यया ॥ ९५ ॥
मिथुनानि च पञ्चाशत् पूजयेत् प्रणमेदपि ।
मङ्गले पूर्वमुदिते पाहि मामित्युदीरयेत् ॥ ९६ ॥
एवं ते कथितं सर्वं कुण्डादिषु समीरितम् ।
होमं तं त्रिविधं प्रोक्तं स्थूलसूक्ष्मपरत्वतः ॥ ९७ ॥
स्थूलं परञ्चोत्तरस्मिन् पटले सम्यगीरितम् ।
इतरस्य विधाने तु यानि ज्ञेयानि तानि तु ॥ ९८ ॥
प्रोक्तानि सकलानीत्थं होमाल्लक्ष्मीमवाप्नुयात् ।
विनाशयेदरातींश्च होमैः पापानि चात्मनः ॥ ९९ ॥

---

तेष्वित्यादिभिर्वाञ्छितमित्यन्तैरर्द्धाद्यैः षड्भिः श्लोकैः क्रूरहोमानन्तरं तत्शान्त्यर्थं होमः कर्त्तव्यः तदर्थं पूर्वोक्तदिननित्यामिथुनार्च्चनस्मरणसहितं सूक्ष्मपरहोमद्वयस्योत्तरपटले वक्ष्यमाणत्वप्रस्तावसहितमुक्तनिगमनं तत्फलञ्चोपदिशति। तत्र नित्यशः प्रतिदिनं। तथा उक्तप्रकारेण। विद्यया तत्तन्नित्याविद्यया। सम्पूजयेत् तत्तनित्यामिति शेषः। नित्यक्रमं तत्तन्नित्याया नित्यपूजाक्रमं। ततस्तन्नित्यापूजानन्तरं। तत्तद्दिवसविद्यया पञ्चविंशपटलोक्ततत्तद्दिनविद्यया सहेति शेषः। पूर्व्वमुदिते षोड़शपटले प्रोक्तचतुःषष्टिकोष्ठात्मके। पाहि मामिति अक्षरात्मकमन्त्रमिति शेषः। सर्व्वं क्रूरहोमानन्तरं साधककर्त्तव्यं। कुण्डादिषु समीरितं कुण्डादिषु मेखलानाभियोन्यादिनिर्माणविधानमीरितं। तुर्विशेषे। उत्तरस्मिन् द्वात्रिंशे पटले। इतरस्य स्थूलहोमस्य। तानीत्यस्योत्तरत्र प्रोक्तानीत्येतद्विशेष्यं। इत्थं होमात् प्रोक्त-

नासाध्यमस्ति होमेन नानवाप्यमपीश्वरि ।
तस्माद्धोमेन सकलं साधयेत् सर्ववाञ्छितम् ॥ १०० ॥
विद्यातत्त्वमयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निर्फालनाच्चित्ते तत्तत्त्वं स्वात्मसात् कृतम् ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमते
कुण्डक्लृप्तिर्नाम एकोनत्रिंशं
पटलम् ॥ २९ ॥ॐ॥

———

प्रकारहोमात् । पापानि अमङ्गलानि । नासाध्यमित्येतदरातिविषयः । नानवाप्यमित्येतदभिमतविषयः ॥ १०० ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसार-
सिंहराजप्रकाशाभिधानेन सुभगानन्दनाथेन विरचितायां
मनोरमाख्यायां व्याख्यायां षोड़शनित्यानां लोककाल-
तादात्म्यादिप्रकाशनपरमेकोनत्रिंशपटलं परिपूर्णं
परामृष्टम् ॥ २९ ॥ ॐतत्सत् ॥

ग्रन्थसंख्या—न सन्ति यन्त्राख्येकोनत्रिंशेऽस्मिन् पटले कृताः ।
अध्यर्द्धत्रिंशदधिका व्याख्याग्रन्थाः शतत्रयात् ॥

## त्रिंशपटलम् ।

अथ षोड़शनित्यानां सामान्या वास्तुदेवता: ।
तासां चक्रं तत्र पूजाक्रमं सम्यग्वदामि ते ॥ १ ॥
तत्फलानि च तद्धोमविधानानि तथा बलिम् ।
सूक्ष्महोमविधानानि तत्फलानि परं तथा ॥ २ ॥
क्रमेण शृणु देवेशि प्रोक्तानि फलसिद्धये ।
यैर्विना भुवने मन्त्रा: सर्वे स्युर्निष्फला ध्रुवम् ॥ ३ ॥
चतुरस्राकृति: कश्चिदसुर: सर्वनाशकृत् ।
पुरा तस्य वधायैव सर्वे देवा: समुद्यमम् ॥ ४ ॥
कृत्वा निहन्तुमुद्युक्तास्तैरवध्योऽभवद्वरात् ।
आवयोस्तन्निरासाय मामेत्याकथयत्तदा ॥ ५ ॥

---

पूर्वस्मिन्नेकोनत्रिंशे पटले षोड़शनित्यानां होमार्थं मण्डपकुण्डादिनिर्माण-विधानमुपदिश्यानन्तरं षोड़शनित्यानां सामान्या वास्तुदेवता: तासां चक्रं तत्र तत्पूजनं तत्तत्फलानि तद्धोमविधानानि तद्बलिं सूक्ष्महोमविधानानि परहोम-विधिञ्चोपदिशति अथ षोड़शेत्यादिना अशेषत इत्यन्तेन श्लोकशतरूपेण त्रिंशेन पट-लेन । तत्राथ षोड़शेत्यादिभिर्ध्रुवमित्यन्तैस्त्रिभि: श्लोकै: पटलार्थांस्तज्ज्ञानानुष्ठान-वैधुर्य्येण सर्वमन्त्राणां नैष्फल्यं चोपदिशति । तत्र तासां वास्तुदेवतानां । तत्र चक्रे । ते तव । तत्फलानि वास्तुदेवतापूजाफलानि । तद्धोमविधानानि वास्तुदेवताहोम-विधानानि । तथा बलिं वास्तुदेवताबलिं । तत्फलानि सूक्ष्महोमफलानि । परं तथा परहोमात् फलानि क्रमेण उद्दिष्टानीति शेष: । देवेशीति सम्बुद्धि: । यै: प्रोक्तवद्ज्ञानानुष्ठितै: । ध्रुवं निश्चितम् ॥ ३ ॥

चतुरस्राकृतिरित्यादिभिस्ते इत्यन्तै: सप्तभि: श्लोकैर्वास्तुदेवतोत्पत्तिकारणं तदुत्पत्तिं तत्संख्यां तत्पूजाद्यकरणे प्रत्यवायं पूजाफलञ्च तच्चक्रादिविधान-कथनप्रस्तावसहितमुपदिशति । तत्र सर्व्वनाशकृत् सर्व्वप्राणिनां हिंसातत्पर: ।

कथयास्माकमधुना तद्वास्तुपुरुषस्य तु।
दर्पशान्तिं नचेत्तेन विश्वमासीदुपद्रुतम् ॥ ६ ॥
इत्युक्ते तैर्मया प्रोक्तं निधनं तस्य दुःशकम्।
खात्वा तमवनौ तस्य शरीरे स्थापयेत्तथा ॥ ७ ॥
नित्यशश्च त्रिपञ्चाशन्निःस्पन्दाक्रमणाय वै।
नियोज्य तेषां ये पूजाविमुखास्तैः कृतानि तु ॥ ८ ॥
सुकृतानि समादद्युर्दुष्कृतानि च कुर्वते।
तस्मात्तेषामर्च्चनन्तु प्रत्यहं कुर्वतां सदा ॥ ९ ॥
शुभान्येवाशु जायन्ते नैवाशुभकथापि च।
तच्चक्रादिविधानन्तु शृणु सम्यग्वदामि ते ॥ १० ॥
प्राक्प्रत्यग्दक्षिणोदक् च कृत्वा वै दशसूत्रकम्।
तैरेकाशीतिकोष्ठानि जातानि सुराः समानि च ॥ ११ ॥

---

तस्य असुरस्य। देवा ब्रह्मादयः। कृत्वेत्यस्य समुद्यममित्यनेन पूर्व्वत्रान्वयः। तैर्देवैः आवयो शक्तिशिवयोः। तन्निरासाय असुरवधाय। मां शिवं। अस्माकं देवानां। तुर्विशेषे। दर्पशान्तिं अवध्यत्वाभिमानोत्पन्नगर्वनिर्व्वापणं। नचेद्दर्पशान्तिं कथयसि। तेन वास्तुपुरुषासुरेण। उक्ते सतीति शेषः। तैर्देवैर्मया शिवेन। निधनं मरणं। तस्य वास्तुपुरुषस्य। दुःशकं दुष्करं। तं असुरं। तस्य असुरस्य। स्थापयेत् स्वार्थे णिच्, बहुलत्वात्तिष्ठेदित्यर्थः। अस्य त्रिपञ्चाशदित्युत्तरत्रान्वयः। त्रिपञ्चाशद्देवानामिति शेषः। अयमत्रान्वयः तस्यासुरस्य निधनस्य दुःशकत्वात्तमवनौ खात्वा तच्छरीरे निःस्पन्दाक्रमणाय देवानां त्रिपञ्चाशत् तिष्ठेदिति मया देवान् प्रति नियोज्य प्रोक्तमिति। तेषां देवानां। तैः पूजाविमुखैः। कृतानीत्यस्योत्तरत्र-सुकृतानीत्येतद्विशेष्यं। तस्माद्धेतोस्तेषां देवानां। तच्चक्रादीत्यत्रादिशब्दस्तत्त-द्देवतास्थितितदर्च्चातच्चक्रप्रतिष्ठादिविषयः। ते तव ॥ १० ॥

प्रागित्यादिभिरीरितमित्यन्तैश्चतुर्भिः श्लोकैर्वास्तुदेवताचक्रनिर्माणविधानमुपदिशति। तत्र तैः आस्फालितैः सूत्रैः। समानि समान्तरालानि। तेषु कोष्ठेषु नवकोष्ठानीत्यन्वयः। एकं तु कुर्य्यात् एकीकुर्य्यादित्यर्थः। तद्वद्भिः एकीकृत-

तेषु मध्ये नवैकन्तु कुर्य्यात् कोष्ठानि तद्बहिः ।
एकीकुर्य्यात्त्रिकोष्ठानि दिक्षु प्रागादिषु क्रमात् ॥ १२ ॥
ततश्चतुर्षु कोणेषु तिर्य्यक्सूत्रचतुष्कतः ।
द्विधा कुर्य्यात् कोणकोष्ठान्यष्टौ तत्पार्श्वयोः पुनः ॥१३॥
एकीकुर्य्यात्तथा द्वे द्वे तद्वीथ्यां दिक्षु मध्यतः ।
एकमेकं भवेच्छिष्टं वहिर्द्वात्रिंशदीरितम् ॥ १४ ॥
सर्वमध्ये यजेत् सम्यग्ब्रह्माणं कमलासनम् ।
हेमाभञ्च चतुर्वक्त्रं वेदाध्ययनशीलिनम् ॥ १५ ॥

---

नवकोष्ठकाद्बहिः वीथ्यामिति शेषः । चतुर्षु कोणेषु एकीकृतकोष्ठनवकात् वाह्य-वीथिद्वयोरिति शेषः । तिर्य्यक्सूत्रचतुष्कतः कोष्ठानीत्यन्वयः । प्रतिकोणं कोष्ठ-द्वयस्यैकैकतिर्य्यक्सूत्रक्रमेण तत्पार्श्वयोः मध्यवीथिकोष्ठपार्श्वयोः । द्वे द्वे कोष्ठे इति शेषः । तद्वीथ्यां मध्यवीथ्यां । मध्यतः एकीकृतद्विद्विकोष्ठयोरिति शेषः । वहि-र्बाह्यवीथ्यां द्वात्रिंशत् कोष्ठानीति शेषः । एतदुक्तं भवति प्राक्प्रत्यग्दक्षिणोदक् च समान्तरालं दशदशसूत्रास्फालनेनैकाशीतिसंख्यकोष्ठानि निष्पाद्य तन्मध्ये कोष्ठ-नवकमेकीकृत्य तदन्तरवाह्यवीथ्यां परितः षोड़शसंख्यकोष्ठात्मिकायां प्रतिदिशं त्रीणि त्रीणि कोष्ठान्येकीकृत्य तद्वीथ्यां प्रतिकोणमेकैकक्रमेणावशिष्टकोष्ठचतुष्टयं तद्बाह्यवीथिगतचतुर्विंशतिकोष्ठेषु प्रतिकोणमेकैकक्रमेण कोष्ठचतुष्टयं चैवं क्रमात् प्रतिकोणं कोष्ठद्वयं तिर्य्यक्सूत्रेण द्विधा कृत्वा सम्भूय कोणचतुष्टयस्यार्द्ध-कोष्ठद्वयाष्टकमेकैकक्रमाद्देवताष्टकस्थानं परिकल्प्य पुनस्तद्द्वितीयवीथ्यां तत्तत् कोणोभयपार्श्वयोः कोष्ठद्वयं कोष्ठद्वयमेकीकृत्य पुनस्तद्वीथ्यां प्रतिदिशं मध्ये शिष्टमेकैकं कोष्ठं वक्ष्यमाणक्रमादक्षरन्यासार्थं परिकल्प्य पुनस्तद्बाह्यवीथ्यां द्वात्रिंशत् कोष्ठानि द्वात्रिंशद्देवतास्थानान्येवं सम्भूयाक्षरन्यासस्थानकोष्ठचतुष्टय-वर्जं त्रिपञ्चाशद्देवतास्थानानि भवन्तीति ॥ १४ ॥

सर्व्वमध्ये इत्यादिभिः समीरिता इत्यन्तैर्द्वादशभिः श्लोकैस्त्रिपञ्चाशद्वास्तु-देवतानामानि प्रोक्तचक्रे प्रोक्तस्थानेषु तासां स्थितिक्रमं तत्तन्नाममन्त्रांश्चोपदि-शति । तत्र सर्व्वमध्ये एकीकृतनवकोष्ठात्मकस्थाने । तद्बहिस्तदनन्तरवीथ्यामभि-

प्रागादि तद्वहिश्चापि यजेदेतान् प्रदक्षिणम् ।
आर्य्यकञ्च विवस्वन्तं मित्रमन्यं महीधरम् ॥ १६ ॥
कोणार्द्धकोष्ठयोरेकमेकमष्टौ च तद्द्वये ।
वह्न्यादीशान्तमभितः पूजयेत् पूर्ववत् प्रिये ॥ १७ ॥
सावित्रः सविता शक्र इन्द्रजिद्रुद्रतज्जयौ ।
आयापवत्सकौ चेति प्रोक्तास्तेऽष्टौ तु नामतः ॥ १८ ॥
कोणार्द्धकोणपार्श्वस्थेष्वग्न्यादीशान्तमर्च्चयेत् ।
अष्टौ क्रमेण ताराद्यैर्नमोन्तैर्नामभिस्तथा ॥ १९ ॥
अन्यानपि च चक्रेऽस्मिन् प्रोक्तान् सर्व्वांस्तथार्च्चयेत् ।
सर्व्वं गुहञ्चार्य्यमणं भल्लकं पिलिपिच्छकम् *॥ २० ॥
चरकीं च विदारीं च पूतनां च महेश्वरि ।
वहिरीशादि परितो यजेदष्टौ दिशं प्रति ॥ २१ ॥
ईशानश्चाथ पर्जन्यो जयन्तः शक्रभास्करौ ।
सत्यो वृषोऽन्तरिक्षश्च पूर्व्वाशाकोष्ठगाः क्रमात् ॥ २२ ॥

तस्त्वेकोक्तकोष्ठत्रयात्मककोष्ठत्रयात्मकेषु चतुर्षु स्थानेषु । एतानार्य्यकादीन् । अन्यं चतुर्थं । अष्टौ दैवतानीति शेषः । तद्द्वये वह्न्यादीशान्तमभितः तदर्द्धकोष्ठद्वये वह्निकोणगतार्द्धकोष्ठद्वयादीशकोणगतार्द्धकोष्ठद्वयान्तमित्यर्थः । पूर्व्ववत् प्रादक्षिण्येन । प्रिये इति सम्बुद्धिः । रुद्रतज्जयौ रुद्रो रुद्रजयश्च । ते देवाः । अष्टौ अनन्तरश्लोकवक्ष्यमाणसर्व्वादीन् । ताराद्यैः प्रणवाद्यैः । नमोन्तैरित्यनेन तत्तन्नाम्नां चतुर्थीविभक्त्यन्तत्वं चोच्यते । तथा प्रादक्षिण्येन । अन्यान् प्रोक्तान् ब्रह्मादीन् । तथार्च्चयेत् प्रोक्तक्रमेण तत्तन्नाममन्त्रैरर्च्चयेत् । सर्व्वमित्यादिनोत्तरार्द्धेन पञ्च नामानि । चरकी-त्यादिना पूर्व्वार्द्धेन नामत्रयं । महेश्वरीति सम्बुद्धिः । वहिः सर्व्व-वाह्यवीथ्यां । अष्टौ देवान् । दिशं प्रति प्रतिदिशमित्यर्थः ॥ ईशानेत्यादिना

* परिपृच्छकम् ।

अग्निः पूषा च वितथो यमोऽथ गृहरक्षकः।
गन्धर्वो भृङ्गराजश्च मृगो दक्षिणकोष्ठगः ॥ २३ ॥
निऋतिश्च तथा दौवारिकः सुग्रीवकस्तथा।
वरुणः पुष्पदन्तश्चासुराख्यशोषरोगकाः ॥ २४ ॥
पश्चिमाशास्थकोष्ठेषु पूज्या एते यथाक्रमम्।
वायुर्नागस्तथा मुख्यः सोमो भल्लातकस्तथा ॥ २५ ॥
अर्गलो दितिरप्येवमदितिश्च यथाक्रमम्।
कोष्ठेषूत्तरसंस्थेषु देवतास्ताः समीरिताः ॥ २६ ॥
द्वितीयवीथिमध्यस्थचतुष्कं कोणसूत्रतः।
कृत्वा चतुर्द्धा तेष्वेव प्रागादिषु यथाक्रमात् ॥ २७ ॥

---

श्लोकेन नामाष्टकम्। अग्निरित्यादिना श्लोकेन नामाष्टकं। निऋतिरित्यादिना श्लोकेन नामाष्टकम्। एते नैऋत्यादयः। (वायुरित्यादिनोत्तरार्द्धेन नामपञ्चकम्। अर्गल इत्यादिना पूर्व्वार्द्धेन नामत्रयं। तत्र अर्गलः दितिरिति पदच्छेदः। ताः वाय्वादयः। एतदुक्तं भवति प्रोक्ते चक्रे एकीकृतनवकोष्ठमध्ये प्रोक्तरूपं ब्रह्माणं तद्वाह्यवीथ्यां प्रतिदिशमेकीकृतत्रित्रिकोष्ठात्मकस्थानचतुष्टये प्रागादितः प्रादक्षिण्यक्रमादार्यकादींश्चतुरस्तद्वीथितद्वाह्यवीथ्योः प्रतिकोणं तिर्य्यक्सूत्रास्फालनोत्पन्नार्द्धद्वयकोष्ठाष्टके वह्न्यादीशान्तं प्रादक्षिण्यक्रमात् सावित्रादीन् अष्टौ पुनस्तन्मध्यवीथीप्रतिकोणं शिष्टकोणपार्श्वद्वयेष्वेकीकृतकोष्ठद्वयद्वयोत्पन्नेषु अष्टसु स्थानेषु वह्न्यादीशान्तं प्रादक्षिण्येन सर्व्वादीनष्टौ पुनः सर्व्ववाह्यवीथ्यामीशानकोष्ठादिद्वात्रिंशत्कोष्ठेषु प्रादक्षिण्येनेशादीन् द्वात्रिंशद्देवांश्च तत्तन्नाममन्त्रैः प्रणवादिभिर्नमोऽन्तैः पूजयेदिति ॥२६॥

द्वितीयेत्यादिभिस्तानित्यन्तैस्त्रिभिः श्लोकैः प्रोक्तवास्तुचक्रमध्यवीथ्यां प्रतिदिशमेकैकक्रमादवशिष्टकोष्ठचतुष्टये युगादिवर्णन्यासक्रममुपदिशति। तत्र द्वितीयवीथिमध्यस्थचतुष्कं प्रतिदिशमेकैककोष्ठक्रमात् कोणसूत्रतः कोणसूत्राभ्यां तेष्वेव एकैककोष्ठस्थस्थानचतुष्कक्रमात् प्राग्वत् प्रादक्षिण्यात्। प्राच्ये प्राक्-

प्राच्ये युगार्णपर्य्यायनित्यार्णान् लिखेत् क्रमात्।
प्रागादिषु तथा दक्षे नित्यार्णानुदयार्णकम्॥ २८॥
पश्चिमे भूमितोयाग्निवायुकर्म्मान्तिकान् लिखेत्।
उत्तरे पूजयामीति विलिख्यात्र यजेच्च तान्॥ २९॥
प्रत्येकं तैर्हुनेत् कुण्डे चतुरस्रेन्द्रदिङ्मुखः।
व्रीहिमुद्गयवैः क्षौद्रघृतदुग्धाप्लुतैः क्रमात्॥ ३०॥
अष्टोत्तरशतं वाष्टोत्तरविंशतिमेव वा।
प्रत्येकं तैर्हुनेद्द्रव्यैर्मन्त्रैस्तद्वच्च पायसैः॥ ३१॥
बलिञ्च तेषां कुर्व्वीत पायसैर्व्यञ्जनान्वितैः।
ससितैर्दुग्धकदलीफलापूपादिसंयुतम्॥ ३२॥

---

कोष्ठस्थस्थानचतुष्टये। युगार्णपर्य्यायनित्यार्णान् तत्तत्कालीनं युगार्णं पर्य्यायनित्यार्णत्रयञ्च। क्रमात् प्रागवत्प्रादक्षिण्येन। तथा प्रादक्षिण्येन। दक्षे दक्षिणपार्श्वस्थकोष्ठस्थस्थानचतुष्टये। नित्यार्णानुदयार्णकं उदयार्णं तत्तद्दिननित्यार्णत्रयञ्चेत्यर्थः। पश्चिमे पश्चिमकोणस्थस्थानचतुष्टये भूमीत्याद्यस्यापि स्वरूपग्रहणम्। कर्म्मान्तिकान् द्वितीयाविभक्त्यन्तान्। उत्तरे उत्तरकोष्ठस्थस्थानचतुष्टये। पूजयामीति चत्वार्थ्यक्षराणि। अत्र चक्रे। तान् प्रा न् ब्रह्मादीन्॥ २९॥

प्रत्येकमित्यादिना पायसैरित्यन्तेन श्लोकद्वयेन वास्तुदेवतानां होमार्थं कुण्डादिकं होमद्रव्याण्याहुतिसंख्याञ्चोपदिशति। तत्र तैः प्रोक्तनाममन्त्रैः स्वाहान्तैरित्यर्थः। हुनेत् जुहुयादित्यर्थः। चतुरस्रेन्द्रदिङ्मुखः अत्र सन्धिर्दिव्यत्वात्। इन्द्रदिङ्मुखः प्राङ्मुखः। क्रमात् एकैकक्रमात्। वा विकल्पे। तद्वत् प्रोक्तसंख्यालङ्घनेन। एतदुक्तं भवति चतुरस्रकुण्डे प्राङ्मुखः प्रोक्तप्रकारेण वह्निस्थापनादिपुरःसरं तत्र (?) कृत्वा क्षौद्रादित्रयाप्लुतैर्व्रीह्यादिभिस्त्रिभिः पायसैश्च ब्रह्मादीनां प्रत्येकमेकद्रव्येण प्रोक्तसंख्ययोरन्यतमसंख्या आज्याहुतीर्जुहुयादिति॥ ३१॥

बलिमित्यादिना श्लोकेन तेषां बलिविधानं तद्द्रव्याणि चोपदिशति। तत्र तेषां ब्रह्मादीनां। दुग्धकदलीफलापूपादिसंयुतम् एतत् क्रियाविशेषणम्।

एवं सिंहगते भानौ पूर्णायां प्रतिवत्सरम् ।
स्वगेहे वास्तुपूजायां मण्डले सर्वतः क्रमात् ॥ ३३ ॥
कुर्य्यात्तद्दिवसे विप्रान् नित्याभक्तान् यथाबलम् ।
त्रयाद्दहीनान् विविधैर्म्मधुराद्यैस्तु भोजयेत् ॥ ३४ ॥
भुक्तेभ्यो दक्षिणां दद्याद्यथाशक्ति समर्च्य तान् ।
एवं विदधतो गेहे नाकल्याणं कदाचन ॥ ३५ ॥
न बालमरणं व्याधिभूतप्रेतादिकानि च ।
न सर्पपीड़ा नान्योन्यकलहान्यशुभानि च ॥ ३६ ॥
पुत्रपौत्रधनारोग्यपशुदासीसमृद्धिभाक् ।
अरोगी विजयी ख्यातश्चिरं जीवति तद्गृहे ॥ ३७ ॥

---

अपूपादीत्यत्रादिशब्दो घृतादिविषयः । एतदुक्तं भवति उक्तेषु त्रिपञ्चाशत्स्थानेषु उक्तानि त्रिपञ्चाशद्दैवतान्यावाह्य गन्धपुष्पधूपदीपैरभ्यर्च्य पायसेन तन्त्रोक्तद्रव्यैर्वा प्रत्येकं बलिसिक्थानि निवेद्यानन्तरं अन्नानि पात्रान्तरे यथास्थानं निवेश्य रक्ताम्बरोष्णीशी खड्गपाणिः खड्गपाणिभिः पुरुषैरावृतस्त्वरं देवतायतननदीतीरप्रख्यातवनस्पतिमूलानामन्यतमप्रदेशे स्थण्डिले यथास्थानं निक्षिप्य पश्चादनपेक्षरक्षिभिः सार्द्धं श्रीविद्याजापी गृहमेत्य न्यस्तगात्रो देवतात्मा भवेदिति ॥ ३२ ॥

एवमित्यादिभिर्भवेदित्यन्तैः सप्तभिः श्लोकैः प्रतिवर्षं स्वगेहे वास्तुदेवतार्चनकालं तत्तद्दिवसे नित्याचक्रापास्तिक्रमात् तत्फलं राजादिगृहाद्येतदर्चनस्यावश्यकर्त्तव्यतां तदकरणे प्रत्यवायञ्चोपदिशति । तत्र एवं प्रोक्तक्रमात् । स्वगेहे साधकगेहे । मण्डले प्रोक्तगेहे (शक्तवक्र?) । कुर्य्यादित्यस्य वास्तुपूजायामित्यनेन पूर्व्वत्रान्वयः । तद्दिवसे वास्तुदेवतोपास्तिदिवसे । नित्याभक्तान् षोड़शनित्याभक्तान् । त्रयाद्दहीनान् पुरुषत्रयाद्दहीनान् । मधुराद्यैरित्यत्र आद्यशब्दस्त्वितररसपञ्चकविषयः । तान् भक्तान् भूतप्रेतादिकानित्यत्रादिशब्दः अपस्मारकृत्यादिविषयः । अशुभानि

राजवेश्मसु सर्व्वत्र तथा च महिषीगृहे ।
सचिवामात्यसेनानीभवनेषु पुरे तथा ॥ ३८ ॥
विदध्यात् प्रतिवर्षन्तु प्रोक्तसिद्धै तु देशिकः ।
न चेदुक्तान्यथारूपफलैः क्लेशोऽनिशं भवेत् ॥ ३९ ॥
त्रिलोहाश्मतलेष्वन्यतमे हस्तप्रमाणके ।
तत्तद्दैवतनामानि मायागर्भे समालिखेत् ॥ ४० ॥
तत्र तान् पूजयेत् सप्तपञ्चद्वित्रेकवासरैः ।
स्थापयेद्वेश्मसु क्वापि नित्यशश्चापि तत्र वै ॥ ४१ ॥
स्मरेत्तान् देवताबुद्ध्या कुर्य्यात् पुष्पाञ्जलिं त्रिशः ।
तद्वेश्ममङ्गलं ग्रामपुरखर्व्वटकादिषु ॥ ४२ ॥
विदध्यादखिलं क्षुद्रक्लेशशान्त्यै समृद्धये ।

---

दारिद्र्यादीन्यमङ्गलानि । तद्गृहे अर्चितवास्तुदेवताभिः परिरक्षितगृहे । सर्व्वत्र राजनिवासस्थानेषु मण्डपादिषु । तथा च महिषीगृहे राजमहिषीणां गृहे विनिवासस्थानेषु । तत्र सर्व्वदिग्विदिक्षु मध्ये चेत्यर्थः । तुरवधारणे । नचेत् प्रोक्तक्रमाद्वास्तुदेवतापूजा न कृता चेत् ॥ ३८ ॥

त्रिलोहेत्यादिभिः समृद्धये इत्यन्तैरध्यर्द्धैस्त्रिभिः श्लोकैरधिकरणेषु वास्तुचक्र-निर्म्माणविधानादिकं गृहादिषु तत्प्रतिष्ठां तत्फलञ्चोपदिशति । तत्र त्रिलो-हाश्मतलेषु हिरण्यरूप्यताम्राश्मतलेषु । हस्तप्रमाणके विस्तारायामाभ्यां । तत्तद्दैव-तनामानि प्रोक्तानि द्वितीयान्तानीति शेषः । तेषां द्वितीयान्तत्वं पूजयामीत्यस्य तच्चक्रे लेख्यत्वेनोपदिष्टत्वात् भूम्यादिनामचतुष्टयविलेखने द्वितीयान्तत्व-विधानाच्च । मायागर्भे ह्रीं लेखोदरे । तत्र चक्रे । तान् देवान् । क्वापि अनुपहत-देशे । तत्र स्थापितदेशे । त्रिशः त्रिवारादहीनं । खर्व्वटकादिष्वित्यत्रादि-शब्दः पत्तनादिविषयः । विदध्यात् प्रोक्तप्रकारेण वास्तुदेवताचक्र प्रतिष्ठादिक मिति शेषः ॥ ४२ ॥

ततः सूक्ष्मैः पराख्यैश्च होमैः सिद्धिं शृणु प्रिये ॥ ४३ ॥
स्वमूलाधारके वह्नौ कुण्डलिन्यास्यगामिनि ।
वाच्यवाचकरूपञ्च प्रपञ्चं जुहुयात्तथा ॥ ४४ ॥
येनावयोः समो देवि जायते हवनेन वै ।
तद्विधानं वद प्राज्ञ शम्भो सम्यङ्ममाधुना ॥ ४५ ॥
आधारे वह्निसंस्थानं कुण्डलिन्याः स्थितिं ततः ।
तद्रूपं तत्क्रियां सर्वं वद मे विशदं प्रभो ॥ ४६ ॥
शृणु वक्ष्ये विधानं ते सम्यग्विस्तरतोऽधुना ।
प्राणाग्निहोत्रविद्येति यत्तुर्य्यां श्रूयते परम् ॥ ४७ ॥

---

तत इत्यादिना वै इत्यन्तेनार्द्धाद्यन्तेन श्लोकेन सूक्ष्मपरहोमैः सिद्धिकथनप्रस्ताव-पुरःसरं संक्षेपात् सूक्ष्महोमविधानं तद्वैभवञ्चोपदिशति । तत्र चः समाहारे । प्रिये इति सम्बुद्धिः । स्वमूलाधारके षोड़शपटलप्रोक्तरूपे । वाच्यवाचकरूपं वाच्य-वाचकात्मकं । तथा वक्ष्यमाणप्रकारेण । येन विधानेन । आवयोः शक्तिशिवयोः । एतदुक्तं भवति मूलाधारस्थकुण्डलिनोशक्तिमुखगामिवह्नौ वाच्यवाचकात्मकं प्रपञ्चं तथा जुहुयात् येन हवनविधानेन आवयोः समः साधको जायते इति ॥ ४४ ॥

तद्विधानमित्यादिना प्रभो इत्यन्तेनार्द्धाद्येन श्लोकेन तद्विधानं मूलाधारे वह्निसंस्थानं कुण्डलिन्याः स्थितिं तद्रूपं तत्क्रियाञ्च देवी पृच्छति । तत्र तद्विधानं सूक्ष्महोमाङ्गविधानं । प्राज्ञ शम्भो इति पदद्वयमीश्वरसम्बुद्धिः । अधुना अस्मिन् पटले । तद्रूपं कुण्डलिनोरूपं तत्क्रियां कुण्डलिनीक्रियां । विशदं सुष्पष्टं । प्रभो इति देवसम्बुद्धिः ॥ ४६ ॥

शृण्वित्यादिभिः किञ्चनेत्यन्तैश्चतुर्भिः श्लोकैस्तद्विधानकथनप्रस्तावपुरःसरं तद्विद्यानां वेदुषु प्रशस्तिं तद्वैभवादिकञ्चोपदिश्यास्मिन् पटले प्रोक्ततद्वैभवशेषस्य

यज्ज्ञात्वा वनितागर्भं न प्रयाति नरो ध्रुवम् ।
यद्व्यायायासरहितमनन्यापेक्षनिर्वहम् ॥ ४८ ॥
यन्मनः क्लेशविश्रान्तेः स्थानं निःशेषकल्मषम् ।
सुखास्पदं स्वगं विश्वमयं चिद्वेद्यवेदनात् ॥ ४९ ॥
अत्रोक्तशेषमखिलं षट्त्रिंशे पटले स्फुटम् ।
प्रदर्श्यते ततस्तत्र वर्णयामि च किञ्चन ॥ ५० ॥
नित्यानित्योदिते मूलाधारमध्येऽस्ति पावकः ।
सर्वेषां प्राणिनां तद्वद्धृदये च प्रभाकरः ॥ ५१ ॥
मूर्द्धनि ब्रह्मरन्ध्राधश्चन्द्रमाश्च व्यवस्थितः ।
तत्त्रयात्मकमेव स्यादाद्या नित्या त्रिखण्डकम् ॥ ५२ ॥

---

षट्त्रिंशपटले वक्ष्यमाणत्वं कथयति। तत्र विधानं सूक्ष्महोमाङ्गं। अधुना अस्मिन् पटले। यद्विधानं परं निरतिशयं। वनितागर्भं मातुरुदरं। यत् व्यायासरहितं चर्य्याज्यदक्षिणाद्यर्थव्ययकृच्छ्रचान्द्रायणाद्यायासानपेक्षत्वादनुसन्धानमन्त्रत्वाच्च। अनन्यापेक्षनिर्वहं कृगविशेषलिङ्गुपद्रष्टाद्यनपेक्षत्वात् स्वभेदप्रतीतेः स्वात्मन्येव विलयनानुसन्धानमात्रत्वाच्च। यन्मनः क्लेशविश्रान्तेः स्थानं सङ्कल्पविकल्पविलयरूपत्वात्। निःशेषकल्मषं स्वव्यतिरिक्ताभावात्। सुखास्पदं स्वस्मिन्नेव मनसो निर्व्युत्थानविलापकत्वात्। स्वगं स्वस्मिन् अन्तर्ह्वितत्वात्। विश्वमयं चिद्वेद्यवेदनात् ज्ञातृज्ञानज्ञेयात्मकत्वाद्विश्वमयं। अत्र अस्मिन् पटले। ततस्तस्मात् ॥ ५० ॥

नित्येत्यादिभिस्त्रैरित्यन्तैः पञ्चभिः श्लोकैः सूक्ष्मस्वरूपं तदनुसन्धानं तद्धोमप्रकारञ्चोपदिशति। तत्र नित्यानित्योदिते नित्यानित्यपटले प्रोक्ते तद्वत् तन्त्रोक्तवत् स्थिते हृदये अनाहतचक्रे ब्रह्मरन्ध्राधः शिरःकपाले* ब्रह्मरन्ध्रप्रदेशाधोभागे त्वधोमुखपद्ममध्ये। तत्त्रयात्मकं अग्निसूर्य्यसोमात्मकं। आद्यानित्यात्रिखण्डकं श्रीविद्याखण्डत्रयम् ॥ तेषामित्यादिना श्लोकेनैतदुक्तं भवति मूलाधारे वह्न्यात्मकं श्रीवि-

---

* शक्तिकपाले ।

तेषां त्रयाणामैक्यन्तु मनसा भावयेत्तथा ।
गमागमाभ्यां तेजोभिस्तेषामन्योन्यजैः शिवे ॥ ५३ ॥
तथा समिद्धं तत्तेजस्त्रयं बुद्ध्वाथ तन्मयम् ।
चित्तविकल्पविधुरं भावयेदद्भुताच्च यत् ॥ ५४ ॥
तेषां त्रयाणां वर्णानां प्रागुक्तानां क्रमेण वै ।
द्वाभ्यामन्यतमं कृत्वा पुटितं जुहुयाच्च तैः ॥ ५५ ॥
पुटितान् भानुहृद्वर्णैः स्वरांस्तारेण हुङ्कृतैः ।
कुण्डलीमुखमार्गाग्नौ जुहुयान्निश्चलाशयः ॥ ५६ ॥

---

द्यायाः प्रथमखण्डमूर्द्धमुखप्रसृततेजस्कत्वात्तदादिब्रह्मरन्ध्रान्तं हृदये सूर्य्यात्मकं श्रीविद्याया मध्यमखण्डमुभयतः प्रसृततेजस्कत्वात्तदादिकं मूलाधारान्तं ब्रह्मरन्ध्रान्तगञ्च ब्रह्मरन्ध्राधःप्रदेशाधोमुखपद्मकर्णिकायां श्रीविद्यायाः तृतीयखण्डं चन्द्रात्मकममृतमयत्वेनाधोमुखप्रसृततेजस्कत्वात् तदादिकं मूलाधारान्तमेवं तेजस्त्रयात्मकं खण्डत्रयं गमागमानुसन्धानेनान्योन्यमेकीभूतं तन्मयमनसा सह स्वात्मानं च भावयेदिति। तथा प्राक्तप्रकारेण। तन्मयं कनकादिभिन्नमुकुरादिभेदवदिति शेषः। विकल्पविधुरं भेदरहितं। तेषां त्रयाणां अग्निसूर्य्यसोमानां व्यधिकरणे षष्ठी। वर्णानां प्रागुक्तानां पञ्चदशे पटले अकारादीत्यादिना चतुःषष्टितमेन श्लोकेनाभिप्रेतत्वेनोक्तानां। द्वाभ्यामग्निसूर्य्यसोमात्मकवर्गवर्णत्रयान्यतमाभ्यां अन्यतमं वर्णवर्गं तैः वक्ष्यमाणक्रमेण पुटितैः। एतदुक्तं भवति पञ्चदशपटलोक्तानां सूर्य्यसोमात्मककुलासनरेखात्रयात्मकत्रयाभिप्रेतानां वर्णानां मध्ये सोमात्मकषोडशस्वरवर्णैः सूर्य्यात्मककककारादितकारान्तषोडशवर्णवर्गेष्वग्न्यात्मकथकारादिसकारान्तषोडशवर्णवर्गं चान्यतमाभ्यां वर्गाभ्यां द्वितेजोमयाभ्यां तत्तदितरतेजोमयवर्गवर्णं वक्ष्यमाणक्रमात्तैस्तैर्वर्णैः पुटिताभिः ज्ञातृज्ञानज्ञेयात्मिकाभिः षोडशभिः प्रोक्ते निर्विकल्पे स्वतेजसि वक्ष्यमाणक्रमेण जुहुयादिति ॥ ५५ ॥

पुटितानित्यादिभिः सममित्यन्तैः पञ्चभिः श्लोकैः प्राणाग्निहोत्रमन्त्रादिकमुपदिशति। अत्र भानुहृद्वर्णाः कुलासने सूर्य्यात्मकरेखास्थककारादितकारान्ताः

वह्निभानुपुटान्तःस्थैश्चान्द्रैस्तद्वद्धुनेत् क्रमात् ।
चन्द्रभानुपुटान्तःस्थैर्व्वर्ह्णैर्जुहुयात्तथा ॥ ५७ ॥
भानुचन्द्रपुटान्तःस्थैर्ब्वर्ह्णैर्जुहुयात्तथा ।
चन्द्रवह्निपुटान्तःस्थैर्भान्वर्णैर्जुहुयादपि ॥ ५८ ॥
वह्निचन्द्रपुटान्तःस्थैरपि तद्वद्धुनेत्ततः ।
तथा तेषां प्रातिलोम्यात् षोड़शानां हुनेदपि ॥ ५९ ॥

---

षोड़श भानुवर्णाः । हृदिति सकारः । तदासने वह्निरेखास्थानामाग्नेयाक्षराणां प्रतिलोमक्रमात् सकारस्य प्रथमभवितया तद्वाचकरूपहृच्छब्देन तदादिथकारान्ता वह्निरूपाः षोड़शवर्णा उच्यन्ते । तस्मात् ककारादितकारान्तैः षोड़शभिर्भानुवर्णैः सकारादिथकारान्तैर्व्युत्क्रमात् षोड़शभिरग्निवर्णैश्च । स्वरान् तत्कुलासने सोमात्मकरेखास्थानकारादींश्चन्द्रात्मकान । तारेण प्रणवेन हुङ्कृतैरित्यत्र हुङ्कारस्यार्थो गुरुमुखादवगन्तव्यः । निश्चलाशयः अनन्यमनाः । तन्मन्त्रा यथा—कअसों, खआषों इत्यादयः तअःथों इत्यन्ताः षोड़श । वह्निभानुपुटान्तःस्थैः थकारादिसकारान्तानामनुलोमानां ककारादितकारान्तानां प्रतिलोमानां वर्णानां पुटान्तःस्थैश्चान्द्रैः स्वरैः । तद्वत् प्रणवेन हुङ्कृतैरित्यर्थः । क्रमात् अकारादिविसर्जनीयान्तक्रमात् । तन्मन्त्रा यथा—थअतों दआणों इत्यादयः सअःकों इत्यन्ताः षोड़श । चन्द्रभानुपुटान्तःस्थैः अकारादि विसर्जनीयान्तानां सौम्यषोड़शवर्णानां तकारादिककारान्तानां भानुषोड़शवर्णानां पुटान्तःस्थैर्वर्ह्णैः थकारादिसकारान्तैः । तथा तारेण हुङ्कृतैरिति यावत् । तन्मन्त्रा यथा अथतों आदणों इत्यादयः अःसकों इत्यन्ताः षोड़श । भानुचन्द्रपुटान्तःस्थैः ककारादितकारान्तानां भानुवर्णानां विसर्जनीयाद्यकारान्तानां चन्द्रवर्णानां पुटान्तःस्थैर्वर्ह्णैः थकारादिसकारान्तैः । तथा प्राग्वत्तारेण हुङ्कृतैः । तन्मन्त्रा यथा—कथःॐ खदंॐ गधौॐ इत्यादयः तसॐ इत्यन्ताः षोड़श । चन्द्रवह्निपुटान्तःस्थैः स्वराणां अकारादिविसर्जनीयान्तानां सकारादिथकारान्तानां च पुटान्तःस्थैः । भान्वर्णैः ककारादितकारान्तैः । अप्या तारेण हुङ्कृतैः इत्यनुकृष्यते । तन्मन्त्रा

एवं द्वादशधा होममत्तरैः स्यादुदीरितैः ।
कृत्वा तद्वाच्यमखिलमर्थरूपञ्च तैः समम् ॥ ६० ॥
तेजस्त्रयात्मरूपं स्यादावयोरपि तद्वपुः ।
अन्यानि चावयोरिच्छागृहीतानि वपूंषि वै ॥ ६१ ॥
तान्यन्यदेवतादेहसम्यगिच्छावशानि च ।
मुक्तिश्च तन्मयीभावस्थैर्यमेव समीरितम् ॥ ६२ ॥

---

यथा—अकसों आकषौं इत्यादयः अःतथों इत्यन्ताः षोडश। वह्निचन्द्रपुटान्तःस्थैः यकारादिसकारान्तानां विसर्जनीयाद्यकारान्तानाञ्च पुटान्तःस्थैः। तद्वत्तारेण हुङ्कृतैः। अथवा ककारादितकारान्तैः भान्वर्णैः। तन्मन्त्रा यथा—यकःॐ दखंॐ इत्यादयः सतॐ इत्यन्ताः षोडश। एवमुक्तप्रकारेण षड्विधप्रकारप्रोक्तभेदानां मन्त्राणां तारेण चतुरक्षरात्मकत्वे सत्यपि सम्प्रदायेन ते कृतसन्धिका एव लिखिताः। तेषां षड्विधभेदप्रकारप्रोक्तानां प्रातिलोम्यात् षोड़शानां षोड़शमन्त्राणामिति शेषः। एवमनुलोमविलोमाभ्यां। होमं दिव्यत्वात् होमः स्यादित्यर्थः। अक्षरैस्तेजस्त्रयात्मभिरिति शेषः। उदीरितैः प्रोक्तेषु द्विनवत्युत्तरशतरूपेष्वभीष्टैः षोड़शभिर्मन्त्रैः। अखिलं ज्ञातृज्ञानज्ञेयात्मकं। तैर्ज्ञातृज्ञानज्ञेयात्मभिर्वाचकरूपैः त्रिभिस्त्रिभिरक्षरैः समं तदपृथग्रूपं। एतदुक्तं भवति एवं प्रोक्तेषु द्वादशसु भेदेष्वभीष्टभेदमन्त्ररूपैस्त्रितयज्ञानमयैर्वाचकरूपैस्त्रिभिस्त्रिभिरक्षरैस्तत्तत्तेजस्त्रयात्मकं वाच्यमखिलमर्थरूपमपृथग्रूपं कृत्वा मूलाधारस्थनिर्विकल्परूपमात्ममहावह्नौ होमः स्यादिति ॥ ६० ॥

तेजस्त्रयेत्यादिना समीरितमित्यन्तेन श्लोकद्वयेन शक्तिशिवयोः याथात्म्यस्वरूपस्य तेजस्त्रयात्मकत्वमितरं पाञ्चभौतिकविग्रहस्वेच्छागृहीतात्मकत्वं मुक्तिस्वरूपञ्चोपदिशति। तत्र आवयोः शक्तिशिवयोः। तद्वपुः अनश्वरं वपुः। अन्यानि पाञ्चभौतिकानि। आवयोः प्राग्वत्। तन्मयीभावस्थैर्यं प्रोक्ततेजस्त्रयतादात्म्यभावस्थैर्यम् ॥ ६२ ॥

तत्र कुण्डलिनीं ब्रूहि स्फुटं मे परमेश्वर ।
तां वदामि शृणु प्राज्ञे रहस्यं परमाद्भुतम् ॥ ६३ ॥
मूलाधारस्थवज्राख्यतेजोमध्ये व्यवस्थिता ।
जीवशक्तिः कुण्डलाख्या प्राणाकारेण तेन सा ॥ ६४ ॥
प्रसुप्तभुजगाकारा त्रिरावर्त्ता महाद्युतिः ।
मायाशीर्षा नदन्ती तामुच्चरन्त्यनिशं खगे ॥ ६५ ॥
सुषुम्नामध्यदेशे सा यदा कर्णद्वयस्य तु ।
पिधाय न शृणोत्यस्या ध्वनिं तस्य तदा मृतिः ॥ ६६ ॥
एवं सा जीवशक्तिस्तु यदा कुण्डलिनीस्थितिम् ।
विहाय ऋजुतां याति स्वेच्छादण्डाहृता सती ॥ ६७ ॥
तदा विश्वप्रतीतिः स्यात् प्राणिनामन्यदा पुनः ।
निशान्धकारे भुवनस्थितिवत् स्वात्मनः स्थितिः ॥ ६८ ॥

---

तत्रेत्यादिना श्लोकपूर्वार्द्धेन कुण्डलिनीस्वरूपं देवी पृच्छति। तत्र स्फुटं सुस्पष्टं। तामित्यादिना श्लोकोत्तरार्द्धेन कुण्डलिनीस्वरूपकथनं प्रस्तौति। तत्र तां कुण्डलिनीं। रहस्यं देशिककटाक्षादृते ज्ञातुमशक्यत्वात्। परमाद्भुतम् ज्ञानात्मकत्वात्तादात्म्यात्मकत्वाच्च ॥ ६३ ॥

मूलाधारेत्यादिभिः माधक इत्यन्तैः षड्भिः श्लोकैः कुण्डलिनीस्वरूपं तदनुभावश्चोपदिशति। तत्र तेन प्राणाकारेण। सा कुण्डलिनी। महाद्युतिः विश्वप्रकाशकत्वात्। मायाशीर्षा विसर्जनीयशीर्षा। तां मायां उच्चरन्ती तदात्मना ऊर्द्ध्वं सञ्चरन्ती। खगे इत्येतदुत्तरत्र सुषुम्नामध्यदेशे इत्यस्य विशेषणं। सा कुण्डलिनी। तदा अत्यासन्नतः। एवमुक्तरूपा। तु विशेषे। ऋजुतां याति मूलाधाराद्विनिर्गत्य तदुपरि श्रोत्रादीन्द्रियगामिनी। स्वेच्छादण्डाहृता स्वेच्छाप्रेरणापरवशा। अन्यदा तस्यां प्रसुप्तभुजगाकारतया स्थितायां। निशान्धकारे भुवनस्थितिवत् अप्रकाशतया। एतदुक्तं भवति यदा स्वात्मस्फुरत्तारूपिणी बुद्ध्यात्मिका कुण्डलिनी शक्तिः मूलाधारात् प्रसुप्तभुजगाकारतां विहाय स्वेच्छाप्रेरि[illegible]

एवं तां वेत्ति यो देहे देशिकादेशदर्शिताम् ।
स वेत्ति ब्रह्म परमं मां त्वामपि च साधकः ॥ ६९ ॥
जीवन्मुक्तः स विज्ञेयः शुद्धात्मासक्तमानसः ।
अस्पृष्टपुण्यपापश्च शोकहर्षातिभूमिगः ॥ ७० ॥
रागद्वेषविनिर्मुक्तस्त्यक्तसर्व्वक्रियाफलः ।
निरुपाधिकसन्तुष्टः स्वेच्छाधीनेच्छया युतः ॥ ७१ ॥
स्वदेहमात्रयात्रश्च समश्च स्तुतिनिन्दयोः ।
समारिमित्रकल्याणगुणशीलदयान्वितः ॥ ७२ ॥
एवं स कथितो जीवन्मुक्तो लोकेषु साधकः ।
इतरः पूजने देव्या भजने च सकौतुकः ॥ ७३ ॥
कालेन सिद्धिभाग्भूयादितरो दुःखभाजनम् ।
जन्मभिर्व्वहुभिः क्लिष्टो* मूर्खो विद्याधनोद्भवैः ॥ ७४ ॥

---

उर्द्ध्वं गता व्याप्ता विलदेहात्तत्तदिन्द्रियद्वारा विनिर्गत्य विश्वं कवलीकरोति तदा विश्वप्रतीतिर्भवति । पुनः स्वेच्छया यदा मूलाधारे सा प्रसुप्तभुजगाकारमात्रस्वरूपतां याति तदा निशास्वन्धकारे भुवनस्थितिवत् तद्विश्वप्रतीतिः न स्यादिति । एवं प्रकाशकरीं । तां कुण्डलिनीं । देशिकादेशदर्शितां देशिकोपदेशदर्शितां । मामपि शिवं शक्तिञ्च त्वाम् ॥ ६९ ॥

जीवन्मुक्त इत्यादिभिः साधक इत्यन्तैरध्यर्द्धैस्त्रिभिः श्लोकैर्जीवन्मुक्तलक्षणमुपदिशति । तत्र असक्तमानसः इति पदच्छेदः । शोकहर्षातिभूमिगः शोकहर्षयोरपि पारं गतः । निरुपाधिकसन्तुष्टः स्वभावसन्तोषयुक्तः । स्वेच्छाधीनेच्छया युतः अपरप्रेरितबुद्धिः । समारिमित्रः रागद्वेषाभावात् । जीवन्मुक्तः जीवन्नेव मुक्तः परमार्थतः स्वात्मनोऽन्याद्यभावादित्यर्थः ॥ ७२ ॥

इतर इत्यादिना योनिष्वित्यन्तेनार्द्धाद्यन्तेन श्लोकेनोक्तज्ञानरहितस्यापि देव्यर्चनात् कालेन तत्सिद्धिः भक्तितः तदर्चनादिरहितस्य प्रत्यवायश्चोप-

---

* क्लू ष्टो ।

मुदैरुन्मत्तचित्तः सन्नधोधो याति योनिषु ।
नित्यासु भक्तिभु वने प्रक्षीणे पापकर्म्मणि ॥ ७५ ॥
जायते यद्बलाल्लोके भवेत् प्रागुक्तलक्षणः ।
नरो भवन्ति तां भक्तिं प्राप्य लोकेषु देवताः ॥ ७६ ॥
दृश्यन्ते भानुचन्द्रारबुधजीवसितासिताः ।
अन्ये च लोकपालाद्यास्तद्भक्तिप्राप्तसम्पदः ॥ ७७ ॥
वहुना किं परं देवि नित्याभिः सदृशानघे ।
न सन्ति देवता विद्यास्तस्मात्ता एव सर्व्वदा ॥ ७८ ॥
भावयाम्यहमद्यापि त्रिकाले विग्रहान्वितः ।

---

दिशति। तत्र इतरः प्रोक्तज्ञानरहितः। देव्याः सर्वकारणभूताया ललितायाः। कालेन भक्त्य पासनादिगौरवलाधववशात् कालदैर्घ्यविलम्बनेन। इतरः तद्भक्त्यादिरहितः। जन्मभिर्वहुभिः अपरमार्थज्ञानसर्वस्वैर्विविधजन्मभिः। मूर्खः अविवेकी। विद्याधनोद्भवैरित्येतदुत्तरत्र मुदैरित्यस्य विशेषणम्। उन्मत्तचित्तः कर्त्तव्याकर्त्तव्यज्ञानरहितः। अधोधो याति योनिषु नीचैर्नीचैर्विषयेषु परवशो भवतीत्यर्थः॥ ७४ ॥

नित्यास्वित्यादिभिरन्वित इत्यन्तैरर्द्धाद्यन्तैस्त्रिभिः श्लोकैः नित्यासु भक्तेर्दौर्लभ्यं तद्भक्तिवैभवं नित्यावैभवविग्रहान्वितेनेश्वरेण तदुपास्तिं चोपदिशति। तत्र प्रक्षीणे सद्गुरुकटाक्षादिभिः। पापकर्म्मणि अज्ञानदुर्वासनाद्युपहतकर्मणि। यद्बलाद्भक्तिवलात्। प्रागुक्तलक्षणः जीवन्मुक्तलक्षणः। नरः प्रागुक्तलक्षणो भवेदित्यन्वयः। तां भक्तिं अस्मिन् पटले वक्ष्यमाणरूपां। देवताः—इत्यस्य भवन्तीत्यनेनान्वयः। लोकपालाद्या इत्यत्राद्यशब्दस्त्रयस्त्रिंशत्कोटिदेवताविषयः। तद्भक्तिप्राप्तसम्पदः उक्तरूपभक्तिप्राप्तैश्वर्य्याः। वहुना भाषणेन। सदृशाः अनघे इति च पदच्छेदः। भावयामीत्यस्य ता एव इत्यनेन पूर्वत्रान्वयः। अहं शिवः। त्रिकाले सन्ध्यात्रये। विग्रहान्वितः न्यस्तविग्रहः। अनेन लब्धज्ञानानामपि सन्ध्यात्रयोपास्तेरवश्यकर्त्तव्यता कथितेति सम्प्रदायार्थः॥७८॥

तद्वर्णव्याप्तचक्रस्था ग्रहाश्च तदः दर्शिताः ॥ ७९ ॥
विधिविष्णुशिवात्मत्वं तासामेव निजेच्छया ।
अन्याश्च देवता या यास्तास्तास्तन्मयविग्रहाः ॥ ८० ॥
पररूपन्तु वक्ष्यामि होमन्ते महदद्भुतम् ।
यत्सिद्धिः सिद्धरूपाणां प्रागुक्तानां भवेत् सदा ॥ ८१ ॥
अन्येषां न भवेद्भावः तथा सर्व्वाश्च यो महान् ।
प्रक्षीणाशेषपापानां भक्तिः स्यात्तज्जुसेविनाम् ॥ ८२ ॥

---

तद्वर्णेत्यादिना श्लोकोत्तरार्द्धेन पञ्चविंशपटलप्रोक्तमातृकाचक्रास्थग्रहाणां दशां तत्स्थितिरूपञ्च स्मारयति। तत्र तद्वर्णव्याप्तचक्रस्थाः नित्यात्मकमातृकावर्णव्याप्तचक्रस्थाः ॥ ७९ ॥

विधीत्यादिना श्लोकेन त्रिमूर्त्तीनामन्यदेवतानाञ्च नित्यानां स्वेच्छाविग्रहात्मकत्वमुपदिशति। तत्र विधिविष्णुशिवात्मत्वं ब्रह्मविष्णुरुद्रात्मकत्वं। तासां षोड़शनित्यानां। निजेच्छया स्वेच्छया। अन्याः अन्यतन्त्रेषूपदिष्टाः। तन्मयविग्रहाः चक्रान्तरस्थषोड़शनित्यामयविग्रहाः ॥ ८० ॥

पररूपमित्यादिना महानित्यन्तेनार्द्धाधिकेन श्लोकेन पररूपहोमकथनप्रस्तावपुरःसरं सिद्धसाध्यसाधकादिविषयेषु सिद्धानामेव तत्परहोमयोग्यतामितरेषामुभयेषां तदयोग्यताञ्चोपदिशति। तत्र तुविंशेषे। महदद्भुतं समस्तभेदविलयनात्मकत्वात्। यत्सिद्धिः पररूपहोमभावसिद्धिः। सिद्धरूपाणां प्रागुक्तानां अस्मिन्नेव पटले प्रोक्तसूक्ष्महोमसिद्धानां। अन्येषां साधकसाध्यानां*। भावः पररूपहोमस्येति शेषः। तथा सिद्धवत् ॥ ८१ ॥

प्रक्षीणेत्यादिना श्लोकोत्तरार्द्धेन तत्परहोमभावसिद्धानां अनुभावं हृदीकृत्य नित्यासु भक्त्युपलब्धिकरणमुपदिशति। तत्र प्रक्षीणाशेषपापानां देशिककटाक्षादिभिर्दूरीकृतदुर्व्वासनानां। तज्जुसेविनां विदितपरमार्थनाथसेवादितत्पराणाम् ॥ ८२ ॥

---

* सिद्धसाधकसाध्याना।

नित्याविद्यासु भक्तानां लक्षणं शृणु सुन्दरि ।
आमुष्मिकासंशयत्वं सन्तोषो नित्यपूर्णता ॥ ८३ ॥
सुखिता त्यागिता ज्ञानं कृतज्ञत्वमलुब्धता ।
अकार्पण्यमदीनत्वं परचिन्तानिरुद्यमः ॥ ८४ ॥
दयालुता मनस्वित्वमवैषम्यं मनःस्थितौ ।
लाभहान्योः प्रीतिरोषाभावः कल्याणशीलता ॥ ८५ ॥
कल्याणाभिनिवेशित्वं सदा कल्याणकीर्त्तनम् ।
अकल्याणकथालापवैमुख्यं स्वेच्छया स्थितिः ॥८६ ॥
सदैश्वर्य्यञ्च भोक्तृत्वं नैष्ठिकत्वमजिह्मता ।
सर्व्वानुकूल्यं सङ्गीतप्रियत्वं वाञ्छिताश्रयः ॥ ८७ ॥

---

नित्येत्यादिभिस्ते इत्यन्तैः षड्भिः श्लोकैः सप्रस्तावपुरःसरं नित्याभक्तलक्षणोपदेशं प्रोक्तनिगमनञ्च करोति। तत्र नित्याविद्यासु षोड़शनित्यानां विद्यासु। सुन्दरीति देवीसम्बुद्धिः।। आमुष्मिकासंशयत्वं परमार्थपरिज्ञानात्। सन्तोषः अवाप्तव्यविषयेच्छाद्यभावात्। नित्यपूर्णता देशकालाद्यनवच्छिन्नभावेन। सुखिता स्वात्मपरमानन्दानुभवरसेन। त्यागिता नैरपेक्ष्यं। ज्ञानं सदनुसन्धानं। कृतज्ञत्वं गुरुचरणनलिनयुगलभजनपरत्वं। अलुब्धता इतरानपेक्षा। अकार्पण्यं द्रव्यविषयमुद्दिश्य महाप्रयत्नराहित्यं। अदीनत्वं अक्षुद्रभावः। परचिन्तानिरुद्यमः भेदराहित्यात्। दयालुता सर्वप्राणिषु। मनस्वित्वं उदारभावः। अवैषम्यं मनःस्थितौ लाभहान्योः लाभहान्योः मनस्थिताववैषम्यमिति वान्वयः। प्रीतिः रोषाभावः सर्वप्राणिषु प्रीतिः कोपाभावश्च। कल्याणशीलता मङ्गलाचरणस्वभावता। कल्याणाभिनिवेशित्वं मङ्गलकर्म्मस्वभिनिवेशित्वं। कल्याणकीर्त्तनं मङ्गलस्वभावानां महतां नामानुभावकीर्त्तनं। अकल्याणकथालापवैमुख्यं अकल्याणेषु कर्म्मसु तदाचारवतां कथालापे च वैमुख्यं। स्वेच्छया स्थितिः अपराधीनतया स्थितिः। सदैश्वर्य्यं राजचोरदुर्जनाराल्याद्यनुपहतमहिमत्वं। भोक्तृत्वं भोक्तृशक्तिमत्त्वं। नैष्ठिकत्वं सर्वदेवताविग्रहेष्वनुस्यूतनित्यात्मभावाव्यभिचारित्वं। अजिह्मता अकुटिलहृदयता। सर्वानुकूल्यं सुरनरतिर्य्य-

*राजयोषित् प्रभुप्राज्ञबहुमानममत्सरः ।
सर्व्वोत्तरत्ववाञ्छा च लक्षणानीरितानि ते ॥ ८८ ॥
यद्विकल्पस्वरूपन्तु मनस्तन्निर्व्विकल्पके ।
निधानं परहोमन्तु स्थूलसूक्ष्मञ्च यन्मयम् ॥ ८९ ॥
उच्चावचविकल्पानां वस्तूनामग्निदाहृतः ।
तन्मयत्वादैक्यरूपं स्थूलहोममुदीरितम् ॥ ९० ॥

---

गाद्यभेदेन सर्वविग्रहाणां नित्याविग्रहात्मकत्वप्रतिपत्तेः । सङ्गीतप्रियत्वं नादस्वरूपस्य नित्यात्मकत्वात् । वाञ्छिताश्रयः स्वस्माद्भिन्नविषयाभावात् । राजयोषित्प्रभुप्राज्ञबहुमानं स्वस्याभिरामात्मकभावसिद्धेः । अमत्सरः स्वसमानाधिकराहित्यात् । सर्वोत्तरत्ववाञ्छा देवतातादात्म्यसिद्धिवाञ्छा ॥ ८८ ॥

यद्विकल्पेत्यादिना श्लोकेन परहोमस्वरूपं स्थूलसूक्ष्महोमयोरपि तन्मयत्वं चोपदिशति । तत्र विकल्पस्वरूपं सकलविश्वविकल्पकारणस्वरूपं । निर्व्विकल्पके परस्वरूपे । निधानं विलापनं । एतदुक्तं भवति संकल्पविकल्पकारणभूतस्य मनसो निर्विकल्परूपे स्वात्मनि विलापनं परहोम इति । यन्मयं परहोममयम् ॥ ८९ ॥

उच्चावचेत्यादिभिः समीरित इत्यन्तैश्चतुर्भिः श्लोकैः स्थूलसूक्ष्महोमयोः परहोमेन तादात्म्यवासनां तदनुसन्धानञ्चोपदिशति । उच्चावचविकल्पानां समित्पुष्पफलादिभेदभिन्नानां वस्तूनां तद्धोमद्रव्याणां । तन्मयत्वात् होममयत्वात् अग्निमयत्वात् । ऐक्यरूपं अपृथग्भावः । एतदुक्तं भवति समिदादिसकलवस्तूनां स्थूलहोमादग्निमयत्वेनैकरूपमुदीरितमिति । तथा एकीकुर्य्यादित्यर्थः । एतदुक्तं भवति सूक्ष्महोमात् स्वमूलाधारमध्यस्थकुण्डलिनीमुखसविसर्गमहावह्नौ सकलशब्दोदयविश्रान्तिपदे नानारूपवाचकैः शब्दैः तद्वाच्यानर्थान् वेद्यवेत्तृविदात्मनैकीकुर्य्यादिति । स्थितिरित्यादिनार्द्धेन सर्वभेदविलापनात् स्थितिरेव परहोमो भवतीति मतान्तरमुच्यते । स्वात्मरूपमहावह्निज्वालारूपिषु स्वात्मरूपापृथग्भूता महाशक्तिः स्वात्मरूपवह्निः तज्ज्वाला तदिच्छा स्वात्मरूपमहाशक्तेच्छे-

---

*शतयोषित् ।

सूक्ष्महोमं तथा शब्दैर्नानारूपैस्तु वाचकैः ।
वाच्यार्थानामशेषेण वेद्यवेत्तृविदात्मना ॥ ८१ ॥
स्थितिः परो भवेद्धोमः सर्व्वभेदविलापनात् ।
स्वात्मरूपमहावह्निज्वालारूपिषु सर्व्वदा ॥ ८२ ॥
निरिन्धनेद्धरूपेषु परमार्थात्मनि स्थिरे ।
निर्व्युत्थानविलापस्तु परहोमः समीरितः ॥ ८३ ॥
तेषु प्रोक्तेषु कुण्डेषु चतुरस्रे समाचरेत् ।
होमकर्म्म समस्तं तु शुभात्मकमुदीरितम् ॥ ८४ ॥
अशुभात्मकमुक्तन्तु कुर्य्यात्त्र्यस्रे समीरिते ।
अन्येष्वन्यानि कार्य्याणि प्रोक्तानि प्रोक्तरूपतः ॥ ८५ ॥
प्रागुदक्शिवदिग्वक्त्रः कुर्य्याद्धोमन्तु मङ्गलम् ।
दक्षिणास्योभिचारन्तु गदे वह्निमुखो द्विषाम् ॥ ८६ ॥

---

तदर्थः । सैव येषां रूपाणि ते स्वात्मरूपस्वस्ववह्निज्वालारूपिणः तेषु स्वात्मरूपमहावह्निज्वालारूपिषु निरिन्धनेद्धरूपेषु अनन्याधिष्ठितप्रकाशरूपेषु परमार्थात्मनि सत्तामात्रस्वरूपे स्थिरे अविकारिणि निर्व्युत्थानविलापः निरवशेषविलयनभावः । एतदुक्तं भवति स्वरूपमहाशक्तोच्छ्रारूपेषु निरधिष्ठानप्रकाशात्मकेषु सकलरूपेषु परमार्थतः स्फुरिततत्त्वरूपेऽविकारिणि सत्तामात्रे स्वात्मनि तेषां निःशेषविलयनभावः परहोमः समीरित इति ॥ ८३ ॥

तेष्वित्यादिना रूपत इत्यन्तेन श्लोकद्वयेनोक्तकुण्डेषु सामान्येन चतुरस्रहोमकुण्डेषु शुभकर्म्महोमविधानमुपदिशति । तत्र चतुरस्रे उक्तरूपे । त्र्यस्रे प्रोक्तरूपे । अन्येषु कुण्डेष्विति शेषः । प्रोक्तरूपतः प्रोक्तविधानेन ॥ ८५ ॥

प्रागित्यादिना कृत्स्नश इत्यन्तेन श्लोकद्वयेन मङ्गलादिकर्म्मसु होतुर्दिग्विशेषाभिमुख्यमुपदिशति । तत्र प्रागुदक्शिवदिग्वक्त्रः प्रागभिमुख उदगभिमुखः शिवदिगभिमुखश्च । तुर्विशेषे । दक्षिणास्यः दक्षिणदिङ्मुखः । तुर्विशेषे । गदे गदार्थोपक्रमे । वह्निमुखः वह्निदिङ्मुखः । वायुमुखः वायुदिङ्मुखः ।

उच्चाटनं वायुमुखो विद्वेषं राक्षसोन्मुखः ।
विदध्यात् पश्चिमास्यस्तु क्रूराण्यन्यानि कृत्स्नशः ॥ ९७ ॥
स्वदेशग्रामगेहादौ तानि कर्म्माणि तद्दिशि ।
विदध्यादुपविश्योक्तमन्यथानर्थमावहेत् ॥ ९८ ॥
कुण्डादिकरणाशक्तौ स्थण्डिले होममाचरेत् ।
गोमयैः परिमृष्टे तु सुसमे भूतले शुभे ॥ ९९ ॥
वालुकाहस्तविस्तारायाममास्तीर्य्य तत्र वै ।
मध्ये विदध्याद्धोमन्तु प्रोक्तमेवमशेषतः ॥ १०० ॥
कालतत्त्वमयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निष्फालनाच्चित्ते तत्तत्त्वं स्वात्मसात् कृतम् ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमते
त्रिंशत्तमं पटलम् ॥ ३० ॥

---

राक्षसोन्मुखः निर्ऋतिदिङ्मुखः । पश्चिमास्यः पश्चिमदिङ्मुखः । अन्यानि प्रोक्तेतराणि । एतदुक्तं भवति होतुराभिमुख्यदिग्भेदेपि तां तां दिशं प्राचीं परिकल्प्य कुण्डं निर्माय जुहुयादिति ॥ ९७ ॥

स्वदेशेत्यादिना श्लोकेन स्वदेशादौ प्रोक्तकर्म्मसु प्रोक्तदिङ्मुखतया अवश्य-कर्त्तव्यतां तदकरणे प्रत्यवायञ्चोपदिशति । गेहादावित्यत्रादिशब्दः पुरादि-विषयः । कर्म्माणि प्रोक्तानि । तद्दिशि प्रोक्तदिशि । अन्यथा विपरीतकरणे ॥ ९८ ॥

कुण्डादीत्यादिना शेषत इत्यन्तेन श्लोकद्वयेन कुण्डादिकरणाशक्तानां स्थण्डिले होमविधानपुरःसरं स्थण्डिलनिर्म्माणविधानमुक्तनिगमनसहितमुप-दिशति । तत्र तुर्विशेषे । शुभे लोमास्थिलोष्टादिरहिते भूमाद्यनाकुले च । तत्र प्रोक्तप्रकारेण कृतकोष्ठनवके । मध्ये सर्वमध्यकोष्ठमध्ये ॥ १०० ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसार-सिंहराजप्रकाशाभिधानेन सुभगानन्दनाथेन विरचितायां मनो-रमाख्यायां व्याख्यायां वास्तुदेवताचक्रतत्पूजादि सूक्ष्म-परहोमविधानप्रकाशनपरं त्रिंशत् पटलं परिपूर्णं परामृष्टम् ॥ २८ ॥ ॐतत्सत् ॥

## एकत्रिंशपटलम् ।

सूक्ष्मं परं च होमं ते कथितं परमेश्वरि ।
इदानीं स्थूलहोमन्तु कथयाम्यरिमर्द्दनम् ॥ १ ॥
तत्तत्कर्म्मोदिते कुण्डे कुर्य्याद्धोममुदीरितैः ।
विधानैर्द्वेषनिधनरोगनिग्रहचाटनम् ॥ २ ॥
आयुर्दायं रिपोर्ज्ञात्वा लग्नोक्तर्क्षानुगुण्यतः ।
तदात्मिकग्रहाणाञ्च स्थितिमष्टकवर्गकम् ॥ ३ ॥
त्रयाणामानुगुण्ये न कुर्य्यात्तदभिचारकम् ।
अन्यथा क्रूरकर्म्माणि कुर्व्वाणं नाशयन्ति हि ॥ ४ ॥
तान्येव कर्म्माणि तथा तत्त्रयप्रातिकूल्यतः ।
कुर्य्यात्तद्देवताभक्तिमास्तिक्यं वर्त्तनं गुरुम् ॥ ५ ॥

---

पूर्वस्मिन् त्रिंशे पटले षोड़शनित्यानां वास्तुदेवताचक्रं तत्पूजादिविधान-सहितं सूक्ष्मपरहोमविधानमुपदिश्यानन्तरं षोड़शनित्याभक्तिनिष्ठानां अरि-मर्द्दनकर्म्महोमादिविधानमुपदिशति । सूक्ष्ममित्यादिना विधानत इत्यन्तेन श्लोकशतरूपेणैकत्रिंशेन पटलेन । तत्र सूक्ष्ममित्यादिना चाटनमित्यन्तेन श्लोकद्वयेन प्रोक्तनिगमनसहितं प्रोक्तकुण्डेषु प्रोक्तविधानेनारिमर्द्दनविधानकथनं प्रस्तौति । तत्र ते तव । कथितं पूर्वस्मिन् पटले । द्वेषनिधनरोगनिग्रह चाटनमित्यत्र द्वेषशब्दो मारणविषयः निग्रहशब्दो युद्धादिषु पराजयादि-विषयः चाटनम् उच्चाटनम् ॥ २ ॥

आयुर्द्दायमित्यादिभिरासनाशनमित्यन्तैश्चतुर्भिः श्लोकैरभिचारकर्म्मकरण-काले ज्ञातव्यांशं तदनवेक्षणे प्रत्यवायञ्चोपदिशति । तत्र लग्नोक्तर्क्षानुगुण्यतः त्रयोदशे पटले तज्जन्मेत्यादिना षड़शीतिनमश्लोकोत्तरार्द्धाद्यार्द्धद्वयेन प्रोक्तनक्षत्र-नामानुगुण्यतः । तदात्मिकग्रहाणां तत्प्रयोगकाले गोचरग्रहाणां । चः सम-च्चये । अष्टकवर्गकं फलमिति शेषः । त्रयाणां प्रोक्तानामायुर्दायदशा-

तत्पार्श्ववर्त्तिमन्त्रज्ञानालोच्य रिपुनिग्रहम् ।
विदध्यादन्यथा शक्त्या नैष्फल्यं वात्मनाशनम् ॥ ६ ॥
रिपोरष्टमलग्ने च काले त्वष्टमराशिगे ।
स्थाने कुर्य्यादनिष्टानि तद्विनाशाय साधकः ॥ ७ ॥
प्राच्यां मेषवृषौ वह्नौ मिथुनं दक्षिणे तथा ।
कुलीरसिंहमथ तन्निरृत्यां कन्यका स्थिता ॥ ८ ॥

---

गोचरफलाष्टकानां। आनुगुण्ये आनुकूल्येऽभिचार्य्यस्य रिपोः प्रातिकूल्ये इत्यर्थः। अन्यथा कुर्य्यात् यदि। तान्येव एवकारो भिन्नक्रमः। तत्त्रयप्रातिकूल्यत एवेत्यर्थः। एतदुक्तं भवति रिपोरभिचारकाले ज्योतिःशास्त्रे होरास्कन्धोक्तप्रकारेण तस्य तात्कालिकमायुर्दायगोचराष्टकवर्गेषु ग्रहाणां स्थितिं विचार्य्य तत्त्रयानुकूल्ये त्वभिचारकर्म्म न कुर्य्यात्। तमनवेक्ष्य क्रूरकर्म्माणि कुर्वाणं तान्येव नाशयन्ति। तत्त्रयप्रातिकूल्य एव तद्रिपुनाशाय तानि क्रूरकर्माणि कुर्य्यादिति। तद्दैवताभक्तिं रिपोर्दैवताभक्तिम्। आस्तिक्यं रिपोर्देवब्राह्मणादिविषयनिष्ठां। वर्त्तनं आचारं। आलोच्य तज्ज्ञैस्तेषां अनुभावादिकमित्यर्थः। अन्यथा प्रोक्तान्यथाकरणे। वा विकल्पे। एतदुक्तं भवति रिपोरभिचारप्रयोगादिषु तस्य देवताभक्तिमास्तिक्यमाचारं गुरुं तत्पार्श्ववर्त्तिमन्त्रज्ञान् विज्ञाय तेषामनुभावादिकं तद्विद्भिरालोच्य तत्प्राबल्ये तस्याभिचारादिकं न कुर्य्यादन्यथाकरणे तत्फलस्य नैस्फल्यं तत्प्रयोक्तुर्नाशनं वा भवतीति ॥ ६ ॥

रिपोरित्यादिना श्लोकेनक्रूरप्रयोगारम्भकालं गृहादिषु तद्देशविशेषादिकं चोपदिशति। तत्र अष्टमलग्ने जन्मनक्षत्रराशिश्चन्द्रलग्नराशिर्वेति शेषः। काले तदुदयकाले। अष्टमराशिगे स्थाने अनन्तरश्लोकद्वयवक्ष्यमाणराश्यात्मकेषु स्थानेषु द्वादशसु। तद्विनाशाय रिपुविनाशाय ॥ ७ ॥

प्राच्यामित्यादिना सुस्थितमित्यन्तेन श्लोकद्वयेन मण्डपगृहादिसकलवस्तूनां द्वादशराश्यात्मकतामुपदिशति। तत्र वह्नौ कोणे। दक्षिणे दक्षिणदिग्देशे। तन्नि-

तुलाकीटौ पश्चिमतो धनुर्वायौ तु संस्थितम् ।
नक्रकुम्भावुत्तरतो मीन ईशे तु संस्थितम् ॥ ९ ॥
एवं राशिक्रमं ज्ञात्वा कुर्य्यात् कर्म्माणि देशतः ।
काले तु पञ्च पञ्च स्युर्घटिकाः क्रमयोगतः ॥ १० ॥
चैत्रादिषु तु मासेषु द्वादशस्वपि भास्करः ।
मेषादिराशिगो याति तथान्यैर्ग्रहमण्डलैः ॥ ११ ॥
देहेषु प्राणिनां तद्वदष्टाङ्गुलिविभेदतः ।
मूर्द्धादिचरणान्तन्तु तान् द्वादशसु लक्षयेत् ॥ १२ ॥

---

ऋत्यां विदिशि । पश्चिमतः पश्चिमदिशि । वायौ कोणे । उत्तरतः उत्तरस्यां दिशि । ईशे कोणे । सुस्थितं कालचक्रस्थराशिचक्रवन्न भ्रमतीत्यर्थः ॥ ९ ॥

एवमित्यादिना श्लोकेन प्रोक्तनिगमनं चक्रगतद्वादशराशीनां प्रतिराश्युदयकालघटिकासंख्याञ्चोपदिशति । तत्र एवं उक्तक्रमात् । राशिक्रमं राशीनां स्थितिक्रमं । कर्म्माणि कुर्य्यादिति शेषः । देशतः देशात्मकत्वेन । काले तु कालचक्रे तु । पञ्चपञ्च स्युः एकैकराशेः । क्रमयोगतः अपक्रमचक्रस्थितिस्तु कालदेशयोर्वैषम्यात् । गणितशास्त्रोक्तक्रमयोगेन स्वस्वदेशे राशीनामुदयघटिकामानवशात् वक्ष्यमाणप्रकारेण सूर्य्याधिष्ठितराश्यादिक्रमयोगतः ॥ १० ॥

चैत्रादीत्यादिना श्लोकेन कालचक्रे ग्रहाणां गतिक्रममुपदिशति । तत्र चैत्रादिषु तत्र दिव्यत्वात् चैत्रादिशब्दः सौरमासविषयः । तु विशेषे । याति एकैकसौरमासस्यैकैकराशिभुक्तिक्रमेणेति शेषः । तथा तथाविधैः अन्यैश्चन्द्रादिभिः । ग्रहमण्डलैः ज्योतिःशास्त्रे तत्तद्ग्रहपरिवृत्तिप्रोक्तकालविशेषैरित्यर्थः ॥ ११ ॥

देहेष्वित्यादिना श्लोकेन सकलप्राणिनां देहस्य द्वादशराश्यात्मकत्वमुपदिशति । तत्र तद्वत् मेषादिमीनान्तक्रमेण । तान् राशीन् । द्वादशसु, स्थानेषु ॥ १२ ॥

त्रयाणामानुगुण्येन कुर्य्यात् कर्माणि नान्यथा।
शुभाशुभानि सर्व्वाणि फलन्त्येवं कृते ध्रुवम् ॥ १३ ॥
तथाहनि विषस्थानान्यमृतस्थानकानि च।
ज्ञात्वा विदध्यात् पुंस्त्र्याः प्रयोगं सर्वतस्तथा ॥ १४ ॥
सिते हृदि स्तनगले नासाक्ष्णोणि तथा श्रुतौ।
भ्रूशङ्खमूर्द्धमध्येषु तत्र भ्रूशङ्खमध्यतः ॥ १५ ॥
कर्णं नेत्रे नासिकायां वर्त्तते पुरुषस्य तु।
सव्यकण्ठस्तनतटे हृदि नाभौ च गुह्यके ॥ १६ ॥
जानुसन्ध्यङ्घ्रिपार्श्वेषु तथाङ्गुष्ठे च दक्षिणे।
अङ्घ्रौ सन्धौ जानुगुह्ये नाभौ चेति सितेतरे ॥ १७ ॥

---

त्रयाणामित्यादिना श्लोकेन प्रोक्तकालविग्रहराशिवशेन शुभाशुभकरणीयत्व-मुपदिशति। तत्र त्रयाणां देशकालविग्रहात्मकानां। आनुगुण्येन आनुकूल्येन। अन्यथा उक्तलङ्घनेन। एवं कृते कृतप्रकारालङ्घनेन शुभा-शुभप्रयोगे कृते ॥ १३ ॥

तथेत्यादिना श्लोकेन पुंस्त्रीप्रयोगार्थं देहे विषामृतस्थानयोर्ज्ञातव्यत्व-मुपदिशति। तत्र तथेत्यस्यामृतस्थानकानीत्यत्रान्वयः। षड्विंशपटले प्रोक्तक्रमेण दक्षवामभागयोः प्रतिभागं पञ्चदशपञ्चदशस्थानभेदक्रमेण स्थिता-नीत्यर्थः। अहनि प्रयोगदिवसे। विषस्थानानि अनन्तरश्लोके वक्ष्यमाणानि। सर्वतः कर्म्मसु। तथा वक्ष्यमाणप्रकारेण ॥ १४ ॥

सितेत्यादिभिर्वर्त्तत इत्यन्तैरर्द्धाधिकैस्त्रिभिः श्लोकैः पुरुषाणां योषिताञ्च विषादिवृत्तिक्रमस्थानानुपदिशति। तत्र सिते इत्यादिना श्लोकेन द्वादश स्थानानि उपदिशति। सिते शुक्लपक्षे। स्तनगले स्तने च गले च। भ्रूशङ्ख-मूर्द्धमध्येषु तत्र मूर्द्ध्नो मध्ये। शङ्खभ्रूमध्यतः शङ्खमध्ये भ्रूमध्ये च॥ कर्णेत्यादिना श्लोकेन स्थानाष्टकं तत्र सव्यकण्ठे वामकण्ठे॥ जान्वि-त्यादिना श्लोकेन दश स्थानानि। तत्र अङ्घ्रिपार्श्वशब्देनाङ्घ्रिपृष्ठ देश उच्यते। अङ्गुष्ठे वामपादाङ्गुष्ठे। दक्षिणे दक्षिणपादाङ्गुष्ठे। अङ्घ्रौ

तिष्ठेद्विषकला पुंसि स्त्रियां वामादि वर्त्तते ।
विषनाड्यां विषस्थाने वेधयेत् कण्टकेन तु ॥ १८ ॥
सङ्कोचकाख्येन तदा तीव्रेणास्थिमयेन वै ।
वदरादिसमुत्थैर्व्वा तथायःसारसूचिभिः ॥ १९ ॥
पुत्तल्यां यत्र तद्विद्धं तदङ्गं शत्रुदेहजम् ।
व्याधिना पीड़ितं कालाद्विधेयं भवेद्ध्रुवम् ॥ २० ॥
तत्र तेनार्त्तिना क्लिष्टो जीवितेशपुरं व्रजेत् ।
पुत्तलीकरणं वक्ष्ये शृणु निग्रहसिद्धये ॥ २१ ॥

---

अङ्घ्रिपृष्ठे । सन्धौ तदनन्तरसन्धौ । जानुगुल्फे जानौ गुल्फे । इति उक्तप्रकारेण । सितेतरे कृष्णपक्षे । वामादि वामभागे प्रोक्तहृदयस्थानादि । एतदुक्तं भवति शुक्लपक्षप्रथमादिषु कृष्णपक्षदशम्यन्तासु त्रिंशत्तिथिषु पुंसां दक्षिणभागे हृदयस्थानादिमूर्द्धान्तेषु नवसु स्थानेषु पुनस्तद्वामपार्श्वे मूर्द्धादिपादाङ्गुष्ठान्तं पञ्चदशसु स्थानेषु पुनर्दक्षिणपादाङ्गुष्ठादिनाभ्यन्तं षट्सु स्थानेषु च सम्भूय त्रिंशत् स्थानेषु च । स्त्रीणां तत्तत्तिथिषु तत्तत्स्थानेषु दक्षिणवामपार्श्वविनिमयक्रमेण च विषस्य परिवृत्तिर्भवतीति ॥ १७ ॥

विषनाड्यामित्यादिभिः सिद्धये इत्यन्तैरर्द्धाद्यैस्त्रिभिः श्लोकैः पुत्तलीप्रयोगे तद्वेधकालं तदङ्गं तत्साधनं तत्फलञ्च पुत्तलीकरणकथनप्रस्तावादिसहितं उपदिशति । तत्र विषनाड्यां सप्तविंशतिनक्षत्रेषु प्रतिनक्षत्रं विषात्मकप्रोक्तनाड़ीचतुष्टयकाले । विषस्थाने अनन्तरपूर्वोक्ते पुत्तल्या इति शेषः । तुर्विशेषे । सङ्कोचकाख्येन सङ्काच इति मत्स्यविशेषः । तीव्रेण अस्थिमयेन तद्देहजतीव्रसङ्कोचकास्थिमयेन । वदरादिसमुत्थैः कण्टकैरितिशेषः । वा विकल्पे । तथा वेधयेदित्यर्थः । यत्र अङ्गे तद्विद्धं कण्टकादिविद्धं तदङ्गं व्याधिना पीड़ितं इत्येतदुत्तरत्र शत्रुदेहजमित्यस्य विशेष्यं । कालात् प्रयोगस्य गौरवलाघवादिना कालद्रैत्यविलम्बनात् । ध्रुवं निश्चितं । आर्त्तिना तदङ्गव्याध्युत्पन्नेनेति शेषः । पुत्तलीकरणं पुत्तलीनिर्म्माणविधानं ॥ २१ ॥

भौमशुक्रबुधाश्चन्द्रो भास्करः सौम्यभार्गवौ।
मङ्गलो गुरुमन्दार्किगुरवोंशकराशिपाः॥ २२॥
नक्षत्राणि चतुष्पादान्येकमष्टोत्तरं शतम्।
एतावत्यश्च पुत्तलास्त्वंशकक्रमयोगतः॥ २३॥
प्रथमे नवके चन्द्रभास्करांशकयोः क्रमात्।
षोडश द्वादश तथा मानमङ्गुलिसंख्यया॥ २४॥
अन्यांशकेषु सर्व्वाश्च चतुर्द्दश समीरिताः।
द्वितीये नवकेन्येषामध्यर्द्धाः स्युस्त्रयोदश॥ २५॥
तृतीये नवकेन्येषां त्रयोदश समीरितम्।
चन्द्रार्कयोरेकविधः प्रोक्तसंख्याक्रमस्तथा॥ २६॥

---

भौमेत्यादिना श्लोकेन द्वादशराशीनामश्विन्यादित्रित्रिनक्षत्रोद्भवद्वादश द्वादशांशकानां च क्रमेणाधिपतीनुपदिशति। तत्र अंशकराशिपाः अंशकानां मेषादिराशीनाञ्च पतयः॥ २२॥

नक्षत्राणीत्यादिना श्लोकेन प्रतिनक्षत्रं चतुश्चतुरंशकक्रमेण सम्भूयाष्टोत्तरशतांशकानामष्टोत्तरशतपुत्तलीविशेषं प्रस्तौति। तत्र एतावत्य अष्टोत्तरशतसंख्याः॥ २३॥

प्रथमे इत्यादिभिस्तथेत्यन्तैस्त्रिभिः श्लोकैः पुत्तलीमानविशेषानुपदिशति। तत्र प्रथमे नवके अश्विन्याद्यश्लेषान्तेषु नवसु नक्षत्रेषु। अन्यांशकेषु इतरग्रहांशकेषु। सर्वाः पुत्तल्यः चतुर्द्दशाङ्गुलीमानेन मिता इत्यर्थः। द्वितीये नवके मघादिज्येष्ठान्तेषु नवसु नक्षत्रेषु। अन्येषां चन्द्रार्करहितग्रहांशकानां। अध्यर्द्धाः सार्द्धास्त्रयोदश पुत्तलीनामङ्गुलिसंख्या इति शेषः। तृतीये नवके मूलादिरेवत्यन्तनवसु नक्षत्रेषु। अन्येषां प्राग्वत् कुजादीनामंशकानां त्रयोदशाङ्गुलीमानानि समीरितमेवं इत्यर्थः। एकविधः सर्व्वत्रेति शेषः। प्रोक्तसंख्याक्रमस्तथा प्रथमनवके प्रोक्तसंख्यामानमेव द्वितीयतृतीयनवकयोरपीत्यर्थः॥ २६॥

पुत्तलीकरणे द्रव्यं चक्रिहस्तमृदान्वितम् ।
चितामृद्भस्मलवणं शुण्ठीपिप्पलिकायुतम् ॥ २७ ॥
मरीचं गृहधूमञ्च लसुनं हिङ्गुसैन्धवम् ।
गैरिकञ्चेति कथितं पुत्तलीद्रव्यमीश्वरि ॥ २८ ॥
साध्यचर्व्वर्णैः पिष्टैश्च माषचूर्णैश्च सिक्थकैः ।
वैरिदेहजरोमाद्यैरुपेतैः पुत्तलीक्रिया ॥ २९ ॥
पुत्तलीदैर्घ्यमानन्तु कृत्वाष्टांशमथैकतः ।
शीर्षं त्रयात् कटेरुर्द्ध्वं त्रयात् पादद्वयं तथा ॥ ३० ॥
कटिप्रपदयोरेकमंशमे[व]कन्तु पुत्तलीम् ।
विधाय तन्त्रे सर्व्वत्र प्रयोगानाचरेन्नरः ॥ ३१ ॥

---

पुत्तलीत्यादिभिः क्रिया इत्यन्तैस्त्रिभिः श्लोकैः पुत्तलीनिर्माणद्रव्याण्युपदिशति। तत्र चक्रिहस्तमृदान्वितं कुलालकरमृत्तिकासहितं। चितामृद्भस्मलवणं श्मशानमृद्भस्मसहितं लवणं। शुण्ठीपिप्पलिकायुतं शुण्ठीपिप्पल्योश्चूर्णैर्युतम्। मरीचं मरीचचूर्णं। गृहधूमं गृहधूमचूर्णं। लसुनं रसोनरसं। एतानि शुण्ठ्याद्यष्टद्रव्याणि सर्व्वपुत्तलिकासाधारणानि। साध्यचर्व्वणैः साध्यनखप्रोक्तैश्चर्व्वणैः। पिष्टैरित्येतन्माषचूर्णैरित्यस्य विशेषणं। सिक्थकैर्मधूच्छिष्टैः। वैरिदेहजरोमाद्यैरित्यत्राद्यशब्दो नखपादपार्श्वादिविषयः। उपेतैरित्येतद्द्वारव्यतिरिक्तेषु चक्रिहस्तमृत्सहितेषु त्रिष्वन्वेति ॥ २९ ॥

पुत्तलीत्यादिना नर इत्यन्तेन श्लोकद्वयेन पुत्तलीदैर्घ्यमानविभागीकरणवशात् तदवयवमानान्युपदिशति। तत्र पुत्तलीदैर्घ्यमानं तत्तदंशकवशेन प्रोक्तपुत्तलीदैर्घ्याङ्गुलमानं। एकतः एकांशेन। त्रयात् अंशत्रयेण। त्रयात् प्राग्वत्। कटिप्रपदयोरर्द्धांशेन कटिद्वयमर्द्धांशेन प्रपदद्वयञ्चेत्यर्थः। सर्व्वत्र पुत्तलीप्रयोगे। प्रयोगान् प्रोक्तान् ॥ ३१ ॥

पातालयोगे नीचाख्ये विषयोगे च मृत्युजे ।
नाशयोगे च दिनजमृत्यौ क्रकचयोगके ॥ ३२ ॥

---

पातालेत्यादिभिरवाप्नुयादित्यन्तैस्त्रिभिः श्लोकैः क्रूरकर्म्मप्रयोगारम्भकालादिकमुपदिशति । तत्र पातालेत्यादिना श्लोकेन षड्विधं क्रूरकालमुपदिशति । तत्र मृत्युजे मृत्युयोगे । दिनजमृत्यौ मेषादिराशिस्थनक्षत्रांशेषु तत्तद्राशेरष्टमांशके इति यावत् । चण्डीशेत्यादिना श्लोकेन दशविधक्रूरकर्म्मकालमुपदिशति । तत्र चण्डीशचण्डायुधके योगे । काणके काणनक्षत्रे काणके इत्यनेनान्धनक्षत्रे किं पुनरित्यर्थः । ज्योतिःशास्त्रोक्तानि तद्वचनानि विलिख्यन्ते । तत्र नीचाख्यः पातालयोगः ।

तौलिभे दशमांशस्थस्तौलगो याति यदोदयम् ।
तदा नोचाह्वयो योगः पातालो गर्हितः शुभे ॥

विषयोगाः । चतुर्थी सप्तमो चार्के चन्द्रे षष्ठ्यष्टमी तथा ।
इन्द्राहिधर्मा भौमे तु (वि) चित्राद्ये रवयोबुधे ॥
* षड्वंत् स्वरयो जीवे विष्णुधर्मारुणस्थिते † ।
एकादशी शुभेक्षि च ‡ मन्दे स्युस्तिथयो विषम् ॥
पञ्चद्विराकाः सप्ताद्य षड्टतिथिभिर्विषम् ।
अश्विचित्रा जयास्येन्द्रश्रोणान्त्यः सूर्य्यवारतः ॥
मृत्युयोगा यमर्चाणि मैत्रचित्रामघोत्तराः ।
चित्रात्रोणग्र § त्तराषाढ़ा श्रविष्ठा च पदक्रमात् ॥
चित्राप्यु $ त्तरफाल्गुन्यो मैत्रस्वात्यैन्द्रवैष्णवम् ।
पौष्णतिष्यादितिश्रोणा मृत्यवोर्कादिवारगाः ॥

नाशयोगाः । पित्रेन्द्राग्नैयश R मूलर्त्त वारुणाजाप्यभैयुताः ।
सूर्य्यादिवाराः क्रमशो नाशयोगाः समीरिताः ॥

दिनमृत्यवः । वसुहस्ते विशाखार्द्रे [बुध्या] ब्रह्माह्वी याम्यनैर्ऋते ।
द्वन्द्वेष्वेषु चतुर्थांशाः क्रमशो मृत्यवो [हि] क्षि चेत् ॥

---

* मडवक्षरयो । † दुपस्थिते । ‡ एकादशोच्च भेदौ च । § पितु । $ ग्यु । R ग्रैस ।

चण्डीशचण्डायुधके महाशूले च काणके ।
रक्तस्थूणे कण्टकाख्ये स्थूणे पञ्चार्कसंज्ञके ॥ ३३ ॥

---

क्रकचायोगाः ।

तिथेश्च वारस्य च यत्र संख्यया त्रयोदश स्युर्मिलने क्रमे सति ।
स्मृतः स योगः क्रकचाभिधानको विवर्जनीयः शुभकर्मसु ध्रुवम् ॥

चण्डीशचण्डायुधं ।

सूर्य्याधिष्ठितभाङ्गुजङ्गपित्र्यभत्वाष्ट्रेषु मैत्रे श्रुतौ ।
पौष्णे च क्रमशो भानुगमया * शीतांशुना संयुतम् † ॥

धिष्ण्ये तपतिथे पतत्यवितथं चण्डीशचण्डायुधं ।
तस्मिन्नात्महितेच्छुभिर्निजहितं कार्य्यं न कार्य्यं बुधैः ॥

महाशूलम् । कृत्तिकाद्याः सप्त सप्त ताराः ¶ पूर्व्वादिषु क्रमात् ।
भं ग्रहादिमुखं तत्र महाशूलमशोभनम् ॥

काणाद्यं नक्षत्राणि ।

त्यजेद्दर्जैकपादादेस्त्रिसप्तवासरात् परे ।
षड्वानवकाणाः स्युर्दोषघ्नं वारभे विना ॥

रक्तस्थूणं । $ धान्यस्थं चतुरो राशींस्त्यजेद्विघ्नां ₨ कृतःस्फुटाम् ।
तं जिष्णलब्धनक्षत्रं रक्तस्थूणमिति स्मृतम् ॥

कण्टकस्थूणं । भौमिनार्केण संयुक्ता दक्षाद्यावति मूलकं ।
मूलान्ता च त्रिभे स्थूणकण्ठकाख्ये इमे क्रमात् ॥

धूमाद्यावतिधामूलकण्टकावतिघर्षकं ।
तावन्ति कण्टकस्थूणतत्त्रयमप्यदोषदं ॥

पञ्चार्कदोषाः । वालात् कोंगस्तु गोपाले सार्कंशे सर्वसारथे ।
त्वर्के च पञ्चधूमाद्या लग्ने एतैर्युतैस्त्यजेत् ॥

---

* त्रिभाक्गणनया । † संयुते । ¶ भागाः । $ धन्यस्थं । ₨ कज ।

कुर्य्यात् प्रयोगान् प्रत्यर्थिभङ्गाय निधनाय वा ।
निग्रहाय निरीच्यैवं कुर्य्यात् सिद्धिमवाप्नुयात् ॥ ३४ ॥
वश्याकर्षणविद्वेषस्तम्भनोच्चाटमारणे ।
विदध्यात् पुत्तलीः सम्यक् चतस्रः प्रोक्तयोगतः ॥ ३५ ॥
पिष्टेन सिक्थेन तथा चक्रिहस्तमृदापि च ।
साध्यनक्षत्रवृक्षेणाप्युक्तलक्षणसंयुताः ॥ ३६ ॥
आसने पादयोः स्थाने कुण्डमध्ये च साधकः ।
पिष्टमृत्तरुजाः खात्वा स्थापयेत् सिक्थमम्बरे ॥ ३७ ॥
कुण्डमध्ये उपर्य्यूर्द्ध्वं पदान्यच्छीर्षिकामपि ।
एवं साधारणं कृत्वा कुर्य्यात् कर्म्म समीरितम् ॥ ३८ ॥

---

एतदुक्तं भवति रिपोरायुर्दायगोचराष्टकवर्गग्रहेषु प्रतिकूलेषु पातालयोगादिभिः प्रोक्तदोषैर्दुष्टदिवसे तदष्टमराशौ विषनाड्यां वा प्रारब्धं क्रूरकर्म सद्यः फलतीति। वा समुच्चये। एवमुक्तप्रकारेण ॥ ३४ ॥

वश्येत्यादिभिः समीरितमित्यन्तैश्चतुर्भिः श्लोकैर्वश्यादिषु कर्म्मसु षट्सु पुत्तलीप्रयोगप्रक्रियामुपदिशति। तत्र सम्यक् सर्वावयवशोभनं। प्रोक्तयोगतः प्रोक्तमानेन रिपुदेहजरोमादियोगतः। अपिः समुच्चये। आसने होतुरासनस्थाने। पादयोः स्थाने होतुः पादविन्यासप्रदेशस्याधःस्थाने। पिष्टमृत्तरुजाः पिष्टजा मृज्जाः तरुजाः पुत्तलीः। खात्वा होतुरासनादिस्थानत्रये क्रमात्। अपिः समुच्चये। एवं प्रोक्तप्रकारेण साधारणवश्यादिषु प्रोक्तकर्म्मस्विति शेषः। एतदुक्तं भवति प्रोक्तमानाद्यलङ्कनेन साधारणद्रव्याष्टकरिपुदेहजरोमादिभिः सह पिष्टमयीं सिक्थमयीं मृण्मयीं चैव तिस्रः। साध्यनक्षत्रवृक्षेणैकां प्रोक्तद्रव्याष्टकलेपितां च सम्भूय चतस्रः पुत्तलीः कृत्वा तासु क्रमात् पिष्टमयीं होतुरासनस्याधः स्थाने मृण्मयीं होतुः पादविन्यासप्रदेशस्याधः स्थाने तरुमयीं कुण्डमध्यस्थनाभिपद्मस्याधःस्थाने च स्थापयित्वा सिक्थमयीं कुण्डादुपरि तोरणतिर्य्यक्विष्कम्भदारुण्यूर्द्ध्वं पादामवाक्शीर्षामम्बरे लम्बमानामर्क-

सर्पशीर्षस्रुचा होमं कुर्य्यादशुभकर्म्मसु ।
वैरियोन्यसृजा कृत्वा तया तु जुहुयात्तथा ॥ ३९ ॥
त्रिकोणकुण्डे यमदिङ्मुखो भूत्वार्द्धरात्रके ।
श्मशाने निर्जने देशे विदध्यादभिचारकम् ॥ ४० ॥
यत्राभिचारहोमन्तु करोति भुवि साधकः ।
तत्राभितो नृपौ रक्षौ कारयेदात्मसिद्धये ॥ ४१ ॥
न चेदरातिनृपतिश्चारैर्ज्ञात्वा निहन्त्यमुम् ।
स्वराष्ट्रसन्धौ कुर्व्वीत न कुर्व्वीत स्वमण्डले ॥ ४२ ॥
यदि कुर्य्यात् प्रमादेन मान्त्रिको ज्ञानमोहतः ।
तद्राष्ट्रं पीड़यन्त्येव शनकैर्व्वैरिभूभृतः ॥ ४३ ॥

---

तत्तजसूत्रेण वह्निं वं साधारणं कृत्वोक्तानि वश्यादीनि कर्म्माणि वक्ष्यमाण-विधानक्रमेण कुर्य्यादिति ॥ ३८ ॥

सर्पं इत्यादिना श्लोकेन क्रूरकर्म्मसु स्रुचं चरुं चोपदिशति। तत्र सर्प-शीर्षस्रुचा सर्पशीर्षकल्पितस्रुचा। अशुभकर्म्मसु विद्वेषोच्चाटनमारणादिषु। वैरियोन्यसृजा वैरिनक्षत्रप्रोक्तयोनिरुधिरेण। तया इत्यस्य सर्पशीर्षस्रुचा इत्येतद्विशेष्यम् ॥ ३९ ॥

त्रिकोणेत्यादिभिर्भूभृत इत्यन्तैश्चतुर्भिः श्लोकैः अभिचारकर्म्मणि कुण्डं होतुरभिमुखीकरणीयां दिशं तद्देशविशेषं होतुर्नृपेण रक्षाविधानं तदकरणे प्रयोक्तुः प्रत्यवायं राष्ट्रसन्धिदेशेन तत्कर्मणः तत्करणीयत्वं तदकरणे राष्ट्रस्य प्रत्यवायञ्चोपदिशति। तत्र यमदिङ्मुखः दक्षिणदिङ्मुखः। तत्र अभिचारभूमौ। आत्मसिद्धये प्रयोक्तुः प्राणादिसिद्धये। अरातिनृपतिः शत्रुराजा। अमुं प्रयोक्तारं। कुर्व्वीत अभिचारमिति शेषः। तद्राष्ट्रं अभिचारप्रयोगस्थानं राष्ट्रं। शनकैः कालक्रमेण ॥ ४३ ॥

अचद्रुमसमिद्धेऽग्नौ तत्फलैर्व्वा तथाहुतैः * ।
हैमीदलरसाक्तैस्तु होमाच्छत्रुं विनाशयेत् ॥ ४४ ॥
नक्तमालसमिद्धेऽग्नौ तत्फलैर्व्वा तथा हुतैः † ।
रिपुरुग्रोऽपि रोगार्त्तः प्रयाति यमसादनम् ॥ ४५ ॥
उन्मत्तकाष्ठैः प्रज्वाल्य वह्निं तद्बीजकैर्हुनेत् ।
तत्पत्राम्बुप्लुतैर्म्मासादरातिर्भ्रान्तिमाप्नुयात् ॥ ४६ ॥
आरग्वधसमिद्धेऽग्नौ तत्समिद्भिश्च तत्फलैः ।
वितस्तिमात्रैस्तैलाक्तैर्हवनाद्वैरिणो मृतिः ॥ ४७ ॥
अरुष्करसमिद्धेऽग्नौ तद्बीजैस्तद्घृताप्लुतैः ।
होमादरातेस्तीव्रार्त्तिज्वरेण स्यान्मृतिर्ध्रुवम् ॥ ४८ ॥

---

अचद्रुमेत्यादिना श्लोकेन शत्रोरुन्मादकरणविधानहोममुपदिशति। तत्र अचद्रुमसमिद्धेऽग्नौ अचद्रुमभवकाष्ठसमिद्धे वह्नौ। तत्फलैः अचफलैः। हैमीदलरसाक्तैः हैमीदलजलाप्लुतैः ॥ ४४ ॥

नक्तेत्यादिना श्लोकेन शत्रोर्मारणप्रयोगहोममुपदिशति। तत्र नक्तमालसमिद्धेऽग्नौ करञ्जकाष्ठवह्नौ। तत्फलैः करञ्जफलैः ॥ ४५ ॥

उन्मत्तेत्यादिना श्लोकेन शत्रोरुन्मादकरणविधानहोममुपदिशति। तत्र तद्बीजकैः उन्मत्तबीजैः। तत्पत्राम्बुप्लुतैः उन्मत्तपत्रोत्थरसप्लुतैः ॥ ४६ ॥

आरग्वधेत्यादिना श्लोकेन रिपुमारणप्रयोगमुपदिशति। तत्र तत्समिद्भिः आरग्वधसमिद्भिः। तत्फलैः आरग्वधफलैः। वितस्तिमात्रैः द्वादशाङ्गुलमात्रैः ॥ ४७ ॥

अरुष्करेत्यादिना श्लोकेन रिपोस्तीव्रज्वरेण मारणप्रयोगमुपदिशति। तत्र अरुष्करसमिद्धेऽग्नौ अरुष्करकाष्ठसमिद्धे वह्नौ। तद्बीजैः अरुष्करबीजैः। तद्घृताप्लुतैः अरुष्करतैलाप्लुतैः ॥ ४८ ॥

---

* करञ्जकैः। † समाहुनेत्।

सौवीराक्तैस्तु कार्पासवीजैर्होमात्तु मन्त्रजात् ।
अरातीनामथान्योन्यकलहान्निधनं भवेत् ॥ ४९ ॥
सर्षपाज्यप्लुतैः शुण्ठीमागधीमरिचैर्हुनेत् ।
वैरिजन्मर्क्षवृक्षाग्नौ मण्डलान्तं मृतिर्ज्वरात् ॥ ५० ॥
प्रागुक्तैः पुत्तलीं कृत्वा द्रव्यैरुक्तविधानतः ।
सर्षपारुष्करघृतसंसिक्तैर्जुहुयान्निशि ॥ ५१ ॥
प्राग्वच्छित्त्वा तदङ्गैस्तु क्रुद्धचित्तोऽरुणाम्बरः ।
रक्तस्रग्गन्धपुष्पादियुतः शत्रून् विनाशयेत् ॥ ५२ ॥
अरुष्करघृताभ्यक्तैस्तद्वीजैः सर्पशीर्षकैः ।
हवनाद्वैरिणो दाहज्वरप्राप्तिस्त्रिभिर्दिनैः ॥ ५३ ॥

---

सौवीरेत्यादिना श्लोकेनारातेः कलहान्मारणप्रयोगमुपदिशति । तत्र सौवीराक्तैः आरनालाप्लुतैः ॥ ४९ ॥

सर्षपेत्यादिना श्लोकेन रिपोर्ज्वरान्मारणप्रयोगहोममुपदिशति । तत्र सर्षपाज्यप्लुतैः सर्षपवीजोत्पन्नतैलाप्लुतैः । शुण्ठीमागधीमरिचैः त्रिकटुकेन । वैरिजन्मर्क्षवृक्षाग्नौ वैरिजन्मनक्षत्रोत्थवृक्षकाष्ठसमिद्वह्नौ । तन्मृतिः शत्रोर्मृतिः ॥५०॥

प्रागुक्तेत्यादिना विनाशयेदित्यन्तेन श्लोकद्वयेन पुत्तल्या होमविधानेन शत्रुविनाशनप्रयोगमुपदिशति । तत्र प्रागुक्तैरित्येतद्द्रव्यैरित्यस्य विशेषणम् । उक्तविधानतः उक्तमानादिकं । सर्षपारुष्करघृतसंसिक्तैः सर्षपारुष्करयोस्तैलाभ्यां संसिक्तैः । निशि मध्यरात्रे इत्यर्थः । प्राग्वच्छित्त्वा नवमपटले चत्वारिंशैकचत्वारिंशच्छ्लोकद्वयेन प्रोक्तप्रकारेण द्वादशधा छित्त्वा । तदङ्गैः छिन्नैः । क्रुद्धचित्तः क्रूरचित्तः शत्रुं प्रतीति शेषः । अरुणाम्बरः काषायवस्त्रधरः । रक्तस्रग्गन्धपुष्पादियुतः रक्तस्रग्रक्तगन्धरक्तपुष्परक्तासनादियुतः ॥ ५२ ॥

अरुष्करेत्यादिना श्लोकेन वैरिणो दाहज्वरप्राप्तिप्रयोगहोममुपदिशति । तत्र तद्वीजैः अरुष्करवीजैः । सर्पशीर्षकैः सर्पशिरःकल्पितस्रुग्भिः ॥ ५३ ॥

वैरिनक्षत्रयोन्युत्थमांसैस्तद्रक्तसंप्लुतैः।
हवनात्तत्तरूद्भूतसमिधां हवनादपि ॥ ५४ ॥
दिनैः कैश्चिद्रिपुः क्लृप्तो नाशमेति सुनिश्चितम्।
द्रुमकुड्यसर्पदंशान्मत्तद्विपादिघातनात् ॥ ५५ ॥
द्रुमकुड्यकनिर्घातसलिलानलपातनात्।
यक्षराक्षसगन्धर्व्वपिशाचब्रह्मराक्षसैः ॥ ५६ ॥
अन्यैर्व्वा कारणैः क्षिप्रं नाशमेति रिपुर्ध्रुवम्।
निम्बपत्रैश्च कार्पासवीजैस्तज्जैः करञ्जजैः ॥ ५७ ॥
हवनात् सर्षपस्नेहसिक्तैर्व्विद्वेषणं भवेत्।
नीचयोगे हुनेदग्नौ रिपुवृक्षसमेधिते ॥ ५८ ॥
तद्वृक्षखण्डैस्तैलाक्तैर्निशामध्ये रिपुर्द्दिनैः।
उच्चाटनं प्रयात्येव मन्त्रशक्त्याभिताड़ितः ॥ ५९ ॥
मृत्युपत्रैश्च तत्काण्डैस्तद्वीजैस्तच्छुचौ हुनेत्।
अरातेर्द्दन्तिनो वाहा रोगैर्नश्यन्ति निश्चितम् ॥ ६० ॥

---

वैरीत्यादिभिर्ध्रुवमित्यन्तैरध्यर्द्धैस्त्रिभिः श्लोकैर्द्रुमकुड्यनिपातादिव्याजेन रिपुविनाशप्रयोगहोममुपदिशति। तत्र तद्रक्तसंप्लुतैः वैरिनक्षत्रयोन्युद्भवरक्ताप्लुतैः। तत्तरूद्भूतसमिधामपि अपिचेत्यर्थः। निर्घातेन अशनिपातेन सलिले निमज्जनेन पावके पतनेन अन्यैः अपस्माराद्यैः। वा विकल्पे ॥ ५६ ॥

निम्बपत्रैरित्यादिनार्द्धद्वयेन विद्वेषणप्रयोगमुपदिशति। तत्र चः समुच्चये। तज्जैर्निम्बजैः वीजैरिति शेषः। करञ्जजैः पत्रैः फलैश्चेति शेषः। सर्षपस्नेहसिक्तैः सर्षपोद्भवतैलाप्लुतैः ॥ ५७ ॥

नीचेत्यादिना ताड़ित इत्यन्तेनार्द्धाधेन श्लोकेनोच्चाटनप्रयोगहोममुपदिशति। तत्र नीचयोगे नीचसंज्ञे पातालयोगे। हुनेत् जुहुयादिति यावत्। तद्वृक्षखण्डैः रिपुनक्षत्रवृक्षखण्डैः। दिनैः प्रोक्तैर्मण्डलादिभिः॥ ५९ ॥

मृत्युपत्रैरित्यादिना श्लोकेन शत्रुवाहनदन्तिनां रोगैर्विनाशप्रयोगहोममुप-

गैरिकैः पुत्तलीं कृत्वा रिपोरष्टमराशिके ।
प्रागुक्तकण्टकाद्यैस्तु यदङ्गं वेधयेच्छनैः ॥ ६१ ॥
विषनाड्यां विषस्थाने तथा च यमकण्टके ।
अर्द्धप्रहरके शीर्षं प्रहरेद्वा शनैः शनैः ॥ ६२ ।
अरातिस्तत्तदङ्गैः स्यान्निधनं प्रहरादिना ।
ग्रन्थिभिर्वा कण्टकादिच्छतवह्निविदारुणैः ॥ ६३ ॥
तन्नच्छतोत्तवृक्षोत्थपुत्तलीं स्थापितेरकाम् ।
गर्दभीमेहसलिले संस्थाप्य क्वाथयेच्छनैः ॥ ६४ ॥
रिपुर्दाहज्वरग्रस्तः स निर्याति यमालयम् ।
मधूच्छिष्टेन तां कृत्वा तापयेन्निशि तां शनैः ॥ ६५ ॥

---

दिशति। तत्र मृतुग्रपत्रैः विषवृक्षपत्रैः। तत्काष्ठैर्विषवृक्षसमिद्भिः। तद्बीजैः विषवृक्षबीजैः। तच्छुचौ विषवृक्षकाष्ठज्वलितवह्नौ। हुनेज्जुहुयात् दन्तिनो गजाः वाहाः हयाः ॥ ६० ॥

गैरिकैरित्यादिभिर्दारुणैरित्यन्तैस्त्रिभिः श्लोकैः अभीष्टाङ्गोत्पन्नरोगादिभिर्वैरिनिधनप्रयोगहोममुपदिशति। तत्र अष्टमराशिके अष्टमराश्युदयसमये। कण्टकाद्यैरित्यत्राद्यशब्दोऽस्थिसूच्यादिविषयः। शनैः शनैः क्रमशः। विषस्थाने तद्दिनविषयुक्ताङ्गे। यमकण्टके यमकण्टकसंज्ञे काले। अर्द्धप्रहरके अर्द्धप्रहरसंज्ञे काले। यमकण्टकार्द्धप्रहरसंज्ञयोः कालविशेषयोः स्वरूपं ज्योतिःशास्त्रोक्तमार्गेण लिख्यते।

सरोगवा (या) तथोर्द्धार्द्धं यामांश्च यमकण्टकान्।
वासरे मन्दगीतार्द्धयामान्वारक्रमाद्भजेदिति ॥

शीर्षं पुत्तल्या इति शेषः। वा विकल्पे। तत्तदङ्गैः प्रहृतशीर्षेण च। प्रहरादिना इत्यत्रादिशब्दः छेदनादिविषयः। वा विकल्पे ॥ ६३ ॥

तन्नच्छतेत्यादिना यमालयमित्यन्तेनाध्यर्द्धेन श्लोकेन दाहज्वरेण रिपुमारणप्रयोगमुपदिशति। तत्र स्थापितेरकां स्थापितप्राणां। गर्दभीमेहसलिले गर्दभीमूत्रे। शनैः कैश्चिद्दिवसैः ॥ ६५ ॥

तेनोन्मादज्वरग्रस्तः प्रयाति निधनं शनैः ।
तां तत्कण्टकविद्धाङ्गीं खनेत् पितृगृहे निशि ॥ ६६ ॥
क्षणात् पिशाचाविष्टः स रिपुर्याति यमालयम् ।
प्रागुक्तैरेव तद्द्रव्यैरशेषैः पुत्तलीं तथा ॥ ६७ ॥
निर्म्माय कुण्डमध्ये तां चैवारातिमहीरुहैः ।
समिद्धेऽग्नौ तत्समिद्भिस्तैलाक्तैर्जुहुयान्निशि ॥ ६८ ॥
सन्निपातज्वरस्तस्य वक्तृ(क्र)जिह्वे(ह्व)ति मूढधीः ।
प्रलयं शनकैर्देहं त्यजन् याति यमालयम् ॥ ६९ ॥
तथाविधां तां प्रतिमां निखनेत् कृष्णपक्षके ।
नवम्यङ्गारदिवसे मातृगेहेऽग्रपीठके ॥ ७० ॥

---

मधूच्छिष्टेत्यादिना यमालयमित्यन्तेनार्द्धाधिकेन श्लोकेनोन्मादज्वरेण रिपुमारणविधानमुपदिशति । तत्र तां पुत्तलीं । निशि अर्द्धरात्रे । तां पुत्तलीं । तेन तापनेन । तामित्यादिनार्द्धद्वयेन पुत्तलीखननप्रयोगाद्रिपुमारणविधानमुपदिशति । तत्र तां पुत्तलीं । तत्कण्टकविद्धाङ्गीं प्रोक्तकण्टकादिष्वन्यतमेन विद्धाङ्गीं । पितृगेहे श्मशाने । निशि मध्यरात्रे । चः समाहारे ॥ ६६ ॥

प्रागुक्तैरित्यादिना यमालयमित्यन्तेनाङ्काद्येन श्लोकद्वयेन सन्निपातज्वरेण रिपुमारणहोमविधानमुपदिशति । तत्र प्रागुक्तैः अस्मिन् पटले सप्तविंशादि श्लोकाभ्यां इति शेषः । तद्द्रव्यैः पुत्तलीविधानप्रोक्तद्रव्यैः । अशेषैर्द्वादशभिः । तथा प्रोक्तमानेन । तां शत्रुनक्षत्रवृक्षनिर्म्मितां पुत्तलीं । अरातिमहीरुहैः अरातिनक्षत्रवृक्षकाष्ठैः । तत्समिद्भिः रिपुनक्षत्रवृक्षसमिद्भिः । निशि मध्यरात्रे । याति यमालयं रिपुरिति शेषः ॥ ६८ ॥

तथाविधेत्यादिना लक्षितमित्यन्तेन श्लोकद्वयेन पुत्तलीखननविशेषेण रिपुविनाशप्रयोगमुपदिशति । तत्र तथाविधां प्रोक्तक्रमादिभिः प्रोक्तद्रव्यद्वादशभिर्निर्म्मितां । प्रतिमां पुत्तलीं । नवम्यङ्गारदिवसे नवमीसहिताङ्गारवारे । मातृगेहे चण्डिकायतने । अग्रपीठके अग्रपीठस्याधः स्थाने । निशि मध्यरात्रे ।

सप्ताहान्निधनं वैरी प्रयाति निशि ताड़ितः ।
भूताद्यैः शिरसि क्षोणे निर्घातवदलक्षितम् ॥ ७१ ॥
सर्षपं माषचूर्णञ्च तिलं शालिजतण्डुलम् ।
पिष्ट्वा साध्यर्क्षवृक्षस्य शकलैरपि संयुतम् ॥ ७२ ॥
एरण्डबीजैर्मिलितं कृत्वा पुत्तलिकां ततः ।
तद्वक्षोऽन्तर्निधायारिनाम तालस्य पत्रगम् ॥ ७३ ॥
संजप्य तां स्पृशन् विद्यां तार्त्तीयप्रतिलोमजाम् ।
सहस्रवारं साध्यस्य वधर्क्षेऽष्टमराशिगे ॥ ७४ ॥
निबध्य तां पादयोस्तु भानुवृक्षोत्थतन्तुना ।
गृहीत्वा जीवहस्तेन तां जपेत् प्रयजेच्छुचौ ॥ ७५ ॥
हुत्वाग्नौ तैः सहस्रन्तु तामूर्द्धाङ्घ्रिमवाङ्मुखीम् ।
तद्दिने तापतृष्णार्त्तिविह्वलेन ज्वरेण सः ॥ ७६ ॥

---

भूताद्यैरित्यत्राद्यशब्दः प्रेतादिविषयः । निर्घातवत् अशनिवत् । अलक्षितं एतत् क्रियाविशेषणम् ॥ ७१ ॥

सर्षपमित्यादिभिः शिवे इत्यन्तैः षड्भिः श्लोकैस्तापज्वरेण रिपुविनाशाय पुत्तलीप्रयोगविशेषमुपदिशति । तत्र सर्षपमित्यर्द्धेन द्रव्यचतुष्टयं । साध्यर्क्षस्य वृक्षस्य शकलैः खण्डैः । अपिः समुच्चये । कृत्वेति भिन्नक्रमः । पुत्तलिकां कृत्वेत्यर्थः । ततः पश्चात् प्रोक्तद्रव्यषट्केन तद्वक्षोऽन्तः पुत्तलीवक्षःप्रदेशान्तः निधायेति भिन्नक्रमः । अरिनाम विधायेत्यर्थः । पत्रगं इत्यस्यारिनाम इत्येतद्विशेष्यं । संजप्येत्यस्य विद्यामित्यनेनान्वयः । पुत्तलीं प्रतिष्ठितप्राणां । तार्त्तीयप्रतिलोमजां तार्त्तीयखण्डस्य प्रतिलोमभेदात्मिकासु चतसृषु विद्यास्वन्यतमां । साध्यस्य साध्यनक्षत्रस्य । वधर्क्षे सप्तमनक्षत्रे । निबध्य तां पुत्तलीं निबध्येत्यर्थः । तुर्विशेषे । भानुवृक्षजतन्तुना अर्कवृक्षोद्भवतन्तुना । जीवहस्तेन प्रवहत्श्वासपुटपार्श्वहस्तेन । तां प्रतिलोमजां विद्यां । शुचौ वह्नौ । तैः सर्ष-

ग्रस्तदेहो लुठन् भूमौ विसंज्ञः प्रलपन्मुहुः ।
प्रयाति निधनं तूर्णं प्रयोगबलतः शिवे ॥ ७७ ॥
साध्यर्क्षवृक्षसंभूतां पुत्तलीमर्कदुग्धतः ।
वज्रीक्षीरेण वा लिप्तां बद्धां प्राग्वदधोमुखीम् ॥ ७८ ॥
साध्यनामादिसंयुक्तां कुण्डादूर्द्ध्वं प्रलम्बयेत् ।
जुहुयात्तत्समिद्भिस्तु तत्क्षीराक्तैर्निशान्तरा ॥ ७९ ॥
ज्वरार्त्तः स्यादरातिस्तु त्रिभिरेव दिनैस्ततः ।
यद्यस्ति तस्य रक्षेच्छा तां तटाकोदरे खनेत् ॥ ८० ॥
जम्बालमध्ये तेनास्मात् सौख्यं तस्य शनैः शनैः ।
तथा यदि न कुर्व्वीत चिरं रोगात्मको भवेत् ॥ ८१ ॥
तथा तामनुभाण्डे तु निवेश्याङ्गारवासरे ।
चण्डिकायतने खात्वा तद्योनिं तत्पुरो बलिम् ॥ ८२ ॥

---

पादिभिर्द्रव्यैः । सहस्रं सहस्रवारं । तुरवधारणे । तां पुत्तलीं । तद्दिने प्रयोगदिवसे । स साध्यः । शिवे इति सम्बुद्धिः ॥ ७७ ॥

साध्यर्क्षेत्यादिभिः भवेदित्यन्तैश्चतुर्भिः श्लोकैः ज्वरोन्मादप्रयोगं तद्रक्षणविधानादिकञ्चोपदिशति । तत्र अर्कदुग्धतः अर्कवृक्षोत्पन्नदुग्धेन च । वज्रीक्षीरेण वज्रीलतोत्पन्नक्षीरेण । वा समुच्चये । बद्धां तोरणविष्कम्भदारुणि । प्राग्वत् अर्कतन्तुसूत्रेण । साध्यनामादिसंयुक्तां वक्षसि लिखितसाध्यकर्म्मनामयुतां । कुण्डादूर्द्ध्वं कुण्डादुपरि । तत्समिद्भिः साध्यनक्षत्रवृक्षसमुद्भूतसमिद्भिः । तुर्विशेषे । तत्क्षीराक्तैः अर्कवज्रीक्षीराभ्यक्तैः । निशान्तरा मध्यरात्रे । तुरवधारणे । ततः तेन प्रयोगेन । तस्य वैरिणः । तां प्रलम्बितां पुत्तलीं । तटाकोदरे तटाकजलोदरे । तेन खननेन । अस्मात् प्रयोगात् । तस्य ज्वरार्त्तस्य । तथा प्रोक्तप्रकारेण ॥ ८१ ॥

तथेत्यादिना उपसर्गकैरित्यन्तेनाध्यर्द्धेन श्लोकेन तत्तत् पुत्तलीखननविशेषात् रिपुमारणप्रयोगविशेषमुपदिशति । तत्र तथा तां साध्यनक्षत्रवृक्षनिर्म्मितां

निहत्य दत्त्वारातिन्तु निहन्यादुपसर्गकैः।
खगेहे वल्यधः खात्वा तदुपर्य्यग्निवर्द्धनात् ॥ ८३ ॥
अविच्छिन्नमरातेः स्याज्ज्वरादिगदसम्भवः।
तां तथाकृतरूपान्तु रुरुजङ्घास्थिसंयुताम् ॥ ८४ ॥
निवध्य पूर्व्वसूत्रेण द्विषद्गेहे खनेन्निशि।
राशौ तदष्टमे मासात् प्रयात्युद्वास्यतोन्यतः ॥ ८५ ॥
तथाविधं पुत्तलिकायुगं कृत्वोक्तमार्गतः।
विड़ालमूषिकाचर्म्मनद्धं साध्याख्यया युतम् ॥ ८६ ॥
निखनेत्तीरयोर्नद्याः पितृगेहेथवा ततः।
मातृगेहे नदीपूर्त्तौ विद्वेषः स्याद्द्वयोस्तदा ॥ ८७ ॥

---

पुत्तलीं। चण्डिकायतने अग्रपीठाधःस्थाने इति शेषः। तद्योनिं साध्यनक्षत्रयोनिं। तत्पुरः चण्डिकाग्रपीठे। निहत्येत्यस्य तद्योनिमितिपूर्वेणान्वयः। दत्त्वेत्यस्य वलिमित्यनेनान्वयः। तुर्विशेषे। उपसर्गकैः क्लेशैः॥ ८२ ॥

खगेहे इत्यादिना सम्भव इत्यन्तेनार्द्धद्वयेन तत्पुत्तल्या ज्वरादिरोगोत्पादनप्रयोगविशेषमुपदिशति। तत्र खात्वा पुत्तलीं इति शेषः। तदुपरि पुत्तल्युपरि। अविच्छिन्नमित्यस्य काकाक्षिन्यायेनोभयत्रान्वयः। पूर्वत्राग्निवर्द्धनादित्यनेनोत्तरत्र ज्वरादिगदसम्भव इत्यनेन च ॥ ८३ ॥

तामित्यादिनान्यत इत्यन्तेनार्द्धाद्येन श्लोकेन पुत्तलीविशेषरचनादुच्चाटनप्रयोगमुपदिशति। तत्र तां साध्यनक्षत्रवृक्षसम्भूतां पुत्तलीं। तथाकृतरूपां प्रोक्तमानादितः। तुर्विशेषे। रुरुजङ्घास्थिसंयुतां व्याघ्रजङ्घास्थिसंयुतां। पूर्वसूत्रेण अर्कवृक्षतन्तुकृतसूत्रेण। निशि मध्यरात्रे। राशौ तदष्टमे शत्रोरिति शेषः ॥८५॥

तथाविधमित्यादिना तदा इत्यन्तेन श्लोकद्वयेन विद्वेषणप्रयोगमुपदिशति। तत्र तथाविधं तत्तन्नक्षत्रवृक्षनिर्म्मितं। उक्तमार्गतः तत्तदंशकानुगुणमानेन। विड़ालमूषिकाचर्म्मनद्धं विड़ालमूषिकाचर्म्मभ्यां परिणद्धं। द्वयोः बाधकबाध्यात्मकयोः क्रमादिति शेषः। साध्याख्यया युतं साध्यादिनामद्वययुतं। निखनेदित्यस्य पुत्तलिकायुगमित्यनेन पूर्वेणान्वयः। पितृगेहे श्मशाने। अथवा विकल्पे। मातृगेहे चण्डिकायतने। नदीपूर्त्तौ सत्यामिति शेषः ॥ ८७ ॥

ता एव प्राग्वदुत्थाय साध्याख्यादिसमन्विताः ।
तद्विद्याजापसिद्धास्ताः खनेद्दरिगृहे पुनः ॥ ८८ ॥
मध्येष्टदिक्षु तु तथा तत्कुलोत्सादनं भवेत् ।
एवं निकटवर्त्तिनां अभिचार उदीरितः ॥ ८९ ॥
दूरस्थितानां द्विषतां कथं स्यादभिचारकम् ।
वदामि ते शृणु प्राज्ञे सुदूरस्थस्य वैरिणः ॥ ९० ॥
विनाशने प्रयोगन्तु क्षिप्रमप्यभिचारकम् ।
येनारिर्निकटस्थात्तु प्रागेव निधनं व्रजेत् ॥ ९१ ॥
तत्साध्यनक्षत्रैः पुत्तलिका विधायाष्टौ शतं क्रमात् ।
ताः प्रागुदीरितक्षीरद्वयसिक्ताः ससंज्ञकाः ॥ ९२ ॥
तत्तदंशकमानापघनास्ता मध्यरात्रतः ।
एकामेकां खनेद्वैरिदिङ्मुखस्ता अशेषतः ॥ ९३ ॥

---

ताइत्यादिना भवेदित्यन्तेनाध्यर्द्धेन श्लोकेन पुत्तलीखननविशेषात् रिपुकुलोत्सादनप्रयोगमुपदिशति । तत्र ताः पुत्तलीः नव नव संख्याताः । प्राग्वन्नक्षत्रवृक्षैः प्रोक्तमानतः । साध्याख्यादीत्यत्रादिशब्दः कर्म्मविषयः । तद्विद्याजापसिद्धास्ताः प्रतिलोमात्मकतार्त्तीयविद्याभिः मन्त्रिताः पुत्तलीः । तत्कुलोत्सादनं रिपुकुलोत्सादनम् ॥ ८८ ॥

एवमित्यादिना श्लोकार्द्धेन प्रोक्तानां निकटवर्त्तिविषयप्रयोज्यत्वमुपदिशति । तत्र एवं प्रोक्तपुत्तलीखननादिविधानेन ॥ ८९ ॥

दूरेत्यादिना व्रजेदित्यन्तेन श्लोकद्वयेन दूरस्थितानां रिपूणां अभिचारप्रयोगं देवी पृच्छति । तत्र कथं केन प्रकारेण । वदामीत्यादिनार्द्धाद्येन श्लोकेन दूरस्थितवैरिनिधनकथनादिप्रस्तावसहितं तत्सामर्थ्यमुपदिशति । तत्र वदामीत्यस्य प्रयोगमित्युत्तरत्रान्वयः । ते तव । प्राज्ञे इति सम्बुद्धिः । येन प्रयोगेन निकटस्थात् अरातेरितिशेषः ॥ ९१ ॥

तत्साध्येत्यादिना नाशभागित्यन्तेनाध्यर्द्धेन श्लोकद्वयेन दूरस्थारिनिधनप्रयोगहोममुपदिशति । तत्र तत्साध्यनक्षत्रैः दूरस्थशत्रुनक्षत्रवृक्षैः । अष्टौ शतं अष्टोत्तरशतं । ताः पुत्तलीः । प्रागुदीरितक्षीरद्वयसिक्ताः अर्कवज्रीक्षीराभ्यां सिक्ताः ।

तत्तद्दंशककाले वा सुदूरस्थोपि नाशभाक् ।
कथं वा मान्त्रिकबलो निहन्तुं शक्यतां व्रजेत् ॥ ९४ ॥
तच्छृणुष्व शिवे वच्मि प्रकारं तस्य निग्रहे ।
तैर्म्मान्त्रिकैस्तस्य पूर्व्वं विद्वेषि कारयेत्ततः ॥ ९५ ॥
तैर्द्विष्टे निधनं तस्मिन् सुशकं स्यादनाश्रयात् ।
भाग्याधिकं महारक्षाकरं मातृकसङ्गतम् ॥ ९६ ॥
राजानं राजपात्रं वा कथं हन्यात् प्रयोगतः ।
तन्मे कथय देवेश यद्युपायन्तु विद्यते ॥ ९७ ॥
वदामि ते शृणु प्राज्ञे त्वमोघं घोरविग्रहम् ।
अभिचारमरातीनामाशुनाशकरं परम् ॥ ९८ ॥

ससंज्ञकाः साध्यनामकर्मसमेताः । तत्तद्दंशकमानापघनाः अश्विनीप्रथमांशादिरेवत्यंशान्ताः अष्टोत्तरशतांशकप्रोक्तमानविनिर्म्मितदेहाः । ताः पुत्तल्यः । वैरिदिङ्मुखः शत्रुनिवासदेशदिङ्मुखः । तत्तद्दंशककाले तत्तत्पुत्तलीमानानुगुणांशककाले । कथमित्यादिनार्द्धेन बलवत्तरमान्त्रिकाभिरक्षितवैरिणं निहन्तुमुपायं देवी पृच्छति । तत्र कथं वा केन प्रकारेण । मान्त्रिकबलो प्रबलमान्त्रिकाभिरक्षितः रिपुरिति शेषः । निहन्तुं शक्यतां व्रजेत् वध्यतां व्रजेदित्यर्थः ॥९४॥

तदित्यादिना पूर्व्वार्द्धेन तद्वैरिनिधनोपायकथनं प्रस्तौति । तत्र शिवे इति देवीसम्बुद्धिः । तस्य अरातेः । तैरित्यादिना अनाश्रयादित्यन्तेनार्द्धद्वयेन वैरिनिधनोपायमुपदिशति । तैः अरातिरक्षाविधानतत्परैः । तस्य अरातेः स्वप्रयोगारम्भकालादिति शेषः । कारयेत्तदरातिपार्श्ववर्त्तिभिरिति शेषः । तैः मान्त्रिकैः । द्विष्टे द्वेषं गते । तस्मिन् अरातौ । सुशकं सुकरं । अनाश्रयात् रक्षकाभावात् ॥९५॥

भाग्याधिकमित्यादिना विद्यत इत्यन्तेनार्द्धाधेन श्लोकेन भाग्याधिक्यादियुतस्य राजादिकस्य निधनप्रयोगप्रकारं देवी पृच्छति । तत्र भाग्याधिकं प्रोक्तायुर्दायादिविविधग्रहानुकूल्येन देवतोपास्त्यादिना चाधिकं । कथं केन प्रयोगतः प्रयोगे वा । देवेशेति ईश्वरसम्बुद्धिः । उपायं दिव्यत्वादुपायाः ॥ ९७ ॥

वदामीत्यादिना श्लोकेन पृष्टार्थकथनप्रस्तावपुरःसरं तमर्थं स्तौति । तत्र प्राज्ञे इति सम्बुद्धिः । परं प्रोक्तप्रकारादिति शेषः ॥ ९८ ॥

सिद्धमन्त्रानतिस्निग्धान् षोड़शातिस्थिराशयान् ।
तैरवच्छिन्नदर्पैन्तु होमयेद्यामदिक्-क्रमात् ॥ ९९ ॥
तेन तन्निधनं ब्रूयाद्रक्षितस्याप्ययत्नतः ।
अरातिनिग्रहं कुर्य्यादेवमुक्तविधानतः ॥ १०० ॥

मायातत्त्वमयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निष्कालनाच्चित्ते तत्तत्त्वं स्वात्मसात् कृतम् ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमते
होमात् काम्यफलोदयं नाम
एकत्रिंशत् पटलम् ॥ ३१ ॥

---

सिद्धेत्यादिना विधानत इत्यन्तेन श्लोकद्वयेन महामान्त्रिकादिरक्षितशत्रोरभिचारप्रयोगमुक्तनिगमनोपेतमुपदिशति । तत्र सिद्धमन्त्रान् होतॄन् परिकल्प्येति शेषः । अतिस्थिराशयान् परप्रयुक्तोपायैरभेद्यहृदयान् । तैः सिद्धमन्त्रैः । यामदिक् क्रमात् यामदिक्क्रमात् प्रतियामं दिक्षुपुरुषक्रमात् इत्यर्थः । तेन प्रयोगेन । तन्निधनं भाग्याधिकराजादेर्निधनं । रक्षितस्यापि अस्य महामान्त्रिकादिभिरित्यर्थः । अयत्नतः इत्यस्य कुर्य्यादितुत्तरत्रान्वयः । एवं प्रकारेण ॥ १०० ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसारसिंहराजप्रकाशाभिधानेन सुभगानन्दनाथेन विरचितायां मनोरमाख्यायां व्याख्यायां अरिमर्द्दनप्रकाशनपरं एकत्रिंशत् पटलं परिपूर्णं परामृष्टम् ॥ ३१ ॥ ॐतत्सत् ॥

ग्रन्थसंख्या—२६८ ।

एकत्रिंशे तु पटले न स्याद्ग्रन्थत्वमुदीरितम् ।
व्याख्यानग्रन्थसंख्या तु साष्टषष्ट्या शतद्वयम् ॥

---

## द्वात्रिंशपटलम् ।

अथ होमं प्रवक्ष्यामि ललिताविद्यया शिवे ।
येन मर्त्योऽपि भुवने प्रख्यातो देवतासमः ॥ १ ॥
तद्विधानं शृणु प्राज्ञे द्रव्यकालादिभेदतः ।
प्रोक्तेषु नवकुण्डेषु तत्तत्कर्म्मसु चोदिते ॥ २ ॥
जुहुयादुक्तमार्गेण तत्राग्निध्यानपूर्वकम् ।
शुक्लप्रतिपदारम्भात् पूर्णान्ते पङ्कजैर्हुनेत् ॥ ३ ॥
कैरवैर्हवनात्तेषु दिनेषु श्रियमाप्नुयात् ।
मधुरत्रयसंसिक्तैः पुष्पैरप्यक्षतैः शुभैः ॥ ४ ॥
अखण्डितैरब्दमात्रं नरो नृपतिसन्निभः ॥
तेष्वेव दिवसेष्वब्जैः सितैस्तद्धवनाद्घृतैः ॥ ५ ॥
कह्लारैर्हवनात्तेषु दिनेषु धनधान्यवान् ।

---

पूर्व्वस्मिन्नेकत्रिंशे पटले शत्रुमर्द्दनहोमविधानादिकमुपदिश्यानन्तरं षोडश-नित्याविद्यासिद्धानां सौम्यहोमविधानमुपदिशत्यथहोममित्यादिनोदोरितैरित्यन्तेन श्लोकशतरूपेण द्वात्रिंशेन पटलेन। तत्र अथेत्यादिना भेदत इत्यन्तेनाध्यर्द्धेन श्लोकेन पटलार्थकथनप्रकारं तद्वैभवञ्च प्रस्तौति। तत्र ललिताविद्यया श्रीविद्यया। शिवे इति देवीसम्बुद्धिः। येन होमेन। प्राज्ञे इति देवीसम्बुद्धिः। द्रव्य कालादिभेदत इत्यत्रादिशब्दः कुण्डादिविषयः ॥ १ ॥

प्रोक्तेष्वित्यादिना पूर्व्वकमित्यन्तेनार्द्धद्वयेन सामान्यहोमविधानमुपदिशति। तत्र प्रोक्तेषु एकोनत्रिंशे पटले। चोदिते कुण्डे इति शेषः। उक्तमार्गेण एकोन-त्रिंशपटलोक्तपरिषेचनपरिस्तरणादिविधानेन ॥ २ ॥

शुक्लेत्यादिभिर्जीवितोत्यन्तैरर्द्धाधिकैः सप्तभिः श्लोकैः शुक्लप्रतिपदादिपूर्णान्त-तिथिष्वैश्वर्य्यादिसिद्धिकरहोमं जलजपुष्पभेदैरुपदिशति। तत्र हुनेज्जुहुयादित्यर्थः। मधुरत्रयसंसिक्तैः क्षीरसर्पिर्म्मधुभिः दधिघृतमधुभिर्वा संसिक्तैः। शुभैः अम्लकुलापतिताम्लानाशीर्णाजन्तुदूषितानाघ्रातानङ्गस्पृष्टानुषितैः। नृपतिसन्निभः

तेष्वेवोत्पलहोमेन श्रियमाप्नोति पुष्कलाम् ॥ ६ ॥
अरुणैरुत्पलैर्होमात् कन्यकां समवाप्नुयात् ।
सौभाग्यं कीर्त्तिमारोग्यमवाप्नोत्यर्च्चनादपि ॥ ७ ॥
तैः षड्भिः कुङ्कुमक्षोदप्लुतैस्तद्दिनहोमतः ।
अचलाञ्च श्रियं प्राप्य सुखी जीवति भूतले ॥ ८ ॥
तैश्चन्दनाक्तैर्हवनात्तद्दिनेषु यथाविधि ।
पुत्रदासीदासयुतश्चिरं जीवति मानवः ॥ ९ ॥
तैरेवेन्दुद्रवाक्तैस्तु होमात् कन्दर्पसन्निभः ।
वनिताजनसन्दोहविनोदी भुवि जीवति ॥ १० ॥
कृष्णप्रतिपदारम्भाद्दर्शान्तं जुहुयात् सितैः ।
घृताक्तैरब्दमात्रेण निःसपत्नां लभेच्छ्रियम् ॥ ११ ॥
तेष्वेव दिवसेष्वग्नौ गुडैः क्षौद्राप्लुतैर्हुनेत् ।
कान्तिलक्ष्मीजयारोग्ययुतो जीवति भूतले ॥ १२ ॥

---

सम्यग्भिरिति शेषः। तेषु शुक्लप्रथमादितिथिरूपेषु। अब्जैः पद्मैः। सितैः सितवर्णैः। तेषु प्राग्वद्दिवसेषु। अरुणैः उत्पलैः अरुणकुमुदैः। तेषु दिनेषु प्रागवदर्च्चनादपीत्यनेन प्रोक्तपुष्पहोमप्रयोगेषु तत्तत्पुष्पैस्तत्र तत्रार्च्चनमप्युच्यते। तैः षड्भिः अरुणसितपङ्कजद्वयकह्लारेन्दीवरकैरवद्वयैः। तद्दिनहोमतः शुक्लप्रथमादितिथिरूपदिवसेषु होमतः। तैः प्रोक्तषड्भिरिति शेषः। तद्दिनेषु शुक्लप्रथमादितिथिरूपदिवसेषु। यथाविधि प्रोक्तपरिस्तरणपरिषेचनादिविधानेन। तैः प्रागवत् षड्भिः। इन्दुद्रवाक्तैः कर्पूरद्रवाक्तैः। तुर्विशेषे ॥ १०॥

कृष्णेत्यादिभिः हुनेदित्यन्तैरध्यर्द्धैर्नवभिः श्लोकैः कृष्णपक्षप्रतिपदादिदर्शान्तपञ्चदशतिथिरूपदिवसेषु होमद्रव्यविशेषैर्लक्ष्मीप्राप्त्यादिसम्पत्करहोमविधानमुपदिशति। तत्र सितैः शर्करादिभिरिति यावत्। तेषु कृष्णपञ्चदशतिथिरूपदिवसेषु। हुनेत् जुहुयादिति यावत्। तद्दिनैः कृष्णतिथिपञ्चदशकरूपैःदिनैः।

द्राक्षाभिर्दुग्धसिक्ताभिस्तद्दिनैर्हवनान्नरः ।
क्षीराहारी चिरं भूमौ जीवत्यकलुषाशयः ॥ १३ ॥
खर्जूरीफलहोमेन त्रिमध्वक्तेन तद्दिनैः ।
आयुरारोग्यविजयसम्पन्नां श्रियमश्नुते ॥ १४ ॥
कदलीफलहोमेन तथा तद्दिवसेषु तु ।
पुण्यकीर्त्तिर्नृपैर्मान्यो जीवेद्वर्षशतं सुखी ॥ १५ ॥
नारिकेलफलक्षोदैः सितक्षौद्रसमन्वितैः ।
हवनात्तद्दिनैरिष्टमखिलं समवाप्नुयात् ॥ १६ ॥
तैरिक्षुवारिसंसिक्तैर्हवनात्तद्दिनेषु वै ।
वासांसि नानावर्णानि महार्हाणि लभेत सः ॥ १७ ॥
षड्भिश्च तैस्त्रिमध्वक्तैर्हवनाच्छ्रियमाप्नुयात् ।
तैः सवत्ससितागव्यपयोक्तैर्हवनादपि ॥ १८ ॥
महिषीक्षीरसंसिक्तैर्होमादिष्टमवाप्नुयात् ।
अजाक्षीरयुतैस्तैश्च तथाविक्षीरसंप्लुतैः ॥ १९ ॥

---

अकलुषाशयः प्रसन्नहृदयः। तद्दिनैः प्राग्वद्दिनैः। तथा शब्देन त्रिमधुराप्लावनमुच्यते। तद्दिवसेषु प्राग्वत्। तुर्विशेषे। तद्दिनैः प्राग्वत्। तैर्नारिकेलफलक्षोदैः। तद्दिनेषु प्राग्वत् कृष्णपक्षतिथिरूपेषु। सः साधकः। षड्भिश्च तैः सितागुड़द्राक्षाखर्जूरीफलकदलीनारिकेलफलक्षोदैः। तैः प्रोक्तैः षड्भिः। सवत्ससितागव्यपयोक्तैः समानवर्णवत्ससहितायाः सितवर्णायाः गोः क्षीराक्तैः। अपिः समुच्चये। तैः प्राग्वत् षड्भिर्द्रव्यैः। तथा प्राग्वत्। तैः षड्भिर्द्रव्यैः। अविक्षीरसंप्लुतैः इति पदच्छेदः। नारिकेलक्षोदक्षीराक्तैः नालिकेरफलक्षोदोत्पन्नक्षीराक्तैः। अपिशब्देनेष्टमाप्नुयादित्येतदत्राप्याकृष्यते। तैः प्राग्वत् षड्भिः ॥ १९ ॥

नारिकेलफलक्षौद्रक्षीराक्तैरपि तैर्हुनेत् ।
तथा द्वादशभिर्द्रव्यैरेकैकैः सङ्गतैस्तु वा ॥ २० ॥
नित्यशो हवनाद्दुग्धक्षौद्रसर्पिःसमन्वितैः ।
गोभूहिरण्यवासोभिः समृद्धो जीवति क्षितौ ॥ २१ ॥
रविवारे सितान्नैस्तु क्षीराक्तैर्जुहुयात्तथा ।
अब्दादन्नसमृद्धिः स्याद् घृताक्तैर्वा मधुप्लुतैः ॥ २२ ॥
सोमवारे सितोपेतैर्नारिकेलफलैर्हुतैः ।
सम्पन्नशस्यां पृथिवीमवाप्नोति सुनिश्चितम् ॥ २३ ॥
अङ्गारवारे क्षौद्राक्तैरन्नैर्होमाच्छ्रियं लभेत् ।
तैरिष्टद्रव्यमिलितैर्हवनात्तां महीं लभेत् ॥ २४ ॥
बुधवारे घृताक्तैस्तु होमेन तिलतण्डुलैः ।
श्रियं सकलकल्याणनिलयां लभतेऽब्दतः ॥ २५ ॥
गुरुवारे दुग्धसिक्तपनसास्थिपरागकैः ।
जुहुयादब्दमात्रेण लभते गेहमुत्तमम् ॥ २६ ॥
सितवारे नारिकेलक्षोदैः सितसमन्वितैः ।
गुडान्वितैर्वा जुहुयाच्छ्रिया सुचिरमेधते ॥ २७ ॥

---

तथेत्यादिना क्षिताविव्यन्तेनार्द्धाधेन श्लोकेन शुक्लपक्षप्रोक्तपुष्पषट्केन कृष्णपक्षप्रोक्तसितादिद्रव्यषट्केन च सम्भूय द्वादशभिर्द्रव्यैः समस्तरूपैश्च नित्यहोमात् गोभूमिहिरण्यवासःसिद्धिकरत्वमुपदिशति । तत्र तथा द्वादशभिः शुक्लकृष्णपक्षतिथिप्रोक्तद्वादशभिः । वा विकल्पे । नित्यशः प्रतिदिनम् ॥ २१ ॥

रविवार इत्यादिभिर्मनोहरामित्यन्तैः सप्तभिः श्लोकैः अर्कवारादिषु सप्तसु सम्पत्करणहोमद्रव्याण्युपदिशति । तत्र सितान्नैः सितोपेतान्नैः । तुर्विशेषे । क्षीराक्तैः गव्याद्युक्तक्षीरेषु चतुर्ष्वन्यतमाक्तैः । तथा प्रोक्तविधानेन । घृताक्तैः

शनिवारे तैलसिक्तैस्तिलैः शुद्धैस्तथेतरैः ।
हवनाल्लभते लक्ष्मीमब्दादतिमनोहराम् ॥ २८ ॥
तैः समस्तैः समस्ताक्तैर्जुहुयात् सप्तसु क्रमात् ।
तद्दिनैरिन्दिराप्त्यः स्याद्विद्याहवनवैभवात् ॥ २९ ॥
तद्दिनेषु च तद्विद्याभक्तांस्त्रीन् द्वौ सुभोजयेत् ।
घृतक्षीरतिलक्षौद्रगुडापूपसमन्वितम् ॥ ३० ॥
अश्विन्यादिषु ऋक्षेषु नवस्वपि हुनेत् क्रमात् ।
शालिभिस्तण्डुलैर्मुद्गैर्माषैर्गौरेतरैस्तिलैः ॥ ३१ ॥
तथाविधैः सर्षपैश्च कोद्रवैरिन्दिराप्तये ।
क्षौद्रसर्पिस्तिलैर्दुग्धक्षीरोन्दे्चुरसाप्लुतैः ॥ ३२ ॥

---

प्रोक्तगव्यादिष्वन्यतमघृताक्तैः । वा विकल्पे । सितोपेतैः शर्करोपेतैः । तैः अन्नैः । तां दृष्टां । तिलतण्डुलैः तिलमिश्रतण्डुलैः । दुग्धसिक्तपनसास्थिपरागकैः क्षीरमिश्रितपनसबीजपरागैः ॥ २८ ॥

तैरित्यादिना श्लोकेन समस्तद्रव्यैः सप्तवारेषु हवनात् सम्पत्करत्वादिकमुपदिशति । तत्र तैः समस्तद्रव्यैरित्यर्थः । समस्ताक्तैः समस्ताप्लवनद्रव्याक्तैः । सप्तसु वारेष्विति शेषः । तद्दिनैः एतद्दिनादिमण्डलप्रोक्तदिनैः । विद्याहवनवैभवात् ललिताविद्यावैभवात् होमवैभवाच्च ॥ २९ ॥

तद्दिनेष्वित्यादिना श्लोकेन तत्तत्सम्पत्करप्रयोगहोमदिवसेषु कर्त्तव्यमुपदिशति । तत्र तद्दिनेषु तत्तत्प्रयोगदिनेषु । तद्विद्याभक्तान् ललिताविद्याभक्तान् । त्रीन् द्वौ त्रीन् वा द्वौ वा इत्यर्थः । सुभोजयेत् ॥ ३० ॥

अश्विन्यादीत्यादिना क्रमादित्यन्तेनाध्यर्द्धश्लोकद्वयेनाश्विन्यादिषु नवसु नक्षत्रेषु क्रमात् सम्पत्करहोमद्रव्यनवकं तदाप्लावनद्रव्यनवकसहितमुपदिशति । तत्र हुनेत् जुहुयात् । क्रमात् एकैकक्रमात् । शालीत्यादिना

महिष्यजाविकाक्षीरप्लुतैस्तैर्नवसु क्रमात् ।
मघादिषु तथा होमं नवभिः स्यान्नवस्वपि ॥ ३३ ॥
चणकैश्चणकान्नैश्च मुद्गान्नैः कृशरैस्तथा ।
माषान्नैश्च हरिद्रान्नैर्गुडान्नैः पायसैस्तथा ॥ ३४ ॥
दुग्धान्नै[शुद्धान्नै]श्च विमध्वक्तैः कीर्त्तिलक्ष्मीजयाप्तये ।
तथा मूलादिनवर्क्षे वलिभिर्जुहुयात्तथा ॥ ३५ ॥
पृथुकैः शक्तुभिर्लाजैरिक्षुकाण्डैः पयःप्लुतैः ।
शालीचणकमुद्गोत्थैर्माषपिष्टतिलोद्भवैः ॥ ३६ ॥

---

श्लोकोत्तरार्द्धेन द्रव्यषट्कमुक्तं । तत्र गौरेतरैस्तिलैः सितवर्णतिलैः कृष्णवर्णतिलैश्च । तथाविधैरित्याद्यर्द्धेन द्रव्यत्रितयं तत्फलञ्च । तत्र तथाविधैः सर्षपैः सितसर्षपैः कृष्णसर्षपैश्च । क्षौद्रेत्याद्युत्तरार्द्धेन प्लवन द्रव्यषट्कं । तत्र कैरोन्दशब्देन नालिकेरोदकमुच्यते । महिषीत्याद्युत्तरार्द्धेना-प्लावनद्रव्यत्रयं तत्क्रमञ्च । तत्र महिष्यजाविकाक्षीराप्लुतैः महिषीक्षीराजाक्षीरा-विकाक्षीराप्लुतैः । तैर्द्रव्यैः प्रोक्तैः । नवसु प्रोक्तेषु अश्विन्यादिषु । क्रमात् एकैका-प्लुतैः एकैकद्रव्यक्रमात् ॥ ३२ ॥

मघेत्यादिनाप्तये इत्यन्तेनार्द्धाद्येनार्द्धान्तेन च श्लोकेन मघादिषु नवसु क्रमेण सम्पत्करणहोमद्रव्याण्युपदिशति । तत्र तथा जुहुयात् । नवभिः अनन्तरवक्ष्यमाणैश्चणकादिभिः । अपिः समुच्चये । चणकैरित्यादिनाद्यर्द्धेन द्रव्यचतुष्टयं । माषान्नैः इत्याद्यर्द्धेन द्रव्यचतुष्टयमुक्तं । दुग्धान्नै [शुद्धान्नै] रित्याद्यर्द्धेन द्रव्यमेकं तदाप्लुतद्रव्यं तत्फलञ्च ॥ ३४ ॥

तथेत्यादिना भ्रवमित्यन्तेनार्द्धादिन श्लोकद्वयेन मूलादिनवनक्षत्रेषु सम्पत्कर-होमद्रव्यनवकमुपदिशति । तथा एकैकक्रमात् । तथा प्रोक्तविधानेन । पृथुकैरित्याद्यर्द्धेन द्रव्यचतुष्टयं तदाप्लवनद्रव्यञ्च । तत्र पयःप्लुतैः क्षीराप्लुतैः । शालीत्यादिनोत्तरार्द्धेन शिष्टदिवसपञ्चकहोमद्रव्यापूपपञ्चकस्य द्रव्यपञ्चकं । तत्र माषपिष्टतिलोद्भवैः एषां पिष्टोद्भवैश्च । एतानि शाल्यादीनुत्तरत्रापूपै-

अपूपैर्म्मधुराभ्यक्तै र्विजयं कीर्त्तिमिन्दिराम् ।
आरोग्यमायुः सौभाग्यं मान्यताञ्च लभेद्ध्रुवम् ॥ ३७ ॥
सिद्धयोगेषु यद्द्रव्यैर्जुहुयात्तत्समृद्धिमान् ।
तथामृताख्ययोगेषु जुहुयाद्रोगशान्तये ॥ ३८ ॥
गुड़ूचीतिलदूर्व्वाभिस्त्रिमध्वक्ताभिरादरात् ।
उच्चयोगेषु जुहुयादरुणैरुत्पलैः शुभैः ॥ ३९ ॥
उच्चै र्भवति सर्व्वेषां स्वकुलानां सुनिश्चितम् ।
पर्व्वताख्ये हुनेद्योगे यद्द्रव्यैस्तद्धि पर्वतम् ॥ ४० ॥
भवेद्दस्याचिरेणैव कालेन परमेश्वरि ।
अथान्यमद्भुतं होममाकर्णय वदामि ते ॥ ४१ ॥
स्वचेत्रगे स्वोच्चगे वा जुहुयाद्ग्रहतृप्तये ।
पायसैर्घृतसंसिक्तैः सितमिश्रैस्तु विद्यया ॥ ४२ ॥

---

रित्यस्य विशेषणानि । विजयादिफलसप्तकं मूलादिनक्षत्रनवकप्रोक्तहोमसाधारणाम् ॥ ३७ ॥

सिद्धेत्यादिभिस्ते इत्यन्तैश्चतुर्भिः श्लोकैः सिद्धादिशुभयोगेषु सम्पत्करहोमविधानमुक्तं होमं हुतहोमकथनप्रस्तावसहितं उपदिशति । तत्र सिद्धयोगेषु तिथिवारादिसंयोगोत्पन्नेषु । यद्द्रव्यैरत्राप्युमभिमतै र्द्रव्यैः । तत्समृद्धिमान् हुतद्रव्यसमृद्धिमान् । तथा समुच्चये । नक्षत्रवारादिसमायोगोत्पन्नेषु अमृताख्ययोगेषु । गुड़ूची अमृतालता । आदरात् भक्तितः । उच्चयोगे रव्यादिष्वन्यतमस्मिन् ग्रहे स्वातुच्चभागं गते लग्नाद्दशमस्थिते । अरुणैरुत्पलैः अरुणैः कैरवैः । शुभैः प्रागवम्लुकुलाद्यष्टदोषरहितैः । उच्चैः अधिकः । पर्व्वताख्ये इत्यस्य योगे इत्येतद्विशेष्यम् । स्वातुच्चभागस्थितार्कोदयराशौ वा यदा मेषतुलाकर्कटकेषु क्रमात् कुजशुक्रचन्द्राः स्थिताः तदा मकरराश्युदये वेति यावत् । हुनेत् जुहुयात् । यद्द्रव्यैरवाप्युमभिमतैः । तद्द्रव्यं पर्वतं सम्पूर्णं । परमेश्वरीति सम्बुद्धिः ॥४१॥

स्वचेत्रेत्यादिना तत्कुले इत्यन्तेन श्लोकद्वयेन ग्रहतृप्तिकरहोमकालं होम-

सर्वदा यो हुतविधिमेनं कुर्य्याद् यथाविधि ।
तत्तत्प्रोक्तेषु कालेषु ग्रहार्त्तिः स्यान्न तत्कुले ॥ ४३ ॥
मासेषु जन्मत्रितये होमं कुर्य्याद् यथाविधि ।
दूर्वामृतातिलैर्नित्यं यावज्जीवं सुखी भवेत् ॥ ४४ ॥
तद्दिनेषु जपेद्विद्यां सहस्रं दिननित्यया ।
न तस्य कुत्रचित् कश्चित् कदाचित् क्लेशसम्भवः ॥ ४५ ॥
तर्पणं कारयेच्चन्द्रवासितैर्मधुरैर्जलैः ।
सौरभ्याढ्यैः प्रसूनैश्च पूजयेद्वाथ तद्दिने ॥ ४६ ॥
अवन्ध्यजन्मत्रितयं स्यात् कदाचिन्न मान्त्रिकः ।
यदि स्यात्तस्य रोगादिपीड़ा भवति निश्चितम् ॥ ४७ ॥

---

द्रव्यञ्च उपदिशति । तत्र स्वच्चे त्रगे एकत्रिंशे पटले भौमेत्यादिना श्लोकेन प्रोक्त-स्वस्वराशिगते अर्कादिष्वन्यतमस्मिन् ग्रहे इति शेषः । स्वोच्चगे मेषवृषमकरकन्या-कर्कटमीनतुलाराशयो रव्यादिसप्तग्रहाणां क्रमादुच्चराशयः । तेषु रव्यादिष्वन्य-तमे ग्रहे स्वस्वप्रोक्तोच्चराशौ यदा स्थितः तत्काले । वा विकल्पे । ग्रहत्रये तद्ग्रहत्रये । सितमिश्रैः शर्करामिश्रैः । तुर्विशेषे । विद्यया ललिताविद्यया । तत्तत्प्रोक्तेषु स्वस्वप्रोक्तच्चे त्रोच्चराशिषु स्थिता यदा ग्रहास्तेषु । तत्कुले साधककुले ॥ ४३ ॥

मासेष्वित्यादिभिर्निश्चितमित्यन्तैश्चतुर्भिः श्लोकैः त्रिजन्मसु होमजपतर्पणपूजा विधानं तेष्वन्यतमस्यावश्यकर्त्तव्यतां तदकरणे प्रत्यवायञ्चोपदिशति । तत्र मासेषु द्वादशस्विति शेषः । दूर्वामृतातिलैः तेष्वन्यतमेन द्रव्येणेत्यर्थः । नित्यं प्रतिजन्मत्रयं । तद्दिनेषु त्रिजन्मदिनेषु । विद्यां सहस्रं सहस्रवारं दिननित्यया सहेति शेषः । तस्य जपितुः । कुत्रचिद्देशे । कश्चिदित्यस्य क्लेशसम्भव इत्येतद्विशेष्यं । चन्द्रवासितैः कर्पूरमिश्रैः । वा समुच्चये । तद्दिने जन्मत्रितये । अवन्ध्यजन्मत्रितयं होमतर्पणपूजनेष्वन्यतमेनेति शेषः । यदि स्याद्वन्ध्यजन्मत्रितयं । तस्य मान्त्रि-कस्य । रोगादीत्यत्रादिशब्दो भूतादिविषयः ॥ ४७ ॥

उच्चस्थे वा स्वराशौ वा स्थिते चन्द्रे दिवाकरे ।
विद्यां जपेत् सहस्रं वा शतं वा पूजयेच्छिवाम् ॥ ४८ ॥
यस्तस्य रोगतो बाधा कदाचिन्न भवेद्ध्रुवम् ।
तस्मादुक्तेषु कालेषु तथा कुर्व्वन् सुखी भवेत् ॥ ४९ ॥
ग्रहरोगादिदारिद्र्यक्लेशयुक्तस्य मन्त्रिणः ।
मान्त्रिकत्वं भवेल्लोके शोकहासास्पदं भवेत् ॥ ५० ॥
पलाशपुष्पैश्च फलैः पत्रैः काण्डैश्च मूलकैः ।
हवनादब्दमात्रेण वाग्मी स्यात् कुण्ठवागपि ॥ ५१ ॥
अर्कपुष्पैस्त्रिमध्वक्तैर्होमादिष्टमवाप्नुयात् ।
मण्डलात्तस्य पत्रैश्च समिद्भिरपि मूलतः ॥ ५२ ॥
बिल्वप्रसूनैस्तु फलैः पत्रैः काण्डैस्तथा हुनेत् ।
मूलैश्च लक्ष्मीसंसिद्ध्यै मा तदन्वयगा भवेत् ॥ ५३ ॥

---

उच्चस्थेत्यादिभिर्भवेदित्यन्तैस्त्रिभिः श्लोकैः सूर्य्यादिषु स्वच्चे तस्योच्चस्थेषूपास्ति-क्रमं तत्फलं तदकरणे प्रत्यवायञ्चोपदिशति। तत्र वाद्वयं समुच्चये। विद्यां ललिताविद्यां। सहस्रं सहस्रवारं। वाद्वयं विकल्पे। शतं शतवारं। शिवां प्राग्वन्नित्यां। यः मान्त्रिकस्तस्य मान्त्रिकस्य रोगतः रोगैः। तथा कुर्व्वन् प्रोक्तप्रकारभजनं कुर्व्वन्। शोकहासास्पदं स्वपक्षपरपक्षयोः ॥ ५० ॥

पलाशपुष्पेत्यादिना श्लोकेन वाग्मित्वप्रदहोमविधानमुपदिशति। तत्र फलैः पत्रैः काण्डैश्च मूलकैः पलाशोत्पन्नैरित्यर्थः। कुण्ठवागपि मूकोपीत्यर्थः ॥ ५१ ॥

अर्केत्यादिना श्लोकेन इष्टाप्तिहोमविधानमुपदिशति। तत्र अर्कपुष्पैः अर्कवृक्षपुष्पैः। इष्टमभिमतं। मण्डलात् प्रागुक्तैकोनपञ्चाशद्दिनैः। तस्य अर्कवृक्षस्य मूलतः मूलैः खण्डरूपैः ॥ ५२ ॥

बिल्वेत्यादिना श्लोकेन लक्ष्मीप्राप्तिकरहोमविधानमुपदिशति। तत्र फलै-रित्यादिना तृतीयाबहुवचनान्तानां चतुर्णां पदानां बिल्वप्रसूनैरिति विशेष्यं। बिल्वप्रसूनशब्देन बिल्वस्येति षष्ठ्यन्तेन सम्बन्धः। तथा त्रिमध्वक्तैः। हुनेत जुहुयात्। मा लक्ष्मीः तदन्वयगा साधकस्य वंशगामिनी ॥ ५३ ॥

पद्माचैर्मधुराभ्यक्तैर्होमात्तावद्दिनैर्नरः ।
इन्दिरां लभते रम्यां सर्वलोकचमत्कृताम् ॥ ५४ ॥
चम्पकैर्मधुसंमिश्रैर्जुहुयात्तद्दिनावधि ।
आढ्यः स्यादग्रजः पुत्रानवाप्नोति गुणाधिकान् ॥ ५५ ॥
तैरेवाज्यप्लुतैर्होमान्मङ्गले तूच्चसंस्थिते ।
लभते सर्वशस्याढ्यां भुवं भोक्ता च जायते ॥ ५६ ॥
तैः क्षीराक्तैर्हुतैश्चन्द्रे खोच्चगे तद्दिनैर्भवेत् ।
शतगुः साधकस्तद्वत्त्रिमध्वक्तैर्लभेत्त्रयम् ॥ ५७ ॥
पाटलैः क्षौद्रसंसिक्तैर्होमात् कन्यामवाप्नुयात् ।
तगरोत्थैरपि तथा लाजैश्च कुटजैरपि ॥ ५८ ॥

---

पद्माचैरित्यादिना श्लोकेन लक्ष्मीप्राप्तिकरहोमविधानमुपदिशति । तत्र पद्माचैः पद्मफलान्तःस्थमणिभिः । मधुराभ्यक्तैः त्रिमधुराक्तैः । तावद्दिनैः मण्डलदिनैः ॥ ५४ ॥

चम्पकैरित्यादिना श्लोकेन लक्ष्मीपुत्रसिद्धिकरहोमविधानमुपदिशति । तत्र तद्दिनावधि मण्डलदिनावधि ॥ ५५ ॥

तैरेवेत्यादिना श्लोकेन शस्यशालिन्या भूमेः प्राप्तिकरहोममुपदिशति । तत्र तैः चम्पकैः । एवावधारणे । मङ्गले भौमे । तुर्विशेषे । उच्चसंस्थिते मकरराशिस्थिते । चः समाहारे ॥ ५६ ॥

तैरेवेत्यादिना श्लोकेन गोशतप्राप्तिकरलक्ष्मीपुत्रभूमीनां प्राप्तिकरहोमद्वयविधानमुपदिशति । तत्र तैः चम्पकैः । खोच्चगे वृषभराशिगते । तद्दिनैः मण्डलात् । शतगुः गवां शतयुक्तः । तद्वन्मण्डलात् । त्रिमध्वक्तैः तैः चम्पकैरिति शेषः । लभेत् दिव्यत्वात् लभेतेत्यर्थः । त्रयं गोभूमिपुत्रवर्गाणाम् ॥ ५७ ॥

पाटलैरित्यादिना श्लोकेन कन्यासिद्धिकरहोमद्रव्याण्युपदिशति । तत्र तगरोत्थैः प्रागुक्तजलजपुष्पैर्नन्द्यावर्त्तपुष्पैर्वा । कुटजैर्गिरिमल्लिकापुष्पैः । अपिः समुच्चये ॥ ५८ ॥

तैः क्षीरमिश्रैर्हवनाच्चतुर्भिर्लभते धनम् ।
अम्बराणि विचित्राणि महार्हाणि च तद्दिनैः ॥ ५९ ॥
शतपत्रैस्तु मध्वक्तैर्होमाल्लक्ष्मीमवाप्नुयात् ।
केशरैश्च कदम्बैश्च कुण्डै[न्दै]र्विचकिलैरपि ॥ ६० ॥
मल्लिकामालतीजातिपुन्नागैश्च नमेरुभिः ।
जुहुयात् प्रथमारम्भं पञ्चम्यन्तं मधुप्लुतैः ॥ ६१ ॥
एकैकशः समस्तैश्च महालक्ष्मीमवाप्नुयात् ।
तथाज्याक्तैस्तु हवनाल्लभते भूषणैः श्रियम् ॥ ६२ ॥
प्रसूनैः कर्णिकारोत्थैः क्षौद्राक्तैर्हवनाद्दिनैः ।
उदितैरचलां लक्ष्मीं अवाप्नोति सुनिश्चितम् ॥ ६३ ॥
कह्लारै रक्तकुमुदैरुत्पलैः कमलद्वयैः ।
प्राग्वन्नन्दादिपूर्णान्तमेकैकैर्वापि पञ्चभिः ॥ ६४ ॥

---

तैरित्यादिना श्लोकेन धनवस्त्रप्राप्तिकरहोममुपदिशति । तत्र तैः पाटलतगरजलजकुटजैः । चः समाहारे । तद्दिनैः मण्डलात् ॥ ५९ ॥

शतपत्रैरित्यादिना श्लोकेन लक्ष्मीप्राप्तिकरहोमार्थं पुष्पपञ्चकमुपदिशति । तत्र केशरैर्वकुलैर्विचकिलैः विचकिलो मल्लिकाविशेषः । अप्या पूर्वत्र तद्दिनैरित्येतदाकृष्यते ॥ ६० ॥

मल्लिकेत्यादिभिः सुनिश्चितमित्यन्तैस्त्रिभिः श्लोकैः प्रथमादिपञ्चम्यन्ततिथिषु सम्पत्करहोमभेदानुपदिशति । तत्र मल्लिकेत्याद्यर्द्धेन पुष्पपञ्चकं । तत्र नमेरुभिः सुरपर्णीपुष्पैः । समस्तैस्तास्वेकैकस्यां तिथौ तत्पुष्पपञ्चकसमुदायैः । च शब्दो विकल्पार्थः । तैरेव प्रोक्तपञ्चविधपुष्पैरेव । तथा एकैकशः । समस्तैश्चेति यावत् । भूषणैः सहेति शेषः । दिनैः उदितैः प्रोक्तान्मण्डलात् । एष फलकालावधि प्रकरणसमानः ॥ ६३ ॥

कह्लारैरित्यादिना साधकोत्तम इत्यन्तेन श्लोकद्वयेन सामान्येन नन्दादिपूर्णान्ततिथिपञ्चके प्राग्वदेकैकशः समस्तैश्च सम्पत्करपुष्पहोमविधानमुपदि-

हवनाल्लभते लक्ष्मीं सभूभूषणवाहनाम् ।
विमध्यक्तैस्तथैकैकैः सर्व्वैर्व्वा साधकोत्तमः ॥ ६५ ॥
केतकीकुसुमैः क्षौद्रप्लुतैर्होमात्तु तद्दिनैः ।
वासांसि लभते चित्राण्यनर्घाणि बहून्यपि ॥ ६६ ॥
सितैः प्रसूनैः क्षौराक्तैर्होमादाप्नोति तद्दिनैः ।
सितानि वासांसि तथा मुक्तादामानि रूप्यकम् ॥ ६७ ॥
हुनेत् कुरुवकैः क्षौद्रप्लुतैर्व्वाञ्छितसिद्धये ।
तथा दमनकैः पत्रैर्हवनाच्छ्रियमश्नुते ॥ ६८ ॥
यद्वर्णानि प्रसूनानि जुहुयाद्विद्यया प्रिये ।
तद्वर्णान्येव वासांसि लभते साधको ध्रुवम् ॥ ६९ ॥
मरीचैः सर्षपैस्तैलप्लुतैर्होमान्निशासु तैः ।
लज्जाभानकुलत्यागलोलामिष्टां समानयेत् ॥ ७० ॥

---

शति। तत्र कमलद्वयैः रक्तकमलैः सितकमलैश्च। प्राग्वत् क्षौद्राक्तैः। नन्दादि-पूर्णान्तं प्रतिपत्षष्ठेरकादश्यादि पञ्चमोदशमीपञ्चदश्यन्तं। वा विकल्पे। तथा कह्लाराद्यैः पञ्चभिः ॥ ६५ ॥

केतकीत्यादिना श्लोकेनानर्घविचित्रवासःसिद्धिकरहोमविधानमुपदिशति। तत्र तुर्विशेषे। तद्दिनैः प्राग्वन्मण्डलात्। लभते साधक इति शेषः। अनर्घाणि वरार्घाणि ॥ ६६ ॥

सितैरित्यादिना श्लोकेन सितवासोमुक्तादामरूप्यसिद्धिकरहोमविधानमुपदिशति। तत्र तथा लभते इति यावत् ॥ ६७ ॥

हुनेदित्यादिना श्लोकेन वाञ्छितकरं लक्ष्मीसिद्धिकरं च होमविधानमुपदिशति। तत्र हुनेत् जुहुयात्। तथा क्षौद्रप्लुतैरिति यावत्। पत्रैः तमालस्य ॥ ६८ ॥

यद्वर्णानीत्यादिना श्लोकेनाभीष्टवर्णवासःसिद्धिकरहोमविधानमुपदिशति। तत्र विद्यया ललितया। प्रिये इति सम्बुद्धिः। तद्वर्णानि हुतप्रसूनवर्णानि ॥ ६९ ॥

मरीचैरित्यादिभिः सितान्वितैरित्यन्तैश्चतुर्भिः श्लोकैः वनिताकर्षणवशी-

पाटलीकुन्दमन्दारशेफालिकुसुमोद्भवैः ।
चम्पकाशोकपुन्नागनमेरुकुसुमैः शुभैः ॥ ७१ ॥
हवनाद्वशयेत् सर्ववनिताः क्षौद्रसंप्लुतैः ।
तैरेवाज्यप्लुतैर्होमाद्वशयेत् पुरुषानपि ॥ ७२ ॥
तै राज्यलक्ष्मीं लभते घृताक्तैर्हवनान्निशि ।
समस्तजीवभुवनं वशयेत्तैः सितान्वितैः ॥ ७३ ॥
अन्नैर्घृताप्लुतैर्नित्यं हवनादन्नवान् भवेत् ।
तथैव जुहुयान्नित्यमायुषि तिलतण्डुलैः ॥ ७४ ॥
मध्यरात्रे तु लवणैः सुश्लिष्टपरिचूर्णितैः ।
त्रिमध्वक्तैर्हुतैः सर्वान् वशयेदङ्गनाजनान् ॥ ७५ ॥
तथा दध्यन्वितैर्लोणैर्होमाद्द्वेष्यं वशं नयेत् ।
तथा पुण्ड्रेक्षुतोयाक्तैर्हुतैः सुप्रवंशगा नृपाः ॥ ७६ ॥
आज्यैस्तु केवलैर्होमाद्दिनैरुक्तैर्धनी भवेत् ।
नित्यशो घृतहोमेन श्रीमान् भोगी च जायते ॥ ७७

---

करणपुरुषवशीकरणराज्यलक्ष्मीसिद्धिकरसमस्तप्राणिवशीकरणहोमविधानमुपदिशति । तत्र निशासु मध्यरात्रेषु । इष्टां दयितां वनितां । नमेरुकुसुमैरित्यत्र कुसुमशब्दः पूर्वार्द्धसमुद्भवैरित्यत्र वश्ययोगः । तैः पाटल्यादिभिरष्टभिः पुष्पैः । अपि शब्दः समुच्चये । तैः अष्टभिः पुष्पैः । निशि प्रागवदर्द्धरात्रे । तैः प्राग्वत् पुष्पैः । सितान्वितैः शर्करायुक्तैः ॥ ७३ ॥

अन्नैरित्यादिभिर्नृपा इत्यन्तैस्त्रिभिः श्लोकैः वश्यसिद्धिकरहोमविधानमुपदिशति । तत्र नित्यहवनात् प्रतिदिनहोमेन । तथैव घृताप्लुतैः । तिलतण्डुलैः तिलैस्तण्डुलैश्च । तुर्विशेषे । तथा मध्यरात्रे । तथा प्राग्वत् ॥ ७६ ॥

आज्यैरित्यादिना श्लोकेन केवलाज्यहोमस्य फलमुपदिशति । तत्र तुर्विशेषे । दिनैरुक्तैर्मण्डलात् । चः समुच्चये ॥ ७७ ॥

स्नातोऽनुलिप्तः स्रग्वी च सितगन्धस्रगम्बरः ।
संपूज्य देवीं हृष्टात्मा संस्कृते हव्यवाहने ॥ ७८ ॥
सवत्सायाः सितायाः गोः पयसि द्विगुणे पचेत् ।
प्रस्थमात्रं तण्डुलन्तु शालिजं सितमेव च ॥ ७९ ॥
सितदुग्धघृतोपेतं कृत्वा वै सिक्थकं महत् ।
गृहीत्वा पाणिना विद्यां जपित्वा शतवारकं ॥ ८० ॥
श्रियं मे देहि देवीति कृत्वा काष्ठोज्ज्वलानले ।
हुत्वा समाप्य पूजान्तु तथा भुक्त्वा तु तद्दिनं ॥ ८१ ॥*
निरन्तरं नित्यशश्च जुहुयाच्च तदन्वयम् ।
न कदाचिद्रमा मुञ्चत्यद्भुता मन्त्रशक्तयः ॥ ८२ ॥
पायसं जुहुयात् पूर्णास्वर्कवारेषु साधकः ।
निवेदयेच्च पूजायामब्दाद्धातमो भवेत् ॥ ८३ ॥

---

स्नात इत्यादिभिः शक्तय इत्यन्तैः पञ्चभिः श्लोकैः साधकतत्कालकर्त्तव्यसहितं लक्ष्मीप्राप्तिकरहोममुपदिशति । तत्र चः समुच्चये । सितगन्धस्रगम्बर इत्यत्र सितशब्दः प्रत्येकमन्वेति । देवीं ललितां । सितायाः सितवर्णायाः । द्विगुणे प्रस्थद्वयमात्रे । तुर्विशेषे । सितमिति तण्डुलविशेषणम् । वा विकल्पे । सितदुग्धघृतोपेतं शर्करादुग्धघृतोपेतं । सिक्थमित्यस्य काकाक्षिन्यायेनोभयत्रान्वयः । कृत्वेति पूर्वत्र गृहीत्वेत्युत्तरत्र च । विद्यां ललिताविद्यां । श्रियं मे देहि देवोति समाचरीविद्यां हुत्वा । तत्सिक्थकं तथा भुक्त्वा सवत्ससितगोक्षीरपाचितमन्नं सितदुग्धघृतसमेतं भुक्त्वा । तद्दिनं हुतदिनं । निरन्तरं प्रतिदिवसं । नित्यशः यावज्जीवं । तदन्वयं साधककुलं । रमा लक्ष्मीः । अद्भुताः अप्रमेयवैभवाः ॥ ८२ ॥

---

* इत परमधिकं पद्यार्द्धं पुस्तकान्तरे दृश्यते—मौनी तु गमयेदब्दाच्छ्रियं प्राप्नोति पुष्कलाम् ।

सवत्साऽरुणवर्णाया गोः क्षीरान्नवनीतकम् ।
तद्दिनान्नन्तु कह्लारप्रसूने विक्षिपेत्ततः ॥ ८४ ॥
तदुद्धृत्य हुनेदग्नौ भौमवारे तदुच्चगे ।
काले तावद्दिनैर्लक्ष्मीं भूम्याढ्यां लभते ध्रुवम् ॥ ८५ ॥
तथा धवलरूपाया नवनीतं सिताम्बुजे ।
निधायादाय मौनी तु हुनेदग्नौ भृगोर्दिने ॥ ८६ ॥
सप्तवारप्रयोगेन महतीमाप्नुयाच्छ्रियम् ।
नृपमान्यां सर्वहृद्यां नानाभोगान्वितां शुभाम् ॥ ८७ ॥
तथारुणासमुद्भूतं नवनीतं रवेर्दिने ।
निधाय विकचे पद्मे कर्णिकायां ततस्तु तत् ॥ ८८ ॥
जुहुयादष्टभिर्वारैराढ्यः स्यात् साधकः शिवे ।
कर्णिकारस्य पुष्पाणि तथा चम्पकजानि वै ॥ ८९ ॥

---

पायसैरित्यादिना श्लोकेन लक्ष्मीप्राप्तिकरं पूर्णास्वर्कवारेषु च होममुपदिशति । तत्र निवेदयेत् पायसमिति शेषः । चः समुच्चये ॥ ८३ ॥

सवत्सेत्यादिभिर्गामिनोत्यन्तैरध्यर्द्धैः सप्तभिः श्लोकैः सम्पत्प्राप्तिकरं नवनीतसहितकह्लारादिपुष्पहोममुपदिशति । तत्र तद्दिनान्नं अनुषितं । तुर्विशेषे । कह्लारप्रसूने दीर्घिकास्थविकसितकह्लारप्रसूनोदरे । ततः दीर्घिकायाः । तन्निक्षिप्तनवनीतकह्लारप्रसूनं उद्धृत्य मौनिनेति शेषः । हुनेत् जुहुयात् । अग्नौ संस्कृते इति शेषः । तदुच्चगे काले मङ्गलाधिष्ठितराशेश्चतुर्थराश्युदयकाले । तावद्दिनैर्मण्डलात् । तथा धवलरूपायाः सवत्सायाः धवलवर्णाया गोः नवनीतं तद्दिनात्तमित्यर्थः । सिताम्बुजे प्राग्वत् सितपद्मे । भृगोर्दिने तत्रापि तदुच्चकाले । सप्तवारप्रयोगेन भृगुवारसप्तकप्रयोगेन । तथारुणासमुद्भूतं सवत्सारुणगोसमुद्भूतं नवनीतं तद्दिनात्तमिति शेषः । ततः दीर्घिकायाः उद्धृत्येत्यर्थः । तुर्विशेषे । तत् पद्मं प्राग्वन्मौनिनेत्यर्थः । अष्टभिर्वारैः रवेरिति शेषः । शिवे इति सम्बुद्धिः । तथा गुरुवारे नवनीताक्तानि नवनीतरुषितानि । उच्चे रवि-

जुहुयान्नवनीताक्तानुच्चे सूर्य्यगते गुरौ ।
निरातङ्को महार्घाश्च राजचौरापहारकैः ॥ ९० ॥
प्राप्नोति महतीं लक्ष्मीं सा तदन्वयगामिनी ।
केवलं नवनीतेन सितोपेतेन होमतः ॥ ९१ ॥
कीर्त्तिलक्ष्मीधनारोग्यविजयैरायुराप्नुयात् ।
वन्धूकैः किंशुकैश्चूतैस्त्रिमध्वक्तैर्हुतक्रिया ॥ ९२ ॥
सौभाग्यलक्ष्मीविजयकान्तिप्रज्ञावहा भवेत् ।
दध्यन्नहोमादन्नाढ्यः साधकः स्यात्त्रिमासतः ॥ ९३ ॥
आर्द्रेषु तालपत्रस्य खण्डेषु निजवाञ्छितम् ।
विलिख्य नवनीतेन समेतं जुहुयान्निशि ॥ ९४ ॥
मण्डलान्मासतो वारात् प्राप्नोत्येव स्ववाञ्छितम् ।
तथा पलाशपर्णेषु विलिख्य दरदैर्हुनेत् ॥ ९५ ॥
कुङ्कुमैश्चूतपत्रेषु लिखित्वा वा हुनेन्निशि ।
चन्दनैः पानसे पत्रे विलिख्य जुहुयात्तथा ॥ ९६ ॥

---

मध्यस्थलग्नाद्दशमराशिस्थिते इत्यर्थः । सूच्चगते कर्कटराशिगते । तदन्वयगामिनी साधककुलगामिनी ॥ ९१ ॥

केवलमित्यादिनार्द्धद्वयेन केवलं सितोपेतनवनीतहोमफलमुपदिशति । तत्र केवलं पुष्परहितं । सितोपेतेन शर्करोपेतेन । कीर्त्तिलक्ष्मीधनारोग्यविजयैः सहेति शेषः ॥ ९२ ॥

वन्धूकैरित्यादिना मासत इत्यन्तेनार्द्धाधेन श्लोकेन किंशुकचूतपुष्पदध्यन्नहोमफलमुपदिशति । तत्र चूतैः सहकारपुष्पैः । दध्यन्नहोमात् दधिमिश्रितान्नहोमात् ॥ ९३ ॥

आर्द्रेष्वित्यादिभिरुदीरितैरित्यन्तैः सप्तभिः श्लोकैः निजवाञ्छितसिद्धिकर तल्लिखितपत्रहोमविधानं तद्दियाहवनवैभवञ्चोपदिशति । तत्र निशि अर्द्धरात्रे ।

पञ्चखोदैर्विलिख्येष्टं नागवल्लीदलैर्युतैः।
हुतैरवाप्नोति निजं वाञ्छितं प्रोक्तकालतः॥ ९७॥
कस्तूरीलिखितन्त्विष्टं पत्रे चम्पकभूरुहः।
तैर्हुतैस्तदवाप्नोति तद्दिनैस्तद्विधानतः॥ ९८॥
एलालवङ्गकक्कोलजातीफलसमन्वितैः।
सितैरालिख्य च स्वेष्टं पत्रे पद्मसमुद्भवे॥ ९९॥
जुहुयात्तस्य संसिद्धै बहुभिः किमिहोदितैः।
नासाध्यमस्ति भुवने विद्याहोमैरुदीरितैः॥ १००॥
शुद्धविद्यामयी व्याप्तिरिति सम्यक् समीरिता।
अस्या निष्कालनाच्चित्ते तत्तत्त्वं स्वात्मसात् कृतम्॥

इति शोडशनित्यातन्त्रेषु श्रीकादिमते होमात् काम्यफलोदयो नाम द्वाविंशपटलम्॥ ३२॥ ०॥

---

इति यावत्। मण्डलाभ्यासतो वारात् कार्यगौरवलाघवानुगुण्यतः। तथा नवनीतसमेतं। विलिख्य निजवाञ्छितमिति शेषः। वा समुच्चये। निशि मध्यरात्रे। तुर्विशेषे। तैः नागवल्लीदलैः। प्रोक्तकालतः प्रागुक्तमण्डलादिनः। चम्पकभूरुहः चम्पकवृक्षस्य। तैः चम्पकपत्रैः। तद्दिनैः प्राग्वत्। तद्विधानतः प्रोक्तहोमविधानतः। सितैः शर्कराभिः। स्वेष्टं स्ववाञ्छितं। जुहुयात् तत् पद्मपत्रैरिति शेषः। तस्य स्वाभिमतस्य॥ १००॥ ॐ॥ ०॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसारसिंहराजप्रकाशाभिधानेन सुभगानन्दनाथेन विरचितायां मनोरमाख्यायां व्याख्यायां सौमरहोमविधानप्रकाशनपरं द्वात्रिंशत् पटलं परिपूर्णं परामृष्टम्॥ ३२॥ ॐतत्सत्॥

ग्रन्थसंख्या—द्वात्रिंशे पटले प्रोक्ता व्याख्याग्रन्थाः शतात् परम्।
एकाधिका सप्ततिस्तु न स्युर्थेन्नाणि चात्र वै॥

## त्रयस्त्रिंशपटलम् ।

अथ षोड़शनित्यानामाद्या या ललितोदिता ।
तस्या यन्त्राणि कथ्यन्ते तद्विद्याभेदसम्भवैः ॥ १ ॥
रूपैः षष्टिसमोपेतैर्नवशत्या यथाविधि ।
समस्तवाञ्छितावाप्तिकारणानि कृतात्मनाम् ॥ २ ॥
ललितानित्यपूजायां यन्त्रं विश्वात्मविग्रहम् ।
षोड़शानाञ्च तस्याश्च पूजाकमलचक्रकम् ॥ ३ ॥
अमृताख्यघटं यन्त्रं सिद्धवज्रमतः परम् ।
कोष्ठवज्रं वज्रलिङ्गं मेरु[सेतु]लिङ्गं यथाविधि ॥ ४ ॥

---

पूर्व्वस्मिन् द्वात्रिंशे पटले षोड़शनित्याविद्यासिद्धानां सौम्यहोमविधानमुपदिश्यानन्तरं तेषां वाञ्छितप्राप्तिकराणि ललिताविद्यायाः स्वरूपभेदसमुत्थानि कानिचिद्यन्त्राण्युपदिशत्यथषोड़शनित्यानामित्यादिना यन्त्रसिद्धाभिधागमे इत्यन्तश्लोकशतरूपेण त्रयस्त्रिंशेन पटलेन। तत्र अथ षोड़शेत्यादिभिः क्रमादित्यन्तैः पञ्चभिः श्लोकैः पटलार्थकथनप्रस्तावपुरःसरं तदर्थानुद्दिशति। तत्र आद्या सकलकारणभूता प्रधानेत्यर्थः। ललिता संज्ञेति शेषः। उदिता तृतीयपटले। तस्या ललितायाः। तद्विद्याभेदसम्भवैः तत्श्रीविद्यातार्त्तीय खण्डभेदसमुत्थैः। रूपैः षष्टिसमोपेतैर्नवशत्या। एतदुक्तं भवति श्रीविद्यायाः तार्त्तीयखण्डस्य चतुरक्षरभेदाः चतुर्विंशतिः। तत्पञ्चाक्षरविद्याभेदा विंशत्यधिकशतं। तत्षड़क्षरभेदा विंशत्यधिकसप्तशतं। अपुनरुक्ताक्षराणां षण्णां प्रत्येकं षोड़शस्वरयोगतो भेदाः षण्णवतिः सम्भूय षष्ट्यात्तरनवशतभेदाः तैरिति। एतेषां भेदनप्रकारं पञ्चत्रिंशे पटले वक्ष्यतीति। यथाविधि अनूनाधिक प्रमाणादिति। कृतात्मनां गुरुचरणकमलभजनभव्यचेतसां। यन्त्रं श्रीचक्रं। विश्वात्मविग्रहं पञ्चभूतत्रिधामकालात्मकत्वात्। षोड़शानां नित्यानां निर्द्धारणे षष्ठी। तस्या ललितायाः। चः समाहारे। पूजाकमलचक्रकं कमलरूपं पूजा-

महालिङ्गं योनियन्त्रं तथा तद्वज्रवज्रकम् ।
तदेव च महाकारं कोष्ठयन्त्राणि च क्रमात् ॥ ५ ॥
नवहस्तं त्रिहस्तं वा श्रीचक्रमभिषेचने ।
कुर्य्यात् स्थण्डिलपूजायां हस्तमात्रेऽतिसुन्दरम् ॥ ६ ॥
रत्नादिषु तु निर्म्माणे मानमिच्छावशाद्भवेत् ।
सदा सुविहिते पूजा शुभान्यस्मिंस्तथान्यथा ॥ ७ ॥
भ्रमेण वृत्तं निष्पाद्य सुसमे चतुरस्रके ।
प्रमृज्य तिर्य्यङ्मध्यस्थं सूत्रं तिर्य्यङ्‌निपातयेत् ॥ ८ ॥

---

चक्रम् । अमृताख्येत्यादिना श्लोकेन यन्त्रपञ्चकं । तत्र अमृताख्यघटं अमृतघटाख्यं । अतःपरं सिद्धवज्रयन्त्रविधानोपदेशात् परं । यथाविधि प्राग्वत् । महालिङ्गं महालिङ्गाभिधानं । योनियन्त्रं योनिसंज्ञं यन्त्रम् । तद्वज्रवज्रकं वज्रवज्रयन्त्रमित्यर्थः । तदेव च महाकारं महावज्रं महावज्राभिधानं यन्त्रमित्यर्थः । कोष्ठयन्त्राणि कोष्ठाकाराणि समविषमभद्राद्यात्मकान्यनन्तानि यन्त्राणि । क्रमात् उद्दिष्टक्रमात् ॥ ५ ॥

नवहस्तमित्यादिभिः सिद्धिदमित्यन्तैः षोड़शभिः श्लोकैः ललिताया अभिषेकनित्यपूजाश्रीचक्रनिर्माणसमुदायमात्रादिकमुपदिशति । तत्र नवहस्तेत्यादिना श्लोकेनाभिषेके स्थण्डिलपूजायां च श्रीचक्रस्य मानमुपदिशति । तत्र वा विकल्पसमुच्चये । हस्तमात्रे स्थण्डिले इत्यर्थः । एतदनुक्तश्रीनाथादि सकलार्चाचक्रसाधारणं । अतिसुन्दरं वक्ष्यमाणमानाद्यलङ्घितं कुर्य्यादित्यर्थः ॥ ६ ॥

रत्नेत्यादिना श्लोकेन रत्नाद्यधिकरणेषु विनिर्माणे श्रीचक्रस्य स्वेच्छामानत्वं तस्य समीचीनविनिर्माणे फलं तदकरणे प्रत्यवायश्चोपदिशति । तत्र तुर्विशेषे । सुविहिते समीचीनविनिर्मिते श्रीचक्रे । अन्यस्मिन् उक्तलक्षणादिरहिते तथा पूजा अन्यथा अशुभा ॥ ७ ॥

भ्रमेणेत्यादिभिरुत्तममित्यन्तैः सप्तभिः श्लोकैः श्रीचक्रस्यकर्णिकान्तर्गतत्रि-

सूत्राणि नव तेषु द्वे वृत्तस्पृष्टोभयान्तके ।
विधाय तद्द्वयोरन्तान्मध्यसूत्रान्ततः क्रमात् ॥ ९ ॥
कृते सूत्रचतुष्के तु षट्कोणं स्यात्त्रिसप्तकम् ।
द्व्यष्टाग्रतः समारम्भान्नवमं प्रथमान्तरा ॥ १० ॥
कुर्य्यात् सूत्रचतुष्कन्तु चतुर्म्मर्म्मानुगुण्यतः ।
नवमप्रथमाग्राभ्यां तिर्य्यक् सप्तमकावधि ॥ ११ ॥
कुर्य्यात् सूत्रचतुष्के तु मर्म्माष्टकविभेदनात् ।
ततश्चतुष्कषष्ठान्तद्वयारम्भात्तथाष्टगम् ॥ १२ ॥
द्वितीयगञ्च सूत्राणां चतुष्कं पातयेत्तथा ।
चतुर्म्मर्म्मानुगुण्येन ततः पञ्चमकान्तयोः ॥ १३ ॥

---

चत्वारिंशद्योन्यात्मकं स्थितिसंहारात्मकं प्रत्येकं पञ्चीकरणात्तद्द्विविधं मध्य चक्रद्वयमुपदिशति । तत्र चतुरस्रके एकोनत्रिंशपटलोक्तरूपे । तत्र वृत्तमध्ये तिर्य्यगुदक्षिणोत्तरं निपातयेदित्यस्य सूत्राणीत्यनेनोत्तरत्रान्वयः । नव नवसंख्यानि । तेषु तिर्य्यक्सूत्रेषु नवसु । द्वे पश्चिमादितृतीयसप्तमे सूत्रे । वृत्तस्पृष्टोभयान्तके वृत्तस्पृष्टोभयाग्रे । तद्द्वयोः वृत्तस्पृष्टसूत्रयोः । अन्तात् अग्रचतुष्कात् आरभ्येति शेषः । मध्यसूत्रान्ततः प्राक्प्रत्यगायतब्रह्मसूत्रस्य प्रागग्रान्तं पश्चिमाग्रान्तञ्च । क्रमात् प्रोक्तव्यत्यासक्रमात् । सूत्रचतुष्के सम्भूयेत्यर्थः । तुरवधारणे । षट्कोणं स्यात् त्रिसप्तकं ब्रह्मसूत्रस्य प्राक्प्रत्यगग्रात् तृतीयसप्तमतिर्य्यक् सूत्रद्वन्द्वदक्षिणोत्तराग्रान्तं षट्कोणं स्यात् सम्भूयेत्यर्थः । तुरवधारणे । चतुर्म्मर्मानुगुण्यतः पूर्व्वलिखित षट्कोणगतमर्मचतुष्टयभेदेन नवमप्रथमाग्राभ्यां पश्चिमादिनवमतिर्य्यक्सूत्राग्रद्वयात् प्रथमतिर्य्यक्सूत्राग्रद्वयाच्च आरभ्येत्यर्थः । तुर्य्यसप्तमकावधि तुर्य्यसप्तमसूत्रयोर्मध्यावधि । चतुर्थसूत्राग्रद्वयारम्भात् षट्सूत्राग्रद्वयारम्भात् च । तथाष्टगं द्वितीयगञ्च । अष्टमरेखामध्यान्तं द्वितीयरेखा

तृतीयगं सूत्रयुगं कुर्य्यान्मर्म्मद्वयाश्रयम् ।
मार्जयेन्मध्यगं ब्रह्मसूत्रं स्याच्चक्रमुत्तमम् ॥ १४ ॥
वहिरष्टच्छदाम्भोजं तथा तद्विगुणच्छदम् ।
विधाय षड्भिर्वृत्तैश्च चतुरस्रे तथाष्टभिः ॥ १५ ॥
सूत्रैर्विधाय तस्यैव प्राक्प्रत्यग्द्वारसंयुतम् ।
दक्षिणोत्तरतो रेखात्रयात् स्थानद्वयात्तथा ॥ १६ ॥
कोणेषु तिर्य्यक् सूत्रैश्च चतुर्भिस्तान्यनुक्रमात् ।
द्विधा कुर्य्याच्च चत्वारि पदानि परमेश्वरि ॥ १७ ॥

---

मध्यान्तञ्च । तथा व्यत्यासक्रमात् । पञ्चमकान्तयोः पञ्चमतिर्य्यग्रेखाग्रयोः आरम्भात् तृतीयगं तृतीयसूत्रमध्यगं ॥ १४ ॥

वहिरित्यादिभिः परमेश्वरीत्यन्तैः त्रिभिः श्लोकैः तद्वाह्यस्थस्रष्टात्मकपद्मद्वय-चतुरस्रनिर्माणद्वयमुपदिशति । तत्र वहिः प्रोक्तचक्रवाह्यगतवृत्ताद्वहिः । अष्ट-च्छदाम्भोजमित्युक्त्या तत्कर्णिकोदरे प्रोक्तचक्रस्य विलेखनीयत्वात्तद्वहिरपि केशरार्थमेकं वृत्तं निष्पाद्य तद्वहिरष्टपत्राणीति यावत् । तथा तद्विगुणच्छदं षोड़श-पत्रं पद्मं । अष्टपत्रकमलाद्वहिःस्थवृत्तवाह्ये षोड़शपत्रकमलस्य केशरार्थमेकं वृत्तं निष्पाद्य षोड़शपत्राणि षड्भिर्वृत्तैः कर्णिकोदरे प्रोक्तमध्यचक्रद्वयनिर्माणार्थ-मेकं तद्वहिस्तत्संलग्नतया कर्णिकार्थमेकं तद्वहिरष्टपत्रपद्मकेशरार्थमेकं तत् पद्माद्वहिस्तत्पर्य्यन्तसाम्यार्थमेकं तद्वहिः षोड़शपत्रपद्मकेशरार्थमेकं परिवेषार्थ-मेकं च सम्भूय षड्भिर्वृत्तैरित्यर्थः । अष्टभिः सूत्रैः अष्टसूत्रैः पूर्वोक्तचतुरस्ररेखा-चतुष्टयेन सार्द्धमस्य सूत्रैरितुग्रत्तरत्रान्वयः । तस्य चतुरस्रस्य । प्राक्प्रत्यग्द्वार-संयुतं प्राक्प्रत्यक्पार्श्वयोश्चतुरस्रविस्तारमानस्थानद्वयद्वारसंयुतमित्यर्थः । दक्षि-णोत्तरतः चतुरस्रस्य रेखात्रयात् चतुरस्रविस्तारमानेन मध्ये तत्प्राक्पश्चिम-तिर्य्यग्रूपरेखात्रयेणेत्यर्थः । तथा विधाय । कोणेषु तिर्य्यक्सूत्रैश्चतुर्भिः । तान्यनु-क्रमात् द्विधा कुर्य्याच्चत्वारि पदानि इत्यन्तेनैतदुक्तं भवति चतुरस्रकोणकोष्ठ-चतुष्टये प्रतिकोष्ठं सूत्रास्फालनेन द्विधा कुर्य्यादिति । परमेश्वरीति सम्बुद्धिः ॥ १७ ॥

**ललिताचार्चक्रमिदं लभ्यं सद्‌गुरुतः क्रमात् ।**
**सुन्दरं सुसमं सर्वलक्षणैश्च समन्वितम् ॥ १८ ॥**

ललितेत्यादिभिः सिद्धिदमित्यन्तैश्चतुर्भिः श्लोकैः ललिताचक्रस्य सद्‌गुरुप्रसादात् लभ्यत्वं तल्लक्षणादिकञ्चोपदिशति । तत्र इदं प्रोक्तं लभ्यं सद्‌गुरुतः क्रमात् अविच्छिन्नपारम्पर्य्यक्रमसंसिद्धक्रमागमसमयाचारनिरतात् कृतपूर्णाभिषेकात्तत्त्वविदो गुरोर्द्वितीयपटले उक्तलक्षणेत्यादिभिर्धनादिभिरित्यन्तैर्द्विपञ्चाशत्तमश्लोकादिषड्‌भिः श्लोकैः उक्तक्रमात् । लब्धविद्येन साधकेनेत्यर्थः । सुसमं अन्यूनाधिकप्रमाणं । सर्व्वलक्षणैः अनन्तरवक्ष्यमाणैः । अधोमुखैः त्रिकोणैः । नवभिः सम्भूय । एकसूत्रस्थैः ब्रह्मसूत्रस्थिताग्रैः । एतच्छ्रीचक्रं अतिसुन्दरं । अतएव वृत्तस्पृष्टषड्स्रं वाह्यगतचतुर्दशारात्रेषु प्रोक्तप्रकारेण प्रथमलिखितषट्कोणाग्रषट्कं । तदस्पृष्टाष्टकं वृत्तास्पृष्टतदितरास्राष्टकं । तथा उक्तप्रकारेण । मर्म्मभिः अनन्तरवक्ष्यमाणलक्षणोपेतैः षड्‌रेखासन्धिस्थानमिति शेषः । द्वयसङ्गमात् रेखयोरिति शेषः । चतुर्विंशतियुतं सन्धिचतुर्विंशतियुतं । अयमत्र कुम्भस्थापनपक्षे विहस्तमानचक्रस्य विरचनाक्रमः । सुसमे शुद्धे भूतले मध्ये हंसपदं विधाय तत्सद्दशस्थानमारभ्य प्रतिपार्श्वं षट्‌त्रिंशदङ्गुलत्र्यङ्गुलदशाङ्गुलमानभ्रमेण वृत्तं निष्पाद्य तद्वहिस्तत्संलग्नं वृत्तं तद्वहिस्त्र्यङ्गुलदशाङ्गुलमानक्रमेण सम्भूय प्रथमनिष्पादितेन वृत्तेन सह वृत्तषट्कमलान्तरात् वाह्यतो विधाय तत्र प्राक्‌प्रत्यग्‌दृक्सूत्रं दक्षिणोत्तरतिर्य्यङ्‌मध्यसूत्रञ्च सर्व्ववाह्यवृत्ताद्वहिः प्रतिदिशं दशदशाङ्गुलमानावध्यास्फाल्य तत्सूत्राग्रचतुष्टयस्य तत्सर्व्ववाह्यवृत्ते यत्र यत्र सम्पातस्तत्तत्स्पृष्टास्पृष्टिकया मानं तत्सूत्राग्रचतुष्टयस्पृष्टास्पृष्टिकया च चतुश्चत्वारिंशदधिकशताङ्गुलमानैरष्टभिः सूत्रैः परितोन्तर्वहिर्विभागेन समचतुरस्रद्वारद्वयं कोणकोष्ठसहितं कृत्वा चतुरस्रस्य पश्चिमप्राचीनवीथीद्वये मध्यसूत्राद्दक्षिणोत्तरयोः पञ्चपञ्चाङ्गुलमानेन त्वेकैकां तिर्य्यग्रेखां कृत्वा तयोर्मध्यस्थाङ्गुलदशकमानेन समचतुरस्रद्वारद्वयं विधाय तयोर्द्वारयोर्द्दक्षिणोत्तरतो दशदशाङ्गुलमाने तिर्य्यक्सूत्रमेकमेकमास्फाल्य तच्चतुरस्रदक्षिणोत्तरवीथ्योर्मध्यसूत्रात् प्राक् पश्चिमतो दश दशाङ्गुलमाने तिर्य्यक्सूत्रमेकैकं कृत्वा तच्चतुरस्रकोणकोष्ठचतुष्टये तिर्य्यग्रूपं कोणसूत्रमेकमेकं सम्भूय तच्चतुष्टयं वाह्याभ्यन्तरतो विधाय तदन्तर्दशाङ्गुलमानवृत्तवाह्यवीथ्यां दिग्विदिक्षु तदन्त-

अधोमुखैः पञ्चभिश्च चतुर्भिश्च तथोर्द्ध्वगैः ।
नवभिस्त्वेकसूत्रस्थैः स्यादेतदतिसुन्दरम् ॥ १९ ॥
वृत्तस्पृष्टषडस्रञ्च तदस्पृष्टाष्टकं तथा ।
मर्म्मभिश्चाष्टदशभिर्युतं चक्रं सुलक्षणम् ॥ २० ॥

---

रालेषु च सम्भूय षोड़शदलान्यन्यान्यतुल्यमानानि सोपदलानि षोड़श निष्पाद्य तदन्तर्दशाङ्गुलमानवृत्तवीथ्यां दिग्विदिक्ष्वष्टदलानि प्रागवद्विधाय ततः सर्व्व-मध्यस्थवृत्तमध्ये दक्षिणोत्तररेखां मार्जयित्वा द्विसप्तत्यङ्गुलमानात्मकं तत्सर्व्व-मध्यमस्मिन् पटले चतुर्विंशश्लोकादिवक्ष्यमाणक्रमादष्टचत्वारिंशदंशं कृत्वा-तद्ब्रह्मसूत्रे प्रागादिषट्षट्पञ्चाशमाने तिर्य्यक्सूत्रत्रयं कृत्वा पुनरपि पश्चिमादिषट् षट् षड़ंशमाने तिर्य्यक्सूत्रत्रयञ्च विधाय तत्प्रागादितृतीयसूत्रस्य सप्तमसूत्रस्य च मध्ये वक्ष्यमाणमर्मानुगुणतिर्य्यक्सूत्रत्रयस्य स्थानं कर्त्तव्य-तया मनसा परिकल्प्य तैः सह नवसु तिर्य्यक्सूत्रेषु सर्व्वपश्चिमस्थं सूत्रं प्रथमं परिकल्प्य तत्(सं)क्रमात्तेषु तृतीयसप्तमरेखाद्वयं वृत्तस्पर्शि कृत्वा तत्तृतीय-सूत्राग्रद्वयादिब्रह्मसूत्रप्रागग्रवृत्तसम्पातं सूत्रद्वयं तत्सप्तमसूत्राग्रद्वयादिब्रह्म-सूत्रपश्चिमवृत्तसम्पातान्तं सूत्रद्वयञ्च सम्भूय सूत्रचतुष्टयमास्फाल्य षट्कोणं कृत्वा पुनस्तन्नवमरेखामध्यादिप्राग्विलिखितषट्कोणपश्चिममर्मानुगुणगतिवशेन यावद्द्वितीयरेखोभयपार्श्वगतं सूत्रद्वयं तत् प्रथमरेखामध्यादि षट्कोणप्राचीन मर्मद्वयानुगुणगतिवशेन यावदष्टमरेखाग्रद्वयान्तं सूत्रद्वयं सम्भूय सूत्रचतुष्टयं मर्म्मचतुष्टयानुगुणमास्फाल्य पुनर्ब्रह्मसूत्रप्रागादिप्रसारितरेखाद्वये त्वष्टमसूत्रो-भयपार्श्वयोः सम्पातस्य नवमसूत्रमध्यात् प्रसारितरेखाद्वये सप्तमसूत्रोभयपार्श्वयोः सम्पातस्य चानुगुणान्नवमसूत्रोभयपार्श्वादिब्रह्मान्तञ्च सम्भूय मर्म्मचतुष्टयानुगुणं सूत्रद्वयमास्फालयेत् । तत्सूत्रद्वयस्य ब्रह्मसूत्रे यत्र सम्पातः तत्पश्चिमादिचतुर्थ-तिर्य्यक्सूत्रस्य स्थानं भवति । पुनस्तत्सप्तमसूत्रमध्यादिपश्चिमत उभयपार्श्वस्थमर्म्म-द्वयानुगुण्येन यावत् प्रथमतिर्य्यक्सूत्रोभयपार्श्वं सम्भूय चतुर्मर्मानुगुण्येन सूत्रद्वय-माष्फाल्य पुनरष्टमतिर्य्यक्सूत्रमध्यमारभ्य प्रथमसूत्रमध्यात् प्रसारितसूत्रमध्यद्वया-वधि प्रसृततुर्य्यतिर्य्यग्रेखाद्वयान्तं सूत्रद्वयं विन्यसेत् । पुनरष्टमरेखामध्यादि-पश्चिमतः प्रसृतसूत्रद्वयस्य तुर्य्यरेखामध्यादि प्राक्प्रसृत सूत्रद्वयस्य च सम्पातद्वया-

षड्रेखासन्धिमर्म्माख्यं सम्पाताख्यद्वयसङ्गमात् ।
तच्चतुर्व्विंशतियुतं चक्रं सर्व्वार्थसिद्धिदम् ॥ २१ ॥
अन्यथा भिन्नमर्म्मादियुतं चक्रं समर्चयेत् ।
शस्त्राद्वधं महाव्याधिं दारिद्र्यमयशो मृतिम् ॥ २२ ॥
तस्माल्लक्षणसंयुक्तमुक्तरूपं विधाय वै ।
चक्रं तत्रैव तां नित्यमर्चयन् मत्समो भवेत् ॥ २३ ॥
विधाय वृत्तयोर्म्मध्यं चत्वारिंशत् सहाष्टभिः ।
प्रागादितिर्य्यक्सूत्राणि षट्सु षट्सु च पञ्चसु ॥ २४॥

---

नुगुणं नवमसूत्रमध्यात् पश्चिमतः प्रसृतोभयरेखामध्यात् पश्चिमतः प्रसृतोभयरेखामध्यावधि तिर्य्यक् सूत्रं प्रसारयेत् । तत् षष्ठसूत्रं तदग्रद्वयादि द्वितीयरेखामध्यान्तं मर्मद्वयानुगुण्येन सूत्रद्वयमास्फालयेत् । मध्यात् सप्तमसूत्रमध्यादि प्रसृतसूत्रद्वयस्य चोभयाग्रपार्श्वयोर्यत्र सम्पातस्तत्सम्पातद्वयानुगुण्याष्टम सूत्रमध्यात् पश्चिमतः प्रसृतसूत्रद्वयावधि तिर्य्यक् रेखां कुर्य्यात् । सा पञ्चमरेखा तदग्रद्वयमारभ्य तृतीयरेखामध्यावधि सूत्रद्वयमास्फाल्य ब्रह्मसूत्रमार्जनात् वृत्तस्पृष्टषड्स्रे तदस्पृष्टाष्टास्रमष्टादशमर्मोपेतं चतुर्विंशतिसन्धिपूतं श्रीचक्रं भवतीति । अत्र मानवासना मत्प्रोक्तवासनाविमर्शिन्यां द्रष्टव्या ॥ २१ ॥

अन्यथेत्यादिना श्लोकेन प्रोक्तप्रकारमन्तरेण यथादृष्टं चक्रं निर्माय तत्र पूजयतामनर्थविशेषानुपदिशति । तत्र अन्यथा प्रोक्तलक्षणव्यतिरेकेण । मर्मादीत्यत्रादिशब्दः सन्धिविषयः । शस्त्राद्वधमित्यादिफलपञ्चकमर्च्चकाय प्रयच्छतीत्यर्थः ॥ २२ ॥

तस्मादित्यादिना श्लोकेन प्रोक्तप्रकारे चक्रे पूजयतां फलमुपदिशति । तत्र श्रीचक्रे । एवावधारणे । तां ललितां नित्यं प्रतिदिनं अर्च्चयन् पूजयन् मत्समः शिवसमो भवेदिति ॥ २३ ॥

विधायेत्यादिना सुन्दरमित्यन्तेन श्लोकद्वयेन ललितायाः श्रीचक्रनिर्माणे सर्व्वमध्यवृत्तान्तर्भूतचतुर्दशारादिचक्रस्य मानसङ्केतमुपदिशति । तत्र वृत्तयोर्मध्यं सर्व्वमध्यवृत्तप्राक्पश्चिमरेखयोर्मध्यब्रह्मसूत्रमिति यावत् । चत्वारिंशत् सहाष्टभिः अष्टचत्वारिंशदित्यर्थः । अस्य पदस्य विधायेत्यनेनान्वयः । प्रागादितिर्य्यक् सूत्राणि त्रीणीति शेषः । षट्सु षट्सु च पञ्चसु अंशेष्वंशेष्विति शेषः ।

**पश्चिमात् षट्त्रयेऽप्येवं तन्मध्ये मर्म्मयुक्तितः ।**
**विदध्यात्त्रीणि सूत्राणि कुर्य्यात्तेनातिसुन्दरम् ॥ २५ ॥**

---

पश्चिमात् पश्चिमब्रह्मसूत्राग्रस्य सर्व्वमध्यवृत्तस्य च सम्पातमानमारभ्येत्यर्थः । षट्त्रये षट्षड्ंशमानस्थानत्रये । अपिः समुच्चये । एवं त्रीणि सूत्राणि तन्मध्ये प्रागादिद्वितीयसूत्रस्य पश्चिमादिद्वितीयसूत्रस्य च मध्ये । मर्मयुक्तितः मर्मभेदयुक्तिवशात् तत्तत्सूत्रस्य ब्रह्मसूत्रस्य च सम्पातस्थाने । तेन विधानेन । एवं सर्व्वमध्यस्थचक्रस्यैव मानोपदेशात्तन्मध्यचक्रतुल्यमानं बाह्यमपि प्रतिपार्श्वं चतुर्विंशत्यंशं कृत्वा अष्टस्वंशेषु केशरदलपरिवेषचतुरस्रादीनां अवान्तरमानं कलशस्थापनानुगुणं यथाशोभनमिति सम्प्रदायः । विद्याप्राप्त्यादिसकलाभिषेकेष्वेककुम्भस्थापनपक्षे त्रिहस्तमानं चक्रं कर्त्तव्यं । विद्याप्राप्त्यभिषेके कलशानां नवकस्य चतुष्टयस्य वा स्थापनपक्षे पूर्णाभिषेके षण्णवतिकलशस्थापनपक्षे नवहस्तप्रमाणं चक्रं परिकल्पनीयं । एककुम्भस्थापनपक्षे सर्व्ववृत्तमध्यान्तर्भूतानि नवनाथहेतिव्यतिरिक्तानि देवतास्थानानि केशरद्वयं परिवेषं दलानि उपदलानि द्वारद्वयव्यतिरिक्तचतुरस्रञ्च प्रोक्तरजसा रञ्जयेत् । पूर्णाभिषेके षण्णवतिकलशस्थापनपक्षे सर्व्वमध्यस्थाभिमुखत्रिकोणे प्रतिरेखं समान्तरालमेकमेकं चिह्नं विधाय त्रिभिः सूत्रैर्मध्ये त्र्येकं परितस्त्रिकञ्च सम्भूय त्र्यस्रचतुष्टयं कुर्य्यात् । विद्याप्राप्त्यभिषेके कलशचतुष्टयस्थापनपक्षेऽप्येवं कुर्य्यात् । पुनः पूर्णाभिषेके तु एकतिर्य्यग्रेखान्योन्याभिमुखं त्र्यस्रद्वयं चतुर्षु हेतिचतुष्टयस्थापनद्वयप्रदेशेषु त्रिकोणानि विधाय अष्टदलेषु चतुरस्रादिष्वपि वहिस्त्र्यस्रं विधाय तान्यपि रञ्जयेत् । महाशङ्खकलशस्थापनपक्षे प्रोक्तक्रमेण महाचक्रं कृत्वा प्राग्वत् सर्वमध्यहेतिचतुष्टयस्थानद्वारप्रदेशेषु त्रिकोणानि विधायाष्टदलेषु चतुरस्रगतदेवताष्टकस्थानेषु च वहिस्त्र्यं त्रिकोणानि विधाय सम्भूय षण्णवतित्रिकोणेषु प्रतिरेखं समान्तरालं चिह्नत्रयं कृत्वा चिह्नाच्चिह्नं नवसूत्रास्फालनेन प्रतिकोणं बाह्याभ्यन्तरान्तं षोड़श त्रिकोणानि कृत्वा तान्यपि रञ्जयेत् । तत्र सर्व्वमध्ययोन्यां लेखनप्रकारो द्वितीयपटले व्याख्यातोऽस्माभिः । अत्र नवकुम्भस्थापने नवयोनिषु चतुष्कुम्भस्थापने मध्ययोनिस्थत्रिकोणचतुष्टये सर्व्वत्र सर्व्वमध्यस्थापनीयकुम्भएव खारिमाणतोयपूरणीयः । इतराः कलशाः द्विद्विप्रस्थमानतोयपूरणीया इति सम्प्रदायः ॥ २५ ॥

त्र्यस्रं वृत्तं पञ्चदश च्छदानि च ततो वहिः।
अष्टपत्राम्बुजं वाह्ये दशच्छदसरोरुहम् ॥ २६ ॥
पुनर्दशच्छदं पद्मं चतुर्दशदलं ततः।
अष्टच्छदाब्जं द्विगुणच्छदमष्टादशच्छदम् ॥ २७ ॥
विधाय तस्य मध्ये तां समावाह्य यजेत्तथा।
पश्चान्नाथान् पार्श्वयोश्च द्वितीरन्यास्तथार्चयेत् ॥ २८ ॥

---

त्र्यस्रमित्यादिभिराप्नुयादित्यन्तैश्चतुर्भिः श्लोकैर्ललितायाः पञ्चरूपसकलशक्त्यावरणपरिपूर्णं पूजाचक्रं तत्र पूजाफलञ्चोपदिशति। तत्र त्र्यस्रं स्वाभिमुखमित्यर्थः। वृत्तत्र्यस्राद्वहिस्तत्कोणत्रयस्पृष्टापृष्टिकयेति यावत्। पञ्चशदच्छदानि च ततो वहिः इत्यनेनैतदुक्तं भवति वृत्ताद्वहिः केशरार्थं वृत्तं त्र्यस्राद्वहिः तत्कोणं कृत्वा तत्र वाह्ये पञ्चदश च्छदानि लिखेदित्यर्थः। अष्टपत्राम्बुजमित्युक्त्या केशरार्थं वृत्तमालिख्य तद्वहिः अष्टपत्राणि विलिखेदित्यर्थः। वाह्ये अष्टपत्रपद्मवाह्ये पुनर्वहिश्चतुर्दशदलं पद्मं। तद्द्विगुणच्छदं षोड़शदलपद्मं अष्टादशच्छदं प्राग्वद्विशेष्यं। सर्वत्र चक्रेषु दलानामवान्तरमाणं कुण्डपटलोक्ताष्टास्रमानवत् तत् कल्पयेत्। तत्र पुराभागे व्रह्मसूत्रं दलमध्यं यथा तथा कुर्य्यात्। विधायेत्यस्य त्र्यस्रमित्यादिभिर्द्वितीयान्तपदैरन्वयः। तस्य पद्मचक्रस्य। मध्ये सर्व्वमध्यत्रिकोणमध्ये। तां ललितां। तथा नित्यत्वेन कृतिकाद्युक्तक्रमेण पश्चात्तथा। अन्तस्त्रिकोणस्य प्राग्रेखावृत्तयोर्मध्ये पार्श्वयोः अन्तस्त्रिकोणपार्श्वरेखाद्वयमध्यत इत्यर्थः। अन्याः तिथिनित्या अणिमादयश्च। तथा युक्त्या। एतदुक्तं भवति सुसमे भूतले हंसपदं विधाय तत् सन्दंशस्थानमारभ्य प्रतिदिशमष्टादशाङ्गुलमानेन भ्रमेण वृत्तं निष्पाद्य तद्वृत्तमध्ये स्वाभिमुखां योनिं समरेखां निष्पाद्य तद्वहिर्द्व्यङ्गुलपञ्चाङ्गुलमानक्रमेण पूर्व्वनिष्पादितवृत्तेन सह सप्तदशवृत्तानि निष्पाद्य तत्रैकैकान्तरितासु पञ्चाङ्गुलवीथिष्वष्टस्वाभ्यन्तराद्वाह्यगत्या पञ्चदशदलाब्जेऽग्रादिप्रादक्षिण्येन तिथिनित्याः सर्व्वबाह्यस्याष्टदशदलेषु प्राक्प्रत्यग्दलद्वयं द्वारस्थानं परिकल्प्य एवं क्रमाद्दिग्विदिक्क्रमेण प्राग्वच्चतुरावृत्त्याणिमादींस्तदन्तःषोड़शदलेषु प्राग्वन्नित्याकलाः तदन्तरष्टदलेषु प्राग्वदनङ्गकुसुमादीं स्तदन्तश्चतुर्दशदलेषु प्राग्वत् सं-

एतस्मिन् पद्मचक्रस्य मध्ये तासां प्रपूजनात् ।
महतीं श्रियमाप्नोति ज्ञानान्माञ्च समाप्नुयात् ॥ २८ ॥
पूर्व्वस्मिन् पूजयेद्देवीमुक्तक्रमसमन्वितम् ।
श्रियं ज्ञानात्तथावाञ्च संयाति परमेश्वरि ॥ ३० ॥
घटद्वयं समालिख्य वाह्याभ्यन्तरभेदतः ।
तन्मध्ये नवधा कृत्वा कोणेषु प्रथमं लिखेत् ॥ ३१ ॥
द्वितीयं दिक्षु संलिख्य मध्ये तार्त्तीयमालिखेत् ।
घटयोरन्तरा कृत्वा तिर्य्यग्रेखाः समन्ततः ॥ ३२ ॥

---

क्षोभिण्यादीं स्तदन्तर्दशदलेषु प्राग्वत् सर्व्वसिद्धिप्रदादींस्तदन्तर्दशदलेषु प्राग्वत् सर्व्वज्ञादींस्तदन्तरष्टदलेषु प्राग्वत् वाग्देवताः सर्व्वमध्यस्थवृत्ततन्मध्यत्र्यस्रपार्श्वे रेखान्तराले प्राग्वद्धेतीस्तदन्तरस्त्रत्रये प्राग्वत् पीठेश्वरीं सर्व्वमध्ये प्राग्वद्देवीं चैवं क्रमात् प्रोक्तक्रमेणार्च्चयेदिति। एतस्मिन् ऐहिके प्रपूजनात्। अस्य पदस्य श्रियमाप्नोतीत्यनेनान्वयः। तासां सपरिवारिकाया देव्याः। महतीं राजादिभिरनवहार्य्यां। ज्ञानात् परमार्थादितिशेषः। मां शिवम् ॥ २८ ॥

पूर्व्वस्मिन्नित्यादिना श्लोकेन पूर्व्वोक्तश्रीचक्रे समर्च्चनफलमुपदिशति। तत्र पूर्व्वस्मिन् प्रोक्ते श्रीचक्रे। उक्तक्रमसमन्वितं चतुर्दशपटलत्रयप्रोक्तार्च्चनक्रमसमन्वितं। श्रियं ऐहिके इत्यर्थः। ज्ञानात् षट्त्रिंशपटलवक्ष्यमाणात्। तथा अपृथग्रूपेण। आवां शक्तिं शिवं च। चः समुच्चये। स साधकः। परमेश्वरीति देवी सम्बुद्धिः ॥ ३० ॥

घटद्वयमित्यादिभिरपमृत्युजिदित्यन्तैर्नवभिः श्लोकैरमृतघटाख्यं यन्त्रं तत् प्रयोगान् फलानि चोपदिशति। तत्र घटद्वयं वाह्याभ्यन्तरवृत्तद्वयं तन्मध्यं नवधा कृत्वा प्राक्प्रत्यग्दक्षिणोत्तरद्विद्विरेखाभ्यामिति शेषः। कोणेषु कोणकोणकोष्ठेष्वित्यर्थः। प्रथमं श्रीविद्यायाः प्रथमखण्डं। द्वितीयखण्डं दिक्षु प्राग्वत् कोष्ठेषु। मध्ये प्राग्वत् कोष्ठे तार्त्तीयं खण्डं। घटयोर्वाह्याभ्यन्तरवृत्तयोः। तिर्य्यग्रेखाः समेत्यर्थः। समन्ततः परितस्तेषु कोष्ठेषु विद्यातार्त्तीयाक्षरसप्तकं

तेषु प्रदक्षिणं विद्यातार्त्तीयाक्षरसप्तकम् ।
लिखेद्बिन्दुविसर्गाभ्यां मुखे पञ्चामृताम्बुजम् ॥ ३३ ॥
आद्यनालमयं द्वन्द्वपत्रकेशरकर्णिकम् ।
विधाय च घटाधस्ताद्विदध्याद्विनियोगकम् ॥ ३४ ॥
मध्ये साध्याक्षरोपेतं कृत्वा तममृतं घटम् ।
बिभृयादभिषिञ्चेच्च जन्मर्क्षेष्वायुराप्तये ॥ ३५ ॥
कुहूपरागसंक्रान्तिदोषेष्वखिलशान्तये ।
अभिषिञ्चेदशेषार्त्तिशान्त्यै सिद्ध्यै च सम्पदा ॥ ३६ ॥

---

श्रीविद्यातार्त्तीयखण्डस्य व्यस्तरूपाक्षरसप्तकं बिन्दुविसर्गाभ्यां अनुस्वारेण विसर्जनीयेन च सहेति शेषः। पञ्चामृताम्बुजं अष्टमे पटले ज्याकमित्यादिना सप्तत्रिंशश्लोकोत्तरार्द्धेन प्रोक्तामृताक्षरपञ्चकसहितमम्बुजं। आद्यनालमयं आद्यामृताक्षरसहितनालं। द्वन्द्वपत्रकेशरकर्णिकं अत्र द्वन्द्वशब्दः पत्रे समष्टितः इतरयोर्व्यष्टिरूपतश्च योज्यः। द्वितीयतृतीयाक्षरसहितं पत्रं चतुर्थामृताक्षरसहितकेशरं पञ्चमामृताक्षरसहितकर्णिकमित्यर्थः। चः समाहारे। तेनाम्बुजमित्याकथति। घटाधस्तात् घटस्याधःस्थाने। मध्ये सर्व्वमध्यकोष्ठस्थतार्त्तीयखण्डोदरे साध्याक्षरोपेतं साधकसाध्यकर्मोपेतं कृत्वा तममृतघटं अमृतघटसंज्ञं तद्यन्त्रं कृत्वेत्यर्थः। अयमत्र विरचनाक्रमः। सुसमे भूतले अभीष्टमानभ्रमेण वृत्तं कृत्वा तद्बहिरेकाङ्गुलमाने च वृत्तं कृत्वा तदन्तर्मध्ये प्राक्प्रत्यग्दक्षिणोदक्समान्तरालं द्विद्विसूत्रास्फालनान्नव कोष्ठानि निष्पाद्य तेषु कोणकोष्ठचतुष्टये श्रीविद्याप्रथमखण्डं तद्दिक्कोष्ठचतुष्टये तद्द्वितीयखण्डं तत् सर्वमध्यकोष्ठे तार्त्तीयं खण्डं साधकसाध्यकर्मोपेतं चालिख्येत्। तत् प्राग्गत कोष्ठमध्ये चतुरङ्गुलमानेन प्राग्वद्वृत्तयोरन्तरालवीथ्योः समान्तरालं सप्तधा कृत्वा तेषु सप्तसु कोष्ठेषु श्रीविद्यातार्त्तीयखण्डस्य व्यस्तरूपाक्षरसप्तकं प्रागादिप्रादक्षिण्यक्रमात् विलिख्य तत् प्राग्गतकोष्ठमध्ये चतुरङ्गुलमानेन प्राग्गत् कुम्भमुखं कृत्वा तद्घटमुखेऽधोमुखं पङ्कजं घटस्याधः स्थाने तूर्द्धमुखं पङ्कजं चालिख्य तदम्बुजयोः क्रमान्नाले जं जः इत्यक्षरद्वयं तयोः पत्रे जं जः जं ठः

अपमृत्युमहारोगक्षयापस्मारशान्तये ।
त्रिवर्षमभिषेकन्तु कुर्य्याज्जन्मतये तथा ॥ ३७ ॥
सर्व्वक्लेशविनिर्मुक्तः सुखी वर्षशतं भुवि ।
आरोग्यो विजयी विश्ववन्द्यो भवति मानवः ॥ ३८ ॥
सुवर्णे राजते ताम्रे कृत्वैतत् सिक्थलिङ्गगम् ।
विधाय स्थापयेत् क्षौद्रे यजेत् सर्व्वापमृत्युजित् ॥ ३९ ॥
तार्त्तीयविद्यापुटितं नामालिख्य तु साधकः ।
ऊर्म्मिकादौ वहेत् सर्व्वसम्पदे रिष्टशान्तये ॥ ४० ॥

---

इत्यक्षरचतुष्टयं तयोः केशरस्थाने वं वः इत्यक्षरद्वयं तयोः कर्णिकायां सं सः इत्यक्षरद्वयञ्चालिखेत् । एतदमृतघटात्मकं यन्त्रं भवतीति । जन्मर्क्षेषु त्रिष्विति शेषः । अखिलशान्तये इत्यत्राखिलशब्देन क्रूरदशागोचरेत्यादय उच्यन्ते । चः समाहारे । महारोगशब्देन वाताद्यष्टरोगा उच्यन्ते । त्रिवर्षमित्यत्यन्तसंयोगे द्वितीया । तुर्विशेषे । तथा द्वितीयपटलोक्ताभिषेकप्रकारेण । विजयी वादद्यूत युद्धादिष्विति शेषः । सुवर्णे रजते ताम्रे तेषु त्रिष्वन्यतमे पट्टे इत्यर्थः । सिक्थलिङ्गं मधूच्छिष्टमयलिङ्गान्तर्भूतं । क्षौद्रे कलशान्तर्गते । एतदुक्तं भवति सुवर्णरजतताम्रेष्वन्यतमाधिकरणे तदमृतघटद्वयं यन्त्रं विधाय गुलिकीकृत्य प्राणप्रतिष्ठादिकं कृत्वा तत् सिक्थमयलिङ्गान्तर्निधाय तल्लिङ्गं कलशमध्ये संस्थाप्य तत्कलशं क्षौद्रेणापूर्य्य तत्कलशमुखं शरावेण पिधाय तत् क्वचित् संस्थाप्य तदुपरि मृत्पीठं विधाय तत्र प्रोक्तविधानेन स्वाभिमतफलपर्य्यन्तं देवीं सपरिवारामभ्यर्च्य पुनः प्रोक्तफलसिद्धौ सत्यां उद्वास्य क्षमस्वेति तत् क्षौद्रादिकं विसर्जयेदिति ॥ ३९ ॥

तार्त्तीयेत्यादिना श्लोकेनोर्म्मिकादिषु सर्व्वरक्षाविधानमुपदिशति । तत्र तार्त्तीयविद्यापुटितं श्रीविद्याया इति शेषः । नाम साधकसाध्यकर्म्मणां । तुर्विशेषे । ऊर्म्मिकादावित्यत्रादिशब्दः केयूरादिविषयः । एतदुक्तं भवति । कनकमये पट्टे श्रीविद्यातार्त्तीयखण्डमनुलोमप्रतिलोममन्योन्यं रेफांशेन रेफो मायांशेन मायांशश्च यथा पुटितो भवति तथा तथालिख्य तन्मायांशे साधकं

कृत्वाश्मनि तथा यन्त्रं तड़ागादिषु मध्यतः ।
स्थापयेत्तत्र ये स्नाता नराः स्युः सुखिनोऽनिशम् ॥ ४१ ॥
प्राक्प्रत्यग्दक्षिणोदक्क सूत्रैरष्टभिराहृतैः ।
कोष्ठान्येकोनपञ्चाशत्तेषु कोणेषु मार्जयेत् ॥ ४२ ॥
चतुर्विंशतिकोष्ठानि शेषेषु विलिखेत् क्रमात् ।
दिक्ष्वेकतस्त्रिकोणानि प्रागारभ्यात् प्रवेशतः ॥ ४३ ॥
तार्त्तीयस्य च भेदोत्थचतुर्व्विंशतिमालिखेत् ।
विलोमेनाथ मध्यस्थे तत् ससाध्यं समालिखेत् ॥ ४४ ॥
सिद्धवज्राभिधं यन्त्रं अशेषशुभदायकम् ।
विनाशनमनिष्टानां जयसौभाग्यदायकम् ॥ ४५ ॥

---

तद्रेफांशे साध्यं तयोरन्तराले प्राग्वत् कर्म चालिख्योर्मिकाभूषणान्तर्भूतं कृत्वा प्राणान् प्रतिष्ठाप्य समभ्यर्च्य तद्धारणात् प्रोक्तफलसिद्धिभागिति ॥ ४० ॥

कृत्वेत्यादिना श्लोकेनामृतघटाख्ययन्त्रस्य तड़ागादिषु स्थापनं तत्फलञ्चोपदिशति । तत्र तथा प्रोक्तप्रकारेण । तड़ागादिष्वित्यत्रादिशब्दो नदीकूपादिविषयः । मध्यतः मध्ये यत्राधिष्ठिततड़ागादिषु ॥ ४१ ॥

प्राक्प्रत्यगित्यादिभिश्चेतन इत्यन्तैर्नवभिः श्लोकैः सिद्धवज्रयन्त्रनिर्माणं तत्प्रयोगांस्तत्तत्फलानि च तत्स्तवनसहितमुपदिशति । तत्र तेषु कोष्ठेषु कोणेषु चतुर्ष्विति शेषः । मार्जयेदित्यस्य चतुर्विंशतिकोष्ठानीत्युत्तरत्रान्वयः । चतुर्विंशतिकोष्ठानि प्रतिकोणं कोष्ठषट्कं षट्कं सम्भूयेत्यर्थः । शेषेषु कोष्ठेषु निर्द्धारणे सप्तमी । विलिखेदित्यस्य त्रिकोणानीत्यनेनान्वयः । एकतः कोष्ठतः इतिशेषः । सम्भूय चतुर्भिः । प्रागारभ्यात् प्राक्त्रिकोणारम्भात् । प्रवेशतः प्रवेशगत्येति यावत् । तार्त्तीयस्य श्रीविद्यातार्त्तीयखण्डस्य भेदोत्थचतुर्व्विंशतिं पञ्चत्रिंशपटलवक्ष्यमाणप्रकारेण । चतुरक्षरात्मिका भेदोत्थचतुर्विंशतिसंख्याता विद्याः । विलोमेन अप्रादक्षिण्यान्मध्यस्थे कोष्ठे । तत् श्रीविद्यातार्त्तीयखण्डं ससाध्यं साधकसाध्य कर्मार्पितं । सिद्धवज्राभिधं सिद्धवज्रसंज्ञं । अयमत्र विरचनाक्रमः । प्राक्प्रत्यग्-

समरे विजयप्राप्तौ विभ्रयात्तद्विवादजे ।
समस्ते धारयेत् क्लेशे विजयं सुखमाप्नुयात् ॥ ४६ ॥
प्रतिमासञ्च पूर्णायामभिषिञ्चेच्च तत्र वै ।
स्थापयित्वा घटं प्राग्वत् समस्ताभ्युदयाय वै ॥ ४७ ॥
पुत्राप्तौ कन्यकावाप्तौ वराप्तौ कन्यका तथा ।
धराधनपशुप्राप्तौ नरनारीनृपादिनाम् ॥ ४८ ॥
वश्यायाविघ्नसंसिद्धौ वाक्सिद्धौ गेहसिद्धये ।
धारयेत् सिद्धवज्रन्तु समस्तेषु प्रसिद्धये ॥ ४९ ॥
ललिताविद्यया विद्यामन्यां यन्त्रेण वामुना ।
यन्त्रमन्यत् समं वेत्ति योऽसौ स्यान्मूढ़चेतनः ॥ ५० ॥
प्राक्प्रत्यग्दक्षिणोदक्क सूत्राण्यष्टादश क्षिपेत् ।
तैस्तत्र कोष्ठानि तथा नवाशीतिशतद्वयम् ॥ ५१ ॥

---

दक्षिणोदक्कसमान्तरालाष्टसूत्रास्फालनेनैकोनपञ्चाशत् कोष्ठानि निष्पाद्य तेषु प्रतिकोणं षट् षट् सम्भूय चतुर्षु कोणेषु चतुर्विंशति कोष्ठानि शिष्टमध्ये वज्राकारं यथा तथा मार्जयित्वा शिष्टेषु पञ्चविंशतिकोष्ठेषु प्रतिदिशमेकैककोष्ठेन सम्भूय चतुर्भिः चतसृषु दिक्षु चत्वारि त्रिकोणानि विधाय तेषु प्रागग्रादिप्रादक्षिण्यप्रवेशगत्या श्रीविद्यातार्त्तीयखण्डप्रथमभूतांश्चतुर्विंशतिभेदान् क्रमेणालिख्य शिष्टसर्वमध्यकोष्ठे तार्त्तीयखण्डं लिखित्वा तन्मायांशे साधकं तद्रेफांशे साध्यं तयोः सन्धौ कर्म चालिखेदेतत् सिद्धवज्राभिधं यन्त्रमिति । अनिष्टानां अमङ्गलानां । तत् सिद्धवज्राभिधं यन्त्रं । विवादजे इत्यस्य क्लेश इत्येतद्विशेष्यं । तत्र यन्त्रे प्राग्वत् द्वितीयपटलोक्तक्रमेण अभिषिञ्चेत् । नरनारीनृपादिनामित्यस्य वश्याय इत्यनेनान्वयः । नृपादिनामिति स्वातन्त्र्योक्तिः । तुः समुच्चये । अमुना सिद्धवज्रयन्त्रेण समं वैभवात् । असौ एवं वेत्ता मूढ़चेतनः । अन्यथाज्ञानाविष्टहृदयः । अन्येषामधिकत्वेन वेदनात् किं पुनरित्यर्थः ॥ ५० ॥

प्राक्प्रत्यगित्यादिभिः प्रिये इत्यन्तैः षड्भिः श्लोकैः कोष्ठवज्रयन्त्रनिर्माण-

तेषु कोणेषु कोष्ठानि मार्जयेत् पूर्ववत् प्रिये ।
षट्त्रिंशच्छिष्टवज्रे तु चतुर्भिर्दिक्त्रिकोणकम् ॥ ५२ ॥
विधाय प्राग्वह्निर्मध्यात् प्रादक्षिण्यप्रवेशतः ।
विलिखेत्तद्द्वितीयार्द्धं भेदात्तु विलिखेत्ततः ॥ ५३ ॥
त्रिकोणेषु च तार्त्तीयं ससाध्यं मध्यतस्तथा ।
नवसु विलिखेद्विद्याकूटत्रयमथ त्रिशः ॥ ५४ ॥

---

विधानमेतत्पटलोक्तयन्त्रफलकथनप्रस्तावसहितमुपदिशति । तत्र तैः सूत्रैः । तत्र यन्त्रे । तथा जायते । नवाशीतिशतद्वयं एकोननवत्यधिकं शतद्वयं । तेषु कोष्ठेषु निर्द्धारणे सप्तमी । कोष्ठानीत्यस्य षड्विंशदित्यनेनान्वयः । पूर्ववद्वज्राकारं यथा भवति तथेत्यर्थः । षट्त्रिंशत् प्रतिकोणं सम्भूय चतुश्चत्वारिंशदधिकशतसंख्यानीत्यर्थः । शिष्टवज्रे शिष्टपञ्चचत्वारिंशदधिकशतसंख्यकोष्ठात्मके वज्रे । तुर्विशेषे । चतुर्भिः कोष्ठैः प्रतिदिशमित्यर्थः । दिक्त्रिकोणकं प्रतिदिशमेकं त्रिकोणं । विधायेत्यस्य दिक्त्रिकोणकमिति पूर्वेणान्वयः । प्राग्वह्निर्मध्यात् प्राच्यां दिशि वह्निर्भूतपंक्तिमध्यस्थकोष्ठात् प्राक्त्रिकोणं तत्तद्भूतपंक्तिस्थकोष्ठपञ्चके मध्यकोष्ठात्तदारभ्येत्यर्थः । प्रादक्षिण्यप्रवेशतः प्रादक्षिण्यप्रवेशगत्या । तद्द्वितीयार्द्धं भेदात् श्रीविद्यातार्त्तीयखण्डस्य पञ्चत्रिंशपटलप्रोक्तपञ्चाक्षरोत्पन्नभेदात् विंशत्युत्तरशतसंख्यातान् । तुर्विशेषे । ततः अनन्तरं । चः समाहारे । तार्त्तीयखण्डमिति शेषः । ससाध्यं साधकसाध्यकर्मयुक्तं । मध्यतः तद्वज्रयन्त्रस्य । तथा अनन्तरश्लोकवक्ष्यमाणक्रमेण । नवसु शिष्टेषु कोष्ठेषु । त्रिशः त्रिरावृत्त्या । दक्षत्रये दक्षिणभागकोष्ठत्रये । मध्ये मध्यकोष्ठत्रये । तथा समुच्चये । वामत्रये द्वितीयं कूटं साध्ये तृतीयकं मध्यत्रये पूर्व्ववल्लेख्यतृतीयकूटं ससाध्यादिकं लिखेदित्यर्थः । तुर्विशेषे । अयं अत्र यन्त्रविरचनाक्रमः । प्राक्प्रत्यग्दक्षिणोदक्समान्तरालाष्टादशाष्टादशसूत्रास्फालनादेकोननवत्युत्तरशतद्वयकोष्ठानि निष्पाद्य तेषु-प्रतिकोणं षट्त्रिंशत् षट्त्रिंशतकोष्ठक्रमेण सम्भूय चतुश्चत्वारिंशदधिकशतकोष्ठानि शिष्टमध्ये वज्राकारं यथा तथा मार्जयित्वा पुनः शिष्टवज्राकारे पञ्चचत्वारिंशदधिकशतकोष्ठात्मके प्रतिदिशं वह्निरेकत्रिक्रमेण सम्भूय कोष्ठचतुष्टयेन कोष्ठ-

दक्षत्रये त्वाद्यकूटं मध्ये तार्त्तीयकं तथा ।
वामत्रये द्वितीयञ्च लिखेत् साध्ये तृतीयकम् ॥ ५५ ॥
एतत्तु कोष्ठवज्राख्यं यन्त्रमिष्टार्थदायकम् ।
फलानि सर्वयन्त्राणां पटलेऽस्मिन् शृणु प्रिये ॥ ५६ ॥
तन्त्रेऽस्मिन्नन्यतन्त्रेषु यस्य यन्त्रस्य यत् फलम् ।
प्रोक्तं तदेषामेकैकं योजयेत् सर्वमेव च ॥ ५७ ॥
तेनात्र यन्त्रनिर्म्माणमानमेवोच्यते मया ।
फलानि वाञ्छयावाप्नोत्ययत्नान्नामयोजनैः ॥ ५८ ॥
अतः फलानि तन्त्राणामिह नोक्तानि कृत्स्नशः ।
सर्वञ्च सर्वदा सर्वसमीहितफलाप्तिकृत् ॥ ५९ ॥
प्राक्प्रत्यग्दक्षिणोदक्षषड् विंशत्या समाहृतैः ।
सूत्रैः कोष्ठानि जायन्ते षट्शतं पञ्चविंशति ॥ ६० ॥

---

चतुष्टयेनैकैकं त्रिकोणं कृत्वा तच्छिष्टैकोनत्रिंशदुत्तरशतकोष्ठेषु प्राग्गतपंक्तिस्थ-कोष्ठपञ्चके मध्यकोष्ठमारभ्य श्रीविद्यातार्त्तीयखण्डस्य द्वितीयभेदात् विंशत्युत्तर-शतरूपान् प्रादक्षिण्यप्रवेशगया विलिख्य शिष्टमध्यकोष्ठेषु नवसु दक्षिणपंक्तिस्थ-कोष्ठत्रये श्रीविद्याप्रथमखण्डं वामपंक्तिस्थकोष्ठत्रये मध्यखण्डं मध्यपंक्तिस्थकोष्ठ-त्रये दिग्गतत्रिकोणचतुष्टये तार्त्तीयखण्डञ्चालिख्य तार्त्तीयखण्डे प्राग्वत् साधक साध्यकर्म्माणि विलिख्य एतत् कोष्ठवज्रयन्त्रमुक्तविनियोगादभिमतसिद्धिदमिति। प्रिये इति देवीसम्बुद्धिः ॥ ५६ ॥

तन्त्रे इत्यादिभिराप्तिकृदित्यन्तैस्त्रिभिः श्लोकैरेतत्पटलोक्तानां यन्त्राणां सर्वेषां फलान्यतिदेशतः स्वरूपतश्चोपदिशति । तत्र तन्त्रेऽस्मिन्नन्यतन्त्रेषु अस्मिन् तन्त्रे न्यतन्त्रेषु च । तत् फलं । एषां अस्मिन् पटले प्रोक्तानां यन्त्राणां एकैकस्य यन्त्रस्य सर्वं फलं । तेन हेतुना अत्र अस्मिन् पटले । नामयोजनैः साध्यसाधककर्म्म-योजनैः । अतः अस्मात् । इह पटले । सर्व्वं यन्त्रं ॥ ५८ ॥

प्राक्प्रत्यगित्यादिभिरुदितैः इत्यन्तैस्त्रयोदशभिः श्लोकैर्वज्रलिङ्गाभिधानयन्त्र-

तेषु कोष्ठेषु परितो मार्जयेदष्टसप्ततिम् ।
शिष्टे चतुर्भिस्त्र्यस्रञ्च विदध्यादिक्षु पूर्ववत् ॥ ६१ ॥
तेषु तार्त्तीयविद्यान्तु ससाध्यां प्राग्वदालिखेत् ।
शिष्टेषु सप्तनवति द्विशते मध्यतस्तथा ॥ ६२ ॥
सर्वमध्यस्थकोष्ठस्य पार्श्वयोरुभयोरपि ।
कोष्ठानि त्रीणि तिर्य्यक् च समीकृत्य तयोस्तथा ॥ ६३ ॥
उपर्य्यधश्च द्वे द्वे तु समीकुर्य्यात्ततस्तथा ।
तयोरधोर्द्ध्वं च तथा द्वे द्वे कुर्य्यादथैकधा ॥ ६४ ॥

---

निर्माणविधानमस्मिन् पटले प्रोक्तयन्त्राणामनुभावञ्चोपदिशति। तत्र षट्शतं पञ्चविंशति पञ्चविंशत्यधिकं षट्शतमिति यावत्। तेषु कोष्ठेषु अष्टसप्तति कोष्ठानि प्रतिकोणमित्यर्थः। शिष्टे त्रयोदशाधिकशतत्रयकोष्ठरूपे वज्रे। चतुर्भिः कोष्ठैः। पूर्ववत् एकत्रिक्रमेणेत्यर्थः। तेषु चतुर्षु अस्रेषु। तुः समुच्चये। ससाध्यां साधकसाध्यकर्मोपेतां। प्राग्वत्तथा मायावह्निमध्यांशेषु क्रमादिति यावत्। शिष्टेषु कोष्ठेषु। सर्वमधास्थकोष्ठस्य पश्चिमाद्येकादशात्मकतिर्य्यक्पंक्तिस्थ एकविंशतिकोष्ठेषु मधाकोष्ठस्य। तिर्य्यग्दक्षिणोत्तरं। समीकृत्य एकीकृत्य। तयोः एकीकृतकोष्ठयोः। तथा प्राग्वत्तयोः। तथा यथाधिष्ठानपिण्डिके भवतः। द्वे द्वे कोष्ठे तिर्य्यगिति शेषः। एतदुक्तं भवति पश्चिमादि द्वादशदशमपंक्त्योस्त-त्तन्मध्यकोष्ठस्योभयपार्श्वयोः एकैकं मुक्त्वा तदन्तरकोष्ठयो(र्द्वंपत्र)वृत्तयोर्मार्जयेदिति। ततः अनन्तरं। तथा प्राग्वत्। तयोः एकीकृतकोष्ठद्वयोः। अधोर्द्ध्वं दिव्यत्वादध ऊर्द्ध्वमिति यावत्। चः समाहारे। तथा उभयपार्श्वयोः। एत-दुक्तं भवति नवमत्रयोदशपंक्त्योस्तत्तन्मधाकोष्ठस्योभयपार्श्वयोः कोष्ठयोर्द्वयं द्वयं मुक्त्वा तदन्तरकोष्ठयोर्द्वयं द्वयं मार्जयेदिति। तदधश्चोपरि अनन्तरपूर्व्व-मेकीकृतयोः कोष्ठयोरधश्चोपरि च। तथाष्टमचतुर्दशपञ्चदशपंक्तिषु तत्तन्मधा-कोष्ठयोरुभयपार्श्वयोः कोष्ठानां त्रयं केवलतिर्य्यग्रेखामार्जनेन। तुर्विशेषे। उप-रितनकोष्ठद्वयमार्जनं केवलमूर्द्धत एव तिर्य्यगित्यर्थः। एकैकञ्च द्वयं द्वयं

तदधश्चोपरि तथा त्वेकैकञ्च द्वयं द्वयम् ।
एकीकृत्य पुनश्चोर्द्ध्वे द्वे द्वे तु मार्जयेत्तथा ॥ ६५ ॥
ततो माला तदुपरिपार्श्वयोश्च प्रमार्जयेत् ।
दशखण्डानि शिष्टैस्तु मध्ये लिङ्गो भवेत्तथा ॥ ६६ ॥
एवं लिङ्गः समाख्यातश्चत्वारिंशद्भिरेव वै ।
शिष्टानि कोष्ठवज्राणि द्विशतं दश पञ्च च ॥ ६७ ॥
लिङ्गस्य पार्श्वयोर्मृष्टान्येकविंशतियुग्मकम् ।
तस्य लिङ्गस्य मध्यस्थपङ्क्त्यां तार्त्तीयमालिखेत् ॥ ६८ ॥

---

यथाक्रमतः। एतदुक्तं भवति अष्टमचतुर्द्दशपञ्चदशपंक्तिषु तत्तन्मधग्रकोष्ठस्योभयपार्श्वयोः कोष्ठानां त्रयं त्रयं मुक्त्वा तदनन्तरमेकमेकं कोष्ठं मार्जयेदिति। पुनश्चोर्द्ध्वे पूर्व्वमेकीकृतकोष्ठपंक्तिषूपरितनपंक्त्यामेकमेवेत्यर्थः। द्वे द्वे कोष्ठे अन्तःप्रथममार्जित कोष्ठस्य। तथा तिर्य्यगित्यर्थः। ततः अनन्तरं। उपरिपार्श्वयोः लिङ्गरूपकोष्ठनवकस्येत्यर्थः। दशखण्डानि रेखाभिः खण्डनात् खण्डशब्देन रेखा उच्यते तस्माद्दशभिः खण्डैः नवकोष्ठानि भवन्तीति। दशखण्डमार्जनात् नव कोष्ठान्येकीकृतानीत्यर्थः। शिष्टैर्नवभिः कोष्ठैः। तुर्विशेषे। मधेग्र एकीकृतखण्ड दशकस्य। तथा इत्यस्य मार्जयेदित्यनेन पूर्व्वत्र सम्बन्धः। यथा मधेग्र शिष्टैर्लिङ्गं भवेत्। तथा नवकोष्ठानि मालावदेकीकुर्य्यादित्यर्थः। एवमुक्तरूपेण चत्वारिंशद्भिः अधिष्ठानमधग्रपिण्डिकालिङ्गगतैः कोष्ठैरित्यर्थः। शिष्टानि लिङ्गान्येकीकृतानि च कोष्ठानि मुक्त्वेत्यर्थः। द्विशतं दश पञ्च च अत्र चकारस्य समाहारार्थत्वादेकसंख्याधिकं (स) द्योतयतीति सम्प्रदायः। तस्मात् षोड़शाधिकं शतद्वयमित्यर्थः। पार्श्वयोरुपरि चेत्यर्थः। मृष्टानि एकीकृतानि कोष्ठानि एकविंशतियुग्मकं एकेन विंशतियुग्मं एकचत्वारिंशदित्यर्थः। मधग्रस्थपंक्त्यां दशकोष्ठात्मिकायां तार्त्तीयं कूटं। ऊर्द्ध्वादि ऊर्द्ध्वाधःक्रमात् स्थितायां अस्य पंक्त्यामित्यत्रान्वयः। सर्व्वमध्ये अधिष्ठानपिण्डिकयोर्मध्यस्थकोष्ठे। ससाधकं साधकसाध्यकर्म्मोपेतं प्राग्लिखिततार्त्तीयकूटमित्यर्थः। सर्वत्र यन्त्रमात्रे। लिङ्ग-

ऊर्द्धादि मायामध्यस्थं सर्वमध्येससाध्यकम् ।
सर्वत्र तार्त्तीया विद्या लेखनं समुदीरितम् ॥ ६९ ॥
लिङ्गरूपेषु नवसु पार्श्वषट्के तु पूर्ववत् ।
विद्याशेषं समालिख्य प्राग्वदारभ्यतस्तथा ॥ ७० ॥
विद्याद्वितीयभेदोत्थं तद्विंशशतमालिखेत् ।
दिशस्तत्र यजेद्देवीमावाह्य परिवारकैः ॥ ७१ ॥

---

रूपेषु पिण्डिकोपरिष्टेषु नवसु कोष्ठेषु । इयं निर्द्धारणे सप्तमी । पार्श्वषट्के प्रतिपार्श्वं त्रित्रिक्रमेण । तुः समुच्चये । पूर्व्ववत् अनन्तरपूर्वोक्तवज्रयन्त्रवत् । विद्याशेषं श्रीविद्यायाः प्रथमकूटं द्वितीयकूटञ्च तद्दक्षिणकोष्ठत्रये वामकोष्ठत्रये च क्रमादिति यावत् । प्राग्वदारभ्यतः कोष्ठवज्रयन्त्रवत् । प्राक्त्रयस्त्रान्तर्गत पंक्त्यां मध्यकोष्ठमारभ्य तथा प्रादक्षिण्यप्रवेशगत्येति यावत् । तदिति वासनापटले वक्ष्यमाणं सूचयति । विंशशतं विंशत्युत्तरं शतमित्यर्थः । दिशः पर्य्यायतः तत्र वज्रलिङ्गयन्त्रे । अयमत्र विरचनाक्रमः । प्राक्प्रत्यग्दक्षिणोदक्क समान्तरालं षड्विंशति षड्विंशति सूत्रास्फालनात् पञ्चविंशत्यधिकषट्शतकोष्ठानि निष्पाद्य तेषु प्रतिकोणमष्टसप्तत्यष्टसप्ततिकोष्ठं क्रमेण सम्भूय द्वादशाधिकशतत्रयकोष्ठानि शिष्टं वज्राकारं यथा तथा मार्जयित्वा पुनः शिष्टवज्राकारे त्रयोदशाधिकशतत्रयकोष्ठात्मके प्रतिदिशमेकत्रिकक्रमेण सम्भूय कोष्ठचतुष्टयेनैकैकं त्रिकोणं कृत्वा तेषु तार्त्तीयविद्यां प्राग्वत् साधकसाध्यकर्मोपेतां आलिख्य तच्छिष्टसप्तनवत्यधिकशतद्वयकोष्ठेषु पश्चिमादेकादशात्मकसर्व्वमध्यस्थपंक्त्यां तत्सर्व्वमध्यस्थकोष्ठस्य दक्षिणवामपार्श्वयोः तिर्य्यग्रूपेण कोष्ठत्रयं यन्त्रमूर्द्धाधोगतपश्चिमादिद्वादशपंक्तिरूपे तत्तन्मध्यकोष्ठस्योभयपार्श्वयोः कोष्ठद्वयं कोष्ठद्वयं मुक्त्वा तिर्य्यग्रूपेण प्राग्वत् इयं इयं पश्चिमाद्यष्टमचतुर्दशपञ्चदशपंक्तित्रये तत्तन्मध्यकोष्ठस्योभयपार्श्वयोः कोष्ठत्रयं त्रयं मुक्त्वा त्वेकमेकं कोष्ठं पुनश्चैकोक्तकोष्ठासु पंक्तिषूपरितनपञ्चदशपंक्त्यामेवोभयपार्श्वयोस्तिर्य्यग्रूपेण कोष्ठद्वयं कोष्ठद्वयं ततश्च मालाक्रमेण लिङ्गरूपकोष्ठनवकस्योभयपार्श्वयोरुपरि च दशरेखामार्ज्जनेन नवकोष्ठान्यष्टादशपंक्तिस्थकोष्ठेषु मध्यस्थकोष्ठपञ्चकञ्च सम्भूयैकचत्वारिंशत् कोष्ठानि मध्ये चत्वारिंशद्भिः कोष्ठैः साधिष्ठानं लिङ्गं वह्निर्वज्रे शिष्टानि षोडशा-

स्थापयेद्विनियोगेषु प्रोक्तेषु परमेश्वरि ।
नासाध्यमस्ति भुवने यन्त्रैरेतैर्मयोदितैः ॥ ७२ ॥
एकादिद्वयसंवृद्ध्या पार्श्वयोः कोष्ठवर्द्धनम् ।
एकोनविंशकोष्ठान्तं कृत्वा लिङ्गं तथोपरि ॥ ७३ ॥
कृत्वा प्राङ्मध्यतः प्राग्वच्चत्वारिंशद्भिरेव वै ।
तेषु मूलादिपरितो मध्यान्तं विन्यसेत् क्रमात् ॥ ७४ ॥

---

धिकशतद्वयकोष्ठानि च यथा तथा मार्जयित्वा तल्लिङ्गचत्वारिंशत् कोष्ठमध्य-गतोर्द्धाधःक्रमरूपपंक्तिस्थकोष्ठदशके श्रीविद्यातार्त्तीयखण्डमुक्तप्रकारेणालिख्य तस्य सर्व्वमध्यकोष्ठे लिखिततार्त्तीयविद्याहृल्लेखोदरे साधकं साध्यं कर्म्म च पिण्डिकोपरि नवकोष्ठात्मके दक्षिणपार्श्वस्थकोष्ठत्रये श्रीविद्यायाः प्रथमकूटं वामपार्श्वस्थकोष्ठत्रये द्वितीयकूटञ्च सम्भूय षोड़शसु कोष्ठेषु विलिख्य परि-शिष्टं लिङ्गगतकोष्ठचतुर्विंशत्या सहितेषु चत्वारिंशदधिकशतद्वयकोष्ठेषु प्राक्त्र्यस्रान्तर्गतपंक्त्या मध्यकोष्ठमारभ्य प्रादक्षिण्यप्रवेशगत्या तार्त्तीयविद्या द्वितीयभेदोत्थविंशत्यधिकशतत्रयद्विवारमालिखेदिति। परमेश्वरीति देवी-सम्बुद्धिः ॥ ७२ ॥

एकादीत्यादिभिस्तामित्यन्तैरष्टभिः श्लोकै मेरुलिङ्गनिर्म्माणविधानं तत् प्रयोगां-स्तत्फलानि चोपदिशति। तत्र एकादिद्वयसंवृद्ध्या एककोष्ठादि प्रतिपंक्तिकं कोष्ठद्वयकोष्ठद्वयवर्द्धनेन उपर्य्युपरि इति शेषः। एकोनविंशकोष्ठान्तं एकोन-विंशसंख्यकोष्ठपर्य्यन्तं एवं क्रमाभिवृद्ध्या दशमपंक्त्यामेकोनविंशतिकोष्ठानि भवन्ति तदवधीत्यर्थः। प्राग्वत् वज्रलिङ्गोक्तक्रमेण। मध्यतः सर्व्वमध्यपंक्तिमध्य-गतसप्तकोष्ठानुसारेणेत्यर्थः। चः समुच्चये। चत्वारिंशद्भिः कोष्ठैरित्यर्थः। एवाव-धारणे। तेषु कोष्ठेषु। मूलादि सर्वाधःस्थितप्रथमकोष्ठादि। परितः अधिष्ठानो-परितनपंक्तिपर्य्यन्तं प्रादक्षिण्येन। मध्यान्तं मूलादिसप्तपंक्तिमध्यकोष्ठान्तं विन्यसेदित्यत्रोत्तरश्लोके विद्या इत्यनेन सम्बन्धः। तथा क्रमात् प्रवेशगत्या विंशशतं विंशत्यधिकशतं। प्रिये इति देवीसम्बुद्धिः। लिङ्गस्य मध्यकोष्ठान्तं लिङ्गमध्यकोष्ठपर्य्यन्तं तदधोगतकोष्ठेषु सर्वेषूक्तक्रमात् विन्यस्य तदन्ते तल्लिङ्ग-

विद्याद्वितीयभेदोत्था विद्या विंशशतं प्रिये ।
लिङ्गस्य मध्यकोष्ठान्तं शिष्टं कोणेषु संलिखेत् ॥ ७५ ॥
विधाय चतुरस्रन्तु सूत्रद्वयनिपातनात् ।
सर्वबाह्ये तदावद्धं तस्योपरि समालिखेत् ॥ ७६ ॥
पंक्तिशः सप्तकोष्ठेषु पर्य्यायादींस्तथार्णकान् ।
नित्यापर्य्यायजनिते पार्श्वयोर्दक्षवामयोः ॥ ७७ ॥

---

मध्यस्थकोष्ठान्तमिति यावत् । शिष्टं विद्याचतुष्टयं कोणेषु वक्ष्यमाणचतुरस्रकोणेषु वायव्यादिनिरृत्यन्तमिति शेषः । विधाय चतुरस्रं चतुरस्रं विधायेत्यर्थः । तुर्विशेषे । सूत्रद्वयनिपातनात् प्रतिदिशमन्तर्बहिर्विभागेनेत्यर्थः । सर्व्वबाह्ये उक्तरूपस्य बाह्ये । तदावद्धं प्रथमकोष्ठाधोरेखासम्बद्धं । तस्य चतुरस्रस्य उपरि उभयोर्मध्ये इति शेषः । समालिखेदित्यस्योत्तरत्र पर्य्यायादीनित्यनेन सम्बन्धः । सप्तकोष्ठेषु चतुरस्रप्राचीनवीथिस्थसप्तकोष्ठेषु । पर्य्यायादीनित्यत्रादिशब्दो युगघटिकार्णदिननित्यादिविषयः । अर्णकान् वर्णानित्यर्थः । नित्यपर्य्यायजनिते विद्ये । मधेर सप्तकोष्ठेषु मध्यस्थे । तुः समुच्चये । प्रोक्तक्रमेण लिङ्गाग्रमध्यात् लिङ्गाग्रपंक्तिमध्यकोष्ठमारभ्येत्यर्थः । अभितः प्रादक्षिण्येन । पिण्डिकायां च तदधःस्थितकोष्ठानां प्रागेव विनियुक्तत्वात् । संलिखेदित्यस्योत्तरश्लोके विद्या इत्यनेन सम्बन्धः । तथा प्रवेशगत्या । कृत्वैव मेरुलिङ्गं मेरुलिङ्गं कृत्वेत्यर्थः । तुर्विशेषे । अयमत्रविरचनाक्रमः प्रथममेकं चतुरस्रं कोष्ठं विधाय तदुपर्य्युभयपार्श्वयोः प्रतिपार्श्वमेकैकक्रमात् सम्भूय प्रतिपंक्तिकं कोष्ठद्वयाभिवृद्ध्या सर्व्वमूलादिदशमपंक्त्यामेकोनविंशति कोष्ठानि यथा तथा कृत्वा तत् दशमपंक्त्यामुभयत्र षट् षट् कोष्ठानि मुक्ता तन्मध्यस्थकोष्ठसप्तकानुसारेण तदुपरि प्राग्वच्चत्वारिंशद्भिः कोष्ठैः साधिष्ठानपिण्डिकं लिङ्गं तद्बहिस्तदग्रगतदक्षिणोत्तररेखया प्रथमकोष्ठाधःस्थदक्षिणोत्तररेखया च सम्बध्य द्वाविंशतिकोष्ठप्रमाणोपेतं दक्षिणोत्तरमेकैकं सूत्रं पुनरुभयपार्श्वयोर्दशमपंक्तेर्बहिरधर्द्धकोष्ठप्रमाणप्रदेशाद्बहिर्द्वाविंशतिकोष्ठप्रमाणोपेतं प्राक्प्रत्यगेकैकं सूत्रं तद्बहिः परितस्तत्तत्सूत्राग्रावधिकञ्च सम्भूयाष्टभिः सूत्रैः परितः समचतुरस्रद्वयं प्रतिकोणमेकैककोष्ठोपेतं यथा तथा विधाय तत्र प्राग्वद्द्वितीयभेदोत्थं विंशत्यधिकशतविद्यास्वरूपं

मध्ये युगोदयार्णौ तु लिखेत् प्रोक्तक्रमेण वै।
लिङ्गाग्रमध्यादभितः पिण्डिकायाञ्च संलिखेत्॥ ७८॥
विद्याः प्रथमभेदोत्थाश्चतुर्विंशतिकास्तथा।
कृत्वैवं मेरुलिङ्गन्तु यन्त्रं तत्रैव तां लिखेत्॥ ७९॥
ममस्तवाञ्छितप्राप्त्यै जयारोग्यायुराप्तये।
पटादौ तत् समालिख्य पूजयेन्नित्यशश्च ताम्॥ ८०॥
प्राक्प्रत्यग्दक्षिणोदक्कसैकविंशतिसूत्रतः।
चतुःशतानि कोष्ठानि भवन्ति सुसमानि वै॥ ८१॥

---

मूलकोष्ठमारभ्याधिष्ठानोपरितनपंक्त्यवधि पञ्चदशोत्तरशतसंख्यकोष्ठेषु प्रादक्षिण्यप्रवेशगत्या तन्मध्यकोष्ठान्तं प्रत्यावरणं षट्त्रिंशदष्टाविंशतिविंशतिचतुर्द्दशदशषड़ेकक्रमादावरणसप्तके च तदनन्तरमेकं लिङ्गाधिष्ठानपिण्डिकान्तरालमध्यकोष्ठे च ततः परिशिष्टविद्याचतुष्टयं वह्निश्चतुरस्रकोणचतुष्टये वायव्यादिनैरृत्यन्तमेकैकक्रमाच्चैवं सम्भूय विंशत्यधिकं शतं विद्या विन्यस्यानन्तरं तल्लिङ्गपिण्डिकाकोष्ठचतुर्विंशत्के लिङ्गाग्रपंक्तिमध्यकोष्ठमारभ्य पिण्डिकाधःस्थपंक्तिपर्य्यन्तं प्रादक्षिण्यप्रवेशगत्या त्वमुक्तक्रमं तार्त्तीयविद्याचतुरक्षरभेदांश्चतुर्विंशतिमालिख्यानन्तरं वह्निश्चतुरस्रस्य प्राचीनवीथीं समान्तरालां सप्तधा विभज्य तेषु सप्तसु कोष्ठेषु पंक्तिशो वामपार्श्वस्थकोष्ठत्रये क्रमात् पर्य्यायनित्याविद्याक्षरत्रयं दक्षिणपार्श्वस्थकोष्ठत्रये दिननित्याविद्याक्षरत्रयं मध्यकोष्ठे युगार्णसहितं घटिकार्णञ्च विन्यसेदिति। तत्र यन्त्रे। एवावधारणे। तां ललितां सपरिवारां। पटादावित्यत्रादिशब्दः कनकरजतताम्राश्मादिविषयः। तद्यन्त्रं। नित्यशः अनुदिनं। तां ललितां प्राग्वत्॥ ८०॥

प्राक्प्रत्यगित्यादिभिः इष्टदा इत्यन्तैः षड़्भिः श्लोकैर्मेरुलिङ्गयन्त्रनिर्म्माणविधानादिकमुपदिशति। तत्र सुसमानि आयामविस्तारवैषम्याभावात्। तस्य कोष्ठसमुदायरूपस्य। एकपार्श्वाधोभागे अधः पंक्त्यामेकस्मिन् पार्श्वे। ततः तस्याः पंक्तेरित्यर्थः। चः समुच्चये। उपरि उपर्य्युपरीति यावत्। षट्सप्तत्येकमेकादशावधि षट्सप्ताष्टनवदशैकादशसंख्यावधीति यावत्। मार्जयेत कोष्ठानीत्यर्थः।

तस्यैकपार्श्वाधोभागे पञ्च कोष्ठानि मार्जयेत् ।
ततश्चोपरि षट्सप्तेत्येवमेकादशावधि ॥ ८२ ॥
मार्जयेदुपरिष्टाच्च तस्यैव प्रतिलोमकम् ।
तथा कुर्य्यात् पार्श्वयोश्च तेनाधिष्ठानपिण्डिके ॥ ८३ ॥
भवतश्चोपरिष्टात्तु पञ्चविंशतिकोष्ठकैः ।
लिङ्गमन्यानि पार्श्वस्थमार्जनाद्भवति प्रिये ॥ ८४ ॥
अधिष्ठाने पिण्डिकायां तद्द्वितीयविभेदजाः ।
लिङ्गे प्रथमभेदोत्थस्तन्मध्यस्थे स्ववाञ्छितम् ॥ ८५ ॥

---

उपरिष्टात् अष्टमादिषु षट्सु पंक्तिष्विति शेषः । चः समुच्चये । तस्य पञ्चषड़ादिक्रमस्य । एवावधारणे । प्रतिलोमकं दशादिपञ्चकान्तक्रमादित्यर्थः । तथा कुर्य्यात् यथाधिष्ठानपिण्डिके षष्ट्या षष्ट्या कोष्ठैस्तत्र लेख्यत्वेन वक्ष्यमाणविंशत्यधिकशतविद्याभेदसमसंख्यकोष्ठे भवतः । पार्श्वमन्यत्तेनाधिष्ठानपिण्डिके भवतः । येन क्रमेण मार्जनादधिष्ठानपिण्डिके भवतः । तेन क्रमेण तदन्यत् पार्श्वं मार्जयेदिति । चः समुच्चये उपरिष्टात्त्रयोदशपंक्तेरित्यर्थः । तुर्विशेषे । पञ्चविंशतिकोष्ठकैः लिङ्गं अस्योत्तरत्र भवतीत्यत्रान्वयः । अन्यानि लिङ्गरूपाणि तानि कोष्ठानि । पार्श्वस्थमार्जनात् पार्श्वस्थकोष्ठमार्जनादवशिष्टानीत्यर्थः । प्रिये इति देवीसम्बुद्धिः । तद्द्वितीयविभेदजाः विद्या इत्यर्थः । लिङ्गे पञ्चविंशतिकोष्ठात्मके प्रथमभेदोत्था तार्त्तीयस्येति शेषः । तन्मध्यस्थे लिङ्गमध्यस्थे कोष्ठे । स्ववाञ्छितं प्राग्वत् साध्यादिकं । मध्ये अधिष्ठानपिण्डिकयोरन्तरालस्थकोष्ठत्रये । तद्दिनजां प्राग्वद्विद्याप्राप्तिदिनजां प्रयोगदिनजां वा । अनघे इति देवीसम्बुद्धिः । तत्र यन्त्रे । अयमत्र विरचनाक्रमः । प्राक्प्रत्यग्दक्षिणोदक्समान्तरालमेकविंशत्येकविंशतिसूत्रस्फालनाच्चतुःशतानि कोष्ठानि निष्पाद्य तदधःपंक्त्यामेकपार्श्वे पञ्चकोष्ठानि तस्मिन्नेव पार्श्वे द्वितीयादिसप्तमपंक्त्यवधि षट्सप्ताष्टनवदशैकादशकोष्ठाणि च मार्जयित्वा पुनस्तस्मिन्नेव पार्श्वे अष्टमादित्रयोदशान्तपंक्तिषट्के दशनवाष्टसप्तषट्पञ्चकोष्ठानि पुनस्तस्मिन्नेव पार्श्वे चतुर्दशाद्यष्टादशान्त पंक्तिपञ्चके दशदश कोष्ठानि तदुपरिगतमेकोनविंशविंशात्मकं पंक्तिद्वयं च

मध्ये तद्दिनजां विद्यामिति प्रोक्तं तवानघे ।
महालिङ्गाभिधं यन्त्रं तत्र पूजाखिलेष्टदा ॥ ८६ ॥
समत्रिरेखां निष्पाद्य योनिं तस्यास्तु मध्यतः ।
तत्तत्सूत्रवशात् कुर्य्याद्दश त्रिषु तथा समम् ॥ ८७ ॥
एवं कृतेव परितो लिखेत्ता विंशतां शतम् ।
शिष्टमध्यत्रिकोणे तु लिखेद्वाञ्छितमात्मनः ॥ ८८ ॥

---

मार्जयेत् । अनन्तरमन्यस्मिन् पार्श्वेपि यथा षष्ट्या षष्ठ्या कोष्ठैः तदुपरिगतमेकोनविंशविंशात्मकपंक्तिद्वयं अधिष्ठानपिण्डिके भवतस्तथावशिष्टकोष्ठानि युक्त्या मार्जयेत् । एवं कृते षष्ठ्या षष्ट्या कोष्ठैरधिष्ठानपिण्डिके त्रिभिः कोष्ठैः तयोरन्तरालं पञ्चविंशतिभिः कोष्ठैर्लिङ्गमप्येवं क्रमान्महालिङ्गं निष्पाद्याधिष्ठानपिण्डिकयोः पश्चिमपंक्तिस्थमधरकोष्ठादि प्रादक्षिण्यप्रवेशगत्या विद्याद्वितीयभेदांस्तल्लिङ्गगतपञ्चविंशतिकोष्ठेषु अग्रपंक्तिमध्यकोष्ठादिप्रादक्षिण्यप्रवेशगत्या विद्याप्रथमभेदांस्तन्मध्यकोष्टे स्ववाञ्छितमधिष्ठानपिण्डिकयोरन्तरालकोष्ठत्रये पंक्त्या दिननित्याश्चालिखेदिति ॥ ८६ ॥

समत्रिरेखामित्यादिभिरनुभावत इत्यन्तैस्त्रिभिः श्लोकैर्योनिचक्रनिर्म्माणादिकमुपदिशति । तत्र योनिं स्वाभिमुखत्र्यस्रं । तस्या योन्याः । तुर्विशेषे । मध्यतः मध्ये । तत्तत्सूत्रवशात्तत्तद्रेखानुगुणतः कुर्य्यात् । दश सूत्राणि । त्रिषु सूत्रेषु । तथा यथैकविंशत्यधिकशतयोनयः सम्भवन्ति तथेत्यर्थः । समं समान्तरालम् अन्तरालसाम्याद्दते मर्म्मणामसम्भवात् । अत्र योनिचक्रे । परितः अग्रादिप्रादक्षिण्येन । ताः द्वितीयभेदजा विद्याः । तुः समुच्चये । अयमत्र विरचनाक्रमः स्वाभिमुखं समत्रिरेखात्मिकां योनिमुक्तवन्निष्पाद्य तद्रेखात्रयं दशभिर्दशभिश्चिह्नैः समान्तरालमेकादशधा विभज्य तद्रेखाचिह्नेषु चिह्नाच्चिह्नं तत्तत्सूत्रानुगुण्याद् यथा मर्म्मभेदं सम्भूय त्रिंशत्सूत्रास्फालनादेकविंशत्यधिकशतयोन्यात्मकं चक्रं विधाय तद्योनिष्वग्रादिप्रादक्षिण्यप्रवेशगत्या तार्त्तीयविद्याद्वितीयभेदान् शिष्टमध्ययोन्यां स्ववाञ्छितञ्च विन्यसेदिति । तत्र योनिचक्रे । तां ललितां विद्यां सपरिवारामित्यर्थः । प्राग्व-

तत्र तामर्च्चयेत् प्राग्वत् स्थापयेच्च तथा तथा ।
तत्र स्वेष्टमवाप्नोति योनिचक्रानुभावतः ॥ ८९ ॥
समत्रिरेखं निष्पाद्य त्र्यस्रं योनिञ्च सङ्गतम् ।
तत्र तिर्य्यक् चतुःसूत्रपातनादन्यतस्तथा ॥ ९० ॥
तिर्य्यक्सूत्रं मार्जयित्वा पूर्व्वशृङ्गात्तथाभितः ।
प्रवेशगत्या विलिखेत्ताश्चतुर्व्विंशतिं क्रमात् ॥ ९१ ॥
विलिख्य शिष्टवज्रस्थं विलिखेन्निजवाञ्छितम् ।
तत्र तां पूजयेद्देवीं पूर्णास्विष्टार्थसिद्धये ॥ ९२ ॥

---

दुक्तविनियोगेषु । चः समुच्चये । तथा तथा यथा यथा प्रयुक्तं तथा तथेत्यर्थः ॥८९॥

समत्रिरेखमित्यादिभिः सिद्धये इत्यन्तैस्त्रिभिः श्लोकैर्वज्रवज्रयन्त्रनिर्माणविधानादिकमुपदिशति । तत्र त्र्यस्रं ऊर्द्ध्वमुखत्रिकोणं । योनिं अधोमुखत्रिकोणं । चः समुच्चये । सङ्गतम् अन्योन्यमूर्द्ध्वाधःक्रमेण तिर्य्यग्रेखयैकयैवोभयं कुर्य्यादित्यर्थः । तत्र चक्रे । अन्यतः ऊर्द्ध्वगतत्र्यस्रवामरेखामारभ्याधोगतयोनिदक्षिणरेखावधि तद्दक्षिणरेखामारभ्येतरवामरेखावधि । तथा समान्तरालमिति यावत् । तिर्य्यक्सूत्रं त्र्यस्रयोन्योर्मध्यस्थं । पूर्व्वशृङ्गात् प्राग्वद् वज्रवज्रकोष्ठादारभ्येत्यर्थः । तथा प्रादक्षिण्येन । ताः प्रथमभेदविद्याः । शिष्टवज्रस्थं मध्यवज्रस्थमित्यर्थः । अयमत्र विरचनाक्रमः । मध्ये हंसपदं विधाय तत् सन्दंशस्थानावगाहि प्राक्प्रत्यग् ब्रह्मसूत्रं प्राग्वदभितो जनितमत्स्यद्वयावगाहि याम्योदक्सूत्रञ्च आस्फाल्य तत्सन्दंशस्थानमारभ्य याम्योदक्सूत्रोभयपार्श्वयोः समप्रमाणेन चिह्नद्वयं कृत्वा तच्चिह्नयोरन्तरे प्रमाणोपेतं सूत्रयोर्द्वयं द्वयं तच्चिह्नद्वयमारभ्य प्राक्पश्चिमयोर्ब्रह्मसूत्रावधि सम्भूय सूत्रचतुष्टयं यथा त्र्यस्रयोन्यात्मकचक्रं तथास्फाल्य तद्ब्रह्मसूत्रं तिर्य्यग्रेखां च मार्जयित्वा त्र्यस्रयोन्योर्वामदक्षिणरेखयोर्द्वयं द्वयं चतुर्भिश्चिह्नैः पञ्चधा पञ्चधा विभज्य तच्चिह्नक्रमवशात्त्र्यस्रवामरेखादि योनिदक्षिणरेखान्तं त्र्यस्रदक्षिणरेखादि योनिवामरेखान्तञ्च सम्भूयाष्टसूत्रास्फालनेन तन्मध्ये पञ्चविंशति वज्रकोष्टानि विधाय तत्प्राक्शृङ्गमारभ्य प्रादक्षिण्यप्रवेशगत्या श्रीविद्यातार्त्तीयप्रथमभेदान् शिष्टमध्ये निजवाञ्छितञ्च विन्यसेदिति । तत्र वज्रवज्रयन्त्र । पूर्णासु पञ्चमीदशमीपञ्चदशीषु ॥ ९२ ॥

तथा विधाय दशभिर्द्दशभिः सूत्रपातनैः ।
द्वितीयभेदाः विलिखेत्तथा साध्यसमन्विताः ॥ ८३ ॥
तत्रापि पूजनाद्यैस्तु सिद्धेयुः निजवाञ्छिताः ।
एवमूर्द्ध्वं तृतीयोत्थविद्याभिरपि कल्पयेत् ॥ ८४ ॥
तेपि वाञ्छितसंसिद्धीः कुर्य्युरेव सुनिश्चितम् ।
कोष्ठयन्त्रविभेदानि शृणु वच्म्ये यथाविधि ॥ ८५ ॥

---

तथेत्यादिना सुनिश्चितमित्यन्तेनार्द्धाद्येन श्लोकद्वयेन महावज्रवज्राभिधानं यन्त्रमेवमूर्द्ध्वपरतोयं यन्त्रनिर्म्माणविधानादिकञ्चोपदिशति। तत्र तथा विधाय प्रागन्योन्यसङ्गतं त्र्यस्रयोनिं विधाय। द्वितीयभेदाः विद्याः। तथा शिष्टमध्ये। अयमत्र विरचनाक्रमः। प्राग्वदन्योन्यसङ्गतं त्र्यस्रयोनिचक्रं विधाय तन्मध्ये प्राग्वद्दशसूत्रास्फालनादेकविंशत्यधिकशतवज्रकोष्ठानि निष्पाद्य प्राक्त्र्यस्रमारभ्य प्रादक्षिण्यप्रवेशगत्या विद्याद्वितीयभेदान् शिष्टमध्ये स्ववाञ्छितञ्चालिखेदिति। तत्र महावज्रवज्रयन्त्रे। पूजनाद्यैरित्यत्रादाद्यशब्दः स्थापनादिविषयः। एवमुक्तप्रकारेण। तृतीयोत्थविद्याभिः तार्त्तीयविद्यात्तृतीयभेदविद्याभिः। ऊहनप्रकारे त्वेकं यन्त्रमुदाहरणत्वेन लिख्यते। प्राग्वत्त्र्यस्रं योनिचक्रं विधाय तन्मध्ये षड्विंशतिषड्विंशतिसूत्रास्फालनादेकोनत्रिंशदधिकसप्तशतं वज्रकोष्ठानि विधाय तत्र प्राग्गतशृङ्गादिप्रादक्षिण्यप्रवेशगत्या वासनापटले वक्ष्यमाणतार्त्तीयविद्यात्तृतीयभेदान् विंशत्यधिकं सप्तशतं परिशिष्टेषु पुनर्नवसु कोष्ठेषु त्रित्रिकोष्ठक्रमेण श्रीविद्याकूटत्रयं मध्यस्थतार्त्तीयकूटे प्राग्वत् स्वमनीषितं च विन्यसेदिति। एवं कोष्ठवज्रादिष्वपि ऊह्यकोष्ठानि परिकल्प्य विद्याभेदान् विषमान् न्यसेत्। ते ऊह्य परिकल्पिता यन्त्रभेदाः। एवावधारणे ॥ ८४ ॥

कोष्ठत्यादिभिरागमे इत्यन्तैरर्द्धाद्यैः पञ्चभिः श्लोकैर्विषमसमकोष्ठचतुरस्रचक्रेषु पंक्तिस्थमनीषितसंख्यमङ्कानालिख्य तदनुरूपसंख्यविद्याकूटलेखनादनन्तानि यन्त्राण्यमीषां सर्वेषां तन्त्रान्तरोक्तत्वञ्चोपदिशति। तत्र यथाविधीत्यनेन कोष्ठेषु विवक्षितसंख्याकलेखनस्य तन्त्रान्तरोक्तत्वं द्योतयति। नवषोड़शकोष्ठादि नवकोष्ठं षोड़शकाष्ठं षोड़शकोष्ठचक्रं चारभ्येति यावत्। सर्व्वधः पूर्व्वोक्तपूर्व्वोक्तचक्रवाह्ये परितः। विषमं विषमसंख्यकोष्ठात्मकं चतुरस्रं। समं

नवषोडशकोष्ठादि संवद्धो विषमं समम् ।
तेष्वङ्कानि समं कृत्वा पंक्तौ तेषु समालिखेत् ॥ ८६ ॥

---

समसंख्यकोष्ठात्मकं चतुरस्रं । तेषु चक्रेषु । समं समसंख्यं कृत्वा तन्त्रान्तरोक्तक्रमादित्यर्थः । तेष्वित्येतत् पंक्ताविति पूर्व्वत्र समालिखेदित्युत्तरत्र चान्वेति । तेन पंक्तौ स्थितेषु कोष्ठेष्वित्येकं तेषु विद्याभेदान् समालिखेदित्यन्यः । तेषां कोष्ठानां । मध्यस्थकोष्ठतः विषमकोष्ठे चतुरस्रे सर्व्वमध्यस्थकोष्ठे समकोष्ठे चतुरस्रे मध्यस्थकोष्ठचतुष्टये च । सर्वैरेभिरसाध्याभावात् । अयमत्र विरचनाक्रमः । प्राक्प्रत्यगुदक्षिणोदक्कचतुःपञ्चसूत्रास्फालनाच्च क्रमान्नवकोष्ठात्मकं षोडशकोष्ठात्मकं चक्रं विषमं समञ्च विधाय तत्तत्परितस्तयोश्च प्रतिदिशमेकैकपंक्तिवर्द्धनक्रमात् सम्भूय पंक्तिचतुष्टयपंक्तिचतुष्टयवर्द्धनेन विषमसमसंख्यकोष्ठात्मकसमचतुरस्राणि चक्राणि स्वाभिमतानुगुणं चिह्नं निष्पाद्य तेषु प्रतिपंक्तिकं कोष्ठेषु वाञ्छितसंख्यादिवाञ्छितसंख्यादिक्रमेण यदङ्कादूर्द्ध्वाधःपंक्तिक्रमात्तिर्य्यक्पंक्तिक्रमाद्द्विविधपंक्तिकोणक्रमाच्च समसंख्यमालिख्य तत्तत्कोष्ठेषु तत्तदङ्कानुगुणं तार्त्तीयविद्याभेदेष्वेकमेकमालिख्य मध्ये निजवाञ्छितं चालिखेदिति । अत्राङ्कानां लेखनक्रमस्यातिरहस्योपि पारंपर्य्याविच्छित्त्यर्थं श्रीनाथपादाज्ञया यथासम्प्रदायं विलिख्यते । अत्र विषमभद्रालेखनक्रमे अध्यर्द्धश्लोके ।

विषमे विलिखेद्भद्रे भुजमध्यात् स्वदक्षिणात् ।
इष्टादिष्टोत्तरैरङ्कै (रेकै) र्द्धनजाद्युत्तरैस्तु वा ॥
कोष्ठानि पूरयेन् मन्त्रिगत्या पतति चेद्बहिः ।
प्रतिराशेरूर्द्ध्वकोष्ठे लिखेदङ्कमनन्तरम् ॥
द्विधाप्यालिख्य कोष्टाङ्कः संस्थाप्य पूर्ववामतः । इति ।

अत्र विषमभद्रादिलक्षणमुत्तरत्र वक्ष्यति । विषमे भद्रे जर्द्ध्वाधोरूपतस्तिर्य्यग्रूपतश्च विषमे कोष्ठे पंक्तिकल्पिते समचतुरस्रचक्रे । भुजमध्यात् स्वदक्षिणात् स्वस्य सर्व्वदक्षिणपार्श्वस्थपंक्तिकोष्ठेषु सर्व्वमध्यस्थकोष्ठादारभ्याङ्कान् लिखेदिति । इष्टादिष्टोत्तरैः परिकल्पितयोरिष्टमादौ विलिख्य ततः प्रतिकोष्ठमुत्तराधिकै (र्भिर्वै)स्तैरङ्कैर्धनजाद्युत्तरैस्तु वा अभीष्टसंख्याधमोत्पन्नैरादुत्तरैर्वा एकपंक्तिधनसमुदायेन आद्युत्तरानयनं वक्ष्यति । तदा-

विद्यात्तृतीयभेदोत्थांस्तत्तदङ्कानुगुण्यतः ।
मनीषितञ्च संलिख्य तेषां मध्यस्थकोष्ठतः ॥ ९७ ॥
विद्ध्याद्वाञ्छितं सर्व्वं तैर्यन्त्रैः कल्पितैस्तथा ।
वश्याकर्षणविद्वेषस्तम्भनोच्चाटनादिकम् ॥ ९८ ॥

---

दुग्रत्तरैरङ्कैर्वेत्यर्थः। कोष्ठानि पूरयेदित्यस्य अङ्कैरित्यनेनान्वयः। मन्त्रिगत्या पूर्व्वलिखितपंक्तिकोष्टानन्तरानन्तरदक्षिणपंक्त्यामूर्द्ध्वतः सचिवगतिकोष्ठेऽनन्तरमनन्तरमङ्कं लिखेदित्यर्थः। पतन्ति चेद्वहिः सर्व्वदक्षिणपंक्तिकोष्ठे सर्वोर्द्ध्वपंक्तिकोष्ठे चालिखिते सतीत्यर्थः। द्विधापीत्यादि मन्त्रिगत्या च। प्रतिराशिगत्या लब्धे स्थाने सति लेखनीयमनन्तरमङ्कपूर्व्वकं लिखितकोष्ठस्य वामकोष्ठे लिखेदित्यर्थः। एतदुक्तं भवति विषमभद्रे निजसर्व्वदक्षिणपंक्तिमध्यस्थकोष्ठे आद्यमङ्कं विन्यस्य तिर्य्यक्पंक्तौ सर्ववामकोष्ठस्योर्द्ध्वकोष्ठे द्वितीयमङ्कं सर्व्वाधःस्थपंक्तिमध्यकोष्ठे तृतीयं तद्वामे चतुर्थं पश्चात् सचिवगत्या चालिख्य उपरितनकोष्ठेष्वेकैकमस्मिन् लिखिते सति अनन्तरमङ्कं तत्प्रतिराशिदक्षिणकोष्ठे विलिख्य ततः सचिवगत्या विलिखेत्। एवमुभयतोप्यलब्धस्थाने स्वपूर्व्वलिखितकोष्ठस्य वामकोष्ठात् प्रागवद्विलेखनात् सर्व्वतः साम्यं भवतीति। विषमगर्भलेखने चाद्योयं स्लोकचतुष्टयम्।

गर्भं तु विषमे वर्गचतुष्के वक्रतो लिखेत् ॥
वर्गपंक्तिं त्रिभिर्हृत्वा फले त्वेकं विनिक्षिपेत्।
शेषश्चेत्तत्समं कोष्ठं व्यत्यस्येत् प्रतिपंक्तिकम् ॥
आद्यन्तवर्गयोरूर्द्ध्वाधःपंक्तिषु यथाक्रमम्।
अयं विशेषो व्यत्यस्ते विद्यात्तद्वर्गपंक्तितः ॥
त्रिभिर्हृतफलं कोष्ठं पूर्वं तत् कर्णयोः क्रमात्।
व्यत्यस्य शेषकोष्ठानि कर्णादितरतस्तथा ॥
द्वितीयफलशेषो यस्तत्संख्यां पंक्तिमन्ययोः।
व्यत्यस्येद्वर्गयोस्तिर्य्यक् समाङ्कं सर्व्वपंक्तयः ॥ इति ॥

अस्यार्थः। गर्भे तु विषमे विषमभद्रचतुष्टयसम्पाते विषमगर्भः तस्मिन्। वक्रतो लिखेत् अस्मिन् गर्भचतुष्ठये अभीष्टमेकं प्रथमं संकल्प्य तत्कोणस्थं द्वितीयं तत्तत्पार्श्वस्थं तृतीयं तत्कोणस्थं चतुर्थं संकल्प्य प्रतिवर्गं विषमभद्रोक्तक्रमादङ्कान-

मुक्तक्रमादिलिखेदित्यर्थः। वर्गपंक्तिष्वपीत्यादि। एषु चतुष्कवर्गेषु एकपंक्तिसंख्यां विभिद्य त्वा लब्धं फलं क्वचित् संस्थाप्य भागहारशेषश्चेदेकमेतत् फले योज्यं तदाज्यं फलं सम्भवति। तत्र फलसंख्यानि कोष्ठानि प्रथमचतुर्थवर्गयोरूर्द्ध्वाधः पंक्तिषु प्रतिपंक्ति तत्तत्पंक्तिकोष्ठक्रमानतिलङ्घनेन विन्यसेदित्यर्थः। अयं विशेष इत्यादिनार्द्धयेनैकेन व्यत्यस्तकोष्ठविशेषः कथितः। यथा एकवर्गपंक्तिसंख्यां द्विगुणीकृत्य विभिर्विभज्य तत्फलं द्वितीयसंज्ञं भवति। शेषसंख्या क्वचित् स्थातव्या तत्र द्वितीयफलमुभयकर्णकोष्ठेष्वेकानुक्तक्रमेण प्रागेव व्यत्यस्य तत्तत्पंक्तिषु प्रथमफलोपान्तसंख्यावशिष्टसंख्या क्वचित् स्थातव्या। तया तावत् स्वकर्मकोष्ठव्यतिरिक्तकोष्ठेष्वङ्कान् प्राग्वत् क्रमात् व्यत्यसेत्। तद्द्वितीयेत्यादिपूर्व्वस्थापिता द्वितीयफलशेषसंख्या यावत् संख्यामभीष्टपंक्तिद्वयतृतीयवर्गयोस्तिर्य्यग्रूपासु पंक्तिषु पंक्तिकोष्ठक्रमानतिलङ्घनेन व्यत्यसेदित्यर्थः। एवं कृते सर्व्वतः साम्यं भवतीत्यर्थः। विषमगर्भलङ्घने लघूपायश्लोकद्वयं।

यद्वान्त्यफलसंख्यातां पंक्तिमारभ्य पंक्तिशः।

स्वकामग्रफलसंख्यातः तिर्य्यग् व्यत्यस्य तत्परम्॥

क्रमादुभयकोणान्तं कोणान्येवोभयोरतः।

आद्यन्तवर्गयोः प्राग्वद्व्यत्यसेदन्यवर्गयोः॥

अस्यार्थः। सर्व्वप्रथमचतुर्थवर्गयोस्तिर्य्यग्रूपपंक्तिषु ऊर्द्ध्वपंक्तिमधःपंक्तिं वा समारभ्य गणयित्वा तास्वेव पंक्तिषु एकहीनाद्यफलसंख्यां पंक्तिं तिर्य्यग्रूपतस्तान्योन्यं पंक्तिशः प्राग्वद्व्यत्यस्यानन्तरमेकां पंक्तिमुभयकर्णकोष्ठावधि व्यत्यस्य तदवशिष्टपंक्तिषूभयकोष्ठस्थानङ्कानेव व्यत्यसेत्। एवं कृते प्रथमचतुर्थवर्गयोरूर्द्ध्वाधःपंक्तिषु प्रतिपंक्ति प्रथमफलसंख्यकोष्ठान्येव व्यत्यस्तानि भवन्ति। द्वितीयतृतीयवर्गयोः पूर्व्वोक्तद्वितीयफलशेषसंख्यापंक्तिमपि तिर्य्यग्व्यत्यसेदित्यर्थः। समभद्रलेखने अर्द्धश्लोकः।

समे भद्रे वतानङ्कान् पूर्व्वमश्वस्य वर्त्मना।

यस्यैवैकान्तरेणाथ पुनश्चास्य च संलिखेत्॥

तत्तच्छिरस्था वान्त्यादितद्दत्तद्दगजाध्वना। इति॥

अस्यार्थः। षोड़शकोष्ठात्मके समभद्रे स्ववामभागाधःस्थकोष्ठे आदिममङ्कं विन्यस्य तस्मादश्वमार्गेण ऊर्द्ध्वादि द्वितीयतिर्य्यकपंक्तौ वामतो द्वितीयकोष्ठे द्वितीयमङ्कं तत् पंक्तावेव सर्व्वदक्षिणकोष्ठे तृतीयं सर्व्वाधःस्थ पंक्तौ वामतस्तृ-

आयुरारोग्यविजयं विभूत्याद्यञ्च सिध्यति ।
स्थापनाद्धारणाच्चान्यैरुपायैः साधकोनिशम् ॥ ८८ ॥

---

तीयकोष्ठे चतुर्थञ्च विन्यस्य विलोमगत्या चतुर्थादिप्रथमान्ताङ्कोपरितनोपरितन-कोष्ठेषु पञ्चमाद्यष्टमान्तानङ्कान् विन्यस्य तदष्टमादिप्रथमाङ्कोपर्य्युपलक्षित कोष्ठानां गजमार्गगत्या तेष्वष्टसु कोष्ठेषु नवमादिशिष्टाष्टकं विलिखेदिति । समगर्भविन्यासेऽर्द्धाद्यश्लोकः ।

समगर्भेपि वै कृत्वा वर्गान् षोड़शभिः पदैः ।
प्रतिवर्गं चतुःकोष्ठे पुर्ब्बोक्तक्रमतो लिखेत् ॥
अन्त्यादि तत्तच्छिरसि गजमार्गेण चान्यतः ॥ इति ॥

अस्यार्थः । षोड़शभिः षोड़शभिः कोष्ठैरेकमेकं वर्गं प्रकल्प्य प्रतिवर्गं सम भद्रोक्तप्रक्रियया चतुरश्चतुरोनुक्रमात् प्रतिलोमक्रमात् क्रमेण विन्यस्य पश्चात्त-दन्त्याङ्कादिप्रथमाङ्कान्तां व्युत्क्रमात्तत्तत्गजमार्गलिखितकोष्ठेषु शिष्टाङ्कान् क्रमाद्विलिखेत् इति ।

काष्ठाष्टकक्रमात् प्राग्वत् प्रतिवर्गं लिखेत्तु वा ।

इत्यर्द्धेन प्रक्रियान्तरेणैतदुक्तं भवति । समगर्भे तु भद्रप्रोक्तवत् प्रतिवर्गमङ्का-नामष्टकं अष्टकं प्रथमं विन्यस्य अन्त्यवर्गलिखितान्त्याङ्कादि प्रथमवर्गोल्लिखित-प्रथमाङ्कान्तं विलोमतस्तत्तत् गजमार्गेण शिष्टाङ्कान् विलिखेदिति ।

उद्दिष्टाङ्के पंक्तिकोष्ठहृते लब्धं पुनर्हरेत् ।
श्लोकसर्वपदार्द्धेन फलशेषौ च पादिकौ ॥

इत्यर्द्धाभ्यामेकैकपंक्तावुद्दिष्टधनस्य आद्युत्तरानयनप्रकारः कथितः । यथा उद्दिष्टाङ्कमेकपंक्तिकोष्ठसंख्यया विभज्य तत्तत्फलं सर्व्वपंक्तिकोष्ठे स्यात् । पंक्तिस्थौ संख्यन्त्वेकमपास्य तदर्द्धीकृत्य तत्संख्यया विभजेत् । तत्तत्फलमुत्तरं भवति भागहारशेषश्चादिर्भवतीति ।

श्लोकसर्वपदार्द्धञ्च यमादिषु युतं पुनः ।
गुणयेत् पंक्तिकोष्ठे स्यात् पंक्तिकोष्ठेषु तत्फलम् ।

इत्यर्द्धाभ्यामिष्टादिष्टोत्तरं लिखितसर्वभद्रेष्वेकैकपंक्तिस्थसमुदयाङ्कानयनं कथितं । अस्यायमर्थः । तत्र भद्रं सर्वं पंक्तिकोष्ठसंख्यास्वेकमपास्य तदर्द्धीकृत्य तत्संख्यया संगुणय्य तस्मिन्नादि संयोज्य तदेकपंक्तिकोष्ठसंख्यया गुणयेत् । तत्फलमेक-पंक्तिस्थाङ्कः समुदायो भवतीति ।

इति देव्या यन्त्रभेदास्तवोक्ताः सर्व्वसिद्धिदाः ।
अशेषं देवि ते प्रोक्तं यन्त्रसिद्धाभिधागमे ॥ १०० ॥
ईश्वरात्ममयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निभालनाच्चित्ते तत्तत्त्वं स्वात्मसात् कृतम् ॥
इति षोड़शनित्यातन्त्रे श्रीकादिमते त्रयस्त्रिंशत्
पटलम् ॥ ३३ ॥ ० ॥

---

त्र्यादिद्विद्व्युत्तरं भद्रं विषमं पंक्तिकोष्ठतः ।
चतुश्चतुष्टयं षट्कं भद्रं विषमगर्भकम् ॥
तद्वच्चतुष्कं पंक्तीनां भद्रं स्यात् समगर्भकम् ।

इत्यर्द्धाधेन श्लोकेन विषमभद्रादिलक्षणं कथितं । प्रतिबाहु त्रित्रिकोष्ठपंक्त्यादि-द्विद्विकोष्ठपंक्त्युत्तरचतुरस्रं विषमभद्रसंज्ञं भवति । प्रतिबाहु षट् षट्कोष्ठ-पंक्त्यादि चतुश्चतुःकोष्ठपंक्त्युत्तरं भद्रं विषमगर्भसंज्ञं तद्वच्चतुश्चतुःकोष्ठपंक्त्यादि-चतुश्चतुष्कोष्ठ पंक्त्युत्तरं भद्रं समगर्भसंज्ञं चेति । अथ मूलग्रन्थव्याख्या लिख्यते। उच्चाटनादिकं इत्यादिशब्दो निधनादिविषयः। विभूत्याद्यमित्यत्र आद्यशब्दो भूम्यादि विषयः । अन्यैरभिषेकादिभिः । देवीति सम्बुद्धिः । प्रोक्तं प्रागेवेति शेषः । यन्त्रसिद्धाभिधागमे यन्त्रसिद्धिसंज्ञे आगमे ॥ १०० ॥ ० ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसार
सिंहराजप्रकाशाभिधानेन सुभगानन्दनाथेन विरचितायां मनोरमा-
ख्यायां व्याख्यायां लिङ्गयन्त्रप्रकाशनपरं त्रयस्त्रिंशं
पटलं परिपूर्णं परामृष्टम् ॥ ३३ ॥ ॐतत्सत् ॥

ग्रन्थसंख्या—त्रयस्त्रिंशे तु पटले व्याख्याग्रन्था उदीरिताः ।
साध्यर्द्धपादादधिका नवतिश्च चतुःशतम् ॥
श्रीचक्राद्यानि यन्त्राणि प्रोक्तान्येकादश क्रमात् ।
उद्धोत्पन्नान्यनन्तानि तथा कोष्ठभवानि च ॥

---

## चतुस्त्रिंशपटलम् ।

अथ षोड़शनित्यानां विद्याकौतुकिनामिह ।
चमत्कारकरीं विद्यां वक्ष्यामि शृणु सुन्दरि ॥ १ ॥
सिद्धसारस्वतं मृत्युञ्जयं त्रिपुटगारुड़े ।
अश्वारूढ़ामन्नपूर्णां नवात्मानं नवात्मिकाम् ॥ २ ॥
ततश्च देवीहृदयं गौरीविद्याञ्च लघ्वदाम् ।
निष्कत्रयप्रदामिष्टदायिनीञ्च मतङ्गिनीम् ॥ ३ ॥
राज्यलक्ष्मीं महालक्ष्मीं सिद्धलक्ष्मीमनन्तरम् ।
गोपालभेदानौषधान् वदाम्युक्तक्रमेण वै ॥ ४ ॥
शुचिः स्वेन ततो माया वियद्दाहस्ववह्नियुक् ।
हंसहृत्तेजसां योगाद्युतिदाहचरस्वकैः ॥ ५ ॥

---

पूर्व्वस्मिंस्त्रयस्त्रिंशे पटले षोड़शनित्याविद्यासिद्धानि वाञ्छितप्राप्तिफलानि ललिताविद्यायाः स्वरूपभेदसमुत्थानि कानिचिद्यन्त्राण्युपदिश्यानन्तरं तेषां लोकचमत्कारकरान् प्रयोगान् विद्याभिरुपदिशत्यथ षोड़शनित्यानामित्यादिना आत्मवानित्यन्तश्लोकशतरूपेण चतुस्त्रिंशपटलेन। तत्र अथ षोड़शेत्यादिभिः क्रमेण वै इत्यन्तैश्चतुर्भिः श्लोकैः सप्रस्तावपटलार्थानुपदिशति। तत्र इह पटले सुन्दरीति सम्बुद्धिः। सिद्धसारस्वतमित्यादिना श्लोकेन विद्याष्टकमुपदिशति। तत्र त्रिपुटगारुड़े त्रिपुटाविद्यां गारुड़विद्याञ्च। ततश्चेत्यादिना श्लोकेन विद्याषट्कं। राज्यलक्ष्मीमित्यर्द्धेन विद्यात्रयं। गोपालभेदान् सप्तेत्यर्थः। सप्तधा इति तदुद्धारक्रमे वक्ष्यमाणत्वात्। औषधानि सकलभुजङ्गमविषहराणि खेच्छोत्क्रान्तिकरणानि च ॥ ४ ॥

शुचिरित्यादिना विग्रहेत्यन्तेन श्लोकद्वयेन सिद्धसारस्वतविद्यास्वरूपमुपदिशति। तत्र शुचिः ऐकारः स्वेन विन्दुना सहेति शेषः। ततः अनन्तरम-

पुनश्च हंसहृद्वंसद्वयदाहवनैरपि ।
समायैरुदिता विद्या पञ्चार्णामृतविग्रहा ॥ ६ ॥
पटलेऽस्मिन्ननुक्तानामङ्गानि निजविद्यया ।
मायया वा विदध्याच्च ध्यानं चाद्यामृतेरिते ॥ ७ ॥
पयोव्रतः पञ्चलक्षं जपित्वा कुलसुन्दरीम् ।
ध्यात्वा सिद्धमनुः पश्चाद्विदध्याद्विनियोगकम् ॥ ८ ॥
अनया मन्त्रितैरद्भिः शोधयित्वा तु कन्यकाम् ।
पाययित्वा च तां ब्रूयात् श्लोकयेति समाहितः ॥ ९ ॥

---

क्षरमिति शेषः । माया हृल्लेखा । वियद्दाहस्ववह्नियुक् रेफ ईकारविन्दुसहितः शकारः स्त्रीवीजमित्यर्थः । हंसहृत्तेजसां योगाद्युतिदाहचरस्वकैः हकारसकारस्वकाररेफकाररेफएकारविन्दुसप्तभिरनन्तरं वीजमित्यर्थः । पुनश्च अनन्तरमक्षरं हंसहृद्वंसद्वयदाहवनैरपि समायैः हकारसकारहकारद्वयरेफऔकारविसर्जनीयात्मभिः सप्तभिरक्षरैः पञ्चमं वीजमिति यावत् । अमृतविग्रहा सप्तविंशतिपटले प्रागुक्तामृतेश्वरीविद्यायाः प्रोक्तध्यानविग्रहा । प्रयोगविशेषे ध्यानविशेषः प्रोक्तश्च तत्रैवेत्यर्थः ॥ ६ ॥

पटलेत्यादिना श्लोकेनास्मिन् पटले प्रोक्तानां विद्यानामङ्गध्यानयोः परिभाषोच्यते । तत्र अनुक्तानां विद्यानामित्यर्थः । निजविद्यया स्वस्वविद्यया षोढ़ाविभिन्नेनाद्यवीजेन गुरूक्तक्रमेणेत्यर्थः । मायया हृल्लेखया दीर्घस्वरषट्कभिन्नयेत्यर्थः । वा विकल्पे । आद्यामृतविग्रहा ध्यानमिति यावत् । चः समुच्चये । अमृतेरिते ध्याने इति शेषः । एतदुक्तं भवति अमृतेरिते ध्याने सति तत्तद्देवतानां ध्यानममृतेश्वरीध्यानमेवेति ॥ ७ ॥

पयोव्रत इत्यादिभिर्महाद्भुतमित्यन्तैस्त्रिभिः श्लोकैर्विद्यासाधनप्रकारं सिद्धविद्यासारस्वतविद्यया दिव्यप्रयोगञ्चोपदिशति । तत्र पयोव्रतः क्षीराहारी । कुलसुन्दरीं ध्यात्वा पञ्चदशे पटले प्रोक्तकुलसुन्दरीविग्रहं ध्यात्वेत्यर्थः । सिद्धमनुः सिद्धविद्यः । अनया सिद्धसारस्वतविद्यया । मन्त्रितैः दिव्यत्वान्मन्त्रिताभिरिति यावत् । तुर्विशेषे । कन्यकां अविक्षुब्धेन्द्रियामिति यावत् । चः समुच्चये । तां कन्यां ब्रूयात् ।

गङ्गाप्रवाहवत्तस्या भारती निःसरेन्मुखात् ।
आचष्टे च त्रिकालस्थानर्थान् पृष्टा महाद्भुतम् ॥ १० ॥
भूः स्वेन ज्याधरास्वेता हृन्मायया समन्वितम् ।
पालयेति द्विरुक्त्वा तत् प्रतिलोममुदीरयेत् ॥ ११ ॥
विद्या मृत्युञ्जयाख्यासौ दीर्घस्वरयुजा हृदा ।
विद्ययाङ्गानि नियतं स्वात्मानं चिन्तयेदिति ॥ १२ ॥
आद्यमध्यतृतीयार्णनालपद्मसुकर्णिके ।
समासीनं सुधार्द्राङ्गं मौलाविन्दुकलायुतम् ॥ १३ ॥

---

श्लोकयेति । अत्र भिन्नक्रमेणान्वयः । श्लोकयेति ब्रूयादिति । समाहितः अन्यबुद्धिव्यापारादिरहितः । तस्याः कन्यायाः । चः समुच्चये । त्रिकालस्थानर्थान् भूतभविष्यद्वर्त्तमानकालस्थान् । पृष्टा कन्येत्यर्थः । महाद्भुतं महाचमत्कारभूतं यथा ॥ १० ॥

भूस्वेनेत्यादिना श्लोकेन मृत्युञ्जयविद्यास्वरूपमुपदिशति । तत्र भूः ओकारः स्वेन विन्दुना सहितेति शेषः । ज्या जकारः धरा स्वेता उकारविन्दुभ्यां सहिता । हृत् सकारः मायया समन्वितं विसर्जनीयेन समन्वितं । पालयेति द्विरुच्चार्य्य पालय पालयेत्यर्थः । तत् उद्धृताक्षरत्रयं । प्रतिलोमं प्रतिक्रमात् । अत्र प्रयोगेषु तु प्रथमं प्रणवाद्यक्षरत्रयमुच्चार्य्यानन्तरं पालनीयस्याख्यां द्वितीयान्तामुच्चार्य्य ततः पालययुगं ततो व्युत्क्रमेणाद्यक्षरत्रयञ्चोच्चरेदिति सम्प्रदायार्थः ॥ ११ ॥

विद्येत्यादिभिरेधत इत्यन्तैस्त्रिभिः श्लोकैः मृत्युञ्जयविद्याध्यानस्वरूपमुपदिशति । तत्र दीर्घस्वरयुजा हृदा दीर्घस्वरषड्भिन्नेन सकारेण सविन्दुनेति सम्प्रदायः । स्वात्मानं निजविग्रहं चिन्तयेदिति वक्ष्यमाणप्रकारेण ॥ १२ ॥

आद्येत्यादिनार्द्धेनैतदुक्तं भवति आद्याक्षरनालं द्वितीयाक्षरदलं तृतीयाक्षरकर्णिकमूर्द्ध्वाधोमुखं सितकमलद्वयं सङ्कल्प्य तयोरन्तराले सितकमले इति । सुधार्द्राङ्गं तत् पद्मद्वयाक्षरमौलिस्थचन्द्रकलानिःसृतसुधार्द्राङ्गं । सुसितं वर्णतः । हरिषे-

सुसितं हरिणाचस्रक्चिन्तापाशकरं हरम् ।
स्वैक्येन भावयेन्नित्यं जयदीर्घायुरेधते ॥ १४ ॥
तृतीयममृताख्याया द्वितीयं तदनन्तरम् ।
रसावह्निस्वसहितप्राणास्तैस्त्रिपुटोदिता ॥ १५ ॥
त्रिभिर्द्विरुक्तैरङ्गानि कृत्वा विद्यान्तु नित्यशः ।
जपेदङ्गो मुखे स्वैक्यं भावयंस्त्रिसहस्रकम् ॥ १६ ॥
तेन विद्यां श्रियं कान्तिं कवितां गानकौशलम् ।
नरनारीनृपाणाञ्च वाल्लभ्यं लभते नरः ॥ १७ ॥
अरुणामरुणाचस्यां प्रसन्नवदनाम्बुजाम् ।
पुष्पेष्वङ्कुशपद्मानि पद्मपाशेक्षुचापकान् ॥ १८ ॥
दधानां बाहुभिः षड्भिः माणिक्यमुकुटोज्ज्वलाम् ।
शृङ्गारभूषापिकवाक्चामरादर्शपीडकाः ॥ १९ ॥

---

त्याद्यायुधचतुष्टयं वामोर्द्ध्वकरादि तदधःकरान्तमप्रादक्षिण्यक्रमेण । तत्र चिन्तेति व्याख्यानमुद्रा । स्वैक्येन स्वापृथक्त्वेन ॥ १४ ॥

तृतीयेत्यादिना श्लोकेन त्रिपुटाविद्यास्वरूपमुपदिशति । तत्र तृतीयममृतेश्वर्य्याः सिद्धसारस्वतविद्यातृतीयबीजं स्त्रीबीजमित्यर्थः । एतच्छ्रीत्रिपुटाविद्यायाः प्रथमं बीजमित्यर्थः । द्वितीयं तदनन्तरं सिद्धसारस्वतविद्याया द्वितीयं बीजं । रसावह्निस्वसहितप्राणाः लकार ईकारबिन्दुभिः सहितः ककारः । तेन कामबीजमुच्यते । तैस्त्रिभि र्बीजैः ॥ १५ ॥

त्रिभिरित्यादिभिः स्मरेदित्यन्तैः पञ्चभिः श्लोकैस्त्रिपुटाविद्यायाः षडङ्गानि साधनक्रमं सिद्धविद्यस्य प्राप्यानि फलानि तद्ध्यानं तत्परिवारध्यानञ्चोपदिशति । तत्र त्रिभिर्बीजैर्द्विरुक्तैर्वारद्वयमुच्चारितैः । तुर्विशेषे । त्रिसहस्रकं वाराणामिति शेषः । तेन जपेन । चः समुच्चये । नरः साधकः । अत्रायुधक्रमस्तु दक्षिणाधोहस्तादिवामाधरहस्तान्तं प्रादक्षिण्येन बोद्धव्यः । षड्भिः सम्भूयेत्यर्थः । दधाना इत्यस्यानन्तरपूर्व्वश्लोकोत्तरार्द्धेन सम्बन्धः । तस्या देव्याः ।

दधानाः परितस्तस्या गायन्त्यश्चापि शक्तयः।
परिवार्य्य स्थितास्ताभिर्वृतां तां स्वैक्यतः स्मरेत् ॥ २० ॥
भूः खेन हंसदाहाभ्यां मरुद्वह्निक्ष्मया युतौ।
वैरिमोहीत्यक्षराणां चतुष्कं गरुडेति च ॥ २१ ॥
जवी सवह्निग्रासश्च हंसहिंसद्वयन्तथा।
स्वाहान्तो गदितो मन्त्रस्तार्क्ष्यस्याखिलरक्षितुः ॥ २२ ॥
त्रयोविंशार्णको मन्त्र उपरागे सुसाधितः।
फणिदष्टान् पिशाचाद्यैः क्लिष्टानन्यांश्च रोगिणः ॥ २३ ॥

---

स्थिताः नचा(स्ना)सीना इत्यर्थः। देव्या एवासीनत्वं। ताभिः शक्तिभिः। तां देवीं। स्वैक्यतः अपृथग्भावेन ॥ २० ॥

भूः खेत्यादिना सुसाधित इत्यन्तेनाध्यर्द्धेन श्लोकद्वयेन गारुड़मन्त्रस्वरूपं तत्साधनप्रकारञ्चोपदिशति। तत्र भूः ओकारः खेन विन्दुना सहिता इति शेषः। एतत् काकाक्षिवत् पूर्व्वापरयोरन्वेति। हंसदाहाभ्यां हकाररेफाभ्यां अन्योन्यसुश्लिष्टाभ्यां। मरुद्वह्निक्ष्मया क्ष्मया सहितौ मरुद्वह्नी मरुच्च वह्निश्च क्ष्मा चेत्यर्थः। ते वाकार ईकार ऊकाराः तेन मरुदादिवर्णाः पृथक् पृथगिति सम्प्रदायः। तेन ह्रां ह्रीं ह्रूं इत्यक्षरत्रयं निष्पन्नं। वैरिमोहीत्यक्षराणां चतुष्कं वैरिमोहीति अक्षराणां चतुष्टयस्य स्वरूपग्रहणं। गरुडेति च चकारेण गरुड़ इत्यक्षरत्रयस्य च स्वरूपग्रहणत्वं द्योत्यते। जवी पकारः सवह्निग्रासः वह्निना सहितो ग्रासः वह्निरितीकारस्य संज्ञाप्याग्नेयत्वसामग्रात् सम्प्रदायाच्च ईकारः। ग्रासः इति क्षकारः ईकारसहितः क्षकार इत्यर्थः। हंसहिंसद्वयं हंस इत्यक्षरद्वयं हिंस इत्यक्षरद्वयञ्च। तथा स्वरूपग्रहणं। त्रयोविंशार्णः त्रयोविंशतिवर्णात्मकः। उपरागे चन्द्रसूर्य्ययोरिति शेषः। सुसाधितः भवेदिति शेषः। जपतर्पणहोमार्च्चादिभिरित्यर्थः ॥ २२ ॥

फणीत्यादिना जपेदित्यन्तेनार्द्धाधेन श्लोकद्वयेन गारुड़मन्त्रसिद्धस्य प्रयोगविशेषात् फलानि तद्विधानञ्चोपदिशति। तत्र पिशाचाद्यैरित्यत्राद्यशब्दो भूतप्रेतापस्मारकृत्यादिविषयः। चः समुच्चये। त्रिविधैरुग्रैः स्थिरकृत्रिमजङ्गमा-

विषार्त्तान् विविधैरुग्रैर्मूर्च्छितांश्च गतासुकान् ।
पालयेच्छतजप्तेन तोयेनाभ्युक्षणात् क्षणात् ॥ २४ ॥
कुर्वतस्ताण्डवं शम्भोरग्रे मेरुसमं विभुम् ।
अहितानि च खादन्तं स्मरंस्ताक्ष्यमनुं जपेत् ॥ २५ ॥
पश्चात्क्षवीजतैलेनाप्याशु नस्येन नाशयेत् ।
गरलं भुजगानाञ्च समस्तानामयत्नतः ॥ २६ ॥
प्रणवं चरहंसाग्निजवौदाह्वो नभश्चरौ ।
शून्याम्बु रसदाह्वोग्निहृदम्बुमरुदन्वितः ॥ २७ ॥
हंसश्च मरुता युक्तः प्रोक्ता विद्या दशाक्षरी ।
षडङ्गं मायया कृत्वा जपेदक्षरलक्षकम् ॥ २८ ॥

---

स्थैर्विषविशेषैः । मूर्च्छितान् गतसंज्ञान् । गतासुकान् देहे कस्मिंश्चित् प्रदेशे विषवेगेन सङ्कुचितप्राणान् । शतजप्तेन शतवारमभिमन्त्रितेन । कुर्व्वतस्ताण्डवमित्यत्र भिन्नक्रमान्वयः । ताण्डवं कुर्व्वत इत्यर्थः । मेरुसमं विग्रहस्य महत्तया वर्णतया च । विभुं तत्त्वतः । अहितानि प्रागुक्तविषादीनि ॥ २५ ॥

पश्चाच्चेत्यादिना श्लोकेन सकलभुजङ्गमविषनाशनमौषधं तत्प्रयोगञ्चोपदिशति । तत्र पश्चात्क्षवीजेभ्यस्तैलं लब्धं तेन । उपायो गुरुमुखादवगन्तव्यः ॥२६॥

प्रणवमित्यादिना दशाक्षरीत्यन्तेनाध्यर्द्धेन श्लोकद्वयेनाश्वारूढाविद्यामुपदिशति । तत्र चरहंसाग्नी इति मध्यपदलोपो समासः । तेन चरयुतहंसाग्नी इत्यर्थः । चर एकारः हंसाग्नी इकारसहितो हकारः जवौ पकारः दाह्वो रेफः नभश्चरौ मकारसहितो एकारः । शून्याम्ब् दित्यत्वात् शून्याम्बुनो इति यावत् । अत्र वियच्छब्दस्य पर्य्यायत्वात् सम्प्रदायाच्च शून्यमिति शकारः वकारसहितः शकार इत्यर्थः । सदाह्वोग्निः इकारसहितो रेफ इति यावत् । हृदम्बुमरुदन्वितः हृत् सकारः अम्बु वकारः आकारसहितः स्वकारः । हंसः हकारो मरुता युक्तः आकारसहितः ॥ २७ ॥

षडङ्गेत्यादिभिर्विदायेत्यन्तैरर्द्धादैः षड्भिः श्लोकैरश्वारूढाविद्यया अङ्गानि

ततो यमुद्दिश्य जपं निशि कुर्य्यादयत्नतः ।
समानयेत् स्वगेहे तमानाशात् प्रोक्तकारिणम् ॥ २९ ॥
वश्यमाकर्षणं लक्ष्मीं सुवर्णं वाञ्छितानि च ।
प्राप्नोत्ययत्नादनया विद्यया सिद्धयानिशम् ॥ ३० ॥
लोहितां लोहिताश्वस्थां लोहिताम्बरभूषणाम् ।
चतुर्भुजां त्रिनयनां प्रसन्नवदनाम्बुजाम् ॥ ३१ ॥
भल्लां दक्षेण वामेन चर्म्मयष्टिं समुज्ज्वलाम् ।
अन्याभ्यां हेमपाशेन कण्ठे बद्धा स्वसाध्यकम् ॥ ३२ ॥
हेमवेत्राहतं बद्धा करयुग्मकृताञ्जलिम् ।
दासोऽहमिति भाषन्तं पतितं निजपादयोः ॥ ३३ ॥
स्मरन् विद्यां जपेन्मर्त्त्यो वशे कुर्य्यादयत्नतः ।
समस्तं जीवभुवनमश्वारूढ़ाख्यविद्यया ॥ ३४ ॥
प्रणवं नमसा युक्तं तथा भगवतीति च ।
माहेश्वरीति प्रोक्तान्नपूर्णे स्वाहेति तन्मनुः ॥ ३५ ॥

---

साधनप्रकारं सिद्धविद्यस्य प्रयोगान् तज्ज्ञानं तत्फलविशेषांश्चोपदिशति । तत्र मायया प्राग्वत् ह्रल्लेखया । अक्षरलक्षकं विद्यायाः अक्षरसंख्यालक्षकं दश-लक्षमित्यर्थः । ततो विद्यायां सिद्धायामिति यावत् । तं साध्यं । आनाशात् यावच्छरीरं । प्रोक्तकारिणं दासवदित्यर्थः । अनया अश्वारूढ़ाख्यया विद्यया । लोहिताश्वस्थां लोहितवर्णाश्वस्थां । दक्षेण दक्षिणकरेणेत्यर्थः । वामेन प्राग्वत् । समुज्ज्वलां विविधवर्णां । अन्याभ्यां ऊर्द्धकराभ्यां । हेमपाशेन तयोर्वामकरस्थेने-त्यर्थः । हेमवेत्राहतं तयोर्दक्षिणकरस्थहेमवेत्राहतं । स्मरन् उक्तरूपां देवीं ॥३४॥

प्रणवमित्यादिना श्लोकेनान्नपूर्णाख्यां सप्तदशाक्षरविद्यामुपदिशति । तत्र नमसा नमः पदेन प्रणवादनन्तरं नम इत्यक्षरद्वयं । तथा समुच्चये । भगवतीति भगवति इति चतुरक्षराणि माहेश्वरीति माहेश्वरि इति चतुरक्षराणि अन्नपूर्णे स्वाहेति अन्नपूर्णे स्वाहा इति षड़क्षराणि तन्मनुः अन्नपूर्णाविद्या ॥ ३५ ॥

विधाय माययाङ्गानि जपेद्विद्यामहर्मुखे ।
सहस्रवारं नियतं न तस्य स्याद्दरिद्रता ॥ ३६ ॥
भुजङ्गत्रासकरणनृत्यासक्तावलोकिनीम् ।
स्मितवक्त्रां हेमपात्रात् पायसं दधतीं करे ॥ ३७ ॥
भवानीं सर्वदा विद्याजपवान्न कदाचन ।
बुभुक्षितो भवेदेव न कदाचिच्च कुत्रचित् ॥ ३८ ॥
तथा नृत्यस्थितं मां त्वां तदालोकनकौतुकाम् ।
आभ्यां भजेन्नित्यशो यो मन्त्राभ्यां याचते वरम् ॥ ३९ ॥
तस्यावयोः प्रसादेन सिध्यत्येवाशु चिन्तितम् ।
तिष्ठेच्चोपरि सर्वेषां सर्वथा सर्वतः सदा ॥ ४०
हंसहृद्ग्रासनभसां रसाम्बुव्याप्तदाहकैः ।
व्यस्तयोगान्नामतश्च नवात्म नवभिश्च तैः ॥ ४१ ॥

---

विधायेत्यादिभिः कुत्रचिदित्यन्तैस्त्रिभिः श्लोकैरन्नपूर्णादेव्या अङ्गानि ध्यानं विद्यासाधनप्रकारं विद्यासिद्धस्य लभ्यानि फलानि चोपदिशति। तत्र मायया प्राग्वत् हृल्लेखया। विद्यां अन्नपूर्णाख्यां। अहर्मुखे प्रातःकाले। तस्य जपितुः। भुजङ्गत्रासकरणनृत्यासक्तावलोकिनीं ताण्डवविशेषासक्तपरमेश्वरावलोकनशीलां। हेमपात्रात् हेमपात्रादिति ल्यब्लोपे पञ्चमी। हेमपात्रमापूर्य्य स्थितां। विद्याजपवान् अन्नपूर्णायाः ॥ ३८ ॥

तथेत्यादिना सदेत्यन्तेन श्लोकद्वयेनानन्तरवक्ष्यमाणनवात्मविद्ययोर्ध्यानं तत्फलानि चोपदिशति। तत्र तथा नृत्यस्थितं भुजङ्गत्रासनृत्यपरं। तदालोकनेन कौतुकां नृत्यावलोकनकौतुकां। आभ्यां वक्ष्यमाणाभ्यां। वरमभीष्टं। तस्य याचितुः। एवावधारणे ॥ ४० ॥

हंसेत्यादिना सिद्धिदावित्यन्तेन श्लोकद्वयेन नवात्मकयोर्विद्ययोः स्वरूपमुपदिशति। तत्र हंसहृद्ग्रासनभसां हकारसकारक्षकारमकाराणां। रसाम्बुव्याप्तदाहकैः लकारवकारयकाररेफैः सहितानामिति। तैरक्षरैः। तस्य नवात्मक्र-

तस्यैव क्ष्माक्षरं हित्वा वह्निं तत्र प्रयोजयेत् ।
नवात्मिका तु ते विद्या द्वावेतौ सर्वसिद्धिदौ ॥ ४२ ॥
प्रणवं त्रिपुटान्त्यार्णं नमसा चतुरक्षरो ।
देवीहृदयसंज्ञासौ विद्या सर्वार्थसिद्धिदा ॥ ४३ ॥
ध्यानमुक्तममुष्यास्तु सततं सर्वमङ्गलाम् ।
सितकुष्ठं स्वर्णपुष्पीमूलं तत्पत्रवारिणा ॥ ४४ ॥
पिष्ट्वा शुद्धः पायसाशी विद्याजापी जितेन्द्रियः ।
भूमौ शयीत तां रात्रिं विजने सुशुभे गृहे ॥ ४५ ॥
तल्लिप्ताज्ञाकण्ठहृत्कस्तत्रालिखितमायकः ।
आज्ञास्थितं(ता) तथा सा तं वदेद्स्याभिवाञ्छितम् ॥४६॥

---

मन्त्रस्य । एवावधारणे । क्ष्मा जकारः । वह्निं ईकारम् । तत्र जकाराक्षरस्थाने । नवात्मिका प्राग्वत् । तुर्विशेषे । ते विद्या देव्यास्तव विद्या ॥ ४२ ॥

प्रणवमित्यादिना श्लोकेन देवीहृदयविद्यास्वरूपमुपदिशति । तत्र प्रणवं प्रथममक्षरं त्रिपुटान्त्यार्णं त्रिपुटाविद्यायास्तृतीयाक्षरं कामवोजं । एतद्देवी-हृदयविद्याया द्वितीयाक्षरमित्यर्थः । नमसा नम इत्यक्षरद्वयेन तृतीयचतुर्था-क्षरभूतेन चतुरक्षरो सम्भूयेति यावत् ॥ ४३ ॥

ध्यानमित्यादिभिर्विजयावह्नेत्यन्तैः चतुर्भिः श्लोकैः देवीहृदयध्यानं सकल-मन्त्रविद्याभिस्तत्तद्देवतानां स्वप्नकथनफलावाप्त्यादिकञ्चोपदिशति । तत्र ध्यानमुक्तं अमुष्याः अस्या देवीहृदयविद्याया ध्यानं एवमुक्तमिति यावत् । तुर्विशेषे । सर्वमङ्गलां ध्यायेदित्यर्थः । अत्रौषधयोः संज्ञा गुरुमुखादवगन्तव्या । तत्पत्र-वारिणा स्वर्णपुष्पीपत्रवारिणा । भूमौ दर्भसत्थरे मृगत्वचि वेति सम्प्रदायः । सु-शुभे निद्राविरोधकरकीटादिरहिते । तल्लिप्ताज्ञाकण्ठहृत्कः प्रोक्तौषधद्वयलिप्ता-ज्ञाकण्ठहृत्कः तत्राज्ञेति भ्रुवोर्मध्यं । तत्र आलिप्तस्थानत्रये लिखितमायकः

देवीहृदयविद्येयं स्त्रीणां सद्यःफलप्रदा ।
सौभाग्यलक्ष्मीकीर्त्त्यायुरारोग्यविजयावहा ॥ ४७ ॥
प्रणवं रुद्रदयिते तथा योगेश्वरीति च ।
स्वाहान्तिका तु विद्येयं कथिता द्वादशाक्षरी ॥ ४८ ॥
गौरीविद्येत्यसौ प्रोक्ता लक्षजप्ता सुसाधिता ।
ध्यात्वा प्रागश्वयारूढ़ा देवी साधयतीप्सितम् ॥ ४९ ॥
निशामध्ये तु निशया निजवामोरुदेशतः ।
साध्यनामसमोपेतामालिख्यैतान्तु तन्मनाः ॥ ५० ॥
ध्यायंस्तथा जपेद्विद्यां तदैवाकर्षयेत् प्रियाम् ।
नानया सदृशी विद्या विद्यते वनितावशे ॥ ५१ ॥
राजवश्ये तथा लोकवश्ये स्त्रीवशकर्म्मणि ।
न विद्याः सन्ति भुवने हयगौरीमनुद्वयात् ॥ ५२ ॥

---

लिखितहृल्लेखः। आज्ञास्थितं भ्रूमध्यस्थितं। तथा समुच्चये। सा देवी। तं साधकं। अस्य साधकस्य सौभाग्यादिफलषट्कप्रोक्तफलम् ॥ ४७ ॥

प्रणवमित्यादिना श्लोकेन गौरीविद्यास्वरूपमुपदिशति। तत्र रुद्रदयिते इत्यक्षरपञ्चकं योगेश्वरीत्यक्षरचतुष्टयं स्वाहेत्यक्षरद्वयं द्वादशाक्षरी सम्भूयेति यावत् ॥ ४८ ॥

गौरीत्यादिभिर्द्वयादित्यन्तैश्चतुर्भिः श्लोकैः गौरीविद्यायाः साधनं ध्यानं सिद्धविद्यस्य प्रयोगविशेषान् फलभेदादिकञ्चोपदिशति। तत्र ध्यात्वेत्यादिनोत्तरार्द्धेन एतदुक्तं भवति प्रागुदीरिताश्वारूढ़ास्वरूपविद्यान्ता गौरीदेवी निजमनीषितं साधयतीति। तुर्विशेषे। निशया हरिद्रया। निजवामोरुदेशतः साधकस्य वामोरुदेशे। साध्यनामसमोपेतां साध्यसाधककर्म्मणा समोपेतां। एतां गौरीविद्यां। तन्मनाः साध्यमना इत्यर्थः। तथा यथासम्प्रदायभावनया। विद्यां गौर्य्या इति शेषः। तदैव अनया गौरीविद्यया। हयगौरीमनुद्वयात् अश्वारूढ़ाविद्या गौरीविद्याद्वयतः अधिकाश्च सदृशाश्चेति यावत् ॥ ५२ ॥

अग्निर्नादश्च तद्युक्तः ताविवाथ नभोधरौ ।
एतद्द्वितीयं तौ स्यातां काकण्ठेति ततः परम् ॥ ५३ ॥
मुण्डिस्वाहेति विद्येयमुक्ता पञ्चदशाक्षरा ।
कृताङ्गो मायया ध्यात्वा तां देवीं सर्वमङ्गलाम् ॥ ५४ ॥
जपेद्विद्यां मौनयुतः कदलीपूगमध्यतः ।
त्रिसन्ध्यार्चासमोपेतं सा प्रीता लक्षदा दिनैः ॥ ५५ ॥
प्रणवं नवकेशां च कनकवतिसंयुतम् ।
स्वाहान्तं द्वादशार्णेयं विद्या निष्कत्रयप्रदा ॥ ५६ ॥

---

अग्निरित्यादिना पञ्चदशाक्षरेत्यन्तेनाध्यर्द्धेन श्लोकेन लक्षसुवर्णप्रदाविद्यास्वरूपमुपदिशति । तत्र अग्निः इकारः । नादश्च तद्युक्त इकारेण (ठ)रकारो युक्तः । तौ प्रोक्तौ । एवावधारणे । अस्य मन्त्रस्य प्रथमद्वितीयवर्णाविव तृतीयचतुर्थवर्णौ भवत इत्यर्थः । नभोधरौ उकारसहितो मकार इति यावत् । एतद्द्वितीयं अस्य मन्त्रस्य द्वितीयमक्षरमेव षष्ठमक्षरमित्यर्थः । तौ स्यातां पञ्चमषष्ठवर्णाविव सप्तमाष्टमौ स्यातामिति यावत् । काकण्ठेति काकण्ठ इति त्रीण्यक्षराणि मुण्डिस्वाहेति मुण्डि स्वाहा इति चत्वार्यक्षराणि पञ्चदशाक्षरा । सम्भूयेति यावत् ॥ ५३ ॥

कृताङ्ग इत्यादिना दिनैरित्यन्तेनार्द्धाधेन श्लोकेनाङ्गानि ध्यानं साधनक्रमं सिद्धविद्यस्य फलसिद्धिञ्चोपदिशति । तत्र मायया प्राग्वत् हृल्लेखया । तां देवीं लक्षप्रदाख्यां देवीं सर्व्वमङ्गलां सर्व्वमङ्गलासमानविग्रहां । कदलीपूगमध्यतः कदलीवनमध्ये पूगवनमध्ये वा । त्रिसन्ध्यार्चासमोपेतमिति क्रियाविशेषणम् । सा देवी लक्षदा लक्षस्वर्णप्रदा । दिनैः प्राग्वत् ॥ ५५ ॥

प्रणवमित्यादिना श्लोकेन निष्कत्रयप्रदाविद्यास्वरूपमुपदिशति । तत्र नवकेशां नवकेशामिति चत्वार्य्यक्षराणि । कनकवतिसंयुतं कनकवति इति पञ्चाक्षराणि स्वाहा इत्यक्षरद्वयं उच्चरेदिति शेषः । द्वादशार्णा सम्भूयेति यावत् । निष्कत्रयप्रदा प्राग्वन्नामतश्चार्थतश्च ॥ ५६ ॥

नित्यशो गिरिशृङ्गस्थवटमूले त्रिलक्षकम् ।
जपित्वा वर्णशो विद्यां फलमुक्तमवाप्नुयात् ॥ ५७ ॥
चर: प्राणो मरुद्युक्तो व्याप्तं प्राणो धरान्वित: ।
व्योमद्वयं मरुद्युक्तं रयश्च धरया युत: ॥ ५८ ॥
चर: प्राण इति प्रोक्ता विद्याभीष्टं वदेन्मिथ: ।
जातिपुष्पैर्निशामध्ये पूजिता मङ्गलाकृति: ॥ ५९ ॥
सिद्धसारस्वतस्यादौ त्र्यक्षराणि तत: परम् ।
मातङ्गिन्यै तथा स्वाहा पुनस्त्रीणीति तन्मनु: ॥ ६० ॥
द्वादशार्णेयमचिरात् सौभाग्यं कवितां श्रियम् ।
गानाभियोगं विश्वेषां मान्यताञ्च प्रयच्छति ॥ ६१ ॥

---

नित्यश इत्यादिना श्लोकेन निष्कत्रयप्रदाविद्यासाधनप्रकारं सिद्धिञ्चोपदिशति । तत्र त्रिलक्षकं जपित्वा वर्णशः सम्भूय षट्त्रिंशल्लक्षवारं जपित्वेत्यर्थः । उक्तनिष्कत्रयमितं स्वर्णमित्यर्थः । अवाप्नुयादित्यस्य नित्यश इत्यनेन च सम्बन्धः ॥ ५७ ॥

चर इत्यादिना कृतिरित्यन्तेन श्लोकद्वयेनाभीष्टवादिनीविद्यास्वरूपं तत्फलं तत्साधनक्रमं तद्ध्यानञ्चोपदिशति । तत्र चर एकारः । प्राणो मरुद्युक्तः आकार सहितः ककारः । व्याप्तं यकारः । प्राणो धरान्वितः उकार सहितः ककारः । व्योमद्वयं मरुद्युक्तं सुश्लेषोच्चारित णकारद्वयं आकारयुक्तं । रयश्च धरया युतः उकारसहितः तकारः । चर एकारः । प्राणः ककारः । विद्या अष्टाक्षरेति यावत् । मङ्गलाकृतिः सर्व्वमङ्गलादेव्याः प्रोक्तविग्रहा ॥ ५८ ॥

सिद्धेत्यादिना श्लोकेन मातङ्गेश्वरीविद्यास्वरूपमुपदिशति । तत्र सिद्धसारस्वतस्यादौ त्र्यक्षराणि सिद्धसारस्वतमन्त्रस्याद्यानि त्र्यण्यक्षराणि मातङ्गेश्वरीविद्याया अपि प्रथमभूतान्यक्षराणि त्रीणि तानि वाग्भवहृल्लेखाश्रीबीजानि । मातङ्गिन्यै इति चत्वार्य्यक्षराणि । स्वाहा इत्यक्षरद्वयं । त्रीणि प्रथमभूतानि वाग्भवादीनि प्रतिलोमानि । तन्मनुः मातङ्गेश्वरीविद्या ॥ ६० ॥

द्वादशेत्यादिभिः स्मितामित्यन्तैः पञ्चभिः श्लोकैः तद्विद्याक्षरसंख्यां तदङ्गानि

मायाकृताङ्गो नित्यशस्तां प्रजपेदुदये रवेः ।
सहस्रवारं तेनासौ सिद्धा सर्वं प्रयच्छति ॥ ६२ ॥
इन्द्रनीलनिभां रक्तवसनाभरणोज्ज्वलाम् ।
प्रलम्बवेणीसन्नद्धसौगन्धिकसमुज्ज्वलाम् ॥ ६३ ॥
तत्क्लृप्तमुण्डमालाञ्च मुक्तास्तवकशोभिताम् ।
ऊर्म्मिकावीरकटकनूपुरैर्मण्डिताङ्घ्रिकाम् ॥ ६४ ॥
वादयन्तीं महावीणां स्वसमानाङ्गनाजनैः ।
स्तूयमानाञ्च परितो ध्यायेद्देवीं शुचिस्मिताम् ॥ ६५ ॥
मातङ्गिन्या द्वितीयञ्च तृतीयं तदनन्तरम् ।
रसाचरस्वैरम्बु स्याद्वाताग्नी तदनन्तरम् ॥ ६६ ॥
राज्यदे राज्यलक्ष्मीति हृन्माया व्युत्क्रमात्त्रयम् ।
विद्यासौ राज्यलक्ष्म्यास्तु षोड़शार्णा समीरिता ॥ ६७ ॥

---

तद्विद्यासिद्धस्य फलानि विद्यासाधनप्रकारदेवताध्यानञ्चोपदिशति । तत्र इयं मातङ्गेश्वरीविद्या । मायाकृताङ्गः प्रागवत् हृल्लेखया न्यस्तषड़ङ्गः । तां विद्यां । तेन जपेन । असौ विद्या । सर्वं वाञ्छितमिति शेषः । अस्मिन् श्लोके प्रथमपादे त्वेकाचराधिक्यं दिव्यत्वात् । रक्तवसनाभरणोज्ज्वलां रक्तवसनरत्नाभरणमण्डितां । तत्क्लृप्तमुण्डमालां सौगन्धिकैः क्लृप्तशिरोमालां । स्वसमानाङ्गनाजनैः स्वसमानाकारवर्णभूषणादिभिः शक्तिभिः ॥ ६५ ॥

मातङ्गोत्यादिना समीरिता इत्यन्तेन श्लोकद्वयेन राज्यलक्ष्मीविद्यास्वरूपमुपदिशति । तत्र मातङ्गिन्या इत्यर्द्धेनैतदुक्तं भवति । मातङ्गिनीविद्याया द्वितीयतृतीयाक्षरद्वयं हृल्लेखाश्रीबीजरूपं राज्यलक्ष्मीविद्यायाः प्रथमद्वितीयाचरद्वयं भवतीति । रसाचरस्वैः लकार एकारविन्दुभिरुपेतोऽम्बु वकारः तेन ल्वें इति । वाताग्नी अकारश्च इकारश्च पृथक् पृथगिति यावत् ॥ ६६ ॥

राज्यदे राज्यलक्ष्मीति सप्ताचराणि हृन्माया विसर्जनीयसहितः सकार इति यावत् । व्युत्क्रमात्त्रयं आद्याचरत्रयं प्रतिलोमक्रमेणेत्यर्थः । षोड़शार्णा षोड़शाचराणि सम्भूयेति यावत् ॥ ६७ ॥

ध्यात्वा तां विजयां विद्यां जपेन्नित्यञ्च पूजयेत् ।
राज्यं प्रयच्छति प्रीता साधकायाविलम्बितम् ॥ ६८ ॥
प्रणवं श्रीपुटां मायां कमले तदनन्तरम् ।
कमलातो लये पश्चात् प्रसीदद्वितयं पुनः ॥ ६९ ॥
आद्यत्रयं महालक्ष्म्यै नमः प्रोक्ता महेश्वरि ।
विद्या ते सप्तविंशार्णा समस्ताभीष्टदानिशम् ॥ ७० ॥
बीजत्रयैः षड़ङ्गानि द्विरुक्तैर्विहितानि वै ।
ध्यानञ्च विजयारूपं प्रजपाद्दिनशस्तथा ॥ ७१ ॥
कीर्त्तिलक्ष्मीधनारोग्यविजयाद्यखिलेष्टदा ।
तुलास्थे भास्करे पूजा पूर्णायां सकलेष्टदा ॥ ७२ ॥

---

ध्यात्वेत्यादिना श्लोकेन तद्ध्यानं तदुपासनक्रममुपासितुः फलावाप्तिञ्चोपदिशति । तत्र तां राज्यलक्ष्मीं विजयां विजयानित्यासमानविग्रहां ॥ ६८ ॥

प्रणवमित्यादिनाऽनिशमित्यन्तेन श्लोकद्वयेन महालक्ष्मीविद्यास्वरूपमुपदिशति । तत्र श्रीपुटां मायां श्रीबीजपुटितहृल्लेखां कमले इत्यक्षरत्रयं कमलातो लये कमला इत्यक्षरत्रयात् परं लये इत्यक्षरद्वयं । प्रसीदद्वितयं प्रसीद प्रसीद इति षड़क्षराणि । आद्यत्रयं श्रीबीजपुटितहृल्लेखेति यावत् । महालक्ष्म्यै नमः इत्यक्षरषट्कं । महेश्वरीति देवीसम्बुद्धिः । सप्तविंशार्णा सम्भूय इति यावत् ॥ ७० ॥

बीजेत्यादिनेष्टदा इत्यन्तेन श्लोकद्वयेन तदङ्गानि तद्ध्यानं तदुपासनक्रमं तत्फलानि सर्व्वाभीष्टसिद्धिकरभजनकालञ्चोपदिशति । तत्र बीजेत्याद्यर्द्धेनैतदुक्तं भवति अस्या विद्याया द्वितीयाद्यक्षरत्रयस्य द्विरावृत्त्या षड़ङ्गानि विहितानि स्युरिति । ध्यानञ्च विजयारूपं विजयानित्याया ध्यानमस्या अपि ध्यानमिति यावत् । विजयादीत्यत्रादिशब्दो विविधमङ्गलत्रयस्त्रहचैत्रादिविषयः । तुलास्थे तुलाराशिगते भास्करे । पूर्णायां पौर्णमास्याम् ॥ ७२ ॥

ज्यासकदाहवह्निखान्नभो हंसो मरुद्युतः ।
चण्डतेजश्च सङ्कर्षणवर्णाः स्युस्तदनन्तरम् ॥ ७३ ॥
व्योमाग्न्या कालीमन्थाने वर्णा हंसश्च मायया ।
सिद्धलक्ष्म्यादिविद्येयं प्रोक्ता सप्तदशाक्षरा ॥ ७४ ॥
आद्येन कृत्वा चाङ्गानि जपेद्विद्यान्तु नित्यशः ।
प्रातः सहस्रवारन्तु तर्पयेत्तद्दशांशकम् ॥ ७५ ॥
प्रसन्ना वर्षतो नित्यपूजायां साधकस्य सा ।
प्रयच्छति जयं युद्धे श्रियं सर्वातिशायिनीम् ॥ ७६ ॥
भूतप्रेतपिशाचापस्मारकृत्यादिवारणम् ।
करोति मार्गे कान्तारगिरिकृच्छ्रेभिरक्षति ॥ ७७ ॥
ध्यानन्तु तस्या देवेशि मङ्गले मङ्गलासमा ।
युद्धमार्गादिरक्षासु शृणु वक्ष्ये यथाविधि ॥ ७८ ॥

---

ज्यासकेत्यादिनाक्षरेत्यन्तेन श्लोकद्वयेन सिद्धलक्ष्मीविद्यास्वरूपादिकमुपदिशति । तत्र ज्यासकदाहवह्निखात् जकार रकारईकारात् विन्दुभिः प्रथमं वीजमुच्चार्य्येति यावत् । नभः मकारः । हंसो मरुद्युतः आकारसहितो हकारः । चण्डतेजः इत्यक्षरचतुष्टयं । सङ्कर्षणवर्णाः सङ्कर्षण इति वर्णचतुष्टयं । व्योमाग्न्या इकारेण सहितो हकारः । कालीमन्थाने वर्णाः कालीमन्थाने इति पञ्चवर्णाः । हंसश्च मायया विसर्जनीयेन सहितो हकारः । सप्तदशाक्षरा सम्भूय इति यावत् ॥ ७४ ॥

आद्येनेत्यादिभिर्ध्रुवमित्यन्तैः षड्भिः श्लोकैस्तदङ्गानि तदुपासनक्रमं तत्तत्फलानि तस्या नित्योपास्यध्यानं प्रयोगध्यानादिकञ्चोपदिशति । तत्र आद्येन वीजेन प्रागवत् स्वरभिन्नेन । तद्दशांशकं शतवारमित्यर्थः । सा सिद्धलक्ष्मीः । कृत्यादीत्यत्रादिशब्दो रोगग्रहभयादिविषयः । तस्याः सिद्धलक्ष्म्याः । देवेशीति देवीसम्बुद्धिः । मङ्गले प्रयोगे मङ्गलासमानविग्रहा । युद्धमार्गादीत्यादि-

शतशीर्षां त्रिनयनां प्रतिवक्त्रं भयानकाम् ।
हस्तद्विशतसंयुक्तां स्वसमाकारशक्तिभिः ॥ ७९ ॥
वृतामनन्तैर्हस्तेषु साधकाभीष्टहेतिकाम् ।
ध्यात्वैवमर्चयेदिष्टमवाप्नोत्यखिलं ध्रुवम् ॥ ८० ॥
प्राक्प्रत्यगुदक्चिणोदक्क कृत्वा सूत्राष्टकं ततः ।
मार्जयेद्बाह्यवीथीषु पञ्चपञ्च तथैकधा ॥ ८१ ॥
तदन्तरपि कोणेषु त्रयमेकीकृते ततः ।
मध्यादि विलिखेन्मन्त्रवर्णान् षोडश नाम च ॥ ८२ ॥

---

शब्दो गिरिकान्तारादिपार्श्वस्थलविषयः । अखिलस्य ध्यानमिति पूर्व्वत्रान्वयः । भयानकां भीषणरूपाम् । अनन्तैः दिव्यत्वादनन्ताभिरिति यावत् । साधकाभीष्टहेतिकां तत्तत्प्रयोगानुगुणमिति यावत् ॥ ८० ॥

प्रागित्यादिभिर्नित्यश इत्यन्तैस्त्रिभिः श्लोकैर्नित्यार्चनाचक्रनिर्म्माणादिकमुपदिशति । तत्र कृत्वा सूत्राष्टकं समान्तरालमित्यर्थः । तथा यथा प्रतिकोणमेकमेकं कोष्ठमवशिष्येत तथेत्यर्थः । तदन्तः वीथ्याभिति शेषः । त्रयं कोष्ठत्रयं । एतदुक्तं भवति । द्वितीयवीथ्यां प्रतिदिशं मध्ये एकमेकं कोष्ठमवशिष्यति तथा मार्जयेदिति । मध्यादि एतत् क्रियाविशेषणं । सर्व्वमध्यकोष्ठे आद्यमक्षरं यथा तथेत्यर्थः । मन्त्रवर्णान् षोड़श अवशिष्टानिति यावत् । नाम साध्यादीनां प्रागवन्मध्यकोष्ठलिखितबीजोदरे इति यावत् । मध्ये इत्यनन्तरश्लोके वक्ष्यमाणत्वात् । प्रादक्षिण्यक्रमात् विलिखेदिति पूर्व्वत्रान्वयः । तत्र चक्रे अयमत्र विरचनाक्रमः । प्राक्प्रत्यगुदक्चिणोदक्कसमान्तरालं सूत्राष्टकाष्टकास्फालनादेकोनपञ्चाशत् कोष्ठात्मकं समचतुरस्रं विधाय तत्तद्बाह्यवीथिगतकोष्ठेषु चतुर्विंशत्यां प्रतिदिशं मध्यस्थमध्यस्थकोष्ठपञ्चपञ्चकमेकीकृत्य तदन्तर्वीथीस्थकोष्ठषोड़शके प्रतिकोणमेकमेकं तत्तदुभयपार्श्वस्थकोष्ठाभ्यां सह त्रीणि त्रीणि कोष्ठान्येकीकृत्य शिष्टसप्तदशकोष्ठेषु सर्व्वमध्यस्थकोष्ठे साध्यादिसमेतं प्रथमं बीजं तद्बाह्यवीथीस्थेषु अष्टसु कोष्ठेष्वग्न्यादिप्रादक्षिण्येन तद्बाह्यवीथ्यादिकोष्ठचतुष्टये प्रागवत्

प्रादक्षिण्यक्रमान्मध्ये पूजयेत्तत्र तां सदा ।
समस्ताभीष्टसंसिद्धै सिद्धलक्ष्मीं तु नित्यशः ॥ ८३ ॥
कदाचिदाद्या ललिता पुंरूपा कृष्णविग्रहा ।
स्ववंनारीसमारम्भादकरोद्विवशं जगत् ॥ ८४ ॥
ततः स गोपीसंज्ञाभिरावृतोभूत् स्वशक्तिभिः ।
तदा तेन विनोदाय स्वं षोढ़ाकल्पयद्वपुः ॥८५ ॥
तेषां षरणाञ्च षन्मन्त्राः समस्ताभीष्टदायकाः ।
तैर्यन्त्रपूजाहवनजपतर्पणसेचनैः ॥ ८६ ॥
भवन्ति लक्ष्मीकान्तिश्रीविजयारोग्यसंयुताः ।
शृणु तान् षट्क्रमान्मन्त्रान् ध्यानार्चाविनियोगकैः ॥८७॥
स्थिरारसाव्याप्तवनस्वैरुक्तोभून्महामनुः ।
प्रणवद्वयमध्यस्थः सिद्धगोपालकाभिधः ॥ ८८ ॥

---

क्रमात्तद्बाह्यवीथ्यां कोणकोष्ठचतुष्टये वायव्यादिनिऋत्यन्तं च विद्यायाः सप्तदशार्णान् क्रमेण विलिखेदिति ॥ ८३ ॥

कदाचिदित्यादिभिर्विनियोगकैरित्यन्तैश्चतुर्भिः श्लोकैर्ललिताविद्याया गोपालस्वरूपत्वं तन्मूर्त्तिभेदांस्तदुपास्तिफलानि तन्मन्त्रोद्धारप्रस्तावादिसहितमुपदिशति । तत्र आद्या नित्यानाम ललिता । पुंरूपा कृष्णविग्रहा परमार्थकृष्णशः प्राग्वत् कृष्णः स्वशक्तिभिः नित्याभिरणिमादिभिश्च । तेन वपुषा । तेषां वपुषां । तैर्मन्त्रैर्लक्ष्मीकान्तियशोविजयारोग्यसंयुताः साधका इति यावत् । ध्यानार्चाविनियोगकैः सहेति यावत् । अस्मिन् श्लोके प्रथमपादे त्वक्षराधिक्यं दिव्यत्वात् ॥ ८७ ॥

स्थिरेत्यादिना श्लोकेन सिद्धगोपालमन्त्रस्वरूपमुपदिशति । तत्र स्थिरारसाव्याप्तवनस्वैः गकारलकारयकारऔकारविन्दुभिः कूटरूपैः । महामनुः संज्ञया वैभवेन च । प्रणवद्वयमध्यस्थः प्रणवपुटितः ॥ ८८ ॥

प्रोक्तैस्तैः पञ्चभिः काममन्त्रैरेकैकतः क्रमात् ।
पुटनान्नामतस्तस्माद्बाणैस्तैः पुटनाद्भवेत् ॥ ८९ ॥
सम्मोहनाख्यस्त्वेवञ्च सप्तधाभून्महामनुः ।
आद्यः पञ्चाङ्गको मन्त्रस्त्वितरे स्युः षडङ्गकाः ॥ ९० ॥
तत्तद्बीजादिकेन स्यात् षडङ्गानि यथाविधि ।
अष्टपत्राब्जमध्यस्थं पूजयेत् सप्तातिक्रमात् ॥ ९१ ॥
यन्त्राणि तानि तन्मन्त्रयुतमध्यान्यनुक्रमात् ।
वारेषु भास्कराद्येषु तेषां पूजा क्रमेण वै ॥ ९२ ॥

---

प्रोक्तैरित्यादिभिः क्रमादित्यन्तैस्त्रिभिः श्लोकैः षड्विधगोपालमन्त्रस्वरूपं तदङ्गानि तदाराधनक्रमञ्चोपदिशति । तत्र प्रोक्तैः सप्तमे पटले सहंसेत्यादिना पञ्चत्रिंशादेरनाध्यर्द्धश्लोकद्वयेनेति यावत् । एकैकतः प्रत्येकमेकैकबीजेन । नामतः सप्तमे पटले प्रथम इत्यादिना त्रिंशादेरनाध्यर्द्धश्लोकेन प्रोक्तकामराजादिनामानि प्रोक्तकूटश्चेति यावत् । बाणैः कामराजस्य पञ्चबाणमन्त्रैः । तैः पञ्चकामबीजैः । अत्र चकारः समाहार्य्यः । तुद्वयं समुच्चये । एवं उक्तक्रमात् । एतदुक्तं भवति प्रणवेन पुटितो महामनुः सिद्धगोपालसंज्ञः मन्त्रः । पञ्चसु कामबीजेष्वेकैकबीजपुटितेन महामनुना क्रमात् कामराजगोपालमन्मथगोपालकन्दर्पगोपालमकरकेतनगोपालमनोभवगोपालसंज्ञाः पञ्चमन्त्राश्च सम्भूय तत्र चरात्मकाः षण्मन्त्राः प्रथममन्त्रेण सह सप्तगोपालमन्त्राः सन्तीति । आद्यस्तेषु सिद्धगोपालमन्त्र इत्यर्थः । पञ्चाङ्गकः नेत्रन्यासरहित इति यावत् । इतरे षण्मन्त्राः कामराजगोपालाद्याः । तत्तद्बीजादिकेन महामनुनेति शेषः । स्यादित्यस्यात् स्युरिति यावत् । यथाविधीति दीर्घस्वरषट्कभिन्नक्रमेणेत्यर्थः । अष्टपत्राणां मध्यस्थां एषु सप्तस्वन्यतमां ॥ ९१ ॥

यन्त्राणीत्यादिभिरवाप्नुयादित्यन्तैः त्रिभिः श्लोकैस्तेषां यन्त्राणि कालस्वरूपेण वारेषु सप्तसु भजनक्रमं निवेद्यविशेषादिकञ्चोपदिशति । तत्र तानि सिद्धगोपालादिसंज्ञानि । तन्मन्त्रयुतमध्यानि निजनिजमन्त्रलिखितकर्णिकानि । वारेषु

सकलेष्टप्रदा नित्यं दुग्धक्षौद्रघृतान्नकैः ।
पायसैर्नारिकेलैश्च ससितैः कदलीफलैः ॥ ८३ ॥
क्रमाद्वारेषु नैवेद्यं दद्यादिष्टार्थसिद्धये ।
इतीरितैः सप्तभिस्तैः सर्वमिष्टमवाप्नुयात् ॥ ८४ ॥
अरुणं षड्भुजं वंशवादिनं पाशमङ्कुशम् ।
पुण्ड्रेक्षुचापपुष्पेषून् दधानं शक्तिभिः स्मरेत् ॥ ८५ ॥
सुवर्णपुष्पीमूलेन पिष्टेन निजवारिणा ।
हृत्कण्ठाक्षालेपनतो देवतादर्शनं भवेत् ॥ ८६ ॥
उग्रगन्धां च नीलीं च धातकीफलसंयुताम् ।
आरग्वधं मुण्डिनीं च शाकोटं * जम्बुमूलकम् ॥ ८७ ॥

---

सप्तसु । तेषां सिद्धगोपालादीनां । सकलेष्टप्रदेत्यस्य पूजा इत्यनेन पूर्व्वेत्र सम्बन्धः । नित्यं प्रतिवारं । दुग्धक्षौद्रघृतान्नकैः दुग्धैः क्षौद्रैः घृतान्वितैः अन्नैश्च । ससितैः शर्करोपेतैः नारिकेलैः दुग्धाद्यैः ॥ ८४ ॥

अरुणमित्यादिना स्नोकेन तेषां ध्यानमुपदिशति । तत्र अरुणं वर्णे । वंशवादिनं अधरकराभ्यां गृहीत्वा । अत्र पाशाद्यायुधचतुष्टयमूर्द्धादि वामदक्षिणवाम-दक्षिणक्रमेण । शक्तिभिर्गोपीवेषधराभिरिति यावत् ॥ ८५ ॥

सुवर्णेत्यादिना स्नोकेन सकलदेवतानामपरोक्षोपायौषधयोगादिविधान-मुपदिशति । तत्र सुवर्णपुष्पोरूक्षमौषधं प्रागवदवगन्तव्यं । निजवारिणा प्रागवत् । हृत्कण्ठाक्षालेपनतः प्रागवत् । अत्रैतत् प्रयोगविधानं गुरुमुखादवगन्त-व्यम् ॥ ८६ ॥

उग्रगन्धामित्यादिभिरात्मवानित्यन्तैस्त्रिभिः स्नोकैर्देवतानामपरोक्षं खेक्षोत्-क्रान्तिं वा(च)औषधप्रयोगैरुपदिशति । तत्र उग्रगन्धामित्यादिना स्नोकेनौषधानि सप्त कर्णिकारिमित्यादिना स्नोकेनौषधानि दश । तदौषधनामान्याराध्यमुखा-दवगन्तव्यानि । समं सर्व्वाणि समभागानि इत्यर्थः । सितेन शर्करया । तन्मिश्र-

* शंखोटमित्यपि पाठो दृश्यते ।

कर्णिकारिं हंसपदीं वाराहीं मृगराजकम् ।
कोरण्टं पिप्पलं मूलं त्रिफलं चूर्णयेत् समम् ॥ ९८ ॥
सितेनाज्येन मधुना दग्ध्वा तल्लिप्ततत्त्रयः ।
भावयंस्तन्मयो भूयाद्दिवसैः कैश्चिदात्मवान् ॥ ९९ ॥
सदाशिवमयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निष्फालनाच्चित्ते तत्तत्त्वं स्वात्मसात् कृतम् ॥

इति षोडशनित्यातन्त्रेषु श्रीकादिमते चतुस्त्रिंशत्
पटलम् परिपूर्णम्॥ ३४ ॥

---

तल्लयः तत् सप्तदशौषधलिप्ताज्ञादित्रयः । तन्मयः देवतामयः । आत्मवान् भावनास्थैर्य्यात् ॥ ९९ ॥

अस्मिन् पटले सप्तविंशश्लोकात् परं एकः श्लोकः पतितः ॥

इति षोडशनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसार-
सिंहराजप्रकाशाभिधानेन सुभगानन्दनाथेन विरचितायां मनोरमा-
ख्यायां व्याख्यायां लिङ्गयन्त्रप्रकाशनपरं चतुस्त्रिंशं
पटलं परिपूर्णं परामृष्टम् ॥ ३४ ॥ ॐ तत्सत् ॥

ग्रन्थसंख्याः २३६—चतुस्त्रिंशे तु पटले व्याख्याग्रन्थाः शतद्वयम् ।
षट्त्रिंशतायुतं प्रोक्तं यन्त्राण्यष्टौ च तत्र वै ॥

## पञ्चत्रिंशपटलम् ।

अथ षोड़शनित्यानां स्वात्मत्वे वासनां शृणु ।
यया तन्मयतासिद्धिः प्रत्यक्षा भवति ध्रुवम् ॥ १ ॥
गुरुराद्या भवेच्छक्तिः सा विमर्शमयी मता ।
नवत्वं तस्य देहस्य रन्ध्रत्वेनावभासते ॥ २ ॥
वह्निर्दिव्यः स्वमायाः स्युः पञ्चमी जनकात्मिका ।
कुरुकुल्ला भवेन्माता पुरुषार्थास्तु सागराः ॥ ३ ॥

---

पूर्व्वस्मिन् पञ्चत्रिंशे पटले षोड़शनित्याविद्यासिद्धानां लोकचमत्कारान् प्रयोगान् विद्याभिरुपदिश्यानन्तरं षोड़शनित्यादीनां तत्तत्परिवारशक्त्यादीनाञ्च स्वात्मत्वेन वासनादिकं विद्यास्वरूपभेदेन प्रस्तारप्रकारादिकञ्चोपदिशति अथ षोड़शेत्यादिना सिद्धय इत्यन्तेन श्लोकशतरूपेण पञ्चत्रिंशेन पटलेन। अथ षोड़शेत्यादिभिः प्रपञ्चतेत्यन्तैः त्रयोविंशत्या श्लोकैर्गुरुपूजादिकं मुद्रादर्शनान्तं नित्यास्वरूपपरिवारन्यासजपतर्पणहोमाभिषेकोपचारादीनां वासनामुपदिशति। तत्र षोड़शनित्यानां परिवारादिसहितानां। स्वात्मत्वे देहेन्द्रियमनःप्राणाद्याकारेण प्रतीयमानात्मस्वरूपत्वे। यया वासनया। तन्मयतासिद्धिः नित्यात्मतासिद्धिः। प्रत्यक्षा अपरोक्षानुभवविषया। आद्याविमर्शमन्तरेण किञ्चिदपि सुस्फुटं ज्ञातुमशक्यत्वात्। सा स्वसंवेद्यस्वरूपेत्यर्थः। विमर्शमयी विमर्शमात्रविग्रहा। एतदुक्तं भवति आद्याविमर्शविग्रहा शक्तिरेव गुरुरिति। तस्य गुरोः। रन्ध्रत्वेन नवरन्ध्रत्वेन। एतदुक्तं भवति यथा रन्ध्रैरुपादेयग्रहणमनुपादेयमोचनञ्च क्रियते तथाविमर्शपरमार्थस्य गुरोः कटाक्षे साधकानां अर्थप्रवृत्तिरनर्थादुपरतिश्च। अत्र श्रोत्रद्वयं वाक् च दिव्यं त्रयं दृग्द्वयमुपस्थं च सिद्धं उत्तरत्रयं मानुषमिति सम्प्रदायः। स्वमायाः अतस्मिंस्तद्बुद्धिं जनयित्वा उन्मार्गप्रवर्त्तिकाः शक्तयः। पञ्चमी ब्राह्म्यादिषु पञ्चमीत्वात् वाराहीत्यर्थः। जनकात्मिका साधकानां जनकवदभिभवस्य स्तम्भनकरी शक्तिरिति यावत्। कुरुकुल्ला माता

रत्नद्वीपो भवेद्देहो नवत्वं धातुरोमभिः ।
सङ्कल्पाः कल्पतरवः स्वाधारा ऋतवः स्मृताः ॥ ४ ॥
ग्रहर्क्षराशिचक्रेण कालात्मा पश्चिमामुखः ।
तेन पूर्व्वाभिमुख्यं स्यादन्यत्ते कथितं मिथः ॥ ५ ॥
ज्ञाता स्वात्मा भवेज्ज्ञानमर्घ्यं ज्ञेयं वहिःस्थितम् ।
श्रीचक्रं पूजनं तेषां एकीकरणमीरितम् ॥ ६ ॥

---

मातृरूपा शक्तिः साधकानां मातृवदभिमतप्रदा शक्तिरित्यर्थः। एतदुक्तं भवति स्वात्मत्वेन परिभावनायां जनकजनन्योरंशत्वेन देहेन्द्रियबुद्ध्यादिषु संक्रान्तौ धर्म्माधर्म्मौ वाराहीकुरुकुल्लात्मकौ भावयेदिति। पुरुषार्थाः धर्म्मादयः। तुरव-धारणे। सागराः महत्त्वया निरवसानतया च। रत्नद्वीपो भवेद्देहः देहत्वं स्वात्मोपलब्धेः। नवत्वं नवखण्डात्मकत्वं द्वीपस्येति यावत्। धातुरो-मभिः ओजःशुक्रमज्जास्थिमेदोमांसरोमत्वग्रुधिरैर्मध्यप्रागादिक्रमैः। सङ्कल्पाः कल्पतरवः। सङ्कल्पपुरःसरं कर्म्मणि प्रवृत्त्या फलसिद्धेः। स्वाधाराः षोड़श पटले विशुद्धाख्ये इत्यादिभिरेकषष्ट्यादिनवभिः श्लोकैर्डाकिन्यादीनां निवास-स्थानत्वेन प्रोक्तमूलाधाराद्याज्ञापर्य्यन्तानि सुषुम्नान्तर्गतानि स्थानानीति यावत्। ऋतवः वसन्ताद्याः सुषुम्नाया इड़ापिङ्गलात्मकचन्द्रार्कसंयोगादनुमितकालात्मक-त्वात्तत्स्थानाधाराणामृत्वात्मकत्वमित्यर्थः। ग्रहर्क्षराशिचक्रेण ग्रहनक्षत्रसहित-राशिचक्रेण। कालात्मा कालस्वरूपात्मा पश्चिमामुखः पश्चिमदिङ्मुख इति यावत् ज्योतिश्चक्रस्य प्रत्यङ्मुखत्वात्। तेन कारणेन। पूर्व्वाभिमुख्यं कालात्मक-देवताभिमुख्यापेक्षया पूर्व्वाभिमुख्यं साधकस्येति यावत्। अन्यत् कालस्य तात्त्विकं स्वरूपं। कथितं षट्त्रिंशे पटले काल इत्यादिना चत्वारिंशश्लोकपूर्व्वा-र्द्धेनेति यावत्। मिथः अत्युपह्वरं अन्यत् ते कथितं। मिथ इत्यनेनैतदुक्तं भवति इन्द्रियादीनां स्वात्मत्ववासना तत्तन्मन्त्रस्वरूपार्थस्वरूपे तव कथिते इति। अत्र कालचक्रेश्वर्य्यादीनां चत्वारिंशश्लोकेन प्रत्येकं नवधात्ववासना पञ्चमे पटले व्याख्याता ॥ ५ ॥

ज्ञाता स्वात्मा पूजक इति यावत्। ज्ञानं स्वकीयं अर्घ्यं पूजोपकरणमिति

श्रीचक्रे सिद्धयः प्रोक्ता रसा नियतिसंयुताः ।
ऊर्म्मयः पुण्यपापे च ब्राह्म्याद्या मातरः स्मृताः ॥७॥
भूतेन्द्रियमनांस्येव क्रमान्नित्याकला पुनः ।
कर्म्मेन्द्रियार्था दोषाश्च ज्ञेयाः स्युः शक्तयोष्ट वै ॥ ८ ॥
नाड्यश्चतुर्द्दश प्रोक्ताः चोभिण्याद्यास्तु शक्तयः ।
वायवो दश संप्रोक्ताः सर्वसिद्धयादिशक्तयः ॥ ९ ॥
वह्नयो दश संप्रोक्ताः सर्वज्ञाद्यास्तु शक्तयः ।
शीतोष्णसुखदुःखेच्छा गुणाः प्रोक्ताः क्रमेण वै ॥ १० ॥

---

यावत्। ज्ञेयं बहिःस्थितं ज्ञातुरिति शेषः। श्रीचक्रं पूज्यमिति यावत्। पूजनं श्रीचक्रस्येति यावत्। तेषां ज्ञातृज्ञानज्ञेयानां एकीकरणं बोधात्मकत्वेनेति यावत्। एतदुक्तं भवति स्वात्मनो भिन्नवत् प्रतीयमानज्ञातृज्ञानज्ञेयात्मकेषु त्रिष्वपि स्वात्मस्वरूपत्वेन प्रतीयमानो ज्ञाता पूजकः स्वकीयत्वेत प्रतीयमानं ज्ञानं पूजोपकरणं अर्घ्यं स्वबाह्यत्वेन प्रतीयमानं ज्ञेयं पूज्यं श्रीचक्रं। तेषां बोधात्मकत्वेनापृथग्भावः पूजनमिति। श्रीचक्रे सिद्धय इति अणिमाद्याः। रसाः शृङ्गारादयो नव। नियतिसंयुताः नियतिसंज्ञया शक्त्या सहिता वा सम्भूय दश शक्तय इत्यर्थः। ऊर्मयः बुभुक्षापिपासाशोकमोहजरामृतयः। पुण्यपापे कर्म्मणी सम्भूयाष्टौ। भूतेन्द्रियमनांसि भूतानि पञ्चेन्द्रियाणि दश च मनसा सहितानि षोड़श। कर्मेन्द्रियार्थाः वचनादानविहरणविसर्गानन्दाः। दोषा वातादयः। प्रोक्ताः सप्तविंशतिपटले इति यावत्। संप्रोक्ताः प्राक्पटले। अत्रातिरहस्यार्थाः मयोक्तवासनाविमर्शिन्यां द्रष्टव्याः। वह्नयो दश धातुषु सप्त दोषेषु त्रयश्च सम्भूय दशेति यावत्। संप्रोक्ताः अस्मिन् पटले उत्तरत्राग्निरित्यादिना पञ्चाशत्तमेन श्लोकेन। गुणाः सत्त्वादयः। तन्मात्राः शब्दस्पर्शरूपरसगन्धाः पञ्चतत्त्वरूपाः। तेषां पुष्पसायकत्वं प्रमुखे अभिमुखरूपतया परिणामि पुरुषरूपतया वा। मनस्तत्त्वं इक्षुधनुः विषयपरमार्थस्वरूपाणां शरसमेन्द्रियाणां तत्तद्विषयेषु प्रेरकत्वात्। इन्द्रियाणां तदर्थानां मनसश्च प्रवृत्तिरूपेण

वशिन्याद्याः शक्तयः स्युस्तन्मात्राः पुष्पसायकाः ।
मनो भवेदिक्षुधनुः पाशो राग उदीरितः ॥ ११ ॥
द्वेषः स्यादङ्कुशः प्रोक्तः क्रमेण वरवर्णिनि ।
अव्यक्ताहङ्कृतिमहदाकाराः प्रतिलोमतः ॥ १२ ॥
कामेश्वर्य्यादि देव्यः स्युः सम्वित् कामेश्वरः स्मृतः ।
स्वात्मैव देवता प्रोक्ता ललिता विश्वविग्रहा ॥ १३ ॥
लौहित्यं तद्विमर्शः स्यादुपास्तिरिति भावना ।
सिद्धिस्त्वनन्यचित्तत्वं मुद्रा वैभवभावनम् ॥ १४ ॥
उपचाराश्चलत्वेपि तन्मयत्वाप्रमत्तता ।
प्रयोगास्तु विकल्पानां हेतोः स्वात्मनि नाशनम् ॥ १५ ॥

---

वोभयक्रियात्मकत्वात्तद्बहिरुपादानं तेन न पुनरुक्तिदोषः। पाशो रागतत्त्वरूप इति यावत् तयोर्वन्धकत्वं सामान्यात् ॥ ११ ॥

द्वेषः स्यादङ्कुशः द्वेष्याद्दारकत्वात्। वरवर्णिनीति सम्बुद्धिः। अव्यक्ताहङ्कृतिमहदाकाराः प्रतिलोमतः महदहङ्कृतिः अव्यक्तक्रमात्तदाकारा इत्यर्थः। अत्राव्यक्तशब्देन प्रकृतितत्त्वं महच्छब्देन वुद्धितत्त्वं अहङ्कृतिशब्देनाहङ्कारतत्त्वमुच्यते। सम्वित् कामेश्वरः सकलात्मकं चैतन्यं कामेश्वर इति यावत्। स्वात्मा विविधविश्वविकल्पात् स्वस्वरूपतया विलाप्य सद्वस्तु भासते स स्वात्मा देवता द्योतमानत्वात् ललिता निरवद्यरूपत्वात् त्रिश्वविग्रहा ज्ञातृज्ञानज्ञेयविग्रहा। तद्विमर्शः स्वात्मविमर्शः स्वात्मानुसन्धानमिति यावत्। एतदुक्तं भवति सर्व्वस्य स्वात्मन्यनुरागात् कस्मिंश्चिद्विषयेप्यनुरागादेव मनसः स्थित्यभावाच्च तदनुरागो लौहित्यमिति। इति भावना स्वात्मभावनासिद्धिः। फलमुपास्तेरिति यावत्। तुरवधारणे। अनन्यचित्तत्वं स्वात्मत्वे साधनास्थैर्य्यादिति यावत्। मुद्राः योनिमुद्रादिसकलमुद्राः। वैभवभावनं उत्तरत्र वक्ष्यमाणप्रकारात् आत्मन इति यावत्। चलत्वेपि अननुसन्धानसमयेपि स्वप्नादावपीत्यर्थः। तन्मयत्वात् अप्रमत्तता स्वस्वरूपभावस्थैर्य्यं। (?) एतदुक्तं भवति। सतीति सम्बुद्धिः। असत्कारः स एवोपचार इति यत्तस्मात् सति सम्बुद्धिः सत्कारः

यन्त्राणि मन्त्राः सर्वत्र स्वात्मत्वे स्थैर्य्यसाधनम् ।
सन्ध्यासु भजनं देव्या आदिमध्यान्तमज्जनम् ॥ १६ ॥
अन्यास्तु शक्तयश्चक्रगामिन्यो याः समन्ततः ।
तास्तु विश्वविकल्पानां हेतवः समुदीरिताः ॥ १७ ॥
न्यासस्तु देवतात्वेन स्वात्मनो देहकल्पनम् ।
जपस्तन्मयतारूपभावनं सम्यगीरितम् ॥ १८ ॥
होमो विश्वविकल्पानामात्मन्यस्तमयो मतः ।
[ तेषामन्योन्यसम्भेदभावनं तर्पणं भवेत् ॥ १९ ॥

---

स एवोपचार इति ( ? ) । प्रयोगाः अभिमतसिद्धिकराः अनभिमतनिवारकाः क्रियाविशेषाः । तुरवधारणे । विकल्पानां हेतोः विकल्पानां हेतुरविवेकः तस्य । स्वात्मनि विमर्शरूपे । एतदुक्तं भवति स्वात्मत्ववासनया दुर्व्वासनानाशः । प्रयोगा इति यन्त्राणि मन्त्राः प्रयोगसाधनानि यन्त्राणि मन्त्राश्चेत्यर्थः । सर्व्वत्र विषये । स्वात्मत्वे स्वात्मत्ववासनायामित्यर्थः । यत् स्थैर्य्यसाधनं स्थैर्य्यकरणं । एतदुक्तं भवति स्वात्मत्ववासनास्थैर्य्यसाधनं विमर्शः । तद्वासनास्थैर्य्यपरमार्थप्रयोगसाधनभूतानां यन्त्रमन्त्राणां स्वात्मनोः विश्वात्मनोरैक्यवाक्यनिर्णीतनिरूपणपरत्वेन विमर्शात्मकत्वात्तानि तद्वासनास्थैर्य्यसाधनानीति। तत्र सकलमन्त्रात्मिकायाः श्रीविद्यायास्तदपृथग्भावनिर्णयनिरूपणपरत्वमुत्तरत्र वक्ष्यति । सकलयन्त्रात्मकस्य श्रीचक्रस्यापि तदात्मकत्वे "कालो धामानि भूतानि नवचक्राण्यनुक्रमादिति" नित्याषोड़शिकार्णवे प्रोक्तं । आदिमध्यान्तमज्जनं (वर्जनं) अनुस्यूतरूपतया त्वपरिच्छिन्नतानुसन्धानं । एतदुक्तं भवति देव्याः सन्ध्यासु भजनं स्वात्मनः स्वपरिच्छिन्न एवेति । अन्याः गुप्तयोगिन्यः । चक्रगामिन्यः श्रीचक्रस्था या मन्त्रविभवपटलप्रोक्ताः ताः शक्तयः । तुः समुच्चये । विश्वविकल्पानां हेतवः विश्वस्य विविधविकारप्रतीतिकराः शक्तय इत्यर्थः । तुरवधारणे । स्वात्मनः स्वस्य । एतदुक्तं भवति निजदेहे देवताविग्रहभावो न्यास इति । तन्मयतारूपभावनं श्रीविद्यात्मकत्वेन मातृकामयत्वेन च स्वस्वरूपभावनं । सम्यगीरितं

मोहाज्ञानादिदुःखानामात्मन्यस्तमयो दृढम् । ]
अभिषिकस्तु विद्या स्यादात्मा सर्व्वाश्रयो महान् ॥ २० ॥
उपाधीनान्तु राहित्यमुपदेश इतीरितः ।
दक्षिणा भेदशून्यत्वं शुश्रूषा स्थैर्य्यमुच्यते ॥ २१ ॥
तिथिरूपेण कालस्य परिणामावलोकनम् ।
नित्या पञ्चदशैताः स्युरिति प्रोक्तास्तु वासनाः ॥ २२ ॥

---

चतुर्थपटले कामकलारूपेण श्रीविद्यात्मकत्वं प्रथमपटले मन्त्राणां विंशतिदोषपरिहारात्मकत्वेन मातृकामयत्वं च। तत्र षड्विंशे पटले प्रोक्तोदयविश्रान्तिस्वरूपानुसन्धानमित्यर्थः। अस्तमयः विश्रान्तिः। एतदुक्तं भवति कनकसत्तामात्रे भूषणादीनामिव स्वरूपसत्तामात्रे विश्वविकल्पानां नित्यास्थानविलापनं होम इति। तेषां प्रोक्तानां सर्वेषां। अन्योन्यसम्भेदभावनं अन्योन्यैकभावनं। तर्पणं स्वात्मनो विश्वाकारव्याप्त्यानुभवसञ्जाता तृप्तिरित्यर्थः। मोहाज्ञानादिदुःखानां कामाविष्टतया कर्त्तव्याकर्त्तव्यज्ञानाभावो मोहः विसंज्ञाप्राप्तमज्ञानम् आदिशब्दस्त्वन्यथाज्ञानसाहसादिविषयः तैरुत्पन्नदुःखानां आध्यात्मिकादीनां आत्मनि विमर्शप्रतीतिराहित्यात् तदैक्यनिर्णीतिरूपे। अस्तमयः उपशान्तिः। दृढं अपुनःप्ररोहयोग्यं। तुर्विशेषे। सर्वाश्रयः तादात्म्यात्। महान् विभुत्वात् सर्व्वशक्तित्वाच्च। उपाधीनां देहादिविकारकारणभूताः सत्त्वादिगुणा उपाधयः तेषां। तुरवधारणे। राहित्यं स्वात्मन इति शेषः। एतदुक्तं भवति रजःपङ्कादिभिराकाशस्येव सत्त्वादिगुणैस्तदुत्पन्नविकारैश्चालेप्यत्वभावनोपदेश इति। दक्षिणा गुरोः। भेदशून्यत्वं तस्मिन्नात्मसमर्पणात्। शुश्रूषा गुरोः स्थैर्य्यं आत्मज्ञानस्येति यावत्। तिथिरूपेण सितासितपक्षयोः परिणामावलोकनं चन्द्रमण्डले सितासितकल्पनं। एता नित्याः पञ्चदश कामेश्वरीनित्याद्याः। एतदुक्तं भवति चन्द्रमण्डले सितासितकलानां वृद्धिक्षयहेतुस्तिथिकृतः काल इति यतस्तस्मात्तिथिरूपकालात्मिकाः कामेश्वर्य्यादिनित्या इति। किञ्च तिथिनित्यानामवान्तरकालात्मकत्वं ताभिरवान्तरकालात्मिकाभिश्चन्द्रमण्डलत्वेनोपलक्षितस्य प्रपञ्चस्य कार्य्यमाणत्वं तासां महानित्यात्मकस्वस्वरूपेणापृथक्त्वभावनया तदुपास्तिश्चोक्तेति सम्प्रदायार्थः। कनिष्ठाद्याः अङ्गुल्यः। तेषां

पृथिव्यादीनि भूतानि कनिष्ठाद्या क्रमान्मता ।
तेषामन्योन्यसम्भेदप्रकारैस्तत्प्रपञ्चता ॥ २३ ॥
गौं: या भि लि वें ता स्त्रि ल ते र्थो धौ क य ला भि स ।
न्तु दे रू षे प ण वी शे तं दि मी न रि स्या द ते ॥ २४ ॥
स्नं तो गत् शे क्लत् ष ज श्च रि त्म मी ल्ले प्त खा क हृ ।
त: र्थं क स्या ग्नि श्चा स्तु त त: न्ले गो वें पि त षु स ॥ २५ ॥
त्वं का मा म्ना न प्र श व्यो ना न म स ग्नि मा त्व ग्र ।
रो म ई यो का विं शें त नं त फा न्दु ल ना न्नि वि ॥ २६ ॥

---

अङ्गुल्यात्मकपञ्चभूतानां । अन्योन्यसम्भेदप्रकारैः अन्योन्यसम्बन्धप्रकारभेदैः । तत्-प्रपञ्चता स्वात्मनो मुद्रापरमार्थरूपभेदयोगविशेषः प्रपञ्चता ॥२३ ॥

ललिताया इत्यादिभिः तन्निफालनमित्यन्तैर्व्याकुलाक्षरक्रमलिखितैस्त्रिभिः श्लोकैराद्याया ललिताविद्याया अक्षरवाच्यमर्थमुपदिशति । तत्र ललितायाः श्रीविद्यातार्त्तीयखण्डस्येति यावत् । त्रिभिः परिमितः सकलार्थः सकल-शब्दार्थः । शेषेण अक्षरेण । तुः समुच्चये । तेन प्रोक्तप्रकारावयवार्थाः तार्त्तीयखण्डसमुदायभावात् । इदं अनन्तरवक्ष्यमाणार्थस्वरूपं । अशेषतो जगत् कृत्स्नं तेन समष्टिरूपं । व्यष्टिरूपं जगदिति यावत् । हृल्लेखात्मकं शक्तिमयं । ईश्वरीति देवीसम्बुद्धिः । तस्याः हृल्लेखायाः । चः समुच्चये । अर्थः अक्षरवाच्यः । तुरवधारणे । कथितः अनन्तरवक्ष्यमाणश्लोके । सर्व्वतन्त्रेषु एतस्मात् तन्त्रादन्येषु गोपितः अतिरहस्यत्वात् । व्योम्ना आकाशाक्षरेण प्रथमेन प्रकाशमानत्वं आकाशस्य स्फुरणात्मकत्वात् । स्वातन्त्र्येण इतरप्रकाशनैर-पेक्ष्यं । ग्रासमानत्वं स्वस्वरूपतया । अग्निना अक्षरेण द्वितीयेन अग्नेरपि तादा-त्म्येन ग्रासात्मकत्वात् । तयोः प्रकाशग्रासरूपयोः । विमर्शः तादात्म्य-परमार्थमेलनं । निफालनं तादात्म्यविमर्शनिर्णीतिः । एतदुक्तं भवति । हृल्लेखास्थेन व्योमाक्षरेण स्वात्मनः प्रकाशरूपत्वं वह्न्यक्षरेण ग्रासात्मकत्वं तदुभयपरमार्थविमर्शरूपेण शिवशक्तिसंमेलनात्मकेन चतुर्थस्वरेण तदात्मकत्वेन तस्य परमार्थस्वरूपविन्दुना तद्द्वैविध्यप्रतीतिराहित्यात् तदैक्यनिर्णीतिश्च क्रियत

अथ मन्त्रविनिर्म्माणविधानमभिधीयते ।
मन्त्रवीर्य्यसुसिद्धानामितरेषां विशेषकृत् ॥ २७ ॥
मन्त्रा एकाक्षराः पिण्डाः कर्त्तर्य्यो द्व्यक्षराः स्मृताः ।
वर्णत्रयं समारभ्य नवार्णावधि वीजकाः ॥ २८ ॥
ततो दशार्णमारभ्य यावद्विंशति मन्त्रकाः ।
तत ऊर्द्ध्वं गता मालास्तासु भेदो न विद्यते ॥ २९ ॥
तथैव पिण्डकर्त्तर्य्योर्भेदो वीजेषु वर्णतः ।
पदैर्म्मन्त्रेषु भेदः स्यात् तेषां संख्याः शृणु क्रमात् ॥ ३० ॥
षट् चतुर्विंशति तथा शतं विंशतिसंयुतम् ।
सविंशति सप्तशतं चत्वारिंशद्भिरन्वितम् ॥ ३१ ॥

---

अथेत्यादिभिः क्रमादित्यन्तैश्चतुर्भिः श्लोकैः पिण्डादिमालान्तानां मन्त्राणां त्रैविध्यं तेषामक्षरपदविन्यासेन वहुरूपत्वञ्च तत्संख्यां प्रस्तावसहितमुपदिशति। तत्र मन्त्रवीर्य्यसुसिद्धानां अस्मिन् पटले वक्ष्यमाणमन्त्रवीर्य्यज्ञानसुसिद्धानां। इतरेषां मन्त्रवीर्य्यज्ञानसिद्धिरहितानां। पिण्डाः नाम्नेति यावत्। कर्त्तर्य्यः प्राग्वत् नाम्ना। वीजकाः वीजसंज्ञा मन्त्राः। मन्त्रकाः प्राग्वन्नाम्ना। मालाः मालामन्त्राः। तासु मालासु। तथैव न विद्यत एव इत्यर्थः। तेषां भेदानां क्रमात् त्र्यक्षरमन्त्रभेदादिनवाक्षरमन्त्रभेदान्तमिति शेषः ॥ ३० ॥

षड़ित्यादिभिः समुन्नयेदित्यन्तैस्त्रिभिः श्लोकैस्त्र्यक्षरमन्त्रमारभ्य नवाक्षरमन्त्रा-वधि सप्तविधस्य वीजाभिधानस्य मन्त्रजातस्य अक्षरसन्दर्भविकल्पजनितसंख्या-क्रममुपदिशति। तत्र षट् त्र्यक्षरमन्त्रस्य भेदाः। एतदुक्तं भवति एकस्य द्वाभ्यां त्रिभिश्च संगुणनाज्जाताः षट्संख्याः त्र्यक्षरभेदा इति। चतुर्विंशति दित्व-त्वाच्चतुर्विंशतिरित्यर्थः। चतुरक्षरमन्त्रस्येति यावत्। त्र्यक्षरभेदषट्कं चतुर्भिः संगुणय्य चतुर्विंशतिसंख्या लब्धा इत्यर्थः। शतं विंशतिसंयुतं पञ्चाक्षरमन्त्र-भेदा इति यावत्। चतुरक्षरभेदानां पञ्चभिः संगुणनाज्जाता इत्यर्थः (१२०)। सविंशति सप्तशतं विंशत्यधिकं सप्तशतमित्यर्थः (७२०) षड़क्षरमन्त्रभेदा इति

सहस्रपञ्चकं पश्चाच्चत्वारिंशत्सहस्रयुक् ।
त्रिशतं विंशति ततस्त्रिलक्षेण समन्वितम् ॥ ३२ ॥
द्विषष्टिश्च सहस्राणां साशीत्यष्टशतन्त्विति ।
भेदसंख्येत्थं सप्तानां ताभिरन्याः समुन्नयेत् ॥ ३३ ॥
प्रस्तारक्रममेतेषां शृणु देवि यथाक्रमम् ।
एतैरेवोन्नयेन्मन्त्रपदभेदाननुक्रमात् ॥ ३४ ॥
तिर्य्यग्रेखाद्वयं कृत्वा तत्राधोर्द्धा लिखेत् क्रमात् ।
रेखाश्चतस्रः पञ्चैवमृज्वाकारा दशावधि ॥ ३५ ॥

---

यावत् । पञ्चाक्षरमन्त्रभेदान् षड्भिर्हत्वा जाता इत्यर्थः । चत्वारिंशद्भिरन्वितं सहस्रपञ्चकं सप्ताक्षरमन्त्रभेदा इति यावत् । प्राग्वत षड़क्षरभेदान् सप्तभिर्हत्वा जाता इत्यर्थः (५०४०)। पश्चात् अष्टाक्षरमन्त्रभेदसंख्येति यावत् । चत्वारिंशत्सहस्रयुक् त्रिशतं विंशति विंशत्यधिकशतत्रयोत्तरचत्वारिंशत्सहस्रमित्यर्थः (४०३२०)। प्राग्वत् सप्ताक्षरभेदान् अष्टभिर्हत्वा जाता संख्या इत्यर्थः । ततः नवाक्षरमन्त्रभेदसंख्येति यावत् । त्रिलक्षेण समन्वितं द्विषष्टिश्च सहस्राणां साशीत्यष्टशतन्त्विति । अशीत्युत्तराष्टशताधिकद्वाषष्टिसहस्रयुतं त्रिलक्षमित्यर्थः (३६२८८०)। प्राग्वदष्टाक्षरभेदान्नवभिर्हत्वा जाताः संख्या इत्यर्थः । इत्थं उक्तप्रकारेण । सप्तानां त्र्यक्षरादिनवाक्षरान्तानां । ताभिः संख्याभिः । अन्या दशाक्षरादिभेदसंख्याः ॥ ३३ ॥

प्रस्तारेत्यादिभिश्चोदिता इत्यन्तैर्दशभिः श्लोकैस्तेषां मन्त्राक्षरसन्दर्भभेदानां प्रस्तारक्रमानुपदिशति । तत्र एतेषां भेदानां । देवीति सम्बुद्धिः । एतैः प्रकारैः । एवावधारणे । मन्त्रपदभेदान् मन्त्रेषु पदानां भेदान् । तिर्य्यग्रेखाद्वयं सव्यदक्षिणरेखाद्वयं । एकाङ्गुलान्तरालमिति । तत्र रेखाद्वयोर्मध्ये । अधोर्द्धाः दिव्यत्वादधऊर्द्ध्वरूपा इत्यर्थः । रेखाश्चतस्रः एकैकाङ्गुलान्तरालमिति यावत् । एष त्र्यक्षरभेदविन्यासयन्त्रप्रकारः । पञ्चैवमृज्वाकारा दशावधि चतुरक्षरादिभेदविन्यासे पञ्चषट्सप्ताष्टनवदशरेखाः क्रमाल्लिखेदित्यर्थः । तदधो वर्द्धयेद्रेखाः

तदधो वर्द्धयेद्रेखास्तत्तत्संख्याङ्गुलावधि ।
तिर्य्यग्रेखास्तावतीश्च कृत्वा तेष्वङ्कमालिखेत् ॥ ३६ ॥
सव्यदक्षस्थितेष्वेषु कोष्ठपंक्तिष्वनुक्रमात् ।
आद्ये द्विद्विक्रमादङ्कान् पूरयेत्तत्र चोदितान् ॥ ३७ ॥
एतेनान्यत्र सर्वत्र देयानङ्काननुक्रमात् ।
द्वितीयपंक्तौ प्रथमे खण्डे शेषांस्तु पूरयेत् ॥ ३८ ॥

---

तदूर्द्ध्वाधोरेखाः अधो वर्द्धयेत् । तत्तत्संख्याङ्गुलावधि तत्तद्भेदसंख्याङ्गुलावधि तत्तद्भेदसंख्याङ्गुलिभिः । तिर्य्यग्रेखास्तावतीश्च कृत्वा पूर्व्वलिखितद्वितीयतिर्य्यग्रेखाग्रे तावतीश्च कृत्वा पूर्व्वलिखितद्वितीयतिर्य्यग्रेखादितत्तद्भेदसंख्यास्तिर्य्यग्रेखाश्चैकैकाङ्गुलान्तरालं लिखित्वेत्यर्थः । तेषु कोष्ठेषु अङ्कं प्रथमाक्षरस्य प्रथममङ्कं द्वितीयाक्षरस्य द्वितीयमङ्कमेवमेवमुत्तरत्राप्यक्षरसंख्यमङ्कमिति यावत् । एतदुक्तं भवति । प्राक्प्रत्यगुदग्दक्षिणोदक् च सूत्रचतुष्टयं सप्तक्रमेणास्फालनात्तिर्य्यग्रूपेण कोष्ठत्रयकोष्ठत्रयोपेताः षट् पंक्तयो जाताः । तासु पंक्तिषु त्र्यक्षरभेदषट्कं विलिखेत् । एवमुत्तरत्रापि तिर्य्यग्रूपतत्तदक्षरसंख्यकोष्ठोपेतास्तत्तद्भेदसंख्यपंक्तीरधोधः परिकल्प्य तत्र तत्र तद्भेदान् विलिखेदिति । सव्यदक्षस्थितेष्वेषु कोष्ठेष्विति यावत् । कोष्ठपंक्तिषु कोष्ठानां पंक्तिषु । अनुक्रमात् ऊर्द्ध्वाद्यधोधः । आद्ये कोष्ठे प्रतिपंक्तिष्विति यावत् । द्विद्विक्रमात् द्विद्विपंक्तिक्रमात् एकमेकं खण्डं परिकल्प्येति यावत् । चोदितान् अक्षरसंख्योपलक्षणभूतानिति यावत् । एतदुक्तं भवति । तिर्य्यग्रूपत्रित्रिकोष्ठात्मिकासु पंक्तिषु षट्(सु)सूत्राधरद्विद्विपंक्तिक्रमात् एकमेकं खण्डं परिकल्प्य प्रथमखण्डपंक्त्योराद्ये त्वाद्ये कोष्ठे प्रथमप्रथममङ्कं द्वितीयखण्डपंक्तिद्वयस्याद्ये त्वाद्ये कोष्ठे द्वितीयं द्वितीयमङ्कं तृतीयखण्डपंक्तिद्वयस्याद्ये त्वाद्ये कोष्ठे तृतीयं तृतीयमङ्कं चैवं अक्षरभेदषट्कन्यासे न्यसेदिति । एतेन क्रमेण । अन्यत्र सर्व्वत्र चतुरक्षरादि नवाक्षरान्ततत्तद्भेदन्यासे इति यावत् । एतदुक्तं भवति चतुरक्षरादिनवाक्षरान्तभेदप्रस्तारे तत्तद्भेदसंख्यास्तत्तदक्षरभेदसंख्यया विभज्य तत्तत्फलसंख्याभिः पंक्तिभिरेकमेकं खण्डं परिकल्प्य प्रथमखण्डस्य पंक्तिष्वाद्ये त्वाद्ये कोष्ठे प्रथमं प्रथममङ्कमेवं द्वितीयादिषु खण्डपंक्ति

द्वितीयादिष्वपि तथा शेषान् खण्डेषु पूरयेत् ।
[ तृतीयपंक्तौ तु शेषैस्त्वेवमेव समालिखेत् ॥ ३८ ॥
चतुर्थादिष्वपि तथा नवमान्तं समालिखेत् । ]
तिर्य्यक्पंक्तिष्वनभ्यस्तक्रममङ्कास्तु सर्वतः ॥ ४० ॥

---

ष्वाद्ये त्वाद्ये कोष्ठे द्वितीयाद्यङ्कमेवं क्रमादाद्याद्यकोष्ठाकारेणोर्द्ध्वाधःक्रमपंक्त्यां चोदितानङ्कान् पूरयेदिति । द्वितीयपंक्तौ प्रतिपंक्तिकं द्वितीयकोष्ठात्मकोर्द्ध्वाधःक्रमपंक्तौ । प्रथमे खण्डे शेषांस्तु पूरयेत् आद्यखण्डलिखितं व्यतिरिक्तैरङ्कैः प्रागवदवान्तरखण्डानि च परिकल्प्य तत्तदवान्तरात्मकैकैकखण्डे त्वेकाङ्कक्रमात् शेषाङ्कान् पूरयेदिति यावत् । द्वितीयादिष्वपि तथा शेषान् खण्डेषु पूरयेत् । द्वितीयादिखण्डेष्वपि प्रागवदवान्तरखण्डानि च परिकल्प्य तत्तदाद्यपंक्तिविलिखिताङ्कादनन्तरा(ङ्का)द्याङ्कान् लिखितान् सर्व्वांस्तत्तत्खण्डेष्वेव पूरयेदित्यर्थः । तृतीयपंक्तौ प्रतिपंक्तिकं तृतीयतृतीयकोष्ठात्मकोर्द्ध्वाधःक्रमपंक्तौ । तुः समुच्चये । शेषैः आद्यद्वितीयकोष्ठयोः प्रतिखण्डप्रलिखिताङ्कैः । तुरवधारणे । एतदुक्तं भवति तृतीयतृतीयकोष्ठात्मकोर्द्ध्वाधःक्रमपंक्त्यामपि तत्तत्खण्डपंक्तिषु लिखिताङ्कसंख्या भागहारेण परिकल्पिततत्तदवान्तरावान्तरखण्डानि लिखेत् शेषाङ्कैः पूरयेदिति । चतुर्थादिषु प्रतिखण्डचतुर्थपञ्चमादिकोष्ठात्मकोर्द्ध्वाधःक्रमरूपपंक्तिष्वित्यर्थः । तथा तत्तच्छिष्टाङ्कानुगुणं तत्तदवान्तरखण्डानि परिकल्प्य तत्तत्खण्डानि तत्तच्छिष्टाङ्कैः पूरयेदित्यर्थः । नवमान्तं एवं क्रमात् प्रागुक्तनवमकोष्ठात्मकपंक्तिपर्य्यन्तं । अनभ्यस्तक्रमं विभिन्नक्रमं । अयमत्र प्रस्तारक्रमः । आदिनवाक्षराभीष्टाक्षरसंख्याकोष्ठात्मकात्मकांस्तत्तद्वेदसंख्याः पंक्तीस्तिर्य्यग्रूपेण निष्पाद्य तत्तत्पंक्तिसंख्यां तत्तदभीष्टाक्षरसंख्यया विभज्य तत्तल्लब्धसंख्याभिः पंक्तिभिरेकैकखण्डक्रमात्तत्तदक्षरसंख्यानि खण्डानि परिकल्प्य तत्तत्खण्डपंक्तिष्वाद्ये त्वाद्ये कोष्ठे प्रथमाद्यङ्कानक्षरसंख्योपलक्षितान् विन्यस्य पुनस्तत्तत्खण्डपंक्तिसंख्यामपि तत्तच्छिष्टाङ्कसंख्यया विभज्य तल्लब्धसंख्यया तत्तदवान्तरतत्तदवान्तरादिखण्डानि चैवं क्रमादूर्द्ध्वाधः क्रमरूपोपान्त्यकोष्ठपंक्त्यामेकैकतिर्य्यक्पंक्त्यैकखण्डं यथा तथा परिकल्प्य तेष्वङ्कान्

विन्यस्य तत्तत्पंक्तिषु परिशिष्टे अन्त्यकोष्ठे तत्तत्पंक्तिषु लिखितमङ्कं न्यसेदिति । अत्र षड्भेदप्रस्तारे उदाहरणं । अक्षरत्रयस्य भेदषट्कत्वं तिसृभिः संख्याभिः षट्कं विभज्य लब्धे द्वे तस्मात् द्वाभ्यां द्वाभ्यां पंक्तिभ्यामेकं खण्डं परिकल्प्य प्रथमखण्डपंक्त्योराद्ये कोष्ठे प्रथममङ्कं द्वितीयखण्डपंक्त्याद्याद्यकोष्ठे द्वितीयं द्वितीयमङ्कं तृतीयखण्डाद्याद्यकोष्ठे तृतीयमङ्कं विन्यस्य पुनस्तच्छिष्टाङ्कसंख्याद्वयेन प्रतिखण्डपंक्तिद्वयं विभज्य लब्धमेकं तस्मादवान्तरखण्डमेकैकपंक्त्या परिकल्प्य तत्तत्प्रथमखण्डशेषभूतद्वितीयं तृतीयं तत्तद्वितीयखण्डशेषं तृतीयं प्रथमञ्च तत्तत्तृतीयखण्डशेषं प्रथमं द्वितीयं च तत्तद्वितीयकोष्ठे क्रमाद्विन्यस्य तत्तदन्यकोष्ठात्मकोर्द्धाधःपंक्तिकोष्ठषट्के तत्तत्तिर्य्यग्रूपपंक्तिशेषमङ्कं तृतीयं द्वितीयं प्रथमे प्रथमं तृतीयं द्वितीये तृतीये द्वितीयं प्रथमञ्च विन्यसेत् । अङ्कतोप्यूर्द्धादिषट्पंक्तिषु न्यासः । एवमुत्तरत्रापि कल्पनीयः । अभीष्टाक्षरसंख्याभेदेषु उद्दिष्टभेदसंख्याक्रमोयं लिख्यते । अभीष्टसंख्याक्षराणि क्वचिदङ्करूपेण पंक्तिशः स्थापयित्वा तत्तद्भेदेषूद्दिष्टसंख्याखण्डगतपंक्तिसंख्यया शेषमशून्यं यथा तथा विभज्य तदशक्यं चेत् फलं शून्यं परिकल्प्य तत्तत्फलं शून्यफलञ्च क्वचित् स्थापयित्वा भूयो भूयस्तत्तदवान्तरादिखण्डगतपंक्तिसंख्यया यावदेकपंक्त्या खण्डं तावत् प्रागवदशून्यं शेषं विभज्य तत्फलं तदधोधः संस्थाप्य तत्तत्फलं सैकं कृत्वा भागहाराभावे शिष्टमेकं तत्फलपंक्त्यामधः संस्थाप्य पंक्तिशेषस्थापिताभीष्टसंख्याक्षराङ्केषु प्रथमस्थानादिप्रथमफलसंख्यस्थानगताङ्कमाहृत्य क्वचिदुद्दिष्टसंख्यभेदस्य प्रथमस्थानगतमङ्कं संस्थाप्यानन्तरं तदन्तराद्यङ्केष्वपि तत्तद्वितीयादिफलसंख्यस्थानगताङ्कं क्रमादाहृत्याहृत्य तदनन्तरपंक्तिशः स्थापनादुद्दिष्टभेदात्मिका विद्या भवतीति । पञ्चाक्षरसंख्याभेदेषु विंशत्यधिकशतेष्वेकोनाशीतितमभेदस्य स्वरूपानयने उदाहरणं । अक्षरपञ्चकस्य पंक्तिरूपेणाङ्कन्यासः १२३४५ । उद्दिष्टसंख्याता तत्खण्डपंक्तिसंख्या २४ । तया विभज्य लब्धानि फलानि ३ तच्छिष्टात् ७ तदवान्तर खण्डपंक्तिसंख्यया विभज्य लब्धं १ शिष्टं फलं १ तदवान्तरखण्डपंक्तिसंख्यया २ विभज्य लब्धं फलं ० फलशून्यञ्च सैकं कृत्वा तदवशिष्टञ्च संस्थाप्य न्यासः ४५१२३ । क्वचित् स्थापिताक्षरसंख्यातिष्वङ्केषु प्रथमफलोपात्तच(न्तश्च)तुर्थस्थाने त्वेकाङ्कः द्वितीयफलोपात्त(न्त)द्वितीयस्थाने द्वितीयोङ्कः तृतीयफलोपात्त(न्तत)दनंतरस्थाने तृतीयोङ्कः प्रथमफलोपात्त(न्त)चतुर्थस्थानाङ्कः तदनन्तरस्थानाङ्कः तदधःस्था-

एवं कृते भवेद्विद्या सर्व्वोर्द्ध्वा वीरवन्दिते।
सर्व्वाधस्ताद्विलोमा सा मध्यस्था व्याकुलक्रमा: ॥ ४१ ॥
ताभि: सर्व्वाभिरप्याशु सिध्यत्येवाभिवाञ्छितम्।
ललिताभेदजातानि तद्‌यन्त्रोक्तान्यशेषत: ॥ ४२ ॥

---

वशिष्टोपात्ता(न्त)ङ्कस्तदध:स्थानङ्क एवं क्रमाल्लब्धैकोनाशीतितमविद्याभेदस्वरूप-न्यास:। ४१२३५। अनन्तरमभीष्टसंख्याचरेषु उद्दिष्टभेदस्य संख्यानयनक्रमो लिख्यते। अभीष्टसंख्याचराणेकद्वित्रादिक्रमादङ्करूपेण पंक्तिश: क्वचित् संस्थाप्य १२३४५ तेषु प्रथमस्थानादि यावतिस्थानेषूद्दिष्टभेदस्य द्वितीयादिस्थानगतं यावति स्थानेन तत्तदङ्कं परित्यज्य तत्तदङ्कगतस्थानसंख्यामप्यधोध: संस्थाप्य तेषु सर्व्वाध:स्थमङ्कं मुक्त्वा तदुपरिगताङ्केष्वेकमेकं परित्यज्य ऊर्द्ध्वादितत्तच्छिष्टैस्त-त्तत्खण्डतदवान्तरादिखण्डगतपंक्तिसंख्यां हत्वा संयोज्य सर्व्वाध:स्थाङ्कसं-योजनाच्चोद्दिष्टविद्याभेदस्य संख्या भवतीति। उदाहरणं अङ्कश: पञ्चाचर-न्यास: १२३४५। उद्दिष्टभेदन्यास: ४२१३५। उद्दिष्टभेदस्य प्रथमस्थानेङ्कितस्य तच्चतुर्थस्थानगताङ्क १ तदधस्थानानन्तरादि द्वितीयस्थानेष्वित्यन्तं परित्यज्य तत्स्थानसंख्याङ्कस्तदध: स्थापित:। तदनन्तरस्थाने तृतीयाङ्कस्थित्या तमपहृत्य तत्स्थानसंख्याङ्कस्तदध: स्थापित:। तदनन्तरस्थाने तच्चतुर्थाङ्कस्य स्थित्या तत्-स्थानस्थ: तदध: स्थापित:। तदनन्तरे तत्पञ्चमस्थानाङ्कस्य स्थित्या तत्स्थान-संख्याङ्कस्तदध: स्थापित:। तेष्वेव संस्थाङ्कात् अनेन तदुपरिगताङ्केष्वेकमेकं परित्यज्याङ्कन्यास: २३१। तदध:स्थितमङ्कं मुक्त्वा तैरूर्द्ध्वाधोङ्कै: खण्डगत-संख्यापंक्ति: तदवान्तरादिखण्डगतपंक्तिश्च तैरूर्द्ध्वादिक्रमेण न्यस्ताङ्कैर्हत्वा हत्वा संयोज्य तदध:स्थमङ्कमेकञ्च संयोज्य लब्धसंख्यास्तदुद्दिष्टभेदत्वे एकोनाशीतितम-संख्याभेदो भवति। एवं सर्व्वत्र परिकल्पनीयं। एवं कृते प्रस्तार इति यावत्। विद्या उपदिष्टक्रमस्वरूपेति यावत्। सर्वोर्द्ध्वा प्रथमखण्डे प्रथमपंक्तिस्थेति यावत्। वीरवन्दिते इति देवीसम्बुद्धि:। सर्व्वाधस्तात् चरमखण्डे चरम-पंक्त्यामिति यावत्। विलोमा प्रतिलोमक्रमा। सा विद्या। मध्यस्था सर्व्वाद्य-सर्व्वचरमपंक्त्योर्मध्यस्थ मध्यस्था: व्याकुलक्रमा: भिन्नक्रमा:। ताभिर्विद्याभि:। ललिताभेदजातानि खण्डस्वरूपाणीति यावत्। तद्‌यन्त्रोक्तानि तद्‌यन्त्रपटल-

नित्यानित्याभिदाश्चापि तद्‌यन्त्रपटलोदिताः ।
अन्यास्तु तत्र तत्रैव द्रष्टव्या यत्र चोदिताः ॥ ४३ ॥
एषां पञ्चप्रकाराणामर्थाः कीदृग्विधा मताः ।
सम्यक्त्वमेषां केन स्यात् सर्वेषामप्ययत्नतः ॥ ४४ ॥
असम्यक्त्वञ्च केन स्यात्तत्सम्यक्करणं कथम् ।
कानि सिद्धस्य चिह्नानि का वा सिद्धिरुदाहृता ॥ ४५ ॥
रेखाः षडालिखेत्तिर्य्यक्तेष्वधोर्द्ध्वा लिखेत् क्रमात् ।
एकादश ततश्चक्रं पञ्चाशत्कोष्ठकं भवेत् ॥ ४६ ॥

---

प्रोक्तानि त्रयस्त्रिंशे पटले प्रोक्तानीत्यर्थः । नित्यानित्याभिदास्तद्‌यन्त्रपटलोदिताः नित्यानित्यापूजापटले षोड़शे तद्‌यन्त्रप्रस्तारे प्रोक्ताः । अन्या इतरनित्याविद्याभिदाः । तुः समुच्चये ॥ ४३ ॥

एषामित्यादिनोदाहृतेत्यन्तेन श्लोकद्वयेन षड्‌विधं देवीप्रश्नमुपदिशति । तत्र एषां पञ्चप्रकाराणां मन्त्राणां पिण्डकर्त्तरीबीजमन्त्रमालारूपाणां । अर्थाः स्थूलसूक्ष्मपररूपा इति यावत् । एषां मन्त्राणां । सर्वेषां पिण्डादिपञ्चविधानां । तत्सम्यक्करणं मन्त्राणां सम्यक्करणं । सिद्धस्य मन्त्रविद्यादिषु । वा समुच्चये ॥ ४५ ॥

रेखा इत्यादिभिः शिवात्मन इत्यन्तैस्त्रिभिः श्लोकैर्मन्त्राणामक्षरवाक्यार्थज्ञानार्थमकारादिक्षकारान्तानां मातृकाक्षराणां पञ्चभूतात्मकत्वप्रतिपादनपरं पञ्चाशत्कोष्ठं चक्रं तत्र तेषां लेखनक्रमं भूतात्मकक्रमञ्चोपदिशति । तत्र तिर्य्यग्दक्षिणसव्यमित्यर्थः । तेषु दिव्यत्वात् तास्वित्यर्थः । रेखास्विति यावत् । अधोर्द्ध्वं दिव्यत्वादधऊर्द्ध्वा इत्यर्थः । रेखा इति यावत् । ततस्तेन लेखनेनेति यावत् । तत्र चक्रे । सव्यादिदक्षान्तं सव्यकोष्ठमारभ्य दक्षिणकोष्ठान्तं । अर्णान् तत्तदर्णान् भूताक्षराणीति यावत् । अनुक्रमादेकैकपंक्त्यामेकैकभूताक्षरदशकक्रमादिति यावत् । मायाशक्त्यभिधः मायेति शक्तिरिति च संज्ञितः । सर्गःविसर्गः विसर्जनीयस्य मूलाधारादविवक्षितपूर्व्वमुत्पत्तेः । तस्मात् कारणात्तस्य विसर्जनीयस्य । अत्र चक्रे । शिवात्मनः शिवस्वरूपस्य शक्त्यात्मन इति

तत्र सव्यादिदक्षान्तं लिखेद्वर्णाननुक्रमात् ।
प्राणाग्नीलाम्बुखात्मानः पंक्तयः पञ्च कीर्त्तिताः ॥ ४७ ॥
मायाशक्त्यभिधः सर्गः सर्वभूतात्मकः प्रभुः ।
तस्मात्तस्यात्र विन्यासो नैकदेशः शिवात्मनः ॥ ४८ ॥
णो रु रः तो प्रा म च वा वी दो यो यु ज र्ना र वा ।
नि र्श ना प्तः मा स्य स्व व्या श म तां र्णा द नां रु त ॥४९॥
जः ङ्क्षिः चि ग्नि स्ते र्वं शु श्च तिः वः खी भा द्य दा शि प्र ।
नि स ना ह्रो मा ग्रा स्व दा पि तै सा र्णा म नां ज व ॥५०॥
कूः भूः रा रा ज्या ल्मा स्थि ध ला मी सा त्वा ड्र भू र गो ।
नां ता व मा र्णा न्ये नि ना मं स्यु था मा क्र नां यं र्भौ ॥५१॥
कं रि नं लं वाः वा व ज ह्रत् यं सो थ म्बु स्लो र पा ।
ना ता व मा र्णा न्ये नि ना मं स्यु था प्या क्र नां र्व्य मा ॥५२॥
च स्व र भुः भ्रं ख द्या वि यत् न्यं भो म वि शू न व्यो ।
नि ना न्ये स ता स्व मा हं णां व्यो रू मे पि ण म क्र ॥ ५३ ॥

---

यावत् । अयमत्र विरचनाक्रमः । प्राक्प्रत्यग्दक्षिणोदक् च क्रमात् समान्तरालमेकादशषट्सूत्रास्फालनात् पञ्चाशत्कोष्ठात्मकं चक्रं विधाय प्रतिपंक्तिकं दक्षिणसव्यरूपकोष्ठदशके प्रागुक्तक्रमात् प्राणाग्नीलाम्बुखाक्षराणि सविन्दुकानि दशदशोर्द्ध्वपंक्त्याधःपंक्तिपर्य्यन्तं क्रमाद्विलिखेदिति ॥ ४८ ॥

वात इत्यादिभि र्व्योमरूपिणामित्यन्तैर्व्याकुलाक्षरक्रमलिखितैः पञ्चभिः श्लोकैः अस्मिंस्तन्त्रे समस्तमन्त्रविद्यास्वरूपाभिधानसङ्केतरूपाणि भूतनामानि प्रत्येकं क्रमेण दश दशोपदिशति । तत्र वर्णानां मरुतां वायव्यानामक्षराणां दशानामित्यर्थः । वर्णानां तैजसामिति दिव्यत्वात्तेजसामित्यर्थः । आग्नेयानां दशानामक्षराणां । रसाइला दिव्यत्वात् न सन्धिः कृतः । भौमानां भूमिसम्बन्धिनां वर्णानां अक्षराणां । आप्यानामप्सम्बन्धिनां वर्णानां । व्योमरूपिणां प्राग्वत् व्योमानां वर्णानां आकाशात्मकानां ॥ ५३ ॥

एतैर्नामभिरेवात्र मन्त्रोद्धारः कृतः शिवे ।
तस्मादतीव गोप्यानि नामान्येतानि सर्वदा ॥ ५४ ॥
उक्तनिह्नवयोगेन लिखेत्तत्र तु पुस्तके ।
पद्यमेकं वदेत् कर्णे शिष्यस्यैवोक्तरूपिणः ॥ ५५ ॥
ङ्कै र्णान् खे त्त द जा लि वृ तः क्र यो त्य ग स्त म व्यैं ।
र्व्यात् यो ने र्भे कु द ज तै तर्णाशेषर्भामसं (?) ॥ ५६ ॥

---

एतैरित्यादिना रूपिण इत्यन्तेन श्लोकद्वयेन प्रोक्तानामेषां नाम्नामस्मिंस्तन्त्रे मन्त्रोद्धारकथनपरत्वेन गोप्यत्वादस्य मन्त्रस्य च परमार्थाभिधायित्वे गोप्यत्वाच्च परमेश्वरेणैवायोग्यविषयत्वासिद्ध्यै श्लोकाक्षराणां व्याकुलक्रमलेखनप्रकारः प्रस्तूयते। तत्र एवावधारणे। अत्र तन्त्रे। शिवे इति देवीसम्बुद्धिः। तस्मात् कारणात्। उक्तनिह्नवयोगेन अनन्तरवक्ष्यमाणश्लोकोक्तनिह्नवप्रकारेण। तुः समुच्चये। पद्यं निह्नवरूपार्थगर्भमिति यावत्। एवावधारणे। उक्तरूपिणः प्रथमपटले "चतुर्भिराद्यैः संयुक्तः" इत्यादिना त्रयोविंशादिश्लोकद्वयेनेति यावत् ॥ ५५ ॥

वृत्तेत्यादिना व्याकुलाक्षरक्रमालिखितेन श्लोकेन गद्यपद्यभाषात्मनां सकलसन्दर्भाणामिष्टारूपं व्याकुलीकरणसमग्रक्करणयोरेकाकारमुपायमुपदिशति। तत्र वृत्तजार्णान् अनुष्टुवादिवृत्तोत्पन्नाक्षराणि। अङ्कैः अक्षरसंख्यासमानसंख्यैः। व्यत्यस्तक्रमयोगतः परस्परमिति यावत्। तैरङ्कैः। भेदयोजने व्याकुलीकरणसमग्रकरणे। एतदुक्तं भवति अभीष्टाभीष्टवृत्तश्लोकस्य पादाक्षरपादाक्षरसंख्यानुगुणमेकद्वित्र्याद्यङ्कान् पंक्तिरूपेण विलिख्य तेषु द्वौद्वावङ्कौ परस्परसर्व्वमङ्कं भिन्नक्रमं यथा तथा विन्यस्य तत्तत्क्रमाङ्कगर्भं पद्यं कृत्वा तेन व्याकुलीकरणं समग्रककरणञ्च कुर्य्यादिति। तस्योदाहरणमनुब्रुवतेति लिख्यते। अनुष्टुभः पादाक्षराण्यष्टौ तत्संख्याङ्काः पंक्तिरूपेण लिखिताः। १२३४५६७८। तेष्वङ्केषु प्रथमाष्टमौ द्वितीयचतुर्थौ तृतीयषष्ठौ पञ्चमसप्तमौ च परस्परं व्यत्यस्य जाताः क्रमाङ्काः पंक्तिरूपेण लिखिताः कटपयादिक्रमेण तत्तत्क्रमाङ्कगर्भश्लोकैः।

स्नोकेनानेन जनयेदनन्तान् सम्प्रदायतः ।
नानावृत्तानभीष्टार्थान्निह्नवाय तु देशिकः ॥ ५७ ॥
अनुष्णाशीते विजने सुसमे रम्यविग्रहे ।
गृहे वा मण्डपे स्थित्वा पीठं धवलितोदरम् ॥ ५८ ॥
विन्यस्य तस्मिन् पूर्णायां शुभर्क्षे वा शुभोदये ।
कुचन्दनैः कुङ्कुमैर्वा दरदैर्वोपदेशतः ॥ ५९ ॥
कृत्वोक्तं मण्डलं सार्णं तत्रावाह्य यजेच्छिवाम् ।
नित्यशो मातृकां जप्यात् सम्प्रदायानुसारतः ॥ ६० ॥

---

देवीतत्त्वार्थगामी यस्तत्पदाम्बुजशेखरः ।
तन्त्रेऽस्मिन् व्याकुलान् स्नोकान्वाचयेन्नैव केवलः ॥ इति ॥ ५६ ॥

स्नोकेनेत्यादिना स्नोकेन तस्य स्नोकस्य सम्प्रदायबलानुभावात् सर्व्वछन्दःसु वृत्तेषु इच्छानुरूपानर्थान् तत्तत्स्नोकान् सन्दर्भव्याकुलीकरणपरमार्थान् कर्त्तुं देशिकानां सामर्थ्यमुपदिशति। तत्र अनेन अन्योन्यव्यत्यासभेदक्रमेण। अनन्तान् स्नोकान् व्याकुलीकरणक्रमभेदगर्भानिति यावत्। अभीष्टार्थान् निह्नवाय व्याकुलीकरणक्रमनिह्नवार्थमर्थान्तरद्योतकानित्यर्थः ॥ ५७ ॥

अनुष्णाशीतेत्यादिभिर्योगत इत्यन्तैश्चतुर्भिः स्नोकैर्नित्याविद्यासिद्धस्य तन्त्रनिष्णातस्य मनीषितदेवतात्मत्वसिद्धेः तत्तद्देवतानामिच्छानुरूपाणां मन्त्राणां निर्म्माणप्रकारमुपदिशति। तत्र अनुष्णाशीते। उष्णशीतद्वयरहिते। रम्यविग्रहे हृदयङ्गमे। एतद्विशेषणचतुष्टयं मनःस्थिरीकरणापेक्षया देवतानिवासयोग्यापेक्षया च। वा विकल्पे। स्थित्वा प्राङ्मुखः इति सम्प्रदायार्थः। पीठमित्यस्यानन्तरवक्ष्यमाणस्नोके विन्यस्येत्यनेन सम्बन्धः। धवलितोदरं श्वेतवर्णानुलेपनेनेति यावत्। तस्मिन् पीठे। पूर्णायां पौर्णमास्यां। वा विकल्पे। शुभोदये शुभराश्युदये शुभग्रहोदये च। अस्य सम्प्रदायार्थो लिख्यते। इड़ायामेव प्रवहतः श्वासस्य प्रवेशावस्थायामिति। कुचन्दनैः रक्तचन्दनैः। वा विकल्पे। दरदैः जातिलिङ्गैः। वा विकल्पे। उपदेशतः उपदेशक्रमात् श्रीभूतलिपीनामिति यावत्। कृत्वोक्तं मण्डलं पश्चा-

एवमब्दे तु सम्पूर्णेऽभीष्टदेवाय मन्त्रवित् ।
कुर्य्यान्मन्त्रमभीष्टार्थगमकं प्रोक्तयोगतः ॥ ६१ ॥
नभोग्निवायुप्रायार्णाः क्रूराः क्षोभकरा मताः ।
भूतोयप्रचुराः सौम्याः सेव्याः सिद्धिकरा मताः ॥ ६२ ॥
एषामन्योन्यसम्भेदबाहुल्याद्बहवोऽर्णवाः ।
तैः तथा भजनात् सिद्धाः फलन्ति स्वैक्ययोगतः ॥ ६३ ॥
मन्त्रार्थास्त्रिविधा ज्ञेया ज्ञातव्याः सिद्धिकाङ्क्षिभिः ।
पूजापटलसंप्रोक्तास्त्रिविधाः स्वरूपासकाः ॥ ६४ ॥

---

शतकोष्ठात्मकमुक्तमण्डलं कृत्वेत्यर्थः । सार्णमित्यस्य पूर्व्वश्लोके उपदेशत इत्यनेन सम्बन्धः। एतदुक्तं भवति प्रागुक्तं पञ्चाशत्कोष्ठात्मकं चक्रं विधाय तत्रोर्द्ध्वादिपंक्तिपञ्चके तिर्य्यग्रूपेण दशकोष्ठेषु यथोपदेशं श्रीभूतलिपीन् क्रमादिन्यस्य देवीमर्च्चयेदिति । सम्प्रदायानुसारतः सविन्दुकमकारादिक्षकारान्तमनुलोमक्रममक्षरं सविसर्जनीयं ळकाराद्यकारान्तं क्षकारं चैवं क्रमात् प्रतिलोमक्रमश्चेत्यर्थः । एवं प्रतिदिन भजनजपादिनेत्यर्थः । कुर्य्यान्मन्त्रं मन्त्रं रचयेदित्यर्थः । अभीष्टार्थगमकं व्युत्पत्त्यादिसिद्धमार्गेणेति यावत् । प्रोक्तयोगतः वक्ष्यमाण मन्त्रवीर्य्यस्वरूपानुसन्धान योगतः ॥ ६१ ॥

नभ इत्यादिना स्वैक्ययोगत इत्यन्तेन श्लोकद्वयेन सकलमन्त्रव्यापकं क्रूरत्वं सौम्यत्वं मिश्रत्वञ्चोपदिशति । तत्र नभोऽग्निवायुप्रायार्णाः आकाशाक्षराग्नेयाक्षर वायुक्षरप्रचुरा मन्त्राः क्षोभकरा विश्वस्येति यावत् । भूतोयप्रचुराः भूम्यक्षरतोयाक्षरप्रचुरा मन्त्रा इति यावत् । सेव्या उपास्याः सर्वैः सर्व्वदा सर्व्वत्रेति यावत् । सिद्धिकराः अभिमतार्थस्येति यावत् । एषां क्रूरभूताक्षराणां सौम्यभूताक्षराणाञ्च अन्योन्यसम्भेदबाहुल्यात् अन्योन्यसंयोगप्रकारभेदबाहुल्यात् । अर्णवा मन्त्राः । तैः अर्णवैः । तथा निजनिजक्रूरसौम्यमिश्रादिस्वभावानुगुणं । एतदुक्तं भवति क्रूराक्षराणां सौम्याक्षराणाञ्च न्यूनाधिकयोगवशाद्बहुविधभेदा मन्त्राः स्वैक्ययोगतो भजनात् सिद्धाः स्वस्वक्रूरसौम्यमिश्रादि स्वभावानुगुणं फलन्तीति ॥ ६३ ॥

मन्त्रार्था इत्यादिभिः इष्टसिद्धिदा इत्यन्तैस्त्रिभिः श्लोकैः मन्त्राणां सर्वेषा-

वर्णस्योदयविश्रान्तिपदे बुद्धिनिवेशनम्।
एकोऽन्यः सर्वतः सिद्धव्युत्पत्त्यर्थाभिवीक्षणम् ॥ ६५ ॥
वाच्यवाचकसंभेदभावनादिभिरीरिताः।
एषां पञ्चप्रकाराणामशेषेणेष्टसिद्धिदाः ॥ ६६ ॥
मन्त्रवीर्य्यं शृणु प्राज्ञे कथयामि सुखास्पदम्।
येन ज्ञानानुभूतेन जीवन्मुक्तो भवेन्नरः ॥ ६७ ॥

---

मर्थालोचने प्रकारत्रैविध्यं तत्त्रैविध्येन त्रिविधानामर्थानामुपासकानामर्थालोचनं तत्तत् फलञ्चोपदिशति। तत्र त्रिविधाः सिद्धाद्यधिकारिभेदादिति यावत्। ज्ञातव्याः मन्त्रार्था इति शेषः। सिद्धिकाङ्क्षिभिः मन्त्रविद्यादीनामिति यावत्। त्रिविधा सिद्धसाध्यसाधका इति यावत्। वर्णस्य प्रत्येकं मन्त्राक्षरस्येत्यर्थः। उदयविश्रान्तिपदे उदयविश्रान्तिस्थाने परास्वरूपे इति यावत्। बुद्धिनिवेशनं तदनुसन्धानात् तादात्म्यादिति यावत्। एकः अर्थ इति शेषः। एतदुक्तं भवति सर्व्वमन्त्राणामक्षरसमुदायात्मकत्वात् तत्तदक्षराणामपि प्रत्येकं परास्वरूपादितः पश्यन्त्यादिक्रमेणोदयं तेषां पुनस्तादात्म्येन तस्मिन्नेव विश्रान्त्या च सर्व्वमन्त्राणां परास्वरूपमेव स्वरूपमिति सिद्धैरनुसन्धेयमिति। अन्यः अर्थ इति यावत्। सर्व्वतः सिद्धव्युत्पत्त्यर्थाभिवीक्षणं व्याकरणप्रोक्तप्रकृतिप्रत्ययादिविभेदेन सिद्धव्युत्पत्त्या तत्तन्मन्त्रार्थानुसन्धानं। एतत् साध्यविषय इत्यर्थः। वाच्यवाचकसम्भेदभावनं वाच्यरूपाणां पञ्चभूतानामव्यक्तात्मकतया वाचकरूपाणामक्षरात्मनां तदव्यक्तात्मकनाद परमार्थशक्तित्वाच्च तादात्म्यभावनमित्यर्थः। एतत् साधकविषय इत्यर्थः। ईरिता इतीरिताः श्रीविद्याया अर्था इति यावत्। एषां मन्त्राणां पञ्चप्रकाराणां पिण्डकर्त्तरीबीजमन्त्रमालासंज्ञानां इष्टसिद्धिदाः तदनुसन्धानेन यथोदितेनेति यावत् ॥ ६६ ॥

मन्त्रवीर्य्यमित्यादिभिः ईरित इत्यन्तैस्त्रिभिः श्लोकैः सकलमन्त्रविद्यागणस्य बीजभूतस्य ( जीवभूतस्य ) मन्त्रवीर्य्याभिधानस्य परमार्थस्य स्वरूपं तत्तज्ज्ञानेन

तेजसां शक्तिमूर्त्तीनां प्रपञ्चस्यापि कारणम् ।
गुणत्रयममीषाञ्च यत् कारणमुदाहृतम् ॥ ६८ ॥
तत्स्वरूपानुसन्धानसिद्धिः सम्यक्त्वमीरितम् ।
तन्मन्त्रवीर्य्यमुद्दिष्टं मन्त्राणां जीव ईरितः ॥ ६९ ॥

---

तेषां सर्वेषां समग्रकारणञ्चोपदिशति । तत्र मन्त्रवीर्य्यं मन्त्राणां परमार्थस्वरूपं । प्राज्ञे इति देवीसम्बुद्धिः । सुखास्पदं परमार्थस्वरूपलाभात् । येन मन्त्रवीर्य्येण । ज्ञानानुभूतेन केवलं ज्ञानमात्रमन्तरेणानुभवपर्य्यवसायिना चेत्यर्थः । जीवन्मुक्तः जीवन्नेव मुक्तः । याथात्म्यज्ञानादसङ्कोच एव मुक्तिरित्यर्थः । तेजसां सोमसूर्य्याग्निमूर्त्तीनां । शक्तिमूर्त्तीनां मूर्त्तिकारणशक्तीनां मूर्त्तीनाञ्च वामेच्छाज्येष्ठाज्ञानक्रियारौद्रीणां ब्रह्मविष्णुरुद्राणामित्यर्थः । प्रपञ्चस्य ज्ञातृज्ञानज्ञेयरूपस्य । अपिशब्दः समुच्चये । कारणं भूतत्रैविध्यस्येति शेषः । गुणत्रयं सत्त्वरजस्तमांसि ते यस्मिन् । मूर्त्तीनां प्रपञ्चस्य च त्रैविध्यगुणत्रयादिवत् स्वरूप इत्यर्थः । अमीषां गुणानां । चः समाहारे । अनेन गुणानां तेजःशक्तिमूर्त्तीनाञ्चेत्यर्थः । कारणं प्राग्वत् । उदाहृतं अष्टाविंशे पटले "कारणं परमेशानि तवेच्छैव तु केवलमिति ।" तत्स्वरूपानुसन्धानसिद्धिः सकलकारणभूतेच्छाशक्त्यात्मना विद्यया स्वस्य चापृथक्त्वेनानुसन्धानसिद्धिः । सम्यक्त्वं आभिमुख्यकरणं । जीवः प्राणः । अनभिमुखमन्त्राणामकार्य्यकरत्वात् मन्त्रवीर्य्ययोगज्ञानमन्तरेण मन्त्रविद्यानामकार्य्यकरत्वात् । सम्प्रदायाविच्छित्त्यर्थं तत्प्रकारो नाथाज्ञया लिख्यते । प्रथमं कामकलाध्यानेन योगेन षट्त्रिंशे पटले वक्ष्यमाणपरमार्थतया स्वयं शक्तिर्भूत्वा श्रीविद्यावयवभूतसकलतेजःशक्तिमूर्त्तिगुणैरिदन्तानि तत्सकलानि तदेकीकृत्य तदुभयमनुष्णाशीतं वाह्यदाभ्यन्तरमाभ्यन्तराद्वाह्यमिति क्रमात् स्ववुद्धया कृष्यैकीकृत्य तदात्मना भजनं मन्त्रवीर्य्ययोजनप्रकार इति । इतरनित्याभजने केवलहृल्लेखावयवभूतैरितरमन्त्रभजने प्रणवावयवभूतैरपि प्राग्वदेकीकुर्य्यादिति सम्प्रदायः ॥ ६९ ॥

असम्यक्त्वन्तु मन्त्राणामयोग्यकथनेन वै ।
सदा प्रयोगाद्भजनादकाले संशयाद्भवेत् ॥ ७० ॥
गुरोरवज्ञया पापान्निषिद्धाचारयोगतः ।
देवताद्रोहतः सर्वपरिवादानवस्थया ॥ ७१ ॥
असम्प्रदायादज्ञानादनेकभजनादपि ।
तत्समग्रत्वं येन भवेत् कार्य्यं तत् पूर्वमीरितम् ॥ ७२ ॥
नातिद्वेषो नातिरागो नातिभोगेषु सङ्गतिः ।
नातिशोको नातिहर्षो नातिस्नेहो न मत्सरः ॥ ७३ ॥
नातिव्यसनवर्त्तित्वं सुखिता क्लिष्टकारिता ।
स्वदेहमात्रयात्रेच्छा परचिन्ताविवर्जनम् ॥ ७४ ॥

---

असमग्रत्वमित्यादिभिरीरितमित्यन्तैस्त्रिभिः श्लोकैर्मन्त्रविद्यादीनां त्रयोदशविधासमग्रत्वकारणं प्रागुक्तसमग्रत्वनिगमनसहितमुपदिशति । तत्र असमग्रत्वं अकार्य्यकरणत्वमन्यथाफलत्वं वा । मन्त्राणां मन्त्रविद्यानां । अयोग्यकथनेन प्रथमपटलप्रोक्तलक्षणरहितशिष्योपदेशेन । सदा प्रयोगात् नित्यनैमित्तिकपुरश्चरणभजनक्रममुपेक्ष्य कामतोऽनवरतप्रयोगात् । भजनादकाले नित्यनैमित्तिककाम्येषु प्रोक्तकालमुपेक्ष्य इतरकालभजनात् । संशयात् उक्तकरत्वे स्वाभिमतफलप्रदत्वे च । गुरोरवज्ञया गुरोरनभिमतानुष्ठानात् । पापात् प्रथमपटले विशुद्धादिश्लोकत्रयोक्ताचारविपरीतानुष्ठानात् । निषिद्धाचारयोगतः तत्तत्पटलोक्तशिष्याचारस्यान्यथानुष्ठानात् । देवताद्रोहतः देवताभेदप्रतिपत्तेः । सर्व्वपरिवादानवस्थया सर्व्वजनपरिवादेन जपादिष्वनवस्थया वा । असम्प्रदायात् अनभिज्ञस्य गुरोर्वा पत्रादिषु निरीक्षणाद्वा लब्धमात्रस्वरूपात् । अज्ञानाद्देवतागुरुमन्त्राणां परमार्थस्वरूपस्य । अनेकभजनान्मन्त्रविद्यादीनां । तत्समग्रत्वं प्रोक्तदोषैरनभिमुखमन्त्रविद्यानामाभिमुख्यकरणं । कार्य्यं तत्तन्मन्त्रविद्यानुसन्धानमित्यर्थः ॥ ७२ ॥

नातिद्वेष इत्यादिभिर्लक्षणमित्यन्तैस्त्रिभिः श्लोकैर्मन्त्रसिद्धानां षोड़शलक्षणान्युपदिशति । तत्र नातिद्वेष इत्यादिना श्लोकेन सप्त सिद्धचिह्नानि । नाति-

एकरूप्यं लाभहान्योः सदा सन्तुष्टचित्तता ।
भोक्तृत्वं शक्तितो दानमिति सिद्धस्य लक्षणम् ॥ ७५ ॥
मनोरथानामक्लेशसंसिद्धिः सिद्धिरीरिता ।
राज्ञः प्रसादः सर्वेषां मान्यत्वं पुण्यसिद्धयः ॥ ७६ ॥
ख्यातिर्वाहनभूषादिलाभः सुचिरजीवितम् ।
आरोग्यमविसंवादः सच्छिष्यत्वं कृतज्ञता ॥ ७७ ॥
विषाणां जरणं ज्ञानं स्वस्यस्यावेदनं तथा ।
प्रत्यक्षाः सिद्धयः प्रोक्ता मनोः सिद्धस्य सर्वतः ॥ ७८ ॥
एताः स्युः सिद्धयः प्रोक्ताः सिद्धमन्त्रस्य सूचकाः ।
सिद्धमन्त्रेण कर्त्तव्याः प्रयोगा नान्यथा प्रिये ॥ ७९ ॥
नराणामिव मन्त्राणां देवतानाञ्च पार्वति ।
अन्योन्यवैरमस्त्येव गुणभूतसमन्वयात् ॥ ८० ॥
आग्नेयानाञ्च भौमानामाप्या मन्त्रास्तु वैरिणः ।
वायव्यानां जलानाञ्च भौमानां स्यात् परस्परम् ॥ ८१ ॥

---

व्यसनवर्त्तित्वमित्यादिना श्लोकेन पञ्च सिद्धचिह्नानि। एकरूप्यमित्यादिना श्लोकेन चत्वारि चिह्नानि प्रोक्तनिगमनञ्च ॥ ७५ ॥

मनोरथानामित्यादिभिः प्रिये इत्यन्तैश्चतुर्भिः श्लोकैर्मन्त्रसिद्धेश्चतुर्दशविधत्वं प्रयोगेषु गुणविधानादिकं चोपदिशति । तत्र पुण्यसिद्धयः चिरकालस्थायीनि पर-प्रयोजनानि यानि कर्म्माणि तानि पुण्यानि तेषां सिद्धयः। वाहनभूषादीत्यादिशब्दो महार्हवस्त्रादिविषयः। अविसंवादः दृष्टादृष्टयोरिति यावत्। सच्छिष्यत्वं स्वस्येति यावत्। विषाणां जङ्गमस्थावरकृत्रिमादीनां। ज्ञानं आत्मन इति यावत्। मनोर्मन्त्रविद्यादेरित्यर्थः। सर्व्वतः सर्व्वा इत्यर्थः। नान्यथा असिद्धमन्त्रेण न कर्त्तव्या इति यावत्। प्रिये इति देवीसम्बुद्धिः ॥ ७९ ॥

नराणामित्यादिभिश्चक्रत इत्यन्तैश्चतुर्भिः श्लोकैर्मन्त्रविद्यादीनामन्योन्यं सकारणं वैरमुपदिशति। तत्र चः समुच्चये। पार्व्वतीति देवीसम्बुद्धिः। एवाव

स्त्रीदैवत्या वैरिणः स्युः पुंदैवत्यस्य भूयसा ।
स्त्रीदैवत्येषु सौम्यानां क्रूराणां स्यात् परस्परम् ॥ ८२ ॥
तथैव पुंदेवतानां त्वरितानरसिंहयोः ।
शस्त्रानुयच्छिणीनां स्यादघोरास्त्रस्य चक्रतः ॥ ८३ ॥
मन्त्राणां देवतानाञ्च वैरीकरणमीश्वरि ।
कथयामि शृणु प्राज्ञे येन लोकोऽतिसीदति ॥ ८४ ॥
वैषम्यभजनं पुंसामज्ञानादाशयाथवा ।
तेन मन्त्रा देवताश्च क्रुद्धा घ्नन्युरुपासकम् ॥ ८५ ॥
तस्मात् सर्वस्य लोकस्य मन्त्रवीर्य्यं हि जीवितम् ।
यन्निष्ठानाममी दोषा न स्पृशन्ति कदाचन ॥ ८६ ॥

---

धारणे । गुणभूतसमन्वयात् सत्त्वादिगुणानां भूतानाञ्च समन्वयात् । आग्नेयानां आग्नेयाक्षरप्रचुराणां अग्निदेवतानामित्यर्थः । मन्त्रविद्यादीनामिति यावत् । चः समुच्चये । भौमानां प्राग्वत् । आप्याः प्राग्वत् । तुरवधारणे । वायव्यानां प्राग्वत् । चः समुच्चये । भौमानां प्राग्वत् भौमाक्षरप्रचुराणां भूमिदेवतानाञ्च । स्यात् वैरमिति यावत् । स्त्रीदैवत्या मन्त्रविद्यादय इति यावत् । पुंदैवत्यस्य मन्त्रविद्यादेरिति यावत् । स्त्रीदैवतेषु मन्त्रविद्यास्विति यावत् । सौम्यानां प्राग्वन्मन्त्रादीनां । क्रूराणां प्राग्वत् । स्यात् वैरमिति यावत् । तथा क्रूराणां सौम्यानाञ्च परस्परं वैरं स्यादिति यावत् । एवावधारणे । त्वरितानरसिंहयोः परस्परं वैरं स्यादिति यावत् । शस्त्रानुयच्छिणीनां वैरमिति । चक्रतः सुदर्शनेनेति यावत् ॥ ८३ ॥

मन्त्राणामित्यादिभिः कदाचनेत्यन्तैस्त्रिभिः श्लोकैरुपासकदोषैर्मन्त्राणां देवतानां च वैरीकरणं तेषामनर्थप्राप्तिं तत्परिहारोपायञ्चोपदिशति । तत्र प्राज्ञे इति देवीसम्बुद्धिः । येन वैरीकरणेन । वैषम्यभजनं अनुदिनभजनक्रमभेदादधिकक्षुद्रादिभावभेदाद्वेति यावत् । अज्ञानात् परमार्थस्वरूपस्येति यावत् । आशया फलेष्विति यावत् । तेन वैषम्यभजनेन । चः समुच्चये । तस्मात् कारणाज्जीवितं अधिष्ठानमिति यावत् । यन्निष्ठानां दिव्यत्वान्मन्त्रवीर्य्यनिष्ठानित्यर्थः ॥ ८६ ॥

गुरोः शुश्रूषया काले दीक्षया लब्धमादरात्।
तदाज्ञया भजेदेकरूपं मन्त्रं स्वसिद्धये ॥ ८७ ॥
अन्यथा साधकं हन्याच्छस्त्रेण रिपुतो भयात्।
दारिद्र्याद्दीर्घरोगाद्वा व्यसनेष्वतिसर्जनात् ॥ ८८ ॥
यो यो मन्त्रस्तस्य तस्य वर्णौषधिविनिर्म्मिता।
तत्तद्वर्णोत्थसंख्याभिर्गुलिका मन्त्रसिद्धिदा ॥ ८९ ॥
तयाभिषेकस्तद्धारणं तत्स्वादस्तद्विलेपनम्।
तत्पूजा च तथा सिद्धिलाभाय स्यान्न चान्यथा ॥ ९० ॥

---

गुरोरित्यादिनातिसर्जनादित्यन्तेन श्लोकद्वयेन गुरुमन्त्रदेवतानां समग्भजनक्रमसुपदिशति। तत्र गुरोः सत इत्यर्थः। काले द्वितीयपटले स्थिरे इत्यादिना चत्वारिंशादिश्लोकद्वयेन प्रोक्ते इति यावत्। दीक्षया अभिषेककटाक्षादिप्रकारेण इति यावत्। आदरात् गुरुशिष्ययोरित्यर्थः। तदाज्ञया नाथाज्ञया। एकरूपं अनुदिनमिति यावत्। हन्याद्देवतेति यावत्। रिपुतः रिपोः भयात्। येन केनचिद्राजेन हन्यात् नवा केवलभयात्। वा विकल्पे। व्यसनेषु स्त्र्यादिषु सप्तस्वित्यर्थः ॥ ८८ ॥

यो य इत्यादिना श्लोकेन सकलतन्त्रोक्तमन्त्रविद्यादीनां समग्क् सिद्धिकरमक्षरौषधिगुलिकारूपं प्रस्तौति। तत्र तस्य मन्त्रस्येति यावत्। वर्णौषधिविनिर्मिता गुलिकेति यावत् स्यादित्यर्थः॥ तत्तद्वर्णोत्थसंख्याभिः तत्तन्मन्त्रेष्वेकैकाक्षरस्य यावत्यो यावत्यः परिवृत्तयस्तावन्तीभिस्तदक्षरौषधीनां अंशसंख्याभिरिति यावत्। गुलिका मन्त्रसिद्धिदा तत्तन्मन्त्रसिद्धिदा इत्यर्थः ॥ ८९ ॥

तयेत्यादिना श्लोकेन गुलिकाविनियोगक्रमसुपदिशति। तत्र तया गुलिकया। तद्धारणं गुलिकाधारणं। तत्स्वादः तद्गुलिकाभक्षणं। तद्विलेपनं तद्गुलिकाविलेपनं। तत्पूजा तस्यां पूजा तया पूजा च। तथा सिद्धिलाभाय प्रागुक्तलक्षणसिद्धिलाभाय। न चान्यथा न संशय इत्यर्थः। अस्मिन् श्लोके प्रथमपादे त्र्येकाक्षराधिक्यकरणं दिव्यत्वात् ॥ ९० ॥

सितरक्ते चन्दने च मांसी पिप्पलकस्तथा ।
लज्जातुका शिखिशिखा दर्भाः पाटलभृङ्गकौ ॥ ८१ ॥
श्रीदेवीति समुद्दिष्टा वायुवर्णौषधानि वै ।
क्रमाद्दशानां वर्णानां तैः कुर्य्यात्तत्तदर्चनम् ॥ ८२ ॥
लघुश्चन्द्रो मुरो विल्वोदुम्बरः प्लक्षकस्तथा ।
कृष्णशङ्खप्रसूनञ्च चित्राफान्ता इति क्रमात् ॥ ८३ ॥
वह्निवर्णौषधानि स्युः परं सर्गस्य कीर्त्तितम् ।
तैस्तेषामर्चनं कुर्य्याद्गुरुपादार्चने रतः ॥ ८४ ॥
उशीरकुष्ठौ चौरगुहे अश्मरीकाग्निमन्थकौ ।
रोहिणस्तुलसी पोत्री सदाभद्रेति च क्रमात् ॥ ८५ ॥
भूमेर्वर्णौषधान्युक्तान्येभिस्तेषां समर्च्चयेत् ।
तत्तत्कार्य्यार्थसंसिद्ध्यै कुर्य्यात् सद्गुरुदक्षिणाम् ॥ ८६ ॥
सलिलं घुसृणं ग्रन्थिपर्णी शोणहरं तथा ।
कुशो वृहती द्रुलता दूर्व्वा लक्ष्मीरिति क्रमात् ॥ ८७ ॥
श्रीदेवीति जलार्णानामौषधानि क्रमेण वै ।
तेषां समर्च्चनं कुर्य्यादोषधैरेभिरादरात् ॥ ८८ ॥

---

सितेत्यादिभिः सिद्धयः इत्यन्तैर्दशभिः श्लोकैरकारादिक्षकारान्तानाम क्षराणामितत्तन्त्रोदितपञ्चभूतक्रमेण वर्णानां दशदशौषधविधानान्युपदिशति । तत्र सितरक्ते चन्दने सितचन्दनं रक्तचन्दनं च । पिप्पलः अश्वत्थः । लज्जातुका कुम्भिचन्दनी । तैरौषधैः तत्तदर्चनं तत्तदक्षराणां तत्तद्देवतानाञ्चार्चनमेतत् । लघुः अगुरुः । विल्वोदुम्बरः अत्र दिव्यत्वात् विल्व उदुम्बर इति पदच्छेदः । सर्गस्य विसर्जनीयस्य अस्य भूताक्षरानन्तर्भूतत्वात् पृथग्ग्रहणं । क्षकारस्य ककारषकार योगात्मकत्वात् पृथगौषधमनुक्तं च । तेषां प्राग्वत् । पोत्री वाराही मुशलीत्यर्थः । एभिरौषधैः । तेषां प्राग्वत् । तत्तत्कार्य्यार्थसंसिद्ध्यै तत्तत्कार्य्यार्थसिद्ध्यर्थं ।

* कक्कोलञ्च तथा रोचनाकलविङ्कक (?) ।
सिंही दुन्दूकयुगलमपामार्गाञ्जलिः सह ॥ ९९ ॥
इत्युक्तानि स्ववर्णानामौषधानि क्रमेण वै ।
तैस्तेषामर्च्चनं कुर्य्यात्तत्तत्कार्य्यार्थसिद्धये ॥ १०० ॥
सदाशिवमयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निफालनाच्चित्ते तत्तत्त्वं स्वात्मसात् कृतम् ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमते पञ्चस्त्रिंशत् पटलम् परिपूर्णम्॥ ३५ ॥

---

* कक्कोल रोचनया लवङ्गोदरपुष्पिका इति वा ।

अञ्जलिः अञ्जलिकरी प्रसारिणी । तैरौषधैः । तेषां प्रागवत् । कक्कोलेत्यादि श्लोकस्यान्त्यपादस्याक्षराधिक्यकरणं दिव्यत्वात् । अत्रौषधानामव्याख्यातानि नामान्याराध्यमुखादवगन्तव्यानि । तत्र यथासिद्धि प्रागुक्तविधानेनेत्यर्थः ॥१००॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसार-सिंहराजप्रकाशाभिधानेन सुभगानन्दनाथेन विरचितायां मनोरमाख्यायां व्याख्यायां नित्यानां स्वात्मत्ववासनायास्तत्त्विद्यास्वरूपभेद प्रकारप्रस्तारादिकस्य स्वरूपप्रकाशनपरं पञ्चत्रिंशपटलं परिपूर्णं परामृष्टम् ॥ ३५ ॥ ॐतत्सत् ॥

व्याख्यान ग्रन्थसंख्याः—पञ्चत्रिंशे तु पटले यन्त्राष्टकमुदीरितम् ।
सप्ताधिका च नवतिः व्याख्याग्रन्थाः शतत्रयम् ॥

---

# षट्त्रिंशपटलम् ।

अथ षोड़शनित्यानां विधानानि त्वयाधुना ।
कथितानि मया तानि श्रुतानि च महेश्वर ॥ १ ॥
तासां ते मे* तथान्येषां देवतानां यथार्थत: ।
स्वरूपं किं कथं विश्वं किमाकारञ्च दृश्यते ॥ २ ॥

---

पूर्व्वस्मिन् पञ्चत्रिंशे पटले षोड़शनित्यानां सपरिवाराणां स्वात्मत्वे वासनादिकमुपदिश्यानन्तरं षोड़शनित्याविद्यासिद्धानां तत्तत् परमार्थस्वरूपादिकमुपदिशति। अथ षोड़शेत्यादिमिदं शक इत्यन्तश्लोकशतरूपेण षट्त्रिंशेन पटलेन। तत्र अथ षोड़शेत्यादिभि: सदा इत्यन्तैर्दशभि: श्लोकैस्तन्त्रोक्तार्थनिगमनपुर:सरं विंशतिविधं प्रश्नं तदुत्तरस्य वक्ष्यमाणस्य स्तवनं स्वस्वरूपतस्तस्योपकरत्वञ्चोपदिशति। अथ षोड़शेत्यादिना श्लोकेन तन्त्रोक्तार्थान् देवी निगमयति। तत्र तानि विधानानि। च: समुच्चये। महेश्वरेतीश्वर सम्बुद्धि: ॥ १ ॥

तासामित्यादिना श्लोकेन परमार्थस्वरूपं तत्स्वरूपप्रकाशोपायं परमार्थ स्वरूपस्य प्रकाशकारणञ्च देवो पृच्छति। तत्र तासां षोड़शनित्यानां। ते तव शिवस्य। अत्र तच्छब्देन नित्यानुग्रहात्मकत्वं गुरुं मच्छब्देनानादिमायाकल्पितत्वादनुग्राह्यं शिष्यं प्रत्युपलक्षयतीति।: [ यत् यस्मात् गुरोरिति यावत् ? ] मे मम देव्या: शिष्यभूताया:। अन्येषां सकलवेदागमेषूपदिष्टस्वरूपाणां। यथार्थत: स्वरूपाङ्गं परमार्थस्वरूपं किमिति यावत्। एष: प्रथम: प्रश्न:। अनन्तरं परमार्थस्वरूपप्रकाशोपायं पृच्छति। कथमिति द्वितीय: प्रश्न:। विश्वं किमाकारञ्च दृश्यते इत्यनेनैतदुक्तं भवति। परमार्थस्वरूपस्यैव प्रकाशो युज्यते तथाप्यपरमार्थस्वरूपं विश्वं गगनकुसुमादिवत् संज्ञामात्रमन्तरेणैव दृश्यते तत् किमाकारमिति। एष तृतीय: प्रश्न: ॥ २ ॥

---

* ते मे इत्यत्र तव इति पाठो दृश्यते।

प्राणिनां पुण्यपापानि किंरूपाणि च कैस्तथा ।
तेषां जन्मानि केन स्युः का मुक्तिः संसृतिश्च का ॥३॥
कस्य मुक्तिः कथं बन्धः केन तस्य च मोचनम् ।
किं मूलं संसृतेरस्याः कानि तत्त्वानि का च धीः ॥४॥
कानीन्द्रियाणि के प्राणाः को जीवः कः परस्तथा ।
कः कालः के ग्रहाः सर्वं यथावन्मे वद प्रभो ॥५॥
येन वेदैश्च शास्त्रैश्च पुराणैरागमैरपि ।
कथ्यते तत् स्फुटं ब्रूहि नातिसङ्कोचविस्तरम् ॥ ६ ॥

---

प्राणिनामित्यादिना श्लोकेन प्राणिनां पुण्यपापैरसम्बन्धं तत् पुण्यपापस्वरूपं जन्मकारणं मुक्तिस्वरूपं जन्मकारणस्वरूपं संसृतिस्वरूपञ्च पृच्छति । तत्र प्राणिनां सम्बन्धे षष्ठी । किंरूपाणि किंरूपेणेति यावत् । एतदुक्तं भवति प्राणिनां पुण्यपापात्मकत्वं केन युज्यते इति चतुर्थः प्रश्नः । कैः कर्मभिरिति शेषः । तथा पुण्यपापत्वमिति यावत् । इति पञ्चमः प्रश्नः । तेषां प्राणिनां । केन कारणेनेति षष्ठः प्रश्नः । का मुक्तिरिति सप्तमः प्रश्नः । संसृतिश्च का इत्यष्टमः प्रश्नः ॥ ३ ॥

कस्येत्यादिना श्लोकेन प्रश्नषट्कं । तत्र तस्य बन्धस्य । चः समुच्चये ॥४॥

कानीत्यादिना श्लोकेन प्रश्नषट्कं । तत्र कः परस्तथा वस्तुतो जीवपदाधिकः कः पर इति यावत् । सर्वं विंशतिविधान् पृष्टानर्थानिति यावत् । यथावत् यथार्थतः मे नित्यानुग्राह्याया अन्तेवासिन्या इति यावत् । प्रभो इतीश्वर सम्बुद्धिः ॥ ५ ॥

येनेत्यादिना श्लोकेन दृष्टार्थानां वेदशास्त्रैरपि सम्बादि स्फुटकथनं प्रार्थयति । तत्र येन प्रकारेणेति यावत् कथ्यते । यदि विशेषः तत् स्वरूपं स्फुटं अनुभवयोग्यं नातिसङ्कोचविस्तरं अतिसङ्कोचातिविस्ताराभ्यां ज्ञातुमशक्यत्वात् ॥६॥

यत्त्वया विंशतिविधः कृतः प्रश्नः शिवेऽधुना।
तेषामुक्तक्रमेणैव कथयामि तवोत्तरम् ॥ ७ ॥
यैरुत्तरैः स्वस्वरूपं ज्ञायते सम्यगञ्जसा।
यदितोऽन्यत्र सर्वत्र प्रोक्तं निह्नवचक्रतः ॥ ८ ॥
अत्राञ्जसा प्रोच्यते तद्दुर्वचं तु निदर्शनैः *।
तैर्मयोक्तक्रमाज्जित्वा दुर्जयां वासनां शनैः। ९ ॥
सत्यशुद्धस्फुटाशेषस्फुरत्तात्मा भवेद्ध्रुवम्।
गुह्यं रहस्यं परमं गोपयेत् सर्वतः सदा ॥ १० ॥

यत्त्वयेत्यादिभिः सदा इत्यन्तैश्चतुर्भिः श्लोकैः पृष्टार्थकथनपीठिकापुरःसरं तदनुभावं तदुपकारत्वञ्चोपदिशति। तत्र यत् इति हेतोः। शिवे इति देवीसम्बुद्धिः। तेषां प्रश्नानां। एवावधारणे। कथयामि तस्मादिति शेषः। यैरुत्तरैर्वक्ष्यमाणैरिति यावत्। स्वस्वरूपं परमार्थस्वरूपं। लभ्यते प्रकाशते। सम्यक् अनुभवयोग्यं। अञ्जसा यथावत्। यत् हेतोः। इतस्तन्त्रादिति शेषः। अन्यत्र सर्वत्र इतरेषु तन्त्रेषु वेदेषु चेति यावत्। निह्नवचक्रतः अतिरहस्यत्वादिति यावत्। अत्र अस्मिंस्तन्त्रे। अञ्जसा प्राग्वत् यथावत्। तत् स्वरूपं। दुर्वचं वाचामविषयम्। तुर्विशेषे। निदर्शनैः तत्तत्प्रकाशनपरैरिति यावत्। तैरुत्तरत्वेनोपदेष्टव्यैरर्थैः। उक्तक्रमाद्वक्ष्यमाणोपाययोरन्यतरेणेति यावत्। दुर्जयां अनादिसिद्धत्वात्। शनैः कालक्रमात् अभ्यासबलादित्यर्थः। सत्यशुद्धस्फुटाशेषस्फुरत्तात्मा सत्यत्वं परमार्थतया शुद्धत्वमलेपकत्वात् अशेषस्फुरत्तात्वं तत्तदात्मकत्वेन भासमानत्वात्। अत्रात्मशब्दश्चतुर्ष्वपि योजनीयः। एतदुक्तं भवति। साधको द्वितीयप्रश्नस्योत्तरत्वेन वक्ष्यमाणोपाययोरन्यतरेण दुर्जयां वासनां शनैर्जित्वा सत्यशुद्धस्फुटाशेषस्फुरत्तात्मा भवेदिति। गुह्यं गुहायां निहितं अन्तःप्रकाशमानत्वात्। रहस्यं केवलं गुरुकटाक्षादेव लभ्यत्वात्। परमं स्वव्यतिरिक्ताभावात्। गोपयेत् अभक्तेभ्य इत्यर्थः। सर्वतः प्रकारत इति यावत् ॥ १० ॥

* भूरिदर्शनैरिति वा।

यज्ज्ञानमिदमो ज्ञानं यज्ज्ञानमहमस्तथा ।
द्वयोरपि च यज्ज्ञानं तज्ज्ञानं विद्धि मे वपुः ॥ ११ ॥
तासां तव तथान्येषां चैतन्यात्म यथार्थतः ।
लाभादेवं वासनाया विनाशादन्यथा तथा ॥ १२ ॥
स्थिरः स्वात्मप्रकाशः स्यान्नित्योऽप्रतिभटो महान् ।
नित्याहृदयसंप्रोक्तस्फुटोपायेन वा भवेत् ॥ १३ ॥

---

यज्ज्ञानमित्यादिना यथार्थत इत्यन्तेनाध्यर्द्धेन श्लोकेन प्रथमप्रश्नस्योत्तरत्वेन परमार्थतः स्वरूपमुपदिशति। तत्र यज्ज्ञानं वाङ्मनसयोरविषयं चैतन्यं। इदमो ज्ञानं इदमः प्रतीतिर्यज्ज्ञानं प्राग्वत्। अहमस्तथा अहमः प्रतीतिरिति यावत्। अत्र तथा इत्यस्य काकाक्षिन्यायेन पूर्व्वत्र परत्र च सम्बन्धः। तथा तस्माद्द्वयोरिदन्ताहन्तयोर्ममेदमस्याहं इदमेवाहमहमेवेदमित्यादि प्रतीतिसम्बन्ध इति यावत्। अपि च किञ्चेति यावत्। तज्ज्ञानं वाङ्मनसयोरविषयं ज्ञानं विद्धि विजिज्ञासस्व इति यावत्। मे शिवस्य गुरोः। यथार्थतः यथास्वरूपत इति यावत्। एतदुक्तं भवति प्रतप्तलौहे निरवयववत् व्याप्तविश्वस्य चैतन्यस्य भूतेन्द्रियादियोगात्मकेषु देहेषु बुद्ध्यात्मनोपलब्धिस्थानात्मकं तद्देहमात्रमहमिति तदिति तद्व्याप्तिज्ञानं विश्वमिदमिति। किञ्च ममेदमित्याद्याकारेण तयोर्द्वयोरन्यान्यसम्बन्धं चानुसन्दधाति। तत्र तत्र तत्तदाकारज्ञानतया यच्चैतन्यमात्रमेव स्फुरति तच्चैतन्यं यथार्थतो मे वपुर्व्विद्धीति। तासां षोडशनित्याना। अन्येषां देवतानामिति यावत्। चैतन्यात्म चैतन्यस्वरूपं वपुरिति शेषः ॥ ११ ॥

लाभादित्यादिना भवेदित्यन्तेनार्द्धाधेन श्लोकेन द्वितीयप्रश्नस्योत्तरत्वेन परमार्थस्वरूपप्रकाशस्योपायं तन्त्रान्तरप्रोक्तोपायान्तरञ्च निगमनसहितमुपदिशति। तत्र एवं वासनाप्रोक्तप्रकारेण समस्तभेदेषु चैतन्यस्वरूपमात्रानुसन्धानं। वासनायाः विनाशादन्यथा तथा अत एव दुर्वासनाया विनाशादिति यावत्। स्थिरः कटकमुकुटादिविकारेषु कनकसत्तामात्रप्रकाशवदिति यावत्। नित्यः कालानवच्छेदात्। अप्रतिभटः सत्यत्वात्। महान् देशानवच्छेदात्। नित्याहृदयसंप्रोक्तस्फुटोपायेन नित्याहृदयमिति षोडशनित्यातन्त्रेषु कस्य-

शब्दस्य बुद्धेर्द्वैरूप्यात् प्रपञ्चस्य च दृश्यते ।
द्वैरूप्यमनयोरुक्तं सत्यासत्यसम[मय]त्वत: ॥ १४ ॥
तेनैव प्राणिनां पुण्यपापकर्म्मसु वर्त्तनम् ।
यथात्मजानतोऽर्थेषु व्यापार: पुण्यसंज्ञक: ॥ १५ ॥
अनर्थेष्वर्थसङ्कल्प: पापाख्यो मनसा तथा ।
जन्मानि नानारूपाणि यैर्नित्यं क्लेशभाजनम् ॥ १६ ॥

---

चित्तत्वस्य नाम तस्मिन् प्रोक्तस्फुटोपायेन । वा विकल्पे । भवेत् स्वात्मप्रकाश इति यावत् । एतदुपायस्याप्युपस्कारत्वात् आराध्यमुखादवगन्तव्यम् ॥ १३ ॥

शब्दस्येत्यादिना श्लोकेन तृतीयप्रश्नोत्तरत्वेन प्रपञ्चप्रकाशस्य कारणादिकमुपदिशति । तत्र द्वैरूपात् उभयात्मकत्वात् । इत्यनेनोत्तरत्र विंशप्रश्नस्योत्तरकथनप्रसङ्गात् प्रपञ्चस्य वक्ष्यमाणस्वरूपं स्मारयति । च:, समुच्चये । अनयो: शब्दबुद्ध्यो: परमार्थरूपे अपरमार्थरूपे च समप्रवृत्तित्वात् । एतदुक्तं भवति परमार्थवदपरमार्थोपि शब्दबुद्ध्यो: प्रवृत्तस्यैव प्रपञ्चो नामरूपाभ्यां प्रकाशते इति ॥ १४ ॥

तेनैवेत्यादिनार्द्धेन चतुर्थप्रश्नस्योत्तरत्वेन प्राणिनां पुण्यपापात्मकप्रकारं तदपरमार्थकथन पुर:सरमुपदिशति । तत्र तेन शब्दबुद्ध्याद्वैरूप्येण । एवावधारणे । प्राणिनां सम्बन्धे षष्ठी । वर्त्तनं व्यापार: । एतदुक्तं भवति शब्दबुद्ध्याद्वैरूप्येण पुण्यपापकर्मसु वर्त्तनमेव प्राणिनां पुण्यपापात्मकत्वमिति ॥ १५ ॥

यथेत्यादिना भाजनमित्यन्तेनार्द्धाधिक श्लोकेन पञ्चमषष्ठप्रश्नयोरुत्तरत्वेन पुण्यपापकर्मस्वरूपं प्राणिनां जन्मकारणञ्चोपदिशति । तत्रार्थेषु शब्दादितन्मात्रासु । व्यापार: इन्द्रियाणामिति यावत् । एतदुक्तं भवति याथार्थ्यविदो विषयेषु तन्मात्रास्वरूपमात्राङ्गीकारात्तेनैवासङ्गाच्च तस्य तत्तद्विषयेष्विन्द्रियाणां व्यापार: पुण्यसंज्ञो भवतीति । अनर्थेषु अर्था: शब्दादय: तेषु तन्मात्रप्रतिपत्तिमात्रमन्तरेण पुत्रादिभावा अनर्थास्तेषु । अर्थसंकल्प: याथात्म्यबुद्धि: । मनसा इत्यस्य अर्थसंकल्प इत्यनेन पूर्व्वत्र सम्बन्ध: । एतदुक्तं भवति विषयेषु शब्दादितन्मात्रामात्रप्रतिपत्तिमन्तरेण पुत्रमित्रकलत्रादित्वेन तेषु मन:संयोग एव पापसंज्ञो भवतीति । तथा अयथात्मज्ञानेनेति यावत् । नानारूपाणि जरायु-

याथार्थ्ये ज्ञानमर्थानां मुक्तिस्तद्विपरीतता ।
संसृतिर्मोचनं बुद्धेर्वासना बन्ध ईरितः ॥ १७ ॥
कर्मक्षयात् सद्गुरोस्तु कटाक्षोक्तिविमर्शतः ।
मोचनं सर्वजन्तूनां नेतरैश्च कदाचन ॥ १८ ॥

---

जादिरूपाणि। यैः रूपभेदैः। नित्यक्लेशभाजनं तत्तद्रूपेष्वहं मित्रमहं शत्रुरित्यादिभाववत्। एतदुक्तं भवति यथा श्रोत्रेन्द्रियस्य शब्द एव विषयः त्वगिन्द्रियस्य स्पर्शः चक्षुरिन्द्रियस्य रूपं रसनेन्द्रियस्य रसः घ्राणेन्द्रियस्य गन्धः आकाशस्य गुणः शब्दः वायोः शब्दस्पर्शौ अग्नेः शब्दस्पर्शरूपाणि जलस्य शब्दस्पर्शरूपरसाः भूमेः शब्दस्पर्शरूपरसगन्धाः तस्मात् शब्दादितन्मात्रा एव भूतानि भूतान्येवान्योन्यसंयोगविशेषात् जरायुजाण्डजस्वेदजोद्भिज्जात्मकत्वेनोत्पत्तिपरिणामक्षयविकारनाशात्मकानि रूपाणि तान्येव नानारूपाणि जन्मानि भवन्ति। तत्तद्रूपेषु स्वात्माद्यभिमानात्तत्स्वभावसिद्धैर्विकारैर्दुःखान्यनुभवन्तीति ॥ १६ ॥

याथार्थ्येत्यादिना श्लोकेन सप्तमादिदशमान्तानां चतुर्णां प्रश्नानामुत्तरत्वेन मुक्तेः संसृतेः बुद्धेर्मोचनस्य बन्धस्य च स्वरूपाण्युपदिशति। तत्र याथार्थ्ये ज्ञानमर्थानां मुक्तिः घटशरावादिविकारेषु मृत्सत्तामात्रज्ञानवद्दृश्यमानविविधरूपेषु चित्सत्तामात्रप्रतिपत्तिर्मुक्तिरिति यावत्। तद्विपरीतता अयथात्मज्ञानमिति यावत्। मोचनं बुद्धेः अयथात्मज्ञानस्य बुद्धिधर्मत्वात्। वासना बन्धः अयथात्मज्ञानमनादिदुर्वासनयैवेति यावत् ॥ १७ ॥

कर्मक्षयादित्यादिना श्लोकेनैकादशप्रश्नस्योत्तरत्वेन मुक्तिप्रदातारं मुक्तिप्रकारं चोपदिशति। तत्र कर्मक्षयात् अज्ञानकार्यत्वात् कर्मणः कारणकार्ययोरभेदोपचारात् अज्ञानक्षयादिति यावत्। सद्गुरोरित्यत्र सत्त्वमस्मिंस्तन्त्रे द्वितीयपटले विरच्येत्यादिभिरेकषष्टितमाद्येकादशभिः श्लोकैः प्रोक्तविधानात् कृतपूर्णाभिषेकत्वमस्मिन् पटले प्रोक्तपरमार्थस्वरूपे स्थैर्यञ्च। गुरुत्वं प्रथमे पटले सुन्दर इत्यादिनैकोनविंशच्छ्लोकेन प्रोक्तलक्षणसम्पूर्णत्वं। तुरवधारणे। कटाक्षोक्तिविमर्शतः कटाक्षा विंशे पटले सर्व्वासामित्यादिभिरेकचत्वारिंशादिनवभिः श्लोकैः प्रोक्तत्रिविधप्रकारेष्वन्यतमः उक्तिः श्रीविद्यायाश्चास्मिन् पटले प्रोक्तपरमार्थस्वरूपस्योपदेशः विमर्शस्तु प्रोक्तप्रश्नोत्तरप्रकारेण शिवस्वरूपानुसन्धानं तस्मात् कटाक्षोक्तिविमर्शैरिति यावत्। [प्रोक्तप्रश्नो-

संसृतेः कन्दमुदितमविवेकः परो महान् ।
यदायत्तमिदं जीवभुवनं परिवर्त्तते ॥ १९ ॥
तत्त्वानि तत्त्वान्युक्तानि सर्वैःसर्वत्र सर्वदा ।
ज्ञातृज्ञानज्ञेयमयान्यन्यथान्यानि सर्वदा ॥ २० ॥
का च धीरिति यत् पृष्टं तद्दुर्वचमपि स्फुटम् ।
कथयामि शृणु प्राज्ञे यदायत्ता च विंशतिः ॥ २१ ॥

---

त्तरप्रकारेण शिष्ये या स्वरूपानुसन्धानं तस्मात् कटाक्षोक्तिविमर्शैरिति यावत् । ] एतदुक्तं भवति भूतयोगविशेषमात्रदेहेषु चित्स्फुरणवशादेव जन्तुत्व-बुद्धिः । तदहङ्कारादेव देहगताहन्ता अवस्था बुद्धीन्द्रियाणां व्यापाराः पुण्य-पापानि मनःप्राणदेहानां धर्म्मास्तत्फलानि एतस्य सर्व्वस्य सद्गुरुकटाक्षो-पदेशविमर्शैरपरमार्थत्वात् सर्वजन्तूनां मोचनं सम्भवतीति । इतरैरुपायै-रिति यावत् । कदाचन यावदाहूतसंप्लवमिति यावत् ॥ १८ ॥

संसृतेरित्यादिना श्लोकेन द्वादशप्रश्नस्योत्तरत्वेन संसृतेः परमकारणं तत्स्वरूपं तद्वैभवञ्चोपदिशति । तत्र कन्दं दिव्यत्वात् कन्दः परमकारण-मित्यर्थः । अविवेकः देहात्मविवेकाभावः । परो दिव्यत्वात् । महान् ब्रह्मादि-स्तम्बान्तेषु सकलजन्तुषु संतन्यमानत्वात् । यदायत्तं यत् यस्य पराधीनं अविवेक-पराधीनमिति यावत् । जीवभुवनं जीवलोकः । परिवर्त्तते जन्मजरामरणाद्या-वृत्तिभ्रान्तिरूपेणेति यावत् ॥ १९ ॥

तत्त्वानीत्यादिना श्लोकेन त्रयोदशप्रश्नस्योत्तरत्वेन स्वरूपविमर्शसाधनभूतानां ज्ञातृज्ञानज्ञेयानां त्रयाणां तत्त्वात्मकं तदितरस्वरूपाणां अतत्त्वात्मकत्वञ्चोप-दिशति । तत्र तत्त्वानि संज्ञयेति यावत् । तत्त्वानि सत्यानि चैतन्यस्य तादात्म्येन स्फुरणत्वात् । सर्वैरागमादिभिरिति यावत् । सर्व्वत्र सर्व्वदेहेष्विति यावत् । ज्ञातृज्ञानज्ञेयमयानि ज्ञातृज्ञानज्ञेयात्मकानि । अन्यथा अन्यानि तदितरात्मकत्वेन प्रतीतानि अन्यानि असत्यानीति यावत् ॥ २० ॥

का च धीरित्यादिभिर्निग्रहमित्यन्तैः सप्तदशभिः श्लोकैश्चतुर्दशप्रश्नस्योत्तरत्वेन बुद्धेः सप्ताधिकशतगुणांस्तदनुभावञ्चोपदिशति । तत्र तत्त्वेष्विति शेषः ।

मनोबुद्धिरहङ्कारचित्तमित्यादि नामभिः ।
वस्तुभेदादभेदाच्च यदुक्तं सर्वतः सदा ॥ २२ ॥
तदेकमचयं स्थूलं सूक्ष्मं दुर्ज्ञमतिस्फुटम् ।
विषमञ्च समं विश्वं विश्वातीतमनामयम् ॥ २३ ॥
अरूपं सर्वरूपञ्च सर्वक्लेशकरं हरम् ।
सर्वतृष्णाकरहरं सर्वेषां सर्वतः सदा ॥ २४ ॥
सत्त्वरूपं रजोरूपं तमोरूपमतन्मयम् ।
संसाररूपमुत्तीर्णविग्रहं सुस्थिरं चलम् ॥ २५ ॥
अपापं पापरूपञ्च जीवरूपं परात्मकम् ।
अतीन्द्रियं चेन्द्रियात्मानिर्देश्यं (वं) सर्वदैवतम् ॥ २६ ॥

---

दुर्व्वचं वाचामविषयत्वात् । स्फुटं अनुभवयोग्यं । प्राज्ञे इति देवीस्तुतिः । विंशतिः प्रश्नानामिति यावत् । इत्यादीत्यत्रादिशब्देन प्रोक्तनामचतुष्टयस्य धीप्रज्ञादिवत् पर्य्यायमात्रत्वं कथयति । यदित्यस्य वस्त्वित्यनेनान्वयः । सर्व्वत आगमादितः ॥ २२ ॥

तदित्यादिना श्लोकेनैकादशगुणाः । तत्र तद्वस्तु एकं स्वरूपमिति यावत् । अचयं चिदुपलम्भात्मकत्वात् । स्थूलं विश्वव्याप्तेः । सूक्ष्मं पिपीलिकादिसूक्ष्मदेहेष्वप्यत्यन्तस्फुरणरूपत्वात् । दुर्ज्ञं दुर्ज्ञेयं अतीन्द्रियत्वात् । अतिस्फुटं ज्ञानस्वरूपत्वात् । विषमं वक्ष्यमाणवैविध्यात् । समं सकलजन्तुषु वैविध्यसाम्यात् । विश्वं तादात्म्यात् । विश्वातीतं यथार्थत इति यावत् । अनामयं अशरीरत्वात् ॥ २३ ॥

अरूपमित्यादिना श्लोकेन षड्गुणाः । तत्र सर्व्वक्लेशकरं हरं दिव्यत्वात् सर्व्वक्लेशकरं सर्व्वक्लेशहरमिति च । सर्व्वतृष्णाकरहरं सर्व्वतृष्णाकरं सर्व्वतृष्णाहरञ्च । सर्वेषां प्राणिनामिति यावत् । सर्व्वतः प्रकारत इति यावत् ॥ २४ ॥

सत्त्वेत्यादिना श्लोकेन दश गुणाः । तत्र अतन्मयं निर्गुणमिति यावत् ॥२५॥

अपापमित्यादिना श्लोकेनाष्टगुणाः । तत्र अपापं पुण्यरूपमिति यावत् ॥२६॥

सर्वक्षोभात्मकं सर्वशान्तिरूपञ्च निर्दयम् ।
सदयञ्चाविवेकात्म विवेकपरमार्थकम् ॥ २७ ॥
उत्तारकं पातनकृद्भङ्गरूपं जयात्मकम् ।
शोकात्मकञ्च निःशोकं सकौतुकमकौतुकम् ॥ २८ ॥
निरुद्यमं सदोद्युक्तं सावलेपमगर्वकम् ।
अमर्शरूपमक्षोभ्यं सर्वक्षोभ्यं सुखासुखम् ॥ २९ ॥
क्रोधलाभमदद्रोहमात्सर्य्यकामविग्रहम् ।
अस्पृष्टषड् गुणं षण्डः वनिता पूरुषस्तथा ॥ ३० ॥
अपकृष्टं तथोत्कृष्टं स्वच्छाकारं तथाविलम् ।
अगाधमतिगम्भीरमुदारं कृपणन्तथा ॥ ३१ ॥
भाग्यरूपमभाग्यात्म निर्भयं सभयं तथा ।
अनिच्छमिच्छारूपञ्च कातरं वीरविग्रहम् ॥ ३२ ॥
निर्दोषः सर्वदोषात्मा सर्वविन्मूढविग्रहः ।
सङ्कोचरूपः सर्वेषां तथा सर्वप्रकाशकः ॥ ३३ ॥

---

सर्वेत्यादिना श्लोकेन षड् गुणाः । तत्र विवेकपरमार्थकं विवेकपरमार्थस्वरूपम् ॥ २७ ॥

उत्तारकमित्यादिना श्लोकेनाष्टगुणाः । तत्र भङ्गरूपं पराजयरूपम् ॥ २८ ॥

निरुद्यममित्यादिना श्लोकेनाष्टगुणाः । तत्र सुखासुखं सुखरूपं दुःखरूपञ्चेति ॥ २९॥

क्रोधमित्यादिना श्लोकेन पञ्चदश गुणाः । तत्र अस्पृष्टषड् गुणं क्रोधादिषड् गुणरहितम् ॥ ३० ॥

अपकृष्टमित्यादिना श्लोकेनाष्टगुणाः । तत्र अगाधं दुरवगाहं ॥ ३१ ॥

भाग्येमित्यादिना श्लोकेनाष्टगुणाः ॥ ३२ ॥

निर्दोष इत्यादिना श्लोकेनाष्टगुणाः । तत्र सर्व्वदोषात्मा वातादित्रिदोषात्मा । सर्वेषां प्राणिनामिति यावत् ॥ ३३ ॥

अस्तेयरूपस्तेयात्मा वश्योऽवश्यस्वरो मृदुः ।
सरसं विरसं क्रूरं सौम्यं तैर्वैर्गुभिस्तु किम् ॥ ३४ ॥
त्वन्मयी धीः समाख्याता मन्मयी चिदुदीरिता ।
उभयैक्याद्विवेकात्मा जीवोऽन्यस्तद्विवेकवान् ॥ ३५ ॥
तस्यास्तु बुद्धेर्यो वेत्ति याथात्म्यं विकृतीरपि ।
सामर्थ्यं स्वाविभेदित्वं सिद्धे प्राप्यफलानि च ॥ ३६ ॥
योगी ज्ञो ब्रह्मविज्ज्ञानी शिवयोगी तथात्मवित् ।
तेनैव विहितं सर्वं प्रपञ्चात्मैक्यविग्रहम् ॥ ३७ ॥
स्वात्मनस्तु मनो वृत्त्या विषयग्रहणाय वै ।
सृष्टानि भूतशक्त्यात्मविग्रहाणीन्द्रियाणि तु ॥ ३८ ॥

---

अस्तेयमित्यादिना श्लोकेन दश गुणाः । तत्र अवश्यः स्वतन्त्रः । तैर्गुणैः ॥३४॥

त्वन्मयी शक्तिमयीति यावत् । एतदुक्तं भवति चित्स्वरूपस्य स्वेच्छयोपलब्धिर्बुद्धिरिति । मन्मयी शिवमयी स्वात्मिकेति यावत् । एतदुक्तं भवति उपलब्धिस्वरूपमन्तरेण तरुगतवह्निवत् सैव यदा स्थिता तदा चिदिति संज्ञेति । उभयैक्याद्विवेकात्मा धीचित्स्वरूपयोरपृथक्त्वात् चिदात्मानं विमृशतीति यावत् । अन्यः परः तद्विवेकवान् धीचित्स्वरूपयोरपृथक्त्वं विमृशतीति यावत् । स्वाविभेदित्वं स्वात्माप्टथग्भावत्वं । सिद्धे याथात्म्यस्वरूपे । प्राप्यफलानि अवाप्तव्यफलानि । चः समुच्चये । ज्ञः बुद्धेर्याथात्म्यवेत्ता । योगीत्यादिनामपञ्चकं वेदेष्वागमेषु च परमार्थविदस्तत्तन्मतानुगुणं प्रोक्तमनेन तत्सर्वं बुद्ध्यधीनमिति यावत् । तेन बुद्धेर्याथात्म्यविदा । एवावधारणे ॥ ३७ ॥

स्वात्मन इत्यादिना श्लोकेन पञ्चदशप्रश्नस्योत्तरत्वेनेन्द्रियाणां स्वरूपमुपदिशति । तत्र स्वात्मनः स्वस्य मनोवृत्त्या मनोव्यापारेण सृष्टानि उपलब्धानीति यावत् । भूतशक्त्यात्मविग्रहाणि पञ्चभूतशक्तिस्वरूपाणि । तुरवधारणे । एतदुक्तं भवति स्वस्य मनोवृत्त्या स्वस्वविषयग्रहणार्थमुपलब्धानि भूतशक्तिस्वरूपाणीन्द्रियाणीति ॥ ३८ ॥

भूतात्मबुद्धिसंघातशक्तिचैतन्यजृम्भणम् ।
प्राणास्तत्साक्षिभूतो हि जीवस्तत्त्वात्मकः परः ॥ ३९ ॥
कालस्तु पूर्वं बुद्धेर्यदुक्तं गुणसमस्तवान् ।
काल इत्यक्षरद्वन्द्वाद्यद्वाच्यं तद्वपुर्मम ॥ ४० ॥
न शक्यतेऽञ्जसा वक्तुं तथा दर्शयितुं तव ।
तथापि तव यत्किञ्चिद्व्याकरोमि समञ्जसा ॥ ४१ ॥
अहोरात्रादिभेदस्तु चन्द्रार्कादिसमन्वयात् ।
तेन तन्मयतारूपकथनं नोचितं ततः ॥ ४२ ॥
लवत्रुट्याद्यो यत्तद्व्याप्यन्ते खण्डकास्तु तत् ।
कालस्य रूपं तत् प्रोक्तं यदनाद्यन्तविग्रहम् ॥ ४३ ॥

---

भूतात्मेत्यादिना श्लोकेन षोड़शसप्तदशाष्टादशानां प्रश्नानां त्रयाणां उत्तरत्वेन प्राणानां जीवस्य च स्वरूपमुपदिशति । तत्र भूतात्मबुद्धिसंघातशक्तिचैतन्यजृम्भणं प्राणा इत्यनेनैतदुक्तं भवति पञ्चभूतस्वरूपाणां बुद्धेश्च संघातसामर्थ्येन चैतन्यस्य विजृम्भणभेदाः प्राणा इति । तत्साक्षिभूतो देहेन्द्रियादिस्वरूपानुसन्धानप्रवृत्तः । एतदुक्तं भवति चिदुपलब्धिस्वरूपा बुद्धिः स्वाविवेकावस्थायां देहादिरूपतयानुसन्धानप्रवृत्तेर्निवृत्ता जीवसंज्ञां लभत इति । तत्त्वात्मकतः तद्याथात्म्येन । एतदुक्तं भवति यदा चिदुपलब्धिस्वरूपिणी बुद्धिः स्वस्वरूपपरामर्शेन देहेन्द्रियादीनामयाथात्म्यात्तदात्मकत्वेनानुसन्धानप्रवृत्तेर्निवृत्ता दाह्याभावाद्वह्निरिव स्वस्वरूपेण विश्राम्यति तदा परसंज्ञां लभत इति ॥ ३९ ॥

काल इत्यादिभिरत्र वै इत्यन्तैरष्टभिः श्लोकैरेकोनविंशत्प्रश्नस्योत्तरत्वेन कालस्वरूपादिकमुपदिशति । तत्र तुरवधारणे । पूर्व्वं चतुर्द्दशप्रश्नस्योत्तरे तदेकमित्यादिभिरिति यावत् । यतो गुणवैविध्यं ततः गुणसमस्तवान् समस्तगुणवान् । तथापि अशक्यमपीति यावत् । समञ्जसा उद्देशत इति यावत् । अहोरात्रादीत्यत्रादिशब्दः पूर्णमण्डलादिविषयः । तुः समुच्चये । चन्द्रार्कादीत्यत्रादिशब्दो भौमादिविषयः । तेन कारणेन । तन्मयतारूपकथनं अहोरात्रादिरूपतया

लवत्रुट्यादिकं ब्रूहि यैः कालो ज्ञायते मया ।
नलिन्या पत्रनिचये सूचीविद्धेऽथ तस्य वै ॥ ४४ ॥
एकैकदलभेदोत्थावस्था लव उदाहृतः ।
तत्त्रिंशद्गुणितं प्रोक्तं त्रुटीत्यादिशरीरवान् ॥ ४५ ॥
काल इत्युदितं तस्य स्वरूपं किं कथं भवेत् ।
इति पृष्टेन तद्वक्तुं शक्यते सुस्फुटं मया ॥ ४६ ॥
स्वबुद्ध्या प्रोक्तमात्रस्य भावनाद्यत्तु लभ्यते ।
तत्तस्य वपुरुद्दिष्टं नान्यास्ति गतिरत्र वै ॥ ४७ ॥

---

कालस्वरूपकथनं । एतदुक्तं भवति चन्द्रार्कादिग्रहगतिवशात् कल्पिताहोरात्रादिविषयः कालस्य तत्त्वतो वपुर्न भवतीति । ततः तस्मात् । लवत्रुट्यादीत्यत्रादिशब्दः कलाकाष्ठादिविषयः । यत् तत्स्वरूपं भाष्यन्ते अतन्मयत्वात् खण्डकाः परिच्छेदकाः विश्वस्येति यावत् । तुरवधारणे । तत् कालस्य रूपं कालस्य तत्रूपमित्यन्वयः । अत्र तच्छब्देन तन्त्रादौ प्रोक्तं कालस्यानुभावं स्मारयति । तत् चिद्रूपं । एतदुक्तं भवति अनाद्यन्तविग्रहं तच्चित्स्वरूपं यत्तदेव कालस्य स्वरूपमिति । लवत्रुट्यादीत्यत्रादिशब्दः प्राग्वत् कलाकाष्ठादिविषयः । यैः लवत्रुट्यादिभिर्ज्ञायते अनुमीयते । तस्य नलिनीपत्रंनिचयस्य लव इति संज्ञा । तत्त्रिंशद्गुणितं लवादिस्वरूपं त्रिंशत्त्रिंशद्गुणितमिति यावत् । त्रुटीत्यादिशरीरवान् त्रुटिकलाकाष्ठादिसंज्ञावान् इति यावत् । एतदुक्तं भवति त्रिंशद्भिर्लवैः त्रुटिः त्रिंशत्त्रुटिभिः कला त्रिंशत्कलाभिः काष्ठा त्रिंशत्काष्टाभिर्निमेषः अष्टभिर्निमेषैर्मात्रा सा मात्रा एकः श्वास इति । एकश्वासमारभ्य दिवसान्तस्वरूपं सप्तविंशे पटले कथितं दिवसादिचतुर्युगान्तस्वरूपं पञ्चविंशे पटले कथितं तस्मादिह नोच्यते । इति उक्तप्रकारेण । तस्य कालस्य । तत् स्वरूपं प्रोक्तमात्रस्य तन्त्रादावस्मिन् पटले वा स्वरूपस्येति शेषः । भावनाद्विमर्शतः । यत् स्वरूपं तत्तस्य कालस्य स्वरूपमिति यावत् । अत्र कालस्वरूपकथने ॥ ४७ ॥

ग्रहास्तु चिन्मयाः काले क्वापि चक्रभ्रमात् पुनः।
भूतादीनि समस्तानि विकृतानि वितन्वते ॥ ४८ ॥
नानाविधास्तथाकाराः प्रपञ्चो दृश्यते सदा।
तैरेव तेषां नाशश्च मरुतेव हविर्भुजः ॥ ४९ ॥
प्रश्नानामुत्तरं देव त्वया च कथितं विभो।
तथापि मे प्रपञ्चात्मविवेकोऽभून्न मेऽधुना ॥ ५० ॥
जननं मरणञ्चेति द्वयं कस्य कथं भवेत्।
अरूपस्य विभोस्तस्य जीवश्चेत्तत् कथं स्थितिः ॥ ५१ ॥

---

ग्रहा इत्यादिना विभो इत्यन्तेनाध्यर्द्धेन श्लोकद्वयेन विंशप्रश्नस्योत्तरत्वेन ग्रहाणां स्वरूपाद्युपदेशपुरःसरमुक्तनिगमनं करोति। तत्र तु चिन्मयाः कालापृथग्रूपचिद्रूपाः। काले क्वापि क्वापि काले क्वापि देश इति यावत्। चक्रभ्रमात् स्वस्वगतिवशात् इति शेषः। पुनः पुनः पुनरिति यावत्। भूतादिनीत्यत्रादिशब्दो बुद्धीन्द्रियप्राणादिविषयः। तद्विकारा भूतादिविकाराः प्रपञ्चसंज्ञयेति शेषः। एतदुक्तं भवति अत्र ज्योतिश्चक्रे ग्रहगतिवशात् भूतादीनां नानाविधविकारः प्रपञ्चसंज्ञया दृश्यत इत्यत्र प्रसङ्गात् तृतीयप्रश्नस्योत्तरशेषं प्रपञ्चस्वरूप मुपदिष्टं। तैः ग्रहैः। एवावधारणे। तेषां भूतादिविकाराणां। देव विभो इति द्वयमपीश्वरसम्बुद्धिः ॥ ४९ ॥

तथापीत्यादिनोत्तरार्द्धेन प्रश्नान्तरावतारस्य पीठिकाबन्धं करोति। तत्र तथापि मे कथितमपि। अधुनापीति शेषः। अद्यापीति यावत् ॥ ५० ॥

जननमित्यादिभिरुपदेशत इत्यन्तैश्चतुर्भिः श्लोकैर्द्वादशविधप्रश्नस्वरूपादिकमुपदिशति। तत्र जननमित्यादिना श्लोकार्द्धेन प्रश्नचतुष्टयं। अरूपस्येत्यादिनार्द्धद्वयेन प्रश्नत्रयं। तस्य स्वात्मन इति यावत्। कुतो हेतोः। तत्कालपरमात्मनोः अनाद्यन्तविग्रहयोः कालपरमात्मनोः। मुक्त इत्यादिनोत्तरार्द्धेन प्रश्नद्वयं। तत्र मुक्तः जीव इति शेषः। परे जीवा इति शेषः। वा विकल्पे। एतदुक्तं भवति एते जीवाः प्रतिमेकैकमुक्ता (?) यद्यपि कालस्यानादित्वात् प्रपञ्चभावो युज्यते तथापीदानीं प्रारब्धवत् प्रपञ्चः प्रसरतीति यत्तस्मात् प्रसरणार्थं

कुतः स्थितिः कथं वा स्यात्तत्कालपरमात्मनोः ।
मुक्तो वा जायते किन्तु परे वा सम्भवन्ति किम् ॥ ५२ ॥
कथं वा पञ्चभूतानां स्थितिर्देहेषु वान्यतः ।
देहेषु जीवसंप्राप्तिः कीदृशीत्यादि मे वद ॥ ५३ ॥
येन श्रुतेन चित्ते मे शुश्रूषान्यस्य नो भवेत् ।
तथा मे सर्वसन्देहांश्छिन्धि पूर्णोपदेशतः ॥ ५४ ॥
प्रागुक्तवुद्धिवैविध्यारब्धकर्म्मविपाकतः ।
जननं मरणञ्चेति द्वयं देहपरिग्रहात् ॥ ५५ ॥
प्रतप्तलोहपिण्डेऽग्निस्थितिवत् परविश्वयोः ।
अवस्था कालपरयोस्तादात्म्यादेव वर्त्तनम् ॥ ५६ ॥

---

मुक्ता एव जीवाः पुनर्जाताः किमथवा परे जीवाः सम्भवन्तीति किमिति। कथमित्यादिना श्लोकाद्यार्द्धेन प्रश्नद्वयं। तत्र अन्यतः देहाद्बहिरिति यावत्। देहेष्वित्यादिना उपदेशत इत्यन्तेनार्द्धाधेन श्लोकेनैकः प्रश्नः। तत्र कीदृशी कस्यां अवस्थायां केन प्रकारेणेति यावत्। इत्यादीत्यत्रादिशब्दो जीवदेहेभ्यो विनिर्गमनप्रकारस्य तत्तत्सुगतित्वात् ज्ञानकालस्य च प्रश्नविषयः। येन श्रुतेनोत्तरेण। अन्यस्य प्रश्नस्येति शेषः॥ ५४ ॥

प्रागुक्तेत्यादिना श्लोकेन प्रश्नचतुष्टयस्योत्तरं कथयति। तत्र प्रागुक्तवुद्धिवैविध्यारब्धकर्म्मविपाकतः भूतादियोगात्मके देहे प्रागुक्तवुद्धिवैविध्येन जीवस्याविर्भावः। प्रारब्धकर्म्मतस्तद्विपाकस्तद्विश्रान्तिः ततश्च। एतदुक्तं भवति प्रागुक्तवुद्धिवैविध्येनारब्धजीवोपलब्धिकर्म्मतस्तद्विपाकतश्च। जननं मरणञ्चेति इति द्वयं देहपरिग्रहात्। इत्येतद्द्वयं देहे स्वात्माभिमानात्। एतदुक्तं भवति जीवस्य जननमरणकारणं देहाभिमानमात्रमेवेति॥ ५५ ॥

प्रतप्तेत्यादिना श्लोकेन पञ्चमादिप्रश्नस्योत्तरं कथयति। तत्र अवस्थेत्यस्य काकाक्षिन्यायेन पूर्वत्रोत्तरत्र च सम्बन्धः। एतदुक्तं भवति प्रतप्तलोहपिण्डेऽग्निस्थितिवत् परविश्वयोरवस्थानमिति पञ्चमस्योत्तरं कथितं। जड़-विषये परस्यावस्थानकारणं कुत इति प्रोक्तस्य षष्ठप्रश्नस्योत्तरं तादात्म्या-

मुक्तास्तु जीवा न कदाप्याविर्भूयुः कुतश्चन ।
न वापूर्व्वाः सम्भवन्ति बुद्धेः कृत्यमशेषतः ॥ ५७ ॥
मुद्रिकारूपमुद्रेव मधूच्छिष्टादिविग्रहम् ।
जीवादिरूपतो बुद्धिर्विशेषयति तत्परम् ॥ ५८ ॥
भूमेरेवास्फुटं स्थानं कुतश्चित् सुस्थिरं सदा ।
जलाग्न्योस्तत्र चान्यत्र व्यक्ताव्यक्तस्थितिः सदा ॥ ५९ ॥

---

देवेति कथितं । कालपरयोरन्योन्यावस्थानं कथमिति प्रोक्तस्य सप्तमप्रश्नस्योत्तरं तादात्म्यादेव वर्त्तनमिति कथितमिति ॥ ५६ ॥

मुक्ता इत्यादिना तत्परमित्यन्तेन श्लोकद्वयेनाष्टमनवमप्रश्नयोरुत्तरं कथयति । तत्र जीवा जन्तवः । तुरवधारणे । आविर्भूयुः दिव्यत्वादाविर्भूयासुरित्यर्थः । कुतश्चन हेतोरिति शेषः । अपूर्वाः जीवा इति यावत् । बुद्धेः कृत्यं अन्यथाप्रतिपत्तिरिति यावत् । अशेषतः जन्मादितत्सर्वमिति यावत् । मुद्रिकारूपमुद्रा मुद्रिकासमानरूपा मुद्रा मधूच्छिष्टमृदादिष्वारोपितेति शेषः । मधूच्छिष्टादिविग्रहं मधूच्छिष्टमृदादिस्वरूपं विग्रहं । स्वविग्रहं जीवादिरूपतः तेजोरूपतः स्वजन्तुरूपतश्चेति यावत् । बुद्धिः चित्स्वरूपस्य भूतयोगविशेषेषु उपलब्धिरिति यावत् । विशेषयति भेदयति । तत्परं तस्मादन्यं उपादानस्वरूपादन्यमित्यर्थः । एतदुक्तं भवति मधूच्छिष्टाद्यधिकरणे स्वारोपितया मुद्रिकया समानविग्रहा मुद्रा स्वाधिकरणात्मकतन्मधूच्छिष्टादिना स्वरूपात् स्वविग्रहकारणभूतमुद्रिकास्वरूपार्थस्वस्वरूपमित्यविशेषयतीव भूतयोगविशेषेषु चित्स्वरूपस्योपलब्धिस्वरूपात्मिका बुद्धिः स्वाधिकरणात्मकभूतसमवायात् स्वकीयोपादानात्मकं चित्स्वरूपाच्च स्वस्वरूपमन्यं विशेषयतीति यत्तस्मादेतत् सर्वं बुद्धेः कृत्यमिति ॥ ५८ ॥

भूमेरित्यादिना सदेत्यन्तेन श्लोकद्वयेन दशमप्रश्नस्योत्तरादिकं कथयति । तत्र कुतश्चित् इच्छाशक्तिवैभवादिति यावत् । तत्र भूम्यां । चः समुच्चये । अन्यत्र भूमेरिति शेषः । व्यक्ताव्यक्तस्थितिः व्यक्तरूपेण चाव्यक्तरूपेण च स्थितिः । एतदुक्तं भवति भूमग्रामव्यक्तरूपं जलं त्वनन्तरं दृश्यते वहिरपि व्यक्तरूपं जलं कर्षणाद्दृश्यते । भूमग्रामव्यक्तरूपोग्निः सूर्य्यकान्ते काष्ठादिषु मथनादिना दृश्यते

वायोः सर्वत्र सततमवस्थानं त्वनेकधा।
व्योम सर्वगमेव स्यात् कालताद्रूप्यतः सदा ॥ ६० ॥
देहेषु सस्फुटं तेषामवस्थानन्तु पञ्चधा।
जीवानामागतिर्देहे मातापित्रोस्तु वीर्य्यतः ॥ ६१ ॥
तादात्म्यं सङ्गतं तत्र जृम्भते सा चिदात्मना।
तत्र प्रारब्धविरमान्मरणं निद्रया समम् ॥ ६२ ॥
सिद्धानां सर्वदा देहत्यागे भेदो न विद्यते।
प्रागेव तस्य देहात्मविवेकान्मनसि स्वगे ॥ ६३ ॥

---

वह्निरशनाद्याकारेण च दृश्यते। अनेकधा गत्यादिभेदादिति शेषः। कालताद्रूप्यतः कालात्मकत्वेनेति यावत् ॥ ६० ॥

देहेष्वित्यादिनाद्यार्द्धेन श्लोकेनैकादशप्रश्नस्योत्तरं कथयति। तत्र तेषां पञ्चभूतानां पञ्चधा तत्तदाकारेणेति शेषः। एतदुक्तं भवति देहेषु घनरूपं भूमिः द्रवरूपं जलं उष्णरूपमग्निः प्राणो वायुः सुषिराणि नभ इति। जीवानामित्यादिनार्द्धद्वयेन द्वादशप्रश्नस्योत्तरं कथयति। तत्र आगतिः प्राप्तिः। तुरवधारणे। वीर्य्यतः शुक्रशोणितयोगादित्यर्थः। आरभ्येति शेषः। एतदुक्तं भवति मातापित्रोः शुक्रशोणितयोगादारभ्यैव देहे जीवस्य प्राप्तिरिति। तादात्म्यं जोवात्मभावं सङ्गतं दिव्यत्वात् संगतेति यावत्। तत्र देहे। जृम्भते उपलभ्यते। सा आगतिरिति शेषः। आत्मना स्वेन स्वातन्त्र्यादिति यावत्। एतदुक्तं भवति मातापित्रोः शुक्रशोणितसंयोगादारब्धे देहे तत्र देहे त्वनवच्छिन्नरूपा चित् स्वातन्त्र्याज्जीवात्मभावमुपगता उपलभ्यत इति यावत्। देहे जीवानामागतिः सेति ॥ ६१ ॥

तत्रेत्यादिभिः अयमित्यन्तैरर्द्धाद्यैश्चतुर्भिः श्लोकैर्द्वादशप्रश्नावसानप्रोक्तादिशब्दस्य तात्पर्य्यप्रश्नयोरुत्तरद्वयं कथयति। तत्र तत्र देहे। प्रारब्धविरमादहमित्युपलब्धिः प्रारब्धकर्म तद्विरमात् तदभावात्। मरणं जीवानां देहान्निष्क्रान्तिप्रकार इति यावत्। मरणं निद्रया सममित्यस्योत्तरत्र श्लोके सिद्धानामित्यनेन सम्बन्धः। एतदुक्तं भवति अनवच्छिन्नस्य चित्स्वरूपस्य स्वेच्छया देहेषूप-

नेतरेषां स साध्यानां साधकानाञ्च कालतः ।
पुष्यादिषु तु मासेषु षट्सु राकोपकण्ठतः ॥ ६४ ॥
मरणं सुगतित्वस्य ज्ञापकं सुगतिस्फुटम् ।
सिद्धस्तु पूर्वतो मुक्तो देहेन्द्रियमनःस्थिरः ॥ ६५ ॥

---

लब्धिस्वरूपा जीवभावमुपगता बुद्धिरिन्द्रियद्वारा वहिर्गता व्याप्य विश्वं यदा विषयाननुभवति तदा जाग्रदवस्था यदा पुनः सा तत्तदिन्द्रियेभ्यो निवृत्ता हृत्प्रदेशस्था तत्तद्विषयान् स्मरति तदा स्वप्नावस्था यदा पुनरसौ हृदयादपि निवृत्ता स्वपरमार्थचैतन्यस्वरूपे विश्राम्यति तदा सुषुप्तावस्थेति। तत्तस्मात् चित्स्वरूपस्य बुद्धिस्वरूपतया देहादिष्वनुपलब्धिसामग्रात् मरणं निद्रया सममित्यवैतन्मात्रमन्तरेण परमार्थतो जीवस्य देहप्राप्तिनिर्गमनादि-प्रतीतिरपां पात्रे चन्द्रस्येवेति सिद्धा कृतनिश्चया भवतीति। भेदः पूर्वावस्थाया इति शेषः। प्राक् सद्गुरुकटाक्षसमये। एवावधारणे। तस्य सिद्धस्य। देहात्म-विवेकाद्देहात्मनोः स्वरूपविमर्शात्। स्वगे स्वस्वरूपं गते सति पश्चात् कालतो देहत्यागे पूर्व्वावस्थाया भेदो न विद्यत इति न देहात्मविवेकाद्देहात्मविवेक-भावात् देहविश्लेषत एव देहाभिमानत्यागः देहाभिमानरहित्यमिति यावत्। इतरेषां पामराणां। सः देहाभिमानत्यागः। अस्य कालत इत्यने-नोत्तरत्र सम्बन्धः। साध्यानां सद्गुरुकटाक्षे सत्यप्यनादिदुर्व्वासनावलाज्जड़-क्रियातात्पर्य्येण देहात्मविवेकविमुखानां। साधकानां सद्गुरुकटाक्षादुपलब्ध-परमार्थस्वरूपानुभूत्यां सत्यां अपि निःशेषापरिमुक्तदुर्व्वासनानाञ्च। चः समुच्चये। कालतः कालधर्म्मतः शरीरविनाशादिति यावत्। एतदुक्तं भवति पामराणां साध्यानां साधकानाञ्च देहात्मविवेकाभावाद्देहविश्लेषत एव देहाभिमानत्यागो भवति। पुष्यादिषु तु मासेषु षट्सु उत्तरायण इति यावत्। राकोपकण्ठतः शुक्लपक्षाष्टम्युत्तरार्द्धादारभ्य कृष्णपक्षाष्टमीपूर्व्वार्द्धान्ततिथिष्विति यावत्। सुगतित्वस्य ज्ञापकमित्यने दक्षिणायने कृष्णाष्टम्युत्तरार्द्धादारभ्य शुक्लाष्टमी पूर्व्वार्द्धान्ततिथिषु च मरणाद्दुर्गतित्वस्य ज्ञापकमिति कथितं। सिद्धः ज्ञातपरमार्थः। तुर्विशेषे। पूर्व्वतो मुक्तः तेन हेतुना अस्य सिद्धस्य निधनं देहविश्लेषः। सर्व्वदा सर्व्वतः देशतः प्रकारतश्चेति शेषः। तथा यथोत्तरायणे

यतस्तेनास्य निधनं सर्वदा सर्वतस्तथा ।
सुगतित्वं व्यन्यत्त्वेव जीवन्मुक्तो यतस्त्वयम् ॥ ६६ ॥
देहवत्त्वे समानेऽपि प्राणिनां सर्वतः सदा ।
बुद्धेर्वैविध्यरूपस्य कारणं किं वद प्रभो ॥ ६७ ॥
भूमिष्ठत्वे समानेपि तोयानां रसभेदवत् ।
जायते त्वाश्रयवशात् स च कर्म्मभिरेव वै ॥ ६८ ॥
यथाश्वत्थगतो वह्निरुपायैरितरैः क्वचित् ।
नोपलभ्यो भवेत् शुष्कमथनव्यापृतिं विना ॥ ६९ ॥

---

राकोपकण्ठे काले च वाराणस्यादिषु चेत्रेषु भृगुपतनादिप्रकारतश्चेति यथा तथेत्यर्थः । एवावधारणे । तुर्विशेषे । अयं सिद्धः ॥ ६६ ॥

देहवत्त्वे इत्यादिना श्लोकेन प्राणिनां बुद्धेर्वैविध्यकारणं सोपपत्तिकं देवी पृच्छति । तत्र सर्व्वतः प्रकारतः इति शेषः । प्रभो इतीश्वरसम्बुद्धिः ॥ ६७ ॥

भूमिष्ठत्व इत्यादिना श्लोकेन तदुत्तरं सनिदर्शनं कथयति । तत्र आश्रयवशात् दृष्टान्तस्थलविशेषवशात् दार्ष्टान्तिके प्रकृतिविशेषवशादिति यावत् । एतदुक्तं भवति भूमिष्ठत्वे समाने आश्रयवशात्तोयानां रसभेदवद्देहवत्त्वे समाने प्याश्रयप्रकृतिविशेषवशाद्बुद्धेर्गुणवैविध्यं जायत इति । अनन्तरमाश्रयविशेषः केन जायत इत्यादिशङ्कायामाह स च कर्म्मभिरेव वै तत्र स च आश्रयविशेषश्च जायत इति शेषः । कर्म्मभिः कर्मदृष्टान्ते तोयकार्य्यैः रसादिभिरिति यावत् । दार्ष्टान्तिके बुद्धिकार्य्यैरिति यावत् । एतदुक्तं भवति तोयानां रसादिभिरेव स्थलविशेषवशाद्बुद्धेः कार्य्यैरेव प्रकृतिविशेषो भवतीति ॥ ६८ ॥

यथेत्यादिभिः स्वस्वरूपकमित्यन्तैस्त्रिभिः श्लोकैर्गुरुमुखादेव प्राप्यं विद्यादिकमपि सनिदर्शनं प्रतिज्ञामुपदिशति । तत्र अश्वत्थगत इति तरुसामान्यग्रहण मन्तरेण विशेषग्रहणात् गुरोरप्यधिकारिविशेषमुपलचयति । इतरैः छेदनाद्यैः । क्वचित् देशे काले चेति शेषः । शुष्कमथनव्यापृतिमित्यत्र शुष्कशब्देन देहात्मविवेकात् गुरोर्देहादिषु तात्पर्य्यं । मथनव्यापृतिशब्देन शिष्यस्य तदुपास्त्या-

तथात्मज्ञानसंप्राप्तिः सद्गुरुप्राप्तितो विना ।
न कस्यापि भवेदेषा प्रतिज्ञा विश्वतोऽनिशम् ॥ ७० ॥
खननाद्भूगतं तोयं यथा समुपलभ्यते ।
तथा सद्गुरुसंसेवां संप्राप्य स्वस्वरूपकम् ॥ ७१ ॥
सद्गुरोः पादसेवातः सम्प्राप्तात्मस्वरूपिणः ।
विशेषः को*भवेदन्यदुर्लभः सत्यविग्रहः ॥ ७२ ॥
आभिरूप्यमसन्देहः सन्तोषः परिपूर्णता ।
दयार्द्रचित्तता रागद्वेषाविषयचित्तता ॥ ७३ ॥
सुलभत्वमगर्वित्वं सदा नियतशीलता ।
कृतज्ञता सत्यता†च परचिन्तानिवर्त्तनम् ॥ ७४ ॥

---

दिषु तात्पर्य्यञ्चोपलक्षयति । कस्यापि प्रथमे पटले चतुर्भिराद्यैरित्यादिना प्रोक्तलक्षणसम्पूर्णस्येति यावत् । प्रतिज्ञा ममेति शेषः । ईश्वरस्य प्रतिज्ञेति यावत् । विश्वतः हेतोः । स्वस्वरूपकं आत्मज्ञानं ॥ ७१ ॥

सद्गुरोरित्यादिना श्लोकेन सद्गुरुसेवाप्राप्तस्वरूपस्य विशेषं देवी पृच्छति । अत्र अन्यदुर्लभः यथावदलब्धज्ञानानां दुर्लभः ॥ ७२ ॥

आभिरूप्यमित्यादिभिः प्रवर्त्तते इत्यन्तैर्नवभिः श्लोकैस्तदुत्तरत्वेनात्मवतां सप्तचत्वारिंशल्लक्षणानीतरेषां तद्राहित्यादिकञ्चोपदिशति । तत्र आभिरूप्यमित्यादिना श्लोकेन लक्षणसप्तकम् । तत्र आभिरूप्यं अभितः स्वरूपभावः सर्व्वात्मभाव इति यावत् । सौन्दर्य्यं वा । असन्देहः विकल्पश्रुति‡भिरपीति यावत् । सन्तोषः स्वानुभूत्या परिपूर्णतास्वरूपतया नैरपेक्ष्याच्च । दयार्द्रचित्तता रागद्वेषयोरनास्पदचित्तता । अपृथग्भावादिति यावत् ॥ ७३ ॥

सुलभत्वमित्यादिना श्लोकेन लक्षणषट्कम् ॥ ७४ ॥

---

* विशेषतो ।

† स्वपत्या

‡ शुद्धि ।

आर्जवञ्चावित्तलौल्यं विषयानतिसङ्गिता ।
अदैर्घ्यसूत्रमक्षौद्रां नात्यगाधाशयात्मता ॥ ७५ ॥
वृथालापेष्टशक्तिश्च वृथाव्यापारवर्जनम् ।
वृथाविनोदराहित्यं जिह्मचित्तैरसङ्गतिः ॥ ७६ ॥
पुरुषार्थार्थकथनचिन्ताकरणकौतुकम् ।
अस्तेयशक्तिरास्तिक्यं परलोकानुचिन्तनम् ॥ ७७ ॥
देवतापूजनस्तोत्रवैभवालापशीलता ।
पापानां वर्जनं पुण्यकरणे कौतुकं सदा ॥ ७८ ॥
परस्तवननिन्दासु विरतिर्वीतरागिता ।
निस्पृहत्वमलोलत्वमनाक्षेपोऽजड़ात्मता ॥ ७९ ॥

---

आर्जवमित्यादिना श्लोकेन लक्षणषट्कं । तत्र अवित्तलौल्यं अर्थार्थमपारतन्त्र्यम् । विषयानतिसङ्गिता शरीररक्षणमात्रमन्तरेण विषयेषु रागतः प्रवृत्तिः सिद्धस्य न स्यादिति यावत् । अदैर्घ्यसूत्रं अचिरक्रियत्वं । नात्यगाधाशयात्मता सौलभ्यादिति यावत् ॥ ७५ ॥

वृथेत्यादिना श्लोकेन लक्षणचतुष्टयं । तत्र वृथाशब्देन दृष्टादृष्टानुपयोगित्वमुक्तं । जिह्मचित्तैः कपटहृदयैः ॥ ७६ ॥

पुरुषार्थेत्यादिना श्लोकेन लक्षणषट्कम् । तत्र पुरुषार्थार्थकथनचिन्ताकरणकौतुकं पुरुषार्थार्थकथनं पुरुषार्थचिन्ताकरणं पुरुषार्थकौतुकञ्चेत्यन्वयः । अस्तेयशक्तिः स्तेयकर्मण्यशक्तिः । आस्तिक्यं शास्त्रार्थेष्विति यावत् । परलोकानुचिन्तनं परस्वरूपावलोकनगुणचिन्तनं । आगमाभ्यास इति यावत् ॥ ७७ ॥

देवतेत्यादिना श्लोकेन लक्षणपञ्चकं । तत्र देवतापूजनस्तोत्रवैभवालापशीलता देवतानां पूजनालापशीलता देवतानां वैभवालापशीलता चेति ग्रन्थयोजना । पापानां निषिद्धकर्मणामभिचाराद्युत्पन्नकर्मणां च स्वस्य च परेषां चाहितानामिति यावत् । पुण्यकरणे स्वस्य च परेषाञ्च हितकरणे । प्राणिनां संसारक्लेशनिवृत्त्यर्थं स्वरूपसिद्ध्यर्थञ्चेति यावत् ॥ ७८ ॥

परस्तवनेत्यादिना श्लोकेन लक्षणषटकम् । तत्र परस्तवननिन्दासु परस्तवनेषु परनिन्दासु च ॥ ७९ ॥

अगोपनं स्वभक्तानामभक्तानाञ्च गोपनम् ।
गुरुविद्यागमाचारस्तवनं तत्प्रवर्त्तनम् ॥ ८० ॥
सिद्धचिह्नानि चैतानि भवन्त्यात्मवतां ध्रुवम् ।
न भवन्तीतरेषान्तु प्रद्विषन्त्येव तांश्च ते ॥ ८१ ॥
तत्कृत्यं शृणु वक्ष्येऽहं यो लब्धस्वात्मवैभवः ।
निरस्ताशेषसंसारमौर्ख्याज्ञानाविवेकवान् ॥ ८२ ॥
देशकालकुलाचारान् गुरुराजादिकल्पितान् ।
पालयन् सुस्मितमुखः पूजापूजनकौतुकी ॥ ८३ ॥
देहास्थैर्य्यं तथाज्ञानं व्यापारान् कालतः क्षणात् ।
पतितान्बन्धुचित्ताज्ञादुर्लङ्घ्यान् स्वचयस्थितीन् ॥ ८४ ॥
स्वेन्द्रियाणाञ्च सामर्थ्यं स्वकर्म्माणि कृतानि च ।
मुहुर्मुहुश्च विमृशेदिरमेदृशभात्मनः ॥ ८५ ॥

---

अगोपनमित्यादिना श्लोकेन लक्षणसप्तकं । तत्र अगोपनं आगमादीनामिति यावत् । गोपनं प्रागवदागमादीनां । गुरुविद्यागमाचारस्तवनं गुरोर्विद्याया आगमानामाचाराणाञ्च स्तवनं ॥ ८० ॥

एतानि प्रोक्तानि सप्तचत्वारिंशल्लक्षणानि । तुर्विशेषे । एवावधारणे । तान् आत्मज्ञानवतः । ते आत्मज्ञानरहिताः ॥ ८१ ॥

तदित्यादिभिः सदेत्यन्तैर्नवभिः श्लोकैरात्मज्ञानवतां समाचारक्रममुपदिशति । तत्र तत्कृत्यं आत्मज्ञानवतां कृत्यं । निरस्ताशेषसंसारमौर्ख्याज्ञानाविवेकवान् निरस्ताशेषसंसारवान् । निरस्ताशेषमौर्ख्यवान् । निरस्ताशेषाज्ञानवान् । निरस्ताशेषाविवेकवान् । इति अन्वययोजना । अतस्मिंस्तद्बुद्धिः संसारः । अतस्मिंस्तदभिमानो मौर्ख्यं । तस्मिन्नतद्बुद्धिरज्ञानं । तद्विमर्शहानिरविवेकः । देशकालकुलाचारानित्यत्र देशाचारः कालाचारोऽवस्थानुगुणाचारः कुलाचारस्तानिति यावत् । गुरुराजादिकल्पितान् । गुरुराजादीत्यत्रादिशब्दः प्रथमे पटले "गुरुं तदग्रतः" इत्यादिना श्लोकेन प्रोक्तपूज्यविषयः । राजादीत्यत्रादिशब्दः तत्समानपुरुषविषयः । देहास्थैर्य्यं स्वभावत इति यावत् । अत्र

वृथा न कालं गमयेद्द्यूतस्त्रीस्वापवादतः ।
गमयेद्देवतापूजाजपयोगस्तवादिना ॥ ८६ ॥
गुरोः कृपालापकथास्तोत्रागमविलोकनैः ।
गमयेदनिशं कालं न वदेत् परदूषणम् ॥ ८७ ॥
प्रत्यक्षे च परोक्षे च स्तुवीत प्रणमेद्गुरुम् ।
तद्गुणैस्तत्कृपाधिक्यैः पुण्यैश्वर्य्यैश्च सत्यतः ॥ ८८ ॥
रागलोभमदक्रोध*पापपैशुन्यवर्जनैः ।
†सन्तोषाचारनियमशान्तिज्ञानादिभिस्तथा ॥ ८९ ॥
मिताहारो मितालापो विविक्तसमवर्त्तिता ‡ ।
नित्याचिन्ता स्वात्मशुद्धिः कृत्यमात्मवतां सदा ॥ ९० ॥

---

द्वितीयान्तानां पदानामुत्तरत्र श्लोके विमृशेदित्यनेनान्वयः। अन्यान् व्यापारान् दृष्टादृष्टानुपयुक्तानिति यावत्। कालतः क्षणात् पतितान् वन्धुचित्ताज्ञादुर्लङ्घ्यान् वन्धुभिः चित्तैः राजादिभिरपि दुर्लङ्घ्यान् कालतः क्षणात् पतितान् पुरुषादीनिति यावत्। अशुभात्मनः अशुभस्वभावान्। द्यूतस्त्रीस्वापवादत इत्यत्र द्यूतशब्दो निर्जीवद्यूतसजीवद्यूतविषयः। स्त्रीशब्दस्तु धर्म्मपत्नीव्यतिरिक्तविषयः। स्वापशब्दः प्राप्तेतरविषयः। वादशब्दो जल्पवितण्डादिविषयः। स्तवादिना इत्यत्रादिशब्दः प्रदक्षिणनमस्कारादिविषयः। गुरोः कृपालापकथास्तोत्रागमविलोकनैः गुरोः कृपायाः गुरोरालापानां च गुरोः कथाभिः गुरोः स्तोत्रैः गुरोर्लब्धागमविलोकनैश्च। तद्गुणैः गुरुगुणैः। अस्मिन् श्लोके चोत्तरश्लोके च तृतीयान्तानां पदानां स्तुवीतेत्यनेनान्वयः। तत्कृपाधिक्यैः गुरुकृपाधिक्यैः। तद्गुणैरित्यादि तृतीयान्तेषु त्रिषु चानन्तरश्लोके तृतीयान्तयोः पदयोः च गुरोरित्यध्याहार्य्यं। तत्र सत्यतः सत्येन वाङ्मनःकर्म्मणामेकरूपेणेति यावत्। ज्ञानादिभिरित्यत्रादिशब्दो दानादिविषयः। नित्याचिन्ता षोड़शनित्यानां स्वरूपचिन्ता। स्वात्मशुद्धिः स्ववाङ्मनःकायानां शुद्धिरिति यावत् ॥ ९० ॥

---

* क्रौर्य्यं। † सन्तोषज्ञान। ‡ विविक्ता सर्ववर्त्तिता।

पूर्व्वोक्तद्वादशास्रस्य मध्ये कृत्वा यथाविधि ।
योनिं तन्मध्यतो देवीं ललितां पृष्ठतो गुरून् ॥८१ ॥
पार्श्वयोरायुधान्यष्टौ कोणेषु परितः क्रमात् ।
कामेश्वर्य्यादिकास्तत्र तद्वहिर्द्वादशस्वपि ॥ ८२ ॥
द्वादशान्या यजेत्तत्तन्नित्याविद्याभिरेव वा ।
तन्नामविद्याभिर्वा ताः पूजयेत् सार्घकल्पनम् ॥ ८३॥
सन्ध्यात्रयं षष्टिसंख्यं जपेत्तद्दिनविद्यया ।
नान्यत् कृत्यं भवेत्तस्य नित्यनैमित्तिकादिकम् ॥ ८४ ॥

---

पूर्व्वोक्तेत्यादिभिरभूदित्यन्तैः षड्भिः श्लोकैः आत्मवतां जीवन्मुक्तानां ललितापूजाक्रममुपदिशति। तत्र पूर्व्वोक्तद्वादशास्रस्य एकोनविंशपटलप्रोक्तद्वादशास्रस्य मध्ये सर्व्वमध्यस्थवृत्तमध्ये अन्यूनाधिकमानमिति यावत्। योनिं स्वाभिमुखाग्रत्रिकोणं। तन्मध्यतः योनेर्मध्ये। पृष्ठतः योनेः प्राग्रेखावृत्तरेखयोरन्तराले। गुरून् देवीरूपतयेति यावत्। पार्श्वयोः पार्श्वरेखाद्वयवृत्तरेखान्तरालद्वये। आयुधान्यष्टौ पूजापटलोक्तवाद्यादिप्रातिलोम्येनेति यावत्। कोणेषु मध्ययोनेरग्रादिषु त्रिकोणेषु। परितः क्रमात् प्रदक्षिणक्रमात्। कामेश्वर्य्यादिकाः कामेश्वरीं भगमालिनीं वज्रेश्वरीं च। तद्वहिर्द्वादशसु अस्रेष्विति यावत्। अन्याः कामेश्वरीभगमालिनीवज्रेश्वरीव्यतिरिक्ताः। तत्तन्नित्याविद्याभिः तृतीयपटलप्रोक्ताभिरिति यावत्। एवावधारणे। वा विकल्पे। तन्नामविद्याभिः एकोनविंशपटले प्रोक्ताभिरिति यावत्। ताः नित्याः। एतदुक्तं भवति एकोनविंशपटलप्रोक्तविधानेन द्वादशास्रचक्रं विलिख्य तन्मध्यवृत्तमध्ये स्वाभिमुखं समत्रिरेखं त्रिकोणं विलिख्य तन्मध्ये ललितां तन्मध्ये त्रिकोणप्राग्रेखावृत्तरेखान्तराले नाथशक्तीः तदुभयपार्श्वरेखाद्वयवृत्तरेखान्तरालद्वये वाय्वाद्यप्रादक्षिण्येन हेतीर्मध्ययोनेरग्रादिषु त्रिषु कोणेषु कामेश्वरीभगमालिनीवज्रेश्वरीश्च तद्वहिर्द्वादशास्रेषु अन्या द्वादश नित्याश्च प्रादक्षिण्येन तत्तन्नित्याविद्याभिर्नामविद्याभिर्वा यजेदिति। तस्य आत्मवतः। नित्यनैमित्तिकादिकमित्यत्रादिशब्दः काम्यविषयः। तन्मध्ये द्वादशास्रस्य मध्ये। नवयोनिं

तन्मध्ये नवयोनिं वा विधायावस्थशक्तिभिः।
पूजयेत् प्राग्वदुभयप्रकारादेकयोगतः॥ ९५॥
यावज्जीवं विधिस्त्वेष गदितः सिद्धये सदा।
सिद्धानामपि सर्वेषां येनासौ स्वात्मवानभूत्॥ ९६॥
समस्तमेतत्तन्त्रन्ते कथितं परमेश्वरि।
यत्परामर्शतो भावस्त्वावयोरैक्यमश्नुते॥ ९७॥
तद्दद्यात्तन्त्रमेतत्तु नाभक्ताय कदाचन।
नाशिष्याय न दम्भाय प्रच्छन्नानयशीलिने॥ ९८॥
नायाचते नास्तिकाय न लुब्धाय न मानिने।
न पापाय न वित्ताय नादत्ताय च भेदिने॥ ९९॥

---

पञ्चदशपटले प्रोक्तामिति शेषः। वा विकल्पे। अवस्थशक्तिभिः सहेति शेषः। प्राग्वत् अग्राद्यप्रादक्षिण्येन उभयप्रकारादेकयोगतः द्वादशास्त्रमध्ये केवलं योनिं नवयोनिं वा लिखेदिति यावत्। सिद्धये आत्मज्ञानस्येति शेषः। सर्वेषां आत्मज्ञानसिद्धानां श्रीविद्यासिद्धानामिति यावत्। योगसिद्धानामाज्ञासिद्धानामिति यावत्। येन विधानेन। असौ सिद्धेषु चतुर्ष्वन्यतमः। स्वात्मवान् स्वरूपज्ञानवान्॥ ९६॥

समस्तमित्यादिभिर्भेदिन इत्यन्तैस्त्रिभिः श्लोकैस्तन्त्रार्थवेदिनः फलं तन्त्रदाने सम्प्रदानभूतस्य वर्जनीयस्य त्रयोदशदोषांश्चोपदिशति। तत्र परमेश्वरीति देवीसम्बुद्धिः। यत्परामर्शतो भावः तन्त्रार्थविद इति शेषः। आवयोरैक्यमश्नुते शिवशक्त्योरभेदस्वरूपो भवति। तच्छब्देन तन्त्रस्यानुभाव उच्यते। तुरवधारणे। कदाचन आपत्स्वपीत्यर्थः। दम्भाय मिथ्याचाराय। प्रच्छन्नानयशीलिने प्रच्छन्नाय अनयशीलिने चेति यावत्। नायाचते नास्तिकाय चेति यावत्। वित्ताय अर्थार्थमिति यावत्। अदत्ताय जड़ाय। भेदिने द्विधाभावशीलाय॥ ९९॥

यस्तन्त्रमेतत् सकल नित्याविद्यास्तु षोड़श ।
शक्त्या संगृह्य विधिवद्भजते स मदंशकः ॥ १०० ॥
शिवतत्त्वमयी व्याप्तिरिति सम्यक् समीरिता ।
ऋस्या निफालनाच्चित्ते तत्तत्त्वं स्वात्मसात् कृतम् ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमते तन्त्रराजे
स्वात्मकथनं नाम षट्त्रिंशत् पटलम्
परिपूर्णम् परामृष्टम् ॥ ॐतत्सत् ॥
॥ ३६ ॥ ॐ तत्सत् ॥

---

यस्तन्त्रमित्यादिना श्लोकेन यथाविधि प्राप्ततन्त्रार्थवतः फलमुपदिशति। तत्र विधिवत् नित्यनैमित्तिकादिप्रोक्तक्रमात् स भजनपरः। मदंशकः चित्स्वरूप ईश्वर इति यावत् ॥ १०० ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसार-
सिंहराजप्रकाशाभिधानेन सुभगानन्दनाथेन विरचितायां मनोरमा-
ख्यायां व्याख्यायां देवतादेशिकशिष्यप्रपञ्चादीनां परमार्थ-
स्वरूपप्रकाशनपरं षट्त्रिंशत्पटलं परिपूर्णं
परामृष्टम् ॥ ३६ ॥ ॐतत्सत् ॥

ग्रन्थसंख्याः—षट्त्रिंशे पटले ज्ञेयाः शिवतत्त्वमयेऽत्र च ।
अध्यर्द्धसप्तषष्टिश्च व्याख्याग्रन्थाः शतत्रयम् ॥ २६७ ॥
तन्त्रे प्रकरणान्यत्र श्रीमत्कादिमताह्वये ।
शतानां नवकं त्वेकत्रिंशता च समन्वितम् ॥ ८३१ ॥

भुक्तिभूमानमाधुर्य्यभाग्यगन्धेर्द्धसिद्धिगाः ।
संसत् सुरश्रीरित्येकविंशत्यक्षरसंख्यया ॥
२२७७७३८७८८-३१४१८-५०५४६४ ।
यन्त्राणि स्युः कादिमते तन्त्रे प्रोक्तानि तत्र तु ।
दक्षिणापथपुख्यौघपरिणामाह्वयोदधिः ॥
कोष्ठयन्त्राख्यनन्तानि आदिवर्णोत्थितानि च ।
सम्भूय श्रीकादिमते तन्त्रे व्याख्यानसंख्यया ॥
सहस्राणां द्वादशकं न्यूनं पञ्चाशतेरितम् ।
काश्मीरराजस्य गुरुः श्रीकण्ठेशो द्विजेश्वरः ॥
कदाचिदागतो द्रष्टुं रामसेतुं स्वलीलया ।
तेनैवानुगृहीतोभून्मध्ये मार्गे नृसिंहराट् ॥
मन्त्राख्यधीतवांस्तस्मान्नित्यानां तेषु निर्म्मिता ।
व्याख्या मनोरमाभिख्या तेन कादिमतस्य तु ॥
शुभगानन्दनाथेन द्वाविंशपटलावधि ।
तदाज्ञयावशिष्टानां पटलानां विनिर्ममे ॥
चतुर्द्दशानां तच्छिष्यः प्रकाशानन्ददेशिकः ।
तां सुन्दरवरक्ष्माभृद्दत्ताख्यां प्राक् सम्प्रदायतः
समाप्ता चेयं तन्त्रराजटीका मनोरमा ॥ ॐ ।

---